श्री

# चिकित्साक्रमकल्पवल्लीविषयानुक्रमः

# चिकित्साक्र०कल्प०यानुक्रमः

## चिकित्साकल्पव्याख्यानुक्रमः

# चिकित्साक० क्रमव्यानुक्रमः

## अथद्वितीयस्तबकपूरणानुक्रमणम्

## चिकित्साक्रमकल्पवल्ल्यनुक्रमः



इति चिकित्साक्रमकल्पवल्लिविषयानुक्रमणं समाप्तम्.

---

ये पुस्तक तय्यार मिलनेका ठिकाणा नीचे लिखाहै

## चिकित्साक्रमकल्पवल्ल्याः

रंभः

नत्वागणेशंगिरिजासमेतंशंभुञ्चधन्वन्तरिमादिवैद्यम् ॥ कुर्वे
चिकित्साक्रमकल्पवल्लींनानादिलशास्त्रमहंविलोक्य ॥१॥
सर्वोपकारायसदार्द्रचित्ताधागीश्वरीदेवगणेश्ववंद्या ॥ करोतु
सौचाद्यसमस्तदुष्टवक्त्रश्वसंचर्द्धितहासनाशम् ॥२॥ ओसी
न्मुनिर्गर्गइतिप्रसिद्धोयस्सर्ववेद्यैकरवनिर्महात्मा ॥ यौवासुदे
वस्यगुरुःपृथिव्यांवंशोस्तितस्यैवविशुद्धकीर्त्तेः ॥३॥(कूर्मदेशे)
सुरेज्यतुल्यद्विजवृन्दजुष्टेपुरेशुभेमंगलशब्दपूर्वे ॥ यत्रास्तिदेवश्च
चतुर्भुजाख्यस्त्रैलोक्यसंरक्षणतत्पराघ्रिः ॥४॥ तत्रोद्भवश्चा
पिकविर्यशस्वीपूर्वंभवानीत्यथशङ्कराह्वः ॥ योसोचतुर्वेद्यरूप
नामधारीत्यन्तेपरिव्राजपदंजगाम ॥५॥ तस्यापिपुत्रस्तुमहा
सुखाख्योभैषज्यकर्मण्यथकाव्यकारी ॥ स्नातश्शुचिश्चापि
गुरुस्तरस्वीर्यशोधनश्शम्भुपदानुरागी ॥६॥ युग्मम् अभवदथ
सुतोस्मात्काशिनाथेतिनाम्नानिजगुरुचरणाब्जास्वादकश्चंच
रीकः ॥ सइहकिमपिचायुर्वेदसारंनिगृह्यप्रकटयतिबुधानां
वैद्यविद्याप्तिहेतोः ॥७॥ नत्वागुरून्स्वान्कविवृन्दमुख्यांस्त
त्पादपद्मोहृदिसंनिधाय ॥ श्रीसुश्रुतंवाग्भटवैद्यधुर्यानन्या
स्तथावैचरकंप्रणम्य ॥८॥ ॥ तावद्वैद्यलक्षणं ॥ ॥ समा
धीतशास्त्रश्शुचिः कर्मदक्षः कुलीनोदयालुःसुपीयूषपाणिः
परस्याङ्गितज्ञःस्पृहाद्यैर्विहीनस्सवैद्योवरिष्ठस्सुधीरःप्रबोध्यः
॥९॥ ॥ अथसामान्यात्सर्वातङ्कनिदानम् ॥ ॥ जलस्या

तिपानान्निशाजागराच्चदिवास्वापतश्चातिभोज्यप्रसंगात् ॥ पुरी
षस्यमूत्रस्यवाधारणाच्चभवंत्येवषड्भिर्निमित्तैश्चरोगाः ॥१०॥
अथसंक्षेपात्क्रमात्भुक्ताहारपानकथनम् ॥ ॥क्षुधातुरोय
श्चजलंपिबेद्वातृषातुरोयश्चभुनक्तिचान्नम् ॥ जलोदरंचक्षुधि
तस्यतस्यतृषातुरस्यापिहिगुल्मसुग्रम् ॥११॥ ॥अथसंक्षेपा
ज्ज्वराद्यरोगविषयिकीचवातादित्रयपरीक्षाबालबोधार्थंलिख्य
ते ॥ ॥शीर्षेमुखेनेत्रयुगेचकर्णेभुजेकटौजानुयुगेचपीडा ॥
रात्रौननिद्राशयनंदिवाचप्रसूनवन्नेत्रयुगेचवायुः ॥१२॥ करजन
यनवक्त्रेमूत्रविड्देहचर्मण्यथयदिचहिपीतत्वंचवक्त्रेकटुत्वं ॥
विरुचितपनतृष्णादाहमोहप्रलापभ्रममदवमनाद्यैर्मायुरोगः
परीक्ष्यः ॥१३॥ अधरकंठरसनारदनासातुलतुलायमथोयदि
शीतत्वं ॥ नयनयोर्मलगंत्वचिमूत्रेविरसतारुचितान्चवलाशात्
॥१४॥ लक्ष्येयस्मिल्लक्षणालक्ष्यतेस्मद्वन्द्वैर्दोषैर्जायमानंत्रिभि
र्वा ॥ ज्ञेयोव्याधिर्द्वंद्वजःसन्निपातस्तैस्तैर्योगैर्लक्षणज्ञैश्चिकित्स्यः
॥१५॥ ॥ततश्चिकित्सारंभः ॥ ॥ज्वरस्येवकोपाद्यतस्सर्व
रोगास्तनुंदेहिनश्चोग्रपीडांनयंति ॥ अतः पूर्वमेवप्रतीकारमस्य
वदामस्स्वमत्यानुकूल्येनकिंचित् ॥१६॥ ॥तत्रशास्त्रशास्त्र
संमतवत् ॥ ॥मुहुःप्रार्थयाभोजनानेवमेवंनसेव्यंनसेव्यंकथंचि
त्कदापि ॥ यदाचौषधंमूढवैद्यप्रदिष्टंशुभंचेद्धितंवस्तदामाननी
यम् ॥१७॥ ज्वरादितोलंघनमेवकार्यंतन्मध्यतःपाचनमेवदेयं ॥
ज्वरांततोरेचनमेवदेयमित्याहधन्वंतरिरादिवैद्यः ॥१८॥ ज्वरता

शकरंनलंघनान्नतुवायोःशमनंहिमर्दनात्॥नकफस्यचछर्दना
त्परंनचमायोश्शमनंविरेचनात्॥१९॥ ॥अथसामान्यतःसर्वज्व
रस्यावक्रम्॥ ॥सुरतरुछन्नाविश्वाख्याघ्रीयुगयुतमेतस्मातःपीतम्
॥ज्वरबलशांत्यैपूर्वैःप्रोक्तंशमयतिसर्वव्याधेर्हेतुं॥२०॥ ॥इति
चनं॥ अथवानादिकषायरुक्माभ्रयोयोगाः॥ यासकछिन्नाजल
धरयुक्तंश्भूपिचुमंदःसकटुकरेणुः॥ ॥यासकविश्वाजलधरयुक्तं
माशुगापित्तज्वरकफहत्यै॥२१॥इतिक्वाथत्रयं॥ ॥अथशुंडीन्या
दिक्वाथः॥ ॥स्याद्रक्तचंदनगुडूचिकयासमेतोनिंबांगधान्यस-
हितस्समधुर्निपीतः॥हल्लासदाहविरुचिज्वरनाशनायतृष्णापहस्स
कलवैद्यवरैःप्रदिष्टः॥२२॥ ॥अथपंचभद्रः॥ अंभोधरःपर्पटको
गुडूचीभूनिंबविश्वासहितःकषायः॥स्यात्पंचभद्राख्यकएषयोगो
हन्त्यात्सवातंज्वरमाशुमायोः॥२३॥ क्षुद्रामृतानागरपुष्करेश्चकैरा
तकंचामरवल्लिकाच॥संक्राथ्यपेयंसुभिषक्प्रदिष्टमष्टज्वराणांच
विनाशहेतोः॥२२॥ त्रिवृत्सुराह्वात्रिफलाविशालाचारग्वधंतिक्त
करोहिणीच॥क्वाथस्त्वमीषांज्वरनाशनस्स्यात्स्याद्यावशस्केनचभे
दनश्च॥२३॥उदीच्यपर्पटोशीरछत्राचंदनवारिभिः॥दाहज्वरक्ष
यंयातिनात्रकार्याविचारणा॥२४॥ ह्रीबेरंचबिल्वंचजलंचापि
सवालकं॥एभिश्शृतंसुशीतंतुक्वाथंसर्वज्वरापहं॥२५॥पीत्वा
द्रवंसैन्धवचूर्णयुक्तंसुशृंगवेरस्यपलोन्मितंच॥भीरुर्ज्वरस्तंतुपरि
त्यजेद्वैविचारणाचात्रनकाप्यवश्यम्॥२६॥किरातामृतानागरो-
दीच्यमुस्तैःस्थिरापृश्निपर्ण्यादिभिर्गोक्षुरैश्च॥बृहत्याद्वयेनापियु
क्तंकषायंनिपीयाशुनूनंज्वरंसंत्यजेद्वै॥२७॥रेणोःशृतंजलंशीतं

तीव्रंपित्तज्वरंजयेत् ॥ विश्वासुस्तकयुक्तंचेत्किंपुनश्चंदनेनच ॥२८
द्राक्षारेणुर्नृपतरुःशिवामुस्तकाश्चापितिक्ताक्राथश्चैषांसकृदपि
यथायेनपीतोनरेण ॥ मूर्छाशोषप्रलपनतृषाभ्रांतिपित्तज्वरांश्च
घर्मंदाहंशमयतिनदातस्यवानामयांश्च ॥२९॥ दुरालभाचप्रम
द्राकिरातंसपर्पटंवासकतिक्तकोंच ॥ सशार्करस्सर्वकृतःकषायस्तृ
ड्दाहपित्तास्रनवज्वरघ्नः ॥३०॥ जलैर्जलैर्नीरधरैर्हिमैश्चशुंठीस
मेतैश्चकृतःकषायः ॥ सदासुखायैवकफेसेविनश्चनिदाघतृष्णास्र
नवज्वरघ्नः ॥३१॥ शृंगीकृष्णाकट्फलंपौष्करैश्चकृतोलेहःक्षौद्र
कैश्चावलिह्य ॥ श्लेष्माकोपाश्वासकासैस्समेतंहन्याच्छीघ्रंमान
वस्यज्वरंहि ॥३२॥ व्याघ्रीहृयामृतलतादिकिरातकैश्चभूनिंबवा
रिदयुतैरथशृंगवेर्य्या ॥ गोकंटकैःसस्थिरकैःशृतंचमायोःप्रभंजन
युतज्वरनाशनंहि ॥३३॥ छिन्नासिंहास्याविश्वाजलधरशिवाकंट
कारीद्वयैश्चदुस्पर्शेनाथरेणुर्जलदसुरसभिद्यासकैश्चापियुक्तः ॥
छिन्नाद्यंपर्पटाद्यंगादितमिहतुयस्क्राथयोर्द्वंद्वसेतद्वातश्लेष्मज्वर
घ्नंबहुलगदहृतोवैद्यवर्यैःप्रदिष्टं ॥३४॥ क्षुद्रापटोलभूनिंबमुस्ता
तिक्तेन्द्रजैर्यवैः ॥ शुंठीचंदनछिन्नाद्यैःश्लेष्मपित्तज्वरंजयेत् ॥३५॥
द्रोणपुष्पार्द्रवफलंमरीचैरवधूलितम् ॥ एकोनपंचाशत्तकैरुन्यह्नास्त
र्वज्वरान्हरेत् ॥३६॥ भूनिंबद्रोणपुष्पाभ्यांस्वरसार्द्रकसंभवः ॥ संत
प्तपयसापीतःकल्कःसर्वज्वरापहः ॥३७॥ केवलंजलसंभूतंजलं
पीत्वापलद्वयम् ॥ नियतंकरोतिसप्ताहात्पित्तज्वरविनाशनम् ३८
वृश्चिकार्कैतुसंपीतंसिंधूत्थणसमन्वितं ॥ कुडवैकाह्नसप्ताहात्सर्व
ज्वरविनाशकम् ॥३९॥ ॥ अथसुदर्शनचूर्णंसर्वज्वरेषु ॥ ॥

पलत्रयंनागरकंचवह्निर्व्याघ्रीयुगंचापिशटीचनिंबं॥ सुराह्वजा सोषणमिन्द्रपुष्पंपटोलकेपुष्करकंगुडूची ॥१॥ दुरालभापर्पटको ग्रगंधावलायवानीतगरंहरिद्रा॥ विडंगतालीसकणासुराह्वत्व क्पद्मकोशीरकचंदनंच ॥२॥ पर्णीचभार्ङ्गीन्द्रयवारुणाश्वभूनिं बजीवर्षभकाश्ववंशी॥ षड्ग्रंथिचव्यातिविषाचनिंबंकाकोलिका पत्रजजातिपत्री॥३॥ तालीसपत्राणिचपुंडरीकंसवत्सकंवाल कशिग्रुबीजम्॥ सर्वार्द्धभागेनकिरातजेनपुष्पेणसंपेष्यचचू र्णितंतत्॥४॥ तिक्ताम्बुतंशीतजलैश्चसेव्यंसुदर्शनंचूर्णमि दंज्वरारिः॥ येनैकदाचूर्णमिदंचभुक्तंज्वरस्तुसंत्यज्यव्रजेच्चदूर म्॥५॥ ज्वरांस्त्रिदोषोद्भवसर्वरोगांस्तच्छितदाहादियुतांन्नरा णाम्॥ सर्वाङ्गपीडासहितान्समस्तान्ज्वरान्विनाश्याशुकरो तिपुष्टिम्॥६॥ पृथक्कृद्वंद्वजान्सन्निपातोद्भवांश्चज्वरान्पार्श्व शूलादिकान्कामलांच॥ भ्रमंमोहतन्द्रांविनाशंनयेद्वैयथाकृ ष्णहस्ताद्गतंसर्वशत्रून्॥७॥ ॥इतिसुदर्शनचूर्णं॥ श्लो॥ अथशृंग्यादिकं॥ ॥शृंगीशटीवत्सजपर्पटंचलज्जालुकोन्ती भंकणाकलिंगं॥ शंखाब्दकंजीरकराजिकंचश्यामाभयपंचक पूर्वकोलम्॥१॥ तिक्तासुरोपद्मकतिक्तकंचपाठाजमोदाभृणजा भयंच॥ आर्यंतिकाशिग्रुधनाजमोदाजंतुघ्नसुधासहितंविचूर्ण्य

१पुष्करे मूलाभावेप्रतिनिधिकुष्ठं २लगरप्रतिनिधिकुष्ठं ३ भार्ङ्गीप्रतिनिधि कंटकारिजटा ४जीवर्षभयोरभावेविदारीकंदः ५काकोल्यभावेऽश्वगंधा ६नाली साभावेकंटकारिजटा ७दैत्यान्द्रि ८वत्साकुची ९ल० लजालू. १०कौ० रेणुका. ११र० गज पिंपली. १२कइंद्रजव. १३स० अर्जुना. १४सुरहरीसुराःएकांगीतिलोके. १५तिक्तकंभूनिंबं तस्यचभागद्वयंग्रंथांतरेलिखितत्वात्. १६ अभयंवालकं.

॥२॥ शंख्यादिकं कट्फलकेनयुक्तं चूर्णंतु सर्वज्वरनाशनं हि॥ दोषत्रयोद्भूत समस्त रोगा नाशं समायांतिच सेवितं चेत्॥३॥ ॥अथ निरूहः॥ ॥उशीरम्यारग्वधमन्मथंच पर्ण्यश्वत स्त्वमधूकयुक्ताः॥ निरूह एषांज्वरनाशनस्यात्सत्यंच धन्वंतरिरेतदाह॥१॥ ॥ अथबस्तिः॥ ॥प्रियंगुमुस्तामदनः कंटकारीयुगेनच॥ कल्कस्तु मधुसर्पिभ्यांज्वरघ्नोबस्तिरुत्तमः॥१॥ ॥अथोद्वर्तनम्॥ सहदेवीवचाभद्रानाकुलीभिस्तु कारयेत्॥ देहोद्वर्तनकंश्रेष्ठं सर्वज्वर विनाशनं॥१॥ ॥अथधूपः॥ पलंकषाशिवावचायवाहविश्च सर्षपाः॥ सनिंबरुक्मधूपनाज्ज्वरजहातिरोगिणम्॥श्लो॰ ५३॥ अथधूपादनंतरंदीपम्॥ वसाश्यामसर्पोन्दवागंधगोश्टङ्गधचूर्णं चापितैलंशवस्यैववस्त्रेणवर्तिंविधायाशुदीपेनिदध्याच्चतांवै॥ ततश्चाभिमध्यात्ससुदीप्यवर्तिं यतोरोगिशय्यासमीपेनिधानात्तुदीपस्यभीतोज्वरस्तं विहायाशुयात्येवनूनम्॥१॥ ॥अथतैलानि॥ लाक्षासमुद्भूतरसेनतुल्यंतैलंततोमस्तुचतुर्गुणंहि॥ मूर्वाश्वगंधाब्दकचंदनंचकुष्ठंशताव्हामधुकंनिशाच॥१॥ कौंतीवरारास्नाकटुरोहिणीचमन्दाग्निनापाच्यगुरूक्तयुक्त्या॥ अभ्यंगमेतस्यविनाशयेद्वैयक्षादिरक्षोद्भवसर्वदोषान्॥२॥ सर्वज्वरोन्मादहरंप्रसिद्धं स्याद्गर्भिणीनांसकलामयघ्नं॥ बालग्रहाणांचविनाशकंहिवंध्यासुगर्भप्रदमेतदेव॥३॥ ॥इतिलघुलाक्षादिकंतैलम्॥ लाक्षारुण्याफेनिलचंदनंचनिशामधूकंजलजंचनीलम्॥ लामज्जकं चापिहिगैरिकं

---

१दुस्पर्शेनापितथैवनून मित्यपिसाधुग्रंथांतरे धस्मिन्योगे यासकोप्युक्तस्तस्मादिति दुस्पर्शकेनापिकिरातकेन इत्यपिकापिश्रूनिंबस्यालिखितत्वादिति.

चमूलंबलायाश्चनिगृह्यपलात्॥१॥ षण्मुष्टिमानाश्चचतुर्गुणेहि जलेतुसंपाच्य ततस्तुतद्वै॥ चतुर्थभागेनचशेषमेवमत्वासमुत्तार्य चवस्त्रपूतम्॥२॥ निधायचान्यत्तुवदामिचाग्रेवस्योषधीनामपि चात्रमानम्॥नामानितासामथयेद्रवाश्चविधांसमस्तामथतच्छृ णुध्वं॥३॥ कुष्ठाश्वगंधामधुसूतकेशीत्वक्चोरकंवेतसकंचपद्मं॥ दिवौकसांकाष्ठमथोग्रकाष्ठमक्षेकमक्षैकमितंसमस्तम्॥४॥ कौं तीभिसिश्चापिनखंतथैवकषायनीरेणचपेषयित्वा॥शुक्तारनाला दिकमत्रमस्तुक्षीरंतथाचाढकमात्रमानाः॥५॥ प्रस्थप्रमाणंचकटा हमध्येतैलंतुसंपाल्यततोन्यमेवं॥द्रव्यंसमस्तंतुततोत्रदत्वाविपाच येद्वैरवमेवनत्वा॥६॥ लाक्षादिकंतैलमिदंनिहंतिसवायुपित्तास्रवला शजातम्॥ तृष्णाप्रलापादिकतालुशोषैर्युक्तंक्रमेणापिगणंज्वरा णाम्॥७॥ रक्षांसिभूतोरगडाकिनीनांगणांश्चबालग्रहशाकिनी नाम्॥अभ्यंगतोन्येपिहिदुष्टसंघानश्यंतिचित्रंनहिकिंचिदत्र॥८ महालाक्षादिकंचैतत्कृपयाभगवान्प्रभुः॥मर्कटीचकारलोकानां हिताय वरकोमुनिः॥९॥ ॥इतिमहालाक्षादिकम्॥ ॥अथषड् गुणतैलम्॥ कृष्णाबलानागरचंदनंरुग्लाक्षारुणासैंधवरोहिणी भिः॥ मूर्वासुरद्रुर्नलदंसमंचयष्ट्योब्धिफेनाब्दकरोहिषंच॥१॥ स र्वौषधीभिश्चगुरूक्तयुक्त्यातैलंपचेत्षड्गुणतक्रयुक्तं॥ शीतादि दोषैश्चयुतान्समस्तान्ज्वरान्विनाश्याशुकरोतिपुष्टिम्॥२॥ ॥इ तितैलानि॥ ॥अथघृतम्॥ वासाऽमृतायासकगोस्तनीभिर्भा र्ङ्याचपंचांह्रिफलत्रयेश्च॥ काश्मर्य्यनिंबद्रवमाक्षिकैश्चप्रस्थंघृत स्याक्षमितैश्चसर्वैः॥१॥ संपाचितंवासकहव्यमेतत्सर्वज्वरानीकवि

नाशनंच ॥ सेव्यंचवैस्वाभिबलानुकूलंसर्वग्रहाःपस्मृतिनाशकंच ॥२॥ इतिवासादिघृतम्॥ ॥अथनस्यम्॥ नराणांकेशोष्यःप्रभव मिहतैलेनसहितंनिघृष्याथोतुंडंविधिवदपिकाकस्यनितराम्॥त तोनस्यंदत्वाज्वरबलहरंचाशुगदितंनराणांक्षीणानांबहुजनितपी डाघ्निनरणे॥१॥ ॥अथनवज्वरेरसाः॥ बीजंभवस्याथगिरेश पुत्र्यारसशोषणंटंकणशुभ्रखंडं॥ मीनस्यपित्तेरथभावितंपैनवज्व रारिःप्रथितस्तुलोके॥१॥ खंडंसमानंचवदंतिचात्रतद्रक्षणेवल्लयु गंचमानं॥ तथानुपानेऽर्द्रकजंरसंहिभिरात्रितोयंज्वरनाशनेऽलम्॥२ शांतेतापेतत्रयुक्तंचपथ्यंदध्नंकांधंतक्रयुक्तंचभक्तं॥ पित्ताधिक्येमू र्ध्निितोयंनिपात्यतापापायंकारयेत्सद्भिषग्यः॥३॥ ॥अथज्वरधूम केतुः॥ भवान्याभवस्याथबीजंविमर्द्यततस्तत्समंहिंगुलंसिंधुफे नम्॥ प्रदेयंज्वरेचार्द्रकद्रावयुक्तोज्वरारण्यदावानलोयंप्रसिद्धः॥१ ॥अथमहाज्वरांकुशः॥ संशोधितंवैशिवयोश्वबीजंशाणप्रमाणेन विषंचतद्वत्॥ धत्तूरकंनिस्तुषमेवकुर्याच्छाणत्रयंचहिंगुलंसमस्तात् ॥१॥ हेमादिकंमाक्षिकमेवसर्वैःखल्वेतुसंमर्द्यमिदंहिगुंजं॥ जंबीरजी रेणचवार्द्रकस्यदेयंत्रिदोषोत्थमहाज्वरेषु॥२॥ चातुर्थिकंव्याहिकजा शनेयमेकाहिकेवैविषमेपिशस्तः॥ ज्वरांकुशोयंप्रथितःक्षितौनजीर्णे ज्वरंचापिविनाशयेद्यत्॥३॥ ॥अथरसपर्पटीविधिः॥ ॥जया भृंगराजप्रसूनोद्भवैश्चतथावर्द्धमानोद्भवैःकाकमाच्याः॥ द्रवैश्शंभुबी जंतुसंशोध्ययत्नात्ततोगंधकंतत्समंशोध्यबुध्या॥१॥ ततस्तद्द्वयं भृंगराजद्रवैस्तुपुनर्मर्दयित्वात्रिधासप्तधावा॥ निरीक्ष्याथतंकज्जली

१ ज्वरारण्यदाहेलयंधूमकेतुरित्यपिसाधुः

भूतसूतमलातेबदर्यास्तुसंद्रावयित्वा ॥२॥ ततस्तत्रधूमादिकैर्वर्जिते
त्वद्रवीभूतमालोक्यमोचाप्रसूने॥ महिष्याःपुरीषस्थितेसंनिपात्यपुन-
श्चान्यपत्रंतदूर्ध्वंनिधाय॥३॥ प्रपीड्याथतांपर्पटींसंगृहीत्वाविचूर्ण्या
थगुंजामितेयंप्रदेया॥ सुबाल्हीकगुंजार्द्रकेनापिजीरेसुभृष्टैर्यथाव्या
धियोगैश्चयुक्ता ॥४॥ पुराव्याधिभीतंजगत्सर्वमेवकृपाविष्टचित्त-
शिवस्सन्निरीक्ष्य॥ कराशुरोगोपहृत्यैजनानांरसेनैवपूर्वांशुभांपर्प
टींहि॥५॥ गुंजाप्रमाणांप्रथमेन्हिभुक्त्वादिनेदिनेरक्तिकमीनवृद्ध्या॥ए
कादशाहाद्धसितांविहायगुंजैकयाविंशतिवासरांते॥६॥ संत्यज्यनत्वा
स्वगुरुंशिवंचविप्रान्प्रसाद्याथसुभोजनाद्यैः॥स्नात्वाचहोमादिकदा
नधर्मान्कृत्वाजनोरोगगणैर्विमुक्तः॥७॥ अस्यानुपाने त्वुलुकत्रयंहि
जलंहिमानंदशरक्तिकांतः॥ऊर्द्ध्वंनदेयंक्रमतःकदापिसद्वैद्यधुर्य्यै
रसपर्पटीयम्॥८॥ज्वरान्समस्तान्ग्रहणीगदंचशूलातिसारौच
जलोदरंच॥सकामलंपांडुमथान्यरोगान्प्लीहंतथानाशयतिध्रु
वंच॥९॥जीवेद्वर्षशतंज्वरादिरहितस्सर्वाङ्गपुष्टोयुवानोपैत्याच्च
जराकदापिमनुजंयःपर्पटींभक्षयेत्॥गौरीशःकृपयाशुनोप्यति
तरांपीडांज्वराद्यैःकृतांदृष्ट्वैवं ऽरचयत्पुरासभगवान्यांरुग्गण
ध्वंसिनीम्॥१०॥ ॥इतिरसपर्पटीरसः॥ अथाऽपचितदो
षस्यभीरोर्लंघनक्षीणस्याऽनुचितपथ्यस्यवामोहहरंतर्प्पणम्
॥ खार्जूरकैर्दाडिमद्राक्षहूराप्रियालुलाजैश्चपरूषकैश्च॥स्यात्तर्प
णंतृप्तिकरंनराणांक्षुधातुराणांज्वरनाशनंच ॥१॥ अथज्व-
रोचितपथ्यानि॥ मुद्गान्नषष्टिंगतपंचकोलैःपटोलवृंताकगुंडीचि
पत्रैः॥पथ्यंयथाप्राप्तिरुचेर्हितंयत्तद्देयमेवात्रभिषग्वरिष्ठैः॥२॥

पथ्यंभुक्त्वासैन्धवेनान्वितंवैपीत्वातक्रंकिंचिदेवोदरेस्थे॥ वामंपाणिं संनिधायाथनेत्रानुन्मूल्यागस्त्यंकुंभकर्णंशनिंच॥३॥ किंचिद्गत्वा पादचारेणपश्चात्शय्यापृष्ठे वामपार्श्वेनविद्वान्॥ हस्तौपादौसंप्र सार्य्यैवतद्वा कुर्य्याद्यत्नंयेनवैजागरूकः॥३॥ ॥अथजलप्रमेव प्रासंगिकं॥ ॥ भुक्तेऽर्ध्वेचाल्पजलंप्रदेयंघनेयथेष्टंतुवदंतिधी राः॥ देयंशृतंलंघनयुङ्नरस्यशीतंतुतस्यथ्ययुतस्यजंतोः॥६ ॥औषधिदानाभावेवनौषध्यादिबंधनमंत्रजपयंत्रभक्षणादिना ज्वरोत्तरणम्॥ अहिर्बुध्न्येब्रह्मवृक्षोद्भवंचवृंतंयद्वामूलमात्रंप्रगृ ह्य॥ बध्वाहस्तेकंकणस्यप्रदेशेहन्यात्सर्वास्तज्ज्वरांश्चाप्यवश्यम् ॥१॥ गोपालपत्र्यास्सहदेविकाया मूलंचकंठेहिनिबध्ययत्नात्॥ श्मशानजंयत्सहदेविमूलंहस्तेनिबद्धंज्वरनाशनंतत्॥१॥ मूलंत ह्लक्तकेश्यास्तुसप्तरक्तैःस्सूत्रैःपाणिमूलेज्वरघ्नं॥ सूर्य्यावर्त्ता- ज्जातमेवेत्रकर्णेदूर्वामूलंहस्तबद्धंचतद्वत्॥२॥ ॥अथमंत्रः ॥ ओं२ ज्वरश्शृणु२ गर्ज२ स्पंद२ मुंच२ नरस्यामेजपतिएकाहिकं द्व्याहिकंत्र्याहिकंचातुर्थिकंभौतिकं नित्यज्वरं आगंतुकं हुं फट्स्वाहा कटिंमुंचपादौमुंच अमुकस्यविषमज्वरंनाशयतु अस्यपुरश्चरणम ष्टसहस्रम् ८००० प्रयोगेतुज्वरितमस्तकेकरंदत्वा १ ष्टोत्तरशतसं ख्या१०८ जपः॥ ॥अथयंत्रम्॥ रूनागवल्लीदलमध्यभागेषट् कोणयंत्रंविलिख्ययत्नात्॥ चूर्णंचयद्वैदृषद स्तुतेनतन्मध्यभागेज्वरितस्यनाम॥१॥ ॐ कारमेवाग्रदलेषुसम्यग्ह्रींकारमेवाथदलाग्र केषु॥ संपूज्यधूपैरथदीपकाद्यैस्संभक्षणा



येवनदापयेत्तम् ॥२॥ दिनत्रयंतज्ज्वरितेनभुक्तंसर्वान्ज्वरांश्चाशु विनाशयेद्धि ॥ असाध्यतांयस्तुगतोप्यवश्यंसचापिशांतिंविलभेदज स्रम् ॥३॥ ॥इतिश्रीगुरुचरणाब्जमधुपकाशीनाथकृतायांचिकि त्साक्रमकल्पवल्ल्यांसामान्यज्वरचिकित्साप्रसंगगंथितः प्रथमःस्तब कः ॥१॥ ॥गजास्यधन्वंतरिभैरवादीन्नौमिवयस्यूर्णकृपाकटाक्षा न् ॥ कुर्वेचिकित्सामथसन्निपातमहार्णवोत्तारकरीमहंवै ॥१॥ ॥ वातसन्निपातप्रकोपकारणं ॥ ॥ तांपसाम्लमधुरैश्चशीतलैःरूक्षकैर्गुरु तरैःकषायकैः ॥ स्निग्धकैःपलकटूपसेवनैःक्रोधकामवनितातिसेवनैः ॥१॥ व्यायामचिंताग्रहशोकशीतैरुष्णैश्चनीहारनिदाघतोपि ॥ मधौच वर्षासुशरद्यपीहप्रायःप्रकुप्यंतिचसन्निपाताः ॥२॥ त्रिदोषसर्पभक्षितं जनंहियस्तुरक्षयेत् सएवसर्वविद्गुरुःप्रपूज्यएवसर्वदा ॥३॥ त्रिदोष वारिवारिधौजनंनिमग्नमेवयस्सदौषधैःप्रकल्पनावमत्रतस्यतारये त् ॥ यदेवमस्तिकिंतदासुबुद्धियुक्तमानसैर्यतोनतत्समोस्तिकोपिमि त्रबंधुरत्रवै ॥४॥ ॥अथसन्निपातानांनामलक्षणंचिकित्साच ॥ संधिकोंतदवथूचविभ्रमशीतकांगमथतंद्रिकंततः ॥ कंठकुब्जमथ कर्णकंततोभुग्ननेत्ररुधिरास्यकोततः ॥१॥ वाक्प्रलापमथजिह्वकंत तोविद्धिपूर्वमभिसंयुतंततः ॥ न्यासकंचरकसुश्रुतादिभिर्वर्णिताश्चव हुधात्रयोदश ॥२॥ ॥अथसंधिकलक्षणंचिकित्से ॥ कफप्रवृ द्धिर्बलहानिजागरोभ्रमस्सशूलस्सकलांगपीडनम् ॥ सुनष्टदेहंवहुवे

१ राजिकादिः अम्लंजंबीरादिः मधुराःशालियवगोधूमादयःशीतलैर्मृणालादिभिः रूक्षैश्च णकादिभिःगुरुतरैःमाषादिभिः २कषायैःबिभीतकादिभिःस्निग्धैर्घृतादिभिःपलंमांसंकटुसो भांजनबीजादिः कामोऽभिलाषः क्रो० प्र अतिवनितोप्रसंगोतिमैथुनं ३व्यायामोभूमौनिपत्य हस्तपादादिनामुद्गरादिनावास्वदेहपुष्ट्यर्थप्रयासस्सएव ४ चिंताप्र० ग्रहादुष्टाःपिशा चास्यःशोकः प्र० तंडुलमंडादिःशीतलंउष्णमग्नितापःनीहारस्तुषारःनिदाघोघर्म

दनान्वितंसशोषदाहैश्चयुतंहिसंधिकम् ॥१॥ स्यात्संधिकेलंघनमेवतत्र वत्स्वेदः प्रलेपादिकरूक्षकर्म्म ॥ कुल्माषयंचाग्निशृतंचसिंधुविश्वायुतं पथ्यमयोत्रनूनम् ॥२॥ यवाग्रूरसंपंचमूलेनचैकेकुलत्थैः कणार्द्रोद्भवैस्त्रिधुयुक्तैः ॥ वदन्तीहचैके ऽगदंकारवर्य्यास्तुपथ्यंत्रिदोषोत्थरोगोपहत्यै ॥३॥ गुडूचीशटीवृद्धदारुस्सुराह्वशिवाक्षोद्भवैर्धात्रिजातैः फलैश्च ॥ सविश्वंपुरेणापियुक्तंकषायंसुसेव्यंग्रहेसंधिकेनैवपूर्वम् ॥४॥ गंधर्वहस्तोद्भवमूलविश्वारास्नासुराह्वैश्चशिवाऽमृताभिः ॥ समीरजातान् सकलामयांश्चशृतः कषायश्चनिहंत्यवश्यम् ॥५॥ कणामूलवासाकलिंगरुशिवाराजवृक्षैः शृतः क्वाथः पीतोयदिचनियतंसंधिकगदः ॥ विनश्यत्येवाह्वाबहुबलकृतेश्चाप्यतिबलोयथामर्त्योविमोनिजगुरुकृताज्ञेकजडधीः ॥६॥ शतावरीमुस्तकपंचमूलद्वयैश्चरास्नानिलशत्रुविश्वैः ॥ वत्स्याचतिक्ताखरदारुपथ्याकर्चूरकैश्चापिकृतः कषायः ॥७॥ मन्यास्तंभेयत्रवृद्धेचकट्यांसर्वांगोद्भूतासुपीडासुचापि ॥ जातासुस्याच्छत्रुरित्युक्तमेवप्राचीनैस्सद्रोगहारिःप्रमुख्यैः ॥८॥ ॥युग्मम्॥ ॥अथधूपः॥ निर्गुंडिकासर्षपनिंबपत्रएरंडपुरैर्धूपनमेवयत्तु ॥ दोषत्रयोद्भूतमिहैवतत्तुनिहंतिसंधिग्रहसन्निपातम् ॥१॥ ॥अथांतकोऽचिकित्स्यः॥ दाहोहिक्काचांगभंगोऽरुचिश्चमोहस्तोदोयत्रचैतेभवंति ॥ कासस्सर्वेष्वंगवर्गेषुतापस्सोयंज्ञेयोऽथान्तकाख्योऽचिकित्स्यः ॥१॥ अत्रौषधंवैद्यवरैःप्रदिष्टंगोविंदगोपालगदाधरेति ॥ गौरीपतेनागधरस्मरारेशीतांशुमौलेत्वथमामयत्वम् ॥२॥ ॥अथकंठदाहलक्षणचिकित्सा॥ रुग्दाहःकंठमन्याहनुतुदनमपिश्वासतृष्णाप्रलापाः

१कंठमन्याहनुषपितुदनंपीडा.

मोहोमांद्यंभ्रमो येर्युतइहचयदाशूलशल्याकुलश्च ॥ कष्टासाध्य स्तुनूनंगदहरणपरैर्भेषजैर्वैद्यधुर्यैः रोगीतस्मात्रिदोषैर्युतइहकथितोयत्नतस्साध्यएषः ॥१॥ हरीतकीपर्पटहारहूराशम्याकमुस्तैरथतिक्तयाच॥ शृतंजलंनाशयतित्रिदोषंरुग्दाहकं रामइवप्रलंबम्॥२॥ वचोशीरोतिक्ताकलितरुफलंनिंबमपिचानिशायुग्मंब्राह्मीजलधरकिराणेनसहितम्॥ शृतंक्वाथंचैभिर्दशभिरथमूलैरमलकैर्बलापथ्याकाशान्तिकयुतमिदंदाहशमनम्॥३॥ नलदंजलदंचपर्पटंसनरवंचंदनमत्ररक्तकम्॥ शृतमेवजलेकषायकंपरिपीतंदवथुप्रणाशनं॥४॥

॥ अथप्रलेपः॥ ॥ बदर्य्यरिष्टोद्भवसत्ववालफेनंचगंधोद्भवपंकयुक्तं॥ रुग्दाहवान्पादतलेप्रलिप्यत्रिदोषशांतिंचलभेदजस्रम्॥१॥

अथधूपः॥ ॥ करुरुहनतनीरचन्दनैर्घनसारागरुभिस्ससिल्हकैः॥ मधुरमधुयुतंविधूपनंनियतंदाहविनाशनंस्मृतम्॥१॥ पीनश्रोणिपयोधराकृशकटीगंभीरनाभीह्रदाभृंगश्यामलकुंतलाशशिमुखीरोमावलीमंडिता॥ भामायस्यभुजांतरालमबलादुःखौघविध्वंसिनीतस्यान्यन्नमहौषधंहिदवथौभाग्नेःकृतंक्वाप्यहो॥१॥ रंभोरूपीनवक्षोरुहयुगलयोकंबुकंठोधनुर्भ्रूयुक्तंवक्त्रंशशांकप्रतिनिधिलसत्कलायुग्मदंतैः॥ यस्याःकापीहदाहज्वरकृशतरेणाप्यतेपूर्वपुण्यैःकोवादाहज्वरोयंशमयतिनदासैवदुःखौघराशिम्॥२॥

॥अथचित्तभ्रम लक्षणचिकित्से॥ प्रलपन्निकृतंनिरीक्षते

१प्रलापोनर्थपवादः २मोहोज्ञानाभावः ३भदोधचूर्फलभक्षणजातइवतस्यभा पोमांद्यं ४वहुपीडाजनितोयंभ्रमस्तदाद्यैः ५कौशानकोजालिनी ६शृतरेभिरसौ कषायकःपरिपीतोदवथुप्रणाशनम् ६करुरुहनखम् ७नतंतगरंनीलकं ८सिल्हकस्तृणविशेषः

गयन्मुह्यतिगायतिकचित्॥ क्वचिदप्यतिरोतिनिश्चितंवितथंहास्यवि चित्रविभ्रमी॥१॥ हरीतकीपर्पटमुस्तकैश्चतिक्ताशिवागोस्तनिका किरातैः॥पटोलशम्पाकृतःकषायश्चित्तभ्रमारण्यहिरण्यरे ताः॥१॥ द्राक्षाशिवापर्पटशंखपुष्पीशम्पाकमुस्ताकटुकापयोभिः ॥द्रोणेनयुक्तश्चकृतःकषायश्चित्तभ्रमारण्यहुताशनेयम्॥२॥

॥ ॥अथशीतांगलक्षणचिकित्से॥ ॥तुहिनसमशरीरंछर्द्य तीसारतृष्णादवथुरपिचकासश्वासहिक्कादिभिश्च॥ त्वरितमर णजीवीक्षुल्लुशब्दोनितांतंत्रिजनितबहुरोगःपीड्यतेशीतगात्रे॥ १॥ ॥अथमत्रिचिकित्सा॥ शीतांगकेभेषजमेतदेवश्रीरामना रायणवासुदेव॥ जल्पन्नरःशांतिमुपैतियत्तुदानादिकंचाप्यपरं नलोके॥२॥ ॥अथतंद्रिकलक्षणचिकित्से॥ ॥वलासस्तंद्रा न्विज्वरकसनतृष्णाकुलतनुस्तथाश्यावाजिह्वापृथुलकठिनोत्कं टकयुता॥ स्कसश्चातीसारश्वसनपरितापश्रुतिरुजोयदाकं ठःकंठेभवतिनितरांतंद्रिकगदः॥१॥ निर्दग्धिकानागरपुष्कराणां भार्ङ्गीशिवाछिन्नरुहायुतानां॥ कषायकोयंतुनिहंतितंद्रासुतं त्रिदोषंनतुचित्रमत्र॥१॥ नतंशुंठीकुष्ठंमरिचमगधेरात्रियुगलं गवाक्षुग्रेयस्तिप्रभवसलिलेनैवसफलं॥ प्रपिष्टंनासायांगतम थनलीलायुवशतोविनाशंतंद्रायास्त्वरितमिहनस्यंप्रकुरुते॥३॥

॥ ॥इतिनस्यं॥ ॥अथांजनम्॥ तुहिनंचकणाशिला सुताद्यथलालाचतुरंगमस्यवै॥ लवणोत्तसमाक्षिकान्वितं कृत मेभिस्त्विहतंद्रिकांजनम्॥१॥ ॥पाठांतरंच॥ ॥मनशिला-

१ पयोवालकं. २द्रोणोभारत्तीपूमेतिलोके.

लामागधिकामधूनिचंद्रश्चलाजानतुरंगमस्य ॥ ससैंधवंचेन्नय
नेंजितानितंद्रांसनिद्रांचविनाशयंति ॥२॥अन्यच्च॥ कणापथ्या
धात्रीमरिचचिरबिल्वाकलवणंनिशात्र्युग्रंशुंठीकलितरुफला-
स्थिलथवचा ॥समंपथ्यावारित्तिप्रभवसलिलैर्नेत्रकमले नियुक्तंचे
तंद्रांबहुविहितदोषांश्चशमयेत् ॥३॥ अथकंठकुब्जलक्षणं ॥
शिरोर्तिःकंठस्यग्रहणमथमोहोविलपनंतथोरस्केजाताबहुपव
नपीडापिनितराम् ॥ हनुस्तंभोमूर्छापरितपनमुच्चैरपियदातदा
स्यात्कंठाद्यंगदितमिहकुब्जांतमपिवै ॥१॥ कटुत्रयैरात्रियुगा-
सकाभ्यांतिक्ताशिवाधात्रियुतैर्बिभीतैः॥ वासासमेतश्चकृतः
कषायःस्यात्कंठकुब्जस्यविनाशनाय ॥२॥ शृंगीतिक्तामागधी
कट्फलैश्चविश्वाव्याघ्रीयुग्मधात्रीफलैश्च॥ वासादाभ्यां-
चित्रकैःपुष्करेणसाकंमुस्ताचंदनकीवलकैश्च ॥३॥ कृत्वाक्वाथं
वत्समूनिंबकोष्ठैःराज्यांसद्यःसुश्रितंतत्प्रभाते ॥ देयंपातुंकं
ठकुब्जापहत्यैसर्ववैद्यैःसुश्रुताद्यैरिहोक्तम् ॥४॥ सुगमम् ॥
अथनस्यम् ॥ कटुत्रयैस्तुंबिजलोद्भवंतुनस्यंत्वपामार्गजबी
जजंवा ॥ कणायुतंचापिनिहंतिकंठकुब्जंहिचित्रंनहिकिंचिदत्र
॥१॥ अथकर्णकलक्षणचि० ॥ नावल्लक्षणमुच्यते ॥ ॥ व्या
धिर्यःकर्णमूलेश्वथुरपियदामौलिदेशप्रसेकः कंठग्राहोंऽ
गपीडाप्रलपनमपिवैश्वासकंपादयश्च॥ आदौमध्येतथा
न्तेक्रमतइहगदोऽसौध्यसाध्योपसाध्योयत्नेनेकर्णिकंतंविधि

१बहुभिर्भूतवेतालडाकिन्यादिभिः बहुजनितेत्यपिसाधुः २का-देवदारुः ३ज्वरादौ
जातमध्येनज्वरांतेचप्रभेदलं असाध्योयलसाध्यश्चसुसाध्यश्चेतिनिर्णयः

धवुधगणाः कष्टसाध्यंवदंति ॥ १ ॥ चि० ॥ रास्नाव्याघ्रीजलधर शिवापुष्करैश्चोग्रगंधाशृंगीभार्ङ्गीत्रिकटुकयुतैस्तिक्तकार्येश्शृतंच ॥ क्वाथंपीत्वात्रिजनितमहाकर्णकग्रंथिरोगान्मुक्तोयद्वत्स्मृतहरपदोदुष्टसंसारपाशात् ॥ २ ॥ त्रिकटुत्रिफलादशांघ्रिकैःकटुकामागंधिकासमन्वितैः ॥ धरणीपिचुमंदसंयुतैश्शृतमंत्रैर्वनिहंतिकर्णकं ॥ ३ ॥ ॥ अथलेपः ॥ ॥ रात्रिंविशालेंगुदिसैंधवानिकुष्ठंसुरद्रुश्चसुपेषितानि ॥ अर्कस्यदुग्धेनतुलेपितानिग्रंथोविनाशायभवंतितस्य ॥ ४ ॥ अनलंकुटजंचकुंभिकागदकासीसयुतारुणातथा ॥ त्रिपयोयुतमेभिरत्रवैपरिलेपादपिकर्णकक्षयः ॥ ५ ॥ ॥ ॥ अथनस्यम् ॥ ॥ कटुष्णपानीयकृतंचनस्यंससैंधवंमागधिकासमेतम् ॥ करोतिनाशंखिलुकर्णमूलसंजातकष्टस्यनचित्रमत्र ॥ ६ ॥ ॥ अथप्रलेपः ॥ ॥ चक्रार्कदुग्धगुडचित्रकपुष्करैश्चकासीसकुष्ठसहितैर्घुणजायायाच ॥ क्रमःप्रलेपइहसप्तदिनांतरालेग्रंथोविनाशयतितंखिलुनैवचिंता ॥ ७ ॥ अथशुष्कनेत्रलक्षणचिकित्से ॥ ज्वरस्यातिवृद्धिःस्मृतेश्चातिहानिःप्रलापोभ्रमश्चापिशोफश्चमोहः ॥ सकंपोयदाशुष्कदृष्टिर्नरोयस्तदाशुष्कनेत्रस्तुकृच्छ्रेणसाध्यः ॥ १ ॥ चिकि० ॥ निशायुग्मतिक्ताजलधरशिवानिंबमपिचकलिंगंधात्र्यावापफलमिहपटोलेनसहितम् ॥ कृतेषांक्षुद्रायाःशृतमपिनिपीतंप्रशमयेत्त्रिदोषास्थंशुष्काक्षमथनयनांतंचनितराम् ॥ २ ॥ स्याच्छुष्कनेत्रामयनाशनायंक्वाथः

---

१ स्नुह्यर्कसेहुंडानांपयस्त्रिपयइति.

पटोलाब्दसुरद्रुनिंबैः ॥ निक्काशिवाधान्ययुतः कृतोपि दोषत्रयारण्य दवः प्रसिद्धः ॥ २ ॥ मधूकभूनिंबकणासमेतं १ रसोनमारीच कणाशिलाभिः ॥ १ ॥ कणागदाभ्यां च मधूकसारैः ससैंधवं हिंगुयुतं च नस्यम् ॥ १ ॥ लेहमंजनं नावनयुग्मं रामवेदमनोजशरैश्च ॥ औषधैः क्रमतः परिज्ञेयं सन्निपातहरं परमत्र ॥ २ ॥ युग्मं ॥ मरीचोग्रगंधाकणाशृंगवेरैः रसोनाश्वगंधामधूकद्रुसारैः ॥ जलैश्छागजैः सिंधुयुक्तं तु पिष्टं विनाशं नयेद्धुमनेत्रं तु नस्यम् ॥ ५ ॥ अथ रक्तष्ठीविलक्षणचिकित्से ज्वरस्तृष्णा छर्दी रुधिरभवचिन्हैश्च रसनाय दा श्यावा रक्ताभ्रममदयुतश्चापि दवथुः ॥ तथा संज्ञानाशोऽतिसरणमथो हृश्वसनकं तदा रक्तष्ठीवी यमभवनमेवं जिगमिषुः ॥ १ ॥ वासापर्पटधन्वयासकफलीभूनिंबतिक्ताकृतं क्वाथं पीतमिदं प्रभातसमये सद्वैद्यदत्तं नृभिः ॥ रक्तं जातमिहैव वक्त्रकमले निंतायथा देहिनो देहांतर्गतमाशु चैव शमयेदूर्ध्वं न मेवत्रुतं ॥ १ ॥ नलपद्मकपर्पटकेस्समेर्मधुकनिंबजलारुणचंदनैः शृतमिहैव च भीरुसमन्वितं रुधिरमास्यगमाशु विनाशयेत् ॥ २ ॥

॥ ॥ अथ प्रलापलक्षणचिकित्से ॥ ॥ कंपः प्रवासः पवमानजाड्यं वाक्यस्य बाहुल्यमथ प्रलापः ॥ संज्ञाप्रणाशोप्यथ शंखपीडा शोफैः प्रलापी यममभ्युपैति ॥ १ ॥ त्रिदशांतरुशिवाभ्यां हारहूराश्वगंधानतदेवरपुष्पीभूतकेशीकिराततैः ॥ जलधरकटुका-

१ लेहम् २ रसोनादिशिलांतै रंजनम् ३ मरीचं मरीचसंबंधि चूर्णं ४ शिला मनशिला ५ करणादिहिंगुतैर्नस्यम् ६ मधूकसारं मधूककाष्ठांतर्गतकाष्ठमेव ७ लेहं लेहमेव अंजनं नावनं योरूयायुः समन्त्रयुग्ममिति ८ अत्र पूर्वश्लोके ९ मधुयष्टिका १० जलवालकं ११ अरुणं रक्तचंदनं १२ भीरुः शतावरी १३ एभिस्सर्वैः प्रथमोक्तैर्लक्षणैः कंपादिशोफांतैः इति विशेषः १४ प्रवासो व्यायामः स च उत्थानोत्फालनादिनिरिति १५ पवमानो वायुस्तत्कृतं जाड्यं गात्रेति बोध्यं १६ बाहुल्यं नियतानियतावादः १७ प्रलापोऽनर्थभाषणं मक्षणं हृत्यकालोभावं इदं मधुरं वा कटु नेवादिविवादो हि त्रुक्षितोस्मि इत्यादिप्रलापः १८ हारहूरा गोस्तनी १९ नतं तगरं देवरपुष्पी शरवपुष्पी २० भूतकेशी २१ किराततिक्तमालं किरात इति भाषायां तत्र भूनिंबः

भ्यांभारतीरेणुयुक्तंशृतमिदमिहपीतंनाशयेद्दुष्टलायम्॥१॥वी रिवारिधरपर्पटविश्वैर्वासकेनदशमूलसमेतैः॥चंदनेनचशृतंहि पयोत्रपाननतःप्रलयनभ्रमहृत्यै॥२॥ ॥अथजिह्वकलक्षणचि कित्से॥ ॥बाधिर्य्यमूकनास्याच्छ्सनकसनकोजिह्वकेकंटकै र्वैयुक्ताजिह्वातथास्याद्धकठिनतरैर्यत्रचापीहनूनम्॥निद्राना शोबलस्यक्षयमिहगदितःकष्टसाध्योनितांतंतस्माद्वैद्यैर्वरीऐ र्मृतकरयुतैर्यत्नतस्साध्यएषः॥१॥ ॥अथचिकित्सोच्यते॥ शिरीषपथ्यासयटोलनिंबनिशाद्वयैःपुष्करविश्वसिंही॥सु स्तागुडूचीसहितःकषायस्याज्जिह्वकारव्येंजनिपुत्रतुल्यः॥१ ॥यद्वाजिकासैंधवमातुलुंगरसैश्चयुतंकटुतैलमेव॥जिह्वांवि लिसंतुतदेवजिह्वांसंशोध्यतत्कंटकनाशकारि॥२॥ ॥अथ धूपः॥ ॥महेंद्रमार्तंडफलत्रयैश्चनिर्गुण्डिकानिंबवचागदै श्च॥सिद्धार्थभंगाचिरबिल्वपुष्पैर्मध्वासवैधूपनमत्रशस्तम् ॥३॥यद्ग्रस्तेजंतोत्रिजनितमहाव्यालसुरवगेतथाप्रेताद्वीते बहुभययुतेचैवमनुजे॥वरंधूपंचैतद्भयशमनमात्तस्थनितरांय तस्तंत्रेतंत्रेबहुमतविचारेणकथितम्॥४॥ ॥युग्म॥ ॥अथा भिन्यासलक्षणचिकित्से॥ ॥अभिन्यासेस्निग्धंवदनमिहदोष त्रयकृतंविनाशोनिद्रायाश्वसनकसनोचाप्यविरतम्॥वचोन्हानिर्ग्लानिर्भवतिबलनाशश्चनियतंमहामृत्योरस्यंगदितमि

---

१ वारिवालकम्. २ तस्याःजिह्वायाः कंटकानांनाशंकरोतितथाभूतमिति. ३ म हेंद्रइंद्रजवःमार्तंडःअर्कस्तस्यमूलं ४ चिरबिल्वकरंजः

दमेवाग्निनितराम् ॥ १ ॥ अथाग्नि० ॥ तावन्मुखशुद्धिः बाल्हीकवि
श्वासहितंप्रभातेपीत्वाद्रवंचार्कवजातमेकम् ॥ तिक्तासमंचापि
कटूपयुक्तंवक्त्रस्यशुद्धिंप्रकरोत्यवश्यम् ॥ १ ॥ ॥ अथनस्यं ॥ ॥
कणोषणासैन्धवभूतकेशीमधूककोष्णोदककल्पितंच ॥ घृषन्ति
नस्तार्थयवाष्टबिंदूनाघायगोबोधयुतोभवेद्वै ॥ २ ॥ अथांज
नम् ॥ ॥ मणिमंथरसोनकोषचाशुकफबीजानिकणाहरिश्च
गोः ॥ जलपिष्टमिदंमरीचिभिः कफवायुज्वरनाशनाञ्जनम् ॥
३ ॥ अथक्वाथः ॥ ॥ शृंगीभार्गीपुष्करैर्धन्वयासयुक्तोव्याघ्री
संयुतःपीतएव ॥ प्रातश्चाभिन्यासमुन्मूल्यनाशंकर्चूराढ्यः
शीघ्रमेवप्रकुर्यात् ॥ ४ ॥ शटीनिशाकणावृषेषिशिवोषणारुणा
दिभिः करंजशैलबिल्वमूलनिंबकंटकारिकाः ॥ सभूमिनिंबकंट
काशृतंकषायमुत्तमंपिबन्नरस्त्रिदोषतोविमुक्तएवनान्यथा ॥
५ ॥ गंधर्वहस्तकमलाफलविश्वपाठाव्याघ्रीयवासदलवणोत्तमवारि
सिद्धं ॥ क्वाथंप्रपीतमिहसर्वगदप्रणाशिनष्टस्सशूलमथसर्वमदं
निहंति ॥ ६ ॥ अभिन्याससर्पेणदष्टःपुमान्योत्यनेकैश्चयोगैर्न
नैरुज्यमेति ॥ तदाचास्यपादोर्ध्वथोबालललाटंसमादाल्घनेरु
ज्यलक्ष्मीमुपैति ॥ ७ ॥ ॥ अथपाठांतरम् ॥ अभिन्यासाख्ये
श्चौत्रसजलचरैर्भक्षितमतिःपुमान्नानायोगैर्यदपिनहिबोधंच
विलभेत् ॥ तदास्यांघ्रीदग्ध्वातदिहबहुवैद्यैश्चकथितालखाटंलौहे

१ हिंगु. २ आर्कवोभृंगराजः ३ गोबोधमिंद्रियाणांश्रोत्रत्वग्दर्शनघ्राणादीनांबोध
तेतन्यतानमायुतोभवेदिति. ४ मणिमंथंसैंधवंशुकशिरीषस्तस्यबीजानि. ५ हवि
र्घृतं. ६ गोःजलेनगोमूत्रेणपिष्टमिति कफवाताधिक्यादेवपित्तेसत्यपिअभिन्यासेसं
ज्ञानाशोभवतितस्मादेवकफवायुज्वरनाशनाञ्जनमित्युक्तं ७ कमलाफलं बिल्व.

र्वोधिरचितशलाकाग्निधमिता॥२॥ ॥इत्यभिन्यासचिकित्सा॥ ॥अथसामान्यत्रिदोषसम्यक्सामान्यचिकित्सारंभस्तत्रादौसंजीवनीगुटिकाविधिः यथा॥ ॥विडंगपीयूषकणाशिवानांशुंठ्युगगंधामलकास्तकणाम्॥ विषेणभल्लातकसंयुतेनसार्कंचगोमूत्रसुपेषितानाम्॥१॥ गुंजाप्रमाणार्द्रकसद्रसेनसंजीविनीयंगुटिकाप्रदेया॥ एकाह्यजीर्णेत्वथवाविषूच्यांहिसर्प्पदष्टेत्वथतिस्रएव॥२॥ तास्सन्निपातेतुचतस्रएवभक्ष्यास्तुसंजीवनकारिणीसा॥ यथार्थनाम्नींचपुराचकारधन्वंतरिस्तां चकृपार्द्रदृष्ट्या॥३॥ इतिसंजीविनी॥ गरलहिंगुकणौषणनिंबुकद्रवमहौषधसार्धमिदंसमं बहुविमर्दगुटीपरिकल्पिताविविधरोगहरोपरिसेवनात्॥१॥ एषानंदवटीमहाभयहरीव्याध्यौघविध्वंसिनीखल्वेमर्दिदिनद्वयंचभिषजैर्गुंजासमाकल्पिता॥ अंतेभैरवशब्दसंयुतहितापीतिप्रदारोगिणांरोगाणांचनिहंतिदोषनिचयंवातादिसंघादिनम्॥२॥ ॥अथरसः॥ दशमूलकषायमिश्रितंभवबीजस्यचभस्मकंपरम्॥दशपिप्पलिचूर्णसंयुतंत्रयजातज्वरनाशकारकम्॥१॥ ॥इतिसूतभस्म॥ ॥अथान्यसंशोधितसूतयोगः॥ ॥दैत्येन्द्ररुद्रभवबीजसमंविमर्द्यधूर्तस्यबीजमथतद्भवतैलयुक्तं॥तत्कामिनीमदविधूननमेवलोकेख्यातंत्रिदोषहरमत्रचवल्लयुग्मम्॥१॥ ॥अनुपानानि॥ ॥मरीचाहिवल्लीयुतंशीतयुक्तेकणाहिंगुयुक्तंचशूलेतथैव॥ पुराणज्वरेकृष्णयायुग्ममधूकंकणाविश्वमारीचजंचूर्णमेव॥ तथाश्वासयुक्तेत्रिदोषेतु

देयंमधूकेनयुक्तंतथार्द्रस्यवारि॥ प्रमेहेतुदेयंसितासंयुतंतत्तथा वातदोषेरसोना१मृताभ्यां॥३॥ प्रमेहाख्यगस्त्यःप्रसिद्धस्तुलोके१ बलाप्रीतिदोमानवानांतथास्ति॥ निशायांचदुग्धेनचेत्सेवितोवैन दामानिनीमानविध्वंसकारी॥४॥ अथोद्धूलनम्॥ प्रवीनपुष्करमा गधिकाशिवामरणिनिंबमहौषधलोध्रकैः॥ मगधकद्वलकारवि- कायुतैस्तनुविलिप्तमदश्चयुपेषितम् ॥१॥ सकटुकंचनिहंतिशरी रगंज्वरमिहैवचसर्वविवर्द्धितम्॥ चरकसुश्रुतवाग्भटकैरिदंपरम धूलनमत्रसुराकृतम्॥२॥ युग्मम्॥ अथवालुकास्वेदः यावा लुकाखर्परभर्ज्जितानेत्तांकांजिकेस्सिच्यचवस्त्रखंडे॥ निबद्धयत स्वेदनतोनराणांनश्यंतिवाताश्चबलाशशूलौ॥१॥ अथसन्नि पातानांपरमावधिः॥ स्यात्ससप्तदिनं१०शानि२०शंभुनेत्र३पक्ष १५तथाविंशतिबाणपूर्णा२५संख्यादिनानांचदशाभियुक्तं१३ मासत्रयंचापि३दिनाष्टकंवै८ ॥१॥ दिक्संख्यया१०चापिचतुर्द शेन१४पक्षेणपक्षेणचसंधिकाद्याः॥ निघ्नंतिसर्वेपिहिसन्निपा ता मृत्युस्तदर्वाक्चवदंतिवैद्याः॥२॥ गलिताःस्यात्संधिकेचास रसप्तकंच७तथांतकेदिक्प्रमितांदिनानाम्१० रुग्दाहकेविंशतिरे वचात्र२०चित्तभ्रमेचापिदिनत्रयंवै३॥१॥ शीतांगकेपक्षमितं च१५पंचपूर्वातथाविंशतिरेवचात्र२५॥ तंद्रायुतं चापिहिकंठकु ब्जेत्रयोदशाहं१३त्वथकर्णकाख्ये॥ मासत्रयं३चाप्यथभुग्नने त्रेदिनाष्टकं८ष्टीविनिरक्तपूर्वे॥ दश१०प्रलापेतुचतुर्दशैव१४वसु

---

१ रसोनंप्रसिद्धंअमृतमत्रघृतं.

ठ्यंजिह्वकसंनिपाते १६ प्रलापनिन्यासकएव १५ सर्वेकुलोप-
धिस्सुश्रुतवाग्भिटाद्यैः ॥मृत्युस्तदर्वागमृताः शिनोपिशंकान
कार्यक्रमतोत्रवैद्यैः ॥५॥ स्थितिरेषावरवैद्योरुक्तमिहैवमरणं
चात्रनन्नूनंचोर्ध्वमिहैव ॥१॥ श्रीशंकरप्रसादेननानातंत्रविचा
रतः ॥चिकित्सासन्निपातानांसमाप्तिंचगताशुभा॥१॥ ॥
इतिश्रीनिजगुरुचरणसरोजभ्रमरकाशीनाथचतुर्वेदिकृतायां
चिकित्साक्रमकल्पवल्ल्यां सन्निपातचिकित्सापरागगंधितोद्वि
तीयस्तबकः समाप्तः॥ २॥ ॥अथतृतीयस्तबकप्रारंभः॥
सद्वैद्यविवेकनिधिंपुराणंधन्वंतरिंचामृतकुंभहस्तम् ॥प्रणम्यकु
र्वेत्वथशीतकादेर्जीर्णज्वरादेरपिसच्चिकित्साम्॥१॥ ॥अथवि
षमादीनांनिदानलक्षणेउच्येते॥ ॥अल्पोपिदोषोऽहितसेव
नाच्चज्वरंप्रविश्याथकरोतिधातून् ॥ सचोष्णशीतादिभिरप्यका
लकालागमाद्वैविषमःप्रसिद्धः॥२॥ अथसंततः॥ योवासम
स्ससदिनांतरालेस्थितोदशाहंचतथारजन्यां ॥ योद्वादशाहंच-
भिषग्विरिष्ठैरुक्तस्सवैसंततकाभिधानः॥३॥ ॥एकाहिकं॥
एकंदिनंरात्रिमथोपियस्तुत्यक्त्वापुनश्चान्यदिनेऽभ्युपैति ॥ए
काहिकंतंप्रवदंतिवैद्याःश्रीसुश्रुताद्याश्चरकादयश्च॥४॥ ॥
अथतार्तीयं॥ दिनेतृतीयेप्रभवेन्नपूर्वेतृतीयकश्चाप्यपरश्च
तुर्थे॥दिनत्रयंत्यज्यचयोभवेद्वैचातुर्थिकंतंप्रवदंतिवैद्याः॥५
॥ अथैकाहिकादिचातुर्थिकान्ताएकद्वित्रिदिनानित्यक्त्वापुनः
कुतोहश्यंतेनेनपूर्वदिनेस्थित्यनआह यथात्यक्त्वादिनानांचयुग
त्रयंचदिनेतथैकंत्वपियस्समेति॥किंचिच्चकिंचिच्चनिविश्यधा

नूनामाशयंप्राप्यचदृश्यतेसः ॥६॥ ॥अथैकाह्निकत्रिदोषप्रकाशलक्षणानि॥ याह्नीत्रिकस्यापिबलाशमायुकृतस्तथावातबलाशयोगात्॥पृष्ठस्यशीर्ष्णस्त्वथवातपित्तात्तृतीयकस्यात्त्रिविधस्तुलोके॥७॥ऊर्ध्वंप्रगृह्याशुभवेच्चवातान्मध्यंप्रगृह्याशुभवेच्चपित्तात्॥अधःप्रगृह्याशुभवेच्चपूर्वंकफात्मकंतंप्रवदंतिवैद्याः॥८॥सोयंचतुर्थश्चभवेदजस्रंत्रेद्वैपरीत्येनचवैसमेति॥क्वापीहतंवैविषमंवदंतिवैद्याश्चसर्वेज्वरशास्त्रदृष्ट्या॥९॥ प्रातस्सायंत्वथमध्याह्नेकुतोज्वरस्यतीत्यतआह॥ प्रातस्त्वथकामध्यभागेदिनस्यसायंनोवातहृदत्रैवसोयं॥जानस्तिष्ठेत्सोपिश्लेष्मप्रदेशेनानास्थानेह्निचतुर्थैवश्यम्॥१०॥ केचित्संततकंवदंतिविषमंयेमूढतामाश्रितानान्येशास्त्रविवेकनिर्मलदृशःश्रीसुश्रुताद्याश्चये॥ अन्येग्लानिशिरोर्तिकाश्र्यसाह्नितावेगेपियातेसतिमाधुर्य्यंवदनेपिवाविरसतायेषेवतेसंतिवै॥११॥ अथसामान्येनविषमज्वरलक्षणम्॥ ज्वराश्चतेवैविषमाःप्रसिद्धायेसन्निपातेनसमुद्भवंति॥यथोल्बणंतत्रचवैचिकित्सापाकंज्वराणांचवदामिचाग्रे॥१२॥वातज्वरःसप्तदिनैस्तथैकमायूद्भवोवैदशरात्रितोहि॥श्लेष्मोद्भवोद्वादशभिर्दिनैश्चज्वरोनितांतंपरिपाकमेति॥१३॥ ॥अथसाध्येज्वरेक्वापिशैथिल्यादिभिरसाध्यत्वंलक्ष्यतेतत्किमित्यतआह॥ पित्तोल्बणोवातकफौसमौचेत्तीक्ष्णोमृदुर्वाथिनदाज्वरःस्यात्॥नारुण्ययुक्तोनहिकापिशंकातत्रौषधंवैमृदुतर्पणादि॥१४॥ अथज्वराणांदशउपद्रवानाह॥ श्वासोमूर्छाछर्दतीसारतृष्णाहिक्काकासाश्चांगभंगोरुचिश्च॥विड्ग्राहांतादि

ञ्चितास्तेज्वराणांविभीभूतास्साद्ध्चर्याञ्चितांतम् ॥१५॥ ॥
अथचिकित्सा॥ वमनरेचनशोधनसान्त्वनैः क्रमविवर्द्धितपिप्पलिका ऽऽसवैः ॥ज्वरविनाशकरैश्च रसैस्तथाविषममाशुजयेद्विधानवित् ॥१६॥ लाक्षादितैलैश्चमयूरकादेर्मांसैस्तथाक्षीरनिषेवणेन॥ ज्वरांकुशाद्यैरथवान्ययोगैर्विनाशमेतिज्वरआशुनूनम्॥१७
॥जलदामलकामरोषधैः कणयाच्याग्रियुतश्शृतोहियः॥ परिपीतइहैवचेत्तदाविषमंनाशयतिध्रुवंहिसः॥१८॥ अथसंततज्वरे॥
मुस्ताऽमृतानागरसारिवाभिः किरानतिक्तासुपटोलकैश्च॥ शृतंज्वरंनाशयतिज्वरंतंयंसंततंवैभिषजोवदंति॥१९॥ अथैकाहिके॥ द्राक्षापटोलाब्दशताह्वनिंबफलत्रयैश्चापिकृतः कषायः
॥ऐकाहिकंचाशुविनाशयेद्बैलंयथादारगणोनितांतम्॥२०॥
॥अथतार्तीयके॥ ॥जलदचंदननिंबमहौषधैर्नलदधान्यमहेंद्रफलत्रयैः॥ अमृतमुस्तकगोस्तनिकादिभिः शृतमिदंचपटोलसमन्वितं॥२१॥ समधुशर्करयामलकैर्युतम्ज्वरबलंचतृतीयदिनोद्भवं॥ विशमयेदपिशंतनुतेतनश्चरकसुश्रुतवाग्भटकोदितम्॥२२॥
युग्मम्॥ अथचातुर्थिके॥ ॥त्रिदशदारुमहौषधवासकैस्थिरशिवासहितैश्चशृतंजलं॥ समधुशर्करयाऽमलकैर्युतंविशमयेच्चचतुर्थदिनज्वरम्॥२३॥ अथरसाः॥ अम्लेनतालंपरिपेष्यपलात्ताम्रस्यपत्राणिविलिप्यतेन॥ भल्लातचूर्णंचतयोस्समानमूर्द्ध्वंत्वधश्चापिशरावमध्ये॥२४॥ दत्वाचसंसुद्रितदग्निदग्धंशीतंसमुद्धृत्यचवज्रितुग्धैः॥ संमर्द्दितञ्चूधरकेसुपाच्यतत्पञ्चगुंजामितंप्रदेयं॥
२५॥ तस्याऽनुपानेर्द्रकनीरमेवज्वरांकुशोयंचमहानुभावः॥ एकाहि

कंद्याहिकमप्यजस्रंनातीयकंतुर्यदिनोद्भवंच ॥ २६ ॥ धातुप्रविष्टंत्व
थवेगयुक्तंज्वरंविनाश्याशुलभेच्चशांतिम् ॥ सर्वज्वराणांच विनाशको
यंशत्रुस्तथावैविषमज्वराणां ॥ २७ ॥ ॥ अथज्वरारिः ॥ तुत्थाच
तालंद्विगुणंप्रगृह्यतस्माच्चशंबूकमथोपितद्वत् ॥ कन्याद्रवेणापि
विमर्द्यसम्यग्गोलंप्रकल्प्याथशरावगंतत् ॥ १ ॥ अग्नौविपाच्या
थनिरीक्ष्यशीतंगुंजात्रयंतत्सितयाप्रदेयं ॥ क्षीरोदनंशर्करयासमे
तंपथ्यंतथात्रात्रभिषक्प्रदिष्टं ॥ २ ॥ निहंतिसर्वान्विषमज्वरांस्त
ज्वरारिनाम्नाप्रथितंतुलोके ॥ ज्वरारिणासंनिहतेज्वरेथ देयंपुनर्दो
ह्शमायकिंचित् ॥ ३ ॥ अथमहाज्वरारिः ॥ ॥ श्रीशंभुबीजाद्विगु
णंचदेव्याभागत्रयंचाथमनःशिलायाः ॥ संमर्द्यकन्याद्रवसंयुतंता
ताम्रस्यसूक्ष्मेपुटकेनिधा ॥ १ ॥ तद्वालुकायंत्रगतंचयाम चतुष्ट
यंपाच्यततोतिशीलम् ॥ संचूर्ण्यगुंजात्रयसंमितंवैसशर्करंवार्द्र
कनीरयुक्तम् ॥ २ ॥ देयंचदुग्धौदनमत्रपथ्यंसमोद्गयूषंत्वथवा-
पिभक्तम् ॥ महाज्वरारिःप्रथितस्तुलोकेविनाशयेद्वैविषमज्वरा
न्यत् ॥ ३ ॥ ॥ इतिमहाज्वरारिः ॥ ॥ अथरामबाणः ॥ ॥
रंभाद्रावेभावितनालंसितयायुक्तंपथ्येदुग्धंभक्तसमेतंसितया
त्र ॥ मुद्गामानंतद्विषमघ्नंप्रथितंवैयद्बाणोरामविमुक्तोज्वरशत्रुः
॥ १ ॥ भूताभिषंगंप्रवदंतिकेचिज्ज्वरंतथान्येविषमंपुराणाः ॥ तेषां
मतेनाथविधूपनादिब्रुवेतथाचांजनयंत्रमंत्रान् ॥ १ ॥ तत्रतावद्धू
पः ॥ महिषंसर्षपकुष्ठशिवाकृतंसपिचुमंददलैरथवंशजैः ॥ सघृ
तधूपनमेतदुदीरितंविषमनाशकरंचपरंपतः ॥ १ ॥ अथांजनम्
॥ ॥ कणाजान्कणान्वैशिलासैंधवाभ्यांनिघृष्याथतन्नेत्रयोरंज

नंस्यात् ॥ विनाशायशीतज्वराणां विशेषान्नचैवात्रचिंतापुरायैः कृतंयत् ॥१॥ ॥अथवनौषधिधारणविधिः॥ ॥
अपामार्गजातांजटांसमसूत्रैस्सुरक्तैरथैवांसरेचापिकट्यां ॥ निबद्ध्यथतार्तीयिकंनाशयेद्वैनचैवात्रचिंताक चित्काऽपि कार्य्या॥१॥ ॥अथयंत्रम्॥ स्वस्तिश्रीमत्कोणपानामधीशोलंकापुर्य्यांभीषणोयोविपूर्वः॥ आज्ञामेतांदापयत्येवरेरेपापिष्ठास्मत्सन्निधिंशीघ्रमेहि ॥१॥ स्वीयंस्थानंत्यज्य नोचेज्ज्वरत्वमन्यत्किंचिद्व्यर्थक्लेशोभवेत्ते॥ आस्तांतद्वैचन्द्रहासाऽभिधेनखड्गेनैवत्वच्छिरःकृंतयामि ॥२॥ आज्ञापत्रंमेषितंसद्यएवपश्यन्नोवामन्यसेचेत्तदावै॥ ह्रींह्रंह्रः स्तर्हिदुष्टस्वभावत्रासंदत्वात्वांचनाशंनयामि॥३॥ विषमोहमितिस्वचेतसावद्भुगर्वंचकदापिमावृथाः॥ इहरेत्रभवादृशामयाक्षणमात्रान्निहितानचापरे ॥४॥ अंगवंगकलिंगेषुसौराष्ट्रमगधेषुच॥ वाराणस्यांचयद्वृत्तंतन्नस्मरसिरेज्वर॥५॥ विभीषणेनप्रहितंज्वरायपत्रंविलिख्याथनिबद्ध्यबाहौ॥ विनाशनंस्याद्विषमज्वराणांपुरातनैर्लक्षितसत्प्रभावम् ॥६॥ पुरातनग्रंथेषुस्वस्तिलंकात्कोणपाधिपतिरित्यादिलिखितंपरमत्रकल्पितश्लोकानवलोक्य कापिचिंतानकार्य्यायतोत्रविभीषणालिखतिमित्रोदकमेवमंत्रोनुपुरातनावेवकृतौ श्रीभीष्ममात्रुत्तरभूमिशायीपुत्रेणहीनस्तुमुनिर्ममार॥ तिलोदकंतस्यकृतेचदद्यादैकाहिकाद्वैत्रसितोभवेद्यः॥७॥ ॥इतित्रोटकमेकाहिके॥

॥ अथचातुर्थिकेनस्यम् ॥ ॥ शिरीषपुष्पोद्भवकल्कयुक्तं निशाद्वयंचाज्यसमन्वितंच ॥ चातुर्थिकेनस्यमिदंप्रगृह्यत स्याद्विमुक्तस्तुभवेदजस्रम् ॥ १ ॥ अन्यच्च ॥ चातुर्थिक ज्वरहरंहिकिमत्रचान्यद्वाचादतेमुनितरूद्भवपत्रजातात् ॥ नस्यंप्रकल्प्यचनासिप्रतियोजयेच्चसर्वेषुतंत्रनिचयेष्वपि वर्णितंयत् ॥ १ ॥ अस्यपाठांतरम् ॥ अगस्त्यपत्रसंभवं रसंचनस्यचन्नरोनसिप्रगृह्यतत्वविस्मसत्यवेनलीकरः ॥ ज्व रंचतुर्थवासरप्रभूतमप्यसोद्दग्न्निहंतिसर्वविन्तथाभिरं चयंजरंयथा ॥ १ ॥ अथधूपः ॥ विडालविण्मानवलोम शृंगंवृषस्यसर्प्पस्यचकंचुकत्वक् ॥ वंशस्यनिर्माल्यमथात्र शंभोर्मयूरपिच्छंचवचायवाश्च ॥ १ ॥ बाल्हीकसिद्धार्थकभू तकेशीमरीचसंधंसममाजमूत्रैः ॥ संपेष्यपश्चाच्चघृतेनयु क्तैर्विधूपनंवैविषमान्निहंति ॥ २ ॥ डाकिन्यश्चाथशाकिन्यो वेतालाब्रह्मराक्षसाः ॥ माहेश्वरेणधूपेनतेसर्वेयांतिसत्वरम् ॥ ३ ॥ ॥ इतिमाहेश्वरधूपः ॥ ॥ विषमपीडितदेहयुतस्यवैशि रसिचापिनिधायकरंहियः ॥ परिजपेद्धरिनामसहस्रकंसवि जयेच्चतदाविषमज्वरम् ॥ १ ॥ ज्वरे कस्मात्पूर्वंशीतमेवदृश्य तइत्याहः ॥ यदात्वगगतोश्लेष्मवातौनराणांतदाशीतकंपा दिकं दृश्यतेत्र ॥ तयोश्शांतयेपित्तमंतेप्रविष्टं तुशीतज्वरे दाहयुक्तंकरोति ॥ १ ॥ पूर्वंदाहोन्तेशीतंचकुतइत्यतआह ॥ यदात्वगगतंक्वापिपित्तंभवेद्दैतदादाहएवाप्रपूर्वंततश्च ॥ द्वयंश्लेष्मवाय्वोश्चशीतंकरालंसमुत्पादयेद्दाहनाशंविधाय ॥

॥२॥ उभौ दाहशीतादिकौ यौ तु लोके तयोः कष्टसाध्यौ त्रदाहा दिकोयः॥ क्रियादाहयुक्ते तु पित्तोदितैव तथा शीतकादौ तु तूल्यभिसेवा॥३॥ देहार्द्धयोःशीतोष्णत्वं चकुतइत्याह॥ देहेविदग्धेन्नरसे चलाशापित्ते स्थिते चापियदाप्रवेत्ताम्॥ तदार्द्धशीतं हि परं तथोष्णं देहार्धकं चापि भवत्यवश्यम्॥४॥ नाभ्यधस्ताद्यदा शीतं तदामानर्विरेचयेत्॥ वामयेच्चविलोक्यान्धनाभेरूर्द्ध्वं चशीतलम्॥५॥ सकलदेहेचोष्णत्वं करपादयोश्शीतत्वंचकुतइ०॥ श्लेष्मायदाकायगतश्च दुष्टःपित्तं तदंते चयदास्थितं वै॥ तदोष्णतास्यादखिलेपिगात्रे शैत्यं तदा वैकरपादयोश्च॥६॥ तस्योपचारः॥ ॥तुलसीदलनिर्गतंजलं मरिचैर्युक्तमिहैव लेपितम्॥ करपादगतं तदैव तदखिलशैत्यमिदं हि नाशयेत्॥१॥ यदि चापि निपीयते क्वचित्तदऽहोनाशयति ध्रुवं तदा॥ जठरास्थितशैत्यमत्र चैनहि चित्रं च पुरातनोदितम्॥२॥ अथ शीतार्त्तिघ्नक्वाथः॥ क्षुद्राधान्यमहौषधामरलतातिक्तेन्द्रभार्ङ्गीद्विजमुस्तापद्मकरक्तचंदनधरानिंबैस्सनिंबैरपि॥ क्वाथं चापिपटोलपुष्करवृषैस्संसाधितं पाययेच्छीतार्त्तिज्वरशांतये च कथितं वैद्यैःपुराणैरपि॥१॥ ॥अन्यत्॥ मृगनाभिविलिप्तपीवरस्तनपंकेरुहकुड्मलांचिता॥ युवतीस्वरदाभिलिंगिता ध्रुवशीतार्त्तिविनाशतूलिका॥१॥ ॥ अथ तृड्दाहादिके प्रलेपः॥ बदरदाडिमलोध्रकपित्थकैरथ च निंबुकनीरसुपेषितैः॥ शिरसि लेपनतस्तु नृणां तृषादवथुरप्यपरं विलयं व्रजेत्॥१॥ कृताचेद्गण्डूषोपायां तृड्दाहा

दिनशाम्यति ॥ तदा जलं मधुयुतं पिबेत्तच्छांतये गदी ॥ १ ॥ वमनमेवतदा तु करोति योजयति दाहतृडादिगणां स्तुसः ॥ नहि यदा वमनं तु भवेत्तदा मदनजातफलं मधुना पिबेत् ॥ २ ॥ अथ जीर्णज्वरः ॥ ॥ पक्षादेकादूर्ध्वमत्रापि नाशं नो वा गच्छेत्तं ज्वरं जीर्णमाहुः ॥ नाशं मांसस्याथ वैवर्ण्यमत्र वेगो मन्दश्चानुबन्धेन युक्तः ॥ १ ॥ प्लीहाग्निसादेनयुते तु जीर्णज्वरे तु छिन्नोद्भव एक एव ॥ सपिप्पलीकस्तु शृतः कषायः सपिप्पलीकस्तु गुडस्तथैव ॥ २ ॥ निर्दग्धिकानागरदेवबल्लीपांचालिचूर्णान्वितसत्कषायः ॥ जीर्णज्वरारोचककासयुक्तश्वासं शिरोर्त्तिञ्च विनाशयेद्दे ॥ ३ ॥ द्राक्षाऽमृतानागरनिंबशृंगीपाठाशटीबालकनीरदैश्च ॥ तिक्ताधरानिंबदुरालभाभिर्धन्याककोशीरकपुष्करैश्च ॥ ४ ॥ व्याघ्रायुतो गोस्तनिकासमेतैः क्वाथः कृतो लोहितचन्दनाढ्यः ॥ जीर्णज्वरारोचककासयुक्तान्श्वासांस्तथा वैश्वथुञ्च हन्यात् ॥ ५ ॥ ॥ अथ तालीसाद्यं चूर्णम् ॥ तालीसाबुजजबीजजीरकयुते शृंगीशिवागोस्तनीत्वातुजातकटुत्रयामरलतासत्वैरुशीरादिभिः ॥ मुस्ताकोसुदर्बीजचन्दनशटीवंशोद्भवैलायुगैः कृसंशफ्मासितान्वितप्रशमयेज्जीर्णज्वरारोचकान् ॥ ६ ॥ काशश्वासशमाय वैद्यनिकरैश्चूर्णं पुराकल्पितं पित्तश्लेष्मसमुद्भवांश्च निखिलान्व्याधींश्च शांतिं नयेत् ॥ तस्मात्सेव्यमिदं प्रभातसमये वैद्येन दत्तं तु वै संदीप्याग्निमथो हि भोजनरुचिं दीर्घां समुसादयेत् ॥ ७ ॥ ॥ चूर्णम् ॥ अथ रसादिधातुगतज्वरलक्षणाचिकित्साः क्रमस्य क्रमपृथग्लिख्यंते ॥ तावद्रसधातुगतज्वरलक्षणं ॥

हृदयव्यथनंचगौरवंसदनंछर्दियुतंत्वरोचकम्॥ रसधातुगतेत्विदंहिवैनियतंदैन्ययुतंचलक्षणम्॥ ८॥ रुधिरगतलक्ष०॥ रुधिरस्यचछर्दनंभवेदपिदाहःपिटकोद्गमंयदा॥ बहुमोहयुतंचवैतदारुधिरेचापिगतेहिलक्षम्॥ ९॥ मांसगतलक्ष०॥ रक्तष्ठीवनसूत्रकृच्छ्रसहितापीडाचतृष्णारुचिर्ग्लानिर्मोहसमन्वितश्चदवथुस्तद्वत्प्रलापोभवेत्॥ एतन्मांसगतज्वरेगदहरैर्वैद्यैःसदालक्षितंतस्माल्लक्षणमेतदेवपिहकेरावेष्टितंसद्गुरुः॥१०॥ मेदोस्थिमज्जागतस्यएकेनैवपद्येनलक्षणं॥ मूर्च्छास्वेदःप्रलपनमथोग्लानिरत्रैवमेदोयातेचाथोबहुदिनभरैरस्थिगेनास्थिभेदः॥गात्रक्षेपःश्वसनकसनेकूजनंचाथमज्जायातेहिकाश्वसनकसनंमर्मपीडांगशैत्यम्॥११॥ अथशुक्रगल०॥ ज्वरेशुक्रगेशक्रमोक्षोजनानांतथैवाथशोफोरिपोर्देहयाते॥तदाभेषजंजान्हवीनीरमेवनमश्शंभवेऽन्यन्नकिंचित्ततोस्ति॥१२॥ अथचिकित्सा॥ रसस्थंतुज्वरंप्राज्ञोजयेद्वमनलंघनैः॥ असृग्जातंशिरामोक्षसमशीतललेपनैः॥१३॥ मांसगश्चतथाप्राज्ञैर्जेयस्तीक्ष्णविरेचनैः॥ मेदोगेमेदसोनाशकारकैश्चसदौषधैः॥१४॥ अस्थिगेवातशमनीक्रियाकार्याभिषग्वरैः॥ बस्तिकर्मतथाभ्यंगमर्दनादिकमेवहि॥१५॥ सितोपलाद्यंचूर्णम्॥ वंशीसिताद्वाथकणातदर्धात्रुटिस्तदर्धाप्यथत्वकृतदर्द्धा॥ संचूर्णयेत्तन्माक्षिकसंयुतंचसितोपलाद्यंहिगदप्रहारि॥१६॥ क्षयंपार्श्वशूलांश्चजीर्णज्वरान्वैतथारक्तपित्तंत्वथश्वासकासान्॥ तथाचाग्निमांद्यारुचीदाहपूर्वान्विनाशंनयत्याशुपुष्टिंकरो-

रोति॥ युग्मम्॥१७॥ अथब्रह्मास्त्ररसः॥ गौरीरजश्शुद्धं मिहत्रिभागंभागैकमानंभववीजमस्य॥ विषं त्वहेस्तत्समभेवचाथत्रिभिस्समंवैविषमत्रशङ्खम्॥१८॥ सर्वैसमंचोषणमत्रदत्वातोवन्छिलायांचशिलासुतेन॥ संपेष्यपश्चाच्चनिधायखल्वेविधिंतथाचापिवदामिचाग्रे॥१९॥ वराहपित्तैरथकेकिपित्तैस्तु सुतन्माहिषपित्तयुक्तम्॥ पुनःपुनर्मर्दनसप्तवारंपृथक्पृथग्वैक्रमतस्ततस्तु॥२०॥ पुनर्लांगलीदेवदालीचकीलातदाचार्द्रकंवैपृथक्सर्वमेव॥ प्रपेष्यंपृथग्भावमासांचदत्वापुनर्वापुनर्घर्मशुष्कं विमर्द्य॥२१॥ तादृस्यंद्रवैरेकविंशास्सकारंपृथग्भादितंतद्धिगुंजंचनासा॥ प्रगृह्याशुमृत्युंजयेद्वाथमुक्तातदापथ्यमत्रास्तिदध्योदनंवै॥२२॥ सर्वोदरव्याधिहरोजनानांसर्वज्वराणांहिविनाशनश्च॥ ब्रह्मास्त्रएषप्रथितस्तु-लोकेमृतंजनंजीवयतिध्रुवंयत्॥२३॥ नैतद्भक्ष्यंनस्यमेवात्रजंतूनमृत्योरास्येसंगतान्मोचयेद्यत्॥ एतन्नस्यंगृह्यदध्योदनंहिभक्ष्यंकिंचिन्नान्यदेवात्रनूनम्॥२४॥ पाणौकृत्वायस्तुवैधाधिराजोराज्ञांगोष्ठीमध्यगस्तत्रतिष्ठन्॥ किंचित्किंचित्सत्ययं-कापिकालेदत्वासम्यङ्नान्यतामेतिसद्यः॥२५॥ इतिब्रह्मास्त्रोरसः॥ ॥अथपूर्वलिखितानांज्वरोपद्रवाणांचिकित्सा॥ ज्वरेहितंयत्तुसदौषधंस्यात्तेनैवसर्वानिपिवेद्यवर्ग्यः॥ जयेज्ज्वरोपद्रवदुष्टसंघात्तुपद्रवाणांचविनाशनंयत्॥२६॥ वमिर्मूर्च्छा दाहातिसरणाहिक्केचनितरांज्वरेवैदुःसाध्याबहुगदहरैश्चाप्यविरतम्॥ शिवाकट्वीद्राक्षानलदकृतमालैरपिशठतः सरेणुः

रसंपीतश्शमयतितिमूर्च्छांज्वरकृतां॥२७॥ससैंधवंकेशरमा
तुलुंगफलोद्भवंवैविरुचिंनिहंति॥ससैंधवंचापितथैवनीरंनस्ये
नहिकाचनिराकरोति॥२८॥ इत्यरुचिहिक्काचिकि॥ अथश्वा
सकासयोश्चि०॥ शृंगीगर्दभशाकपुष्करकटीमुस्ताकणाभे
षजैर्लेहोवैमरिचान्वितःप्रशमयेच्छ्वासंमधूकान्वितः॥वैदे
हीचरयान्विताक्षसहिताविश्वान्विताभाक्षिकैर्लीढाकासस
मायचाथविहितास्सिंहोमधूकान्वितः॥२९॥ दाहे॥ विदारि
कादाडिमबीजपूरलोभान्वितोमूर्ध्निकृतःप्रलेपः॥विनाशकः
स्यादवथोर्हिपूर्वंजयत्यसौष्मांतिभवंनचित्रं॥३०॥ तृड्दाह
चिकित्सा॥ शीतंपयोमधुयुतंचनिपीयकंठमारभ्यचाशुध
दितद्वमनंविदध्यात्॥पश्चात्सुखेक्षौद्रवगायलाजांस्तर्षप्रतर्ष
प्रशमायदद्यात्॥३१॥ छर्द्यां॥ जलदचंदनवालकनीलिका
यदिचमाक्षिकयोगयुतांपिबेत्॥ अथगुडूचीरसंमधुनान्वितं
यदिपिबेदपिछर्दिविनाशनम्॥३२॥ अन्यच्च॥ सनन्दनाश
र्करयासमेताविण्मक्षिकाणांमधुनावलीढा॥सगैरिकावाक
टुकावलीढाज्वरोद्भवंछर्दिचयंनिहन्यात्॥३३॥ ज्वरातिसारे
॥वत्सादनीवत्सकभूमिनिंबविश्वाविषाभिश्चसनीरदैश्च॥
ज्वरातिसारप्रशमायपेयःकृतःकषायोमधुसंयुतश्च॥३४॥
॥अन्यच्च॥ ॥अमृतातिविषाजलदेन्द्रयवान्धरणीपिचुमं
दयुतांगुटिकाम्॥ परिपेष्यशतानपिकोनपिबेदतिसाररिपू
न्ज्वरनाशकरान्॥३५॥ तृष्णायां ॥रजतेनविनिर्मिताय
दागुटिकावैसुखपद्मधारिता॥नहितर्हितृषाज्वरेनृणांबहु

बाधांचकदापिसंदिशेत् ॥ ३६ ॥ अन्यच्च ॥ लवंगपत्रकोशीर
कचंदनैलाचूर्णं सितामाक्षिकसंयुतञ्च ॥ लीढंत्रिदोषोद्भवतृड्वि
नाशोसार्थीकृतंवैबहुवैद्यसंघैः ॥ ३७ ॥ अथज्वरेशोधनंयथा
॥ ससैंधवंपिप्पलिचूर्णयुक्तंजलंहिपीत्वातुततोविछर्द्य ॥
विरेचनंचत्रिफलाकणाभ्यांश्यामात्रिवृत्केशरमाक्षिकैश्च ॥ ३८
॥ सितायुतैःशोधनमेतदेवदेयंचमध्येन्हियदाज्वरश्चेत् ॥ संशो
धनार्हंचविलोक्यपूर्वंसामज्वरेक्कापिनदेयमेव ॥ ३९ ॥ अथज्व
रचिकित्सायांकृत्याकृत्यविवेकोयथा ॥ पक्वेदोषेशोधनंचापि
कृत्वावारंवारंचेत्प्रवर्त्तेन्मलंयत् ॥ तस्योपेक्षानैवकार्याभिष
ग्भीरोध्यंतद्धैचातिसारोक्तयोगैः ॥ ४० ॥ क्षीणेयातेमानवेवा
ज्वरेणनोवादेयंछर्दनंरेचनंवा ॥ कामंदुग्धैर्वानिरूहैश्चतस्य
कार्याशुद्धिस्तन्मलंचापिपात्य ॥ ४१ ॥ तत्रदुग्धदानेविचारः ॥
पित्तानिलार्त्तेत्व्यतिसारयुक्तेसुसंस्कृतंशीतलमेवदुग्धं ॥ पीतं
सुधाकल्पमथोहितञ्चतारुण्ययुक्तेसकफेविषंस्यात् ॥ ४२ ॥
पयश्शुंठीद्राक्षायुतमथसखर्जूरकघृतंसखंडंसंसिद्धंयइह
पिबतिस्वार्जितमहो ॥ तदातृष्णांतीव्रांजयतिबलवीर्य्येचल
भतेनलोकेदुग्धाद्वापरमिहपरंपौष्टिकमलं ॥ ४३ ॥ अथागं
तुकज्वरनिदानलक्षणंचिकित्साच ॥ श्रमाद्यभिशापाभिचा
रादिकामप्रकर्षातिचिंतातिशोकादिजाताः ॥ ज्वराःक्रोधभू
तग्रहाद्यैरनेकैःप्रजातास्तथाऽऽगंतुकाएवसर्वे ॥ ४४ ॥ अ
न्यच्च ॥ अश्वारूढोरुत्यदुग्धंसिताढ्यंपीत्वामर्त्यःपादचारी
सुभोज्यं ॥ नागारूढोमैथुनंचापिकृत्वालोकारूढःस्वापतस्सौ

रव्यमेति॥४५॥ शापाभिचारजेषु॥ ॥शापाभिचारभवं प्रभूतग्रहादिभिश्चापिबहुप्रबद्धः॥होमादिभीर्मंत्रजपैश्च दानैर्विशेषतोजेयइतिप्रतिज्ञा॥४६॥ कामक्रोधादिजातेषु॥ ॥ज्वरंकामजंक्रोधमुत्थाद्यजेयंतथाकामजंक्रोधमुत्साद्ययत्नात्॥इहग्रंथभूयस्त्वभीत्यानयद्वैतदेवान्यतंत्राच्चि लोक्यापकार्य्यम्॥४७॥ अथविगतज्वरलक्षणानि॥ तनौलघुत्वंक्रमशोहतापशांतिर्मुखेपाकमथोहिशीर्षे॥कंडूःक्षुधास्वेदसमुद्भवश्चज्वरेगतेचेंद्रियसौष्ठवंस्यात्॥४८॥ ॥ अथासाध्यलक्षणम्॥ ॥प्रहृष्टरोमाबहुलोहिताक्षःश्वसन्मुखेनैवहृदाशिवारुजम्॥संधारयन्हिक्कतियस्तृषार्तोज्वरेयमंगच्छतिशीघ्रमेव॥४९॥ जयतिजयतिवाणीश्रीगुरूणांमुखस्थासकलबहुकविद्यासौख्यसंपत्प्रदात्री॥ जयतिजयतिचास्मज्जन्मसाफल्यकर्त्रीगुरुचरणसरोजोद्भूतधूलेःकृपायां॥५०॥ ॥इतिश्रीगुरुचरणसरोजाभिलिंदचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्ल्यांशीतज्वरजीर्णाद्यनेकज्वरचिकित्सापरागगंधिलस्तृतीयःस्तबकःसमाप्तः॥३॥ ॥ अथातिसारः॥ ॥

नत्वाभवानीतनयंगजास्यंशीतांशुमौलिंचगुरुंस्वकीयम्॥ब्रूमःप्रतीकारमथोतिसारातंकस्यतद्ग्रहणीगदस्य॥१॥ तावत्सामान्यनिदानम्॥ व्यस्तैःसमस्तैरपिदोषजातैःक्रोधाद्भयाच्चापिपुरीषरोधात्॥ बह्वन्नपानाज्जडभोजनाच्चस्यान्मानवानामतिसारषट्कम्॥२॥ तावद्वातजल

क्षणचिकित्से ॥ अरुणफेनिलरूक्षमलानियो त्यजतिचा पिसशब्दमिहाऽऽमतः ॥ कियदतीवरुजाल्पमहाल्पकान्य थनवायुभवस्तुमुहुर्मुहुः ॥ ३ ॥ चि० सूतान्मृताच्चापिचतु र्गुणांहिबीजंभवान्यास्तुनिधायखल्वे ॥ संपेष्यतेनैवचपू रणीयावराटिकासुद्रवचटंकणेन ॥ ४ ॥ भांडेनिरुध्याथवि पाच्य शीतंस्य लोकनाथाभिधमेतदेव ॥ तद्वेदगुंजामित मेवदेयंवातातिसारेमधुनाऽनुपानैः ॥ ५ ॥ अथानुपानम् ॥ ॥ जलदविश्ववचातिविषा दिवप्रभवकाथशृतंहिजलंन रः ॥ अनुपिबन्नपिवातसमुद्भवंजयतिचाप्यतिसारबलंम हत् ॥ ६ ॥ अथपित्तातिसारलक्षणचिकित्से ॥ पित्ता-त्पीतंदूर्वयासन्निभंचरक्तंतद्वत्पाकुपाकेनयुक्तम् ॥ तृष्णा मूर्छादाहयुक्तंचसामंदृश्यंसम्यग्रोग्चितंचातिसारे ॥ ७ ॥ ॥ पित्तचिकित्सा ॥ श्रीशक्रजयवांभोदबालुकातिविषा-शृतः ॥ काथोहन्यादतीसारंसामंमायुसमुद्भवम् ॥ ८ ॥ ॥ अथकफातिसारनिदानेचिकित्से ॥ श्वेतंस्निग्धंगौरवा-रोचकाभ्यांयुक्तंतद्वत्पिच्छलंशीतलंच ॥ श्लेष्माकोपान्मंद पीडासमेतंज्ञेयंसम्यक्सार्यतेनात्रचिंता ॥ ९ ॥ चि० ॥ च विकातिविषावालविश्वाश्रीगदवत्सकैः ॥ तक्यपथ्यासहि तःकुर्सश्लेष्मातीसारनाशनः ॥ १० ॥ अथद्वंद्वजेवातपि त्तजलक्षणचिकित्से ॥ पक्वान्नद्रवसंन्निभंचपततिकाथा त्यनीरप्रभंमूत्रंचापिचवायुमायुजनितेऽतीसारकेनिश्चितं ॥ विड्दाहेनसमन्वितान्चबहुधापीडान्वितातत्रवेदेयंतन्दुल

वारिचेन्द्रजवत्वादेवद्रुमुस्ताविषैः॥११॥ वातबलासिज०॥।
नित्यंगुडुडशब्दसंघसहित वातेबलासान्वितेपीडासंधिषु-
मन्दगन्धसहितांविड्भ्रांतिमोहक्लमाः॥ देयश्चात्राभिषग्वरै
श्चनितराबिल्वाब्दशुंठीत्वचापथ्याचित्रकवालवत्सकविषा-
तुल्यैः कषायंकृतम्॥१२॥ पित्तकफजल०नि०॥सवेदनं
पिच्छिलमन्दवेगद्रवंमलंपातलमत्रदेयम्॥ क्षुत्तृड्युतेपित्त-
बलाशजातेमूर्वाविषावत्सकमेघनीरम्॥१३॥ अथस
न्निपातजल०नि०॥तंद्रामोहतृषास्यशोषदवथुश्वालाव
लीदुःसहोतीसारश्शिशुवृद्धभीरुनिवहेदुःस्साध्यएवद्रुतम्
॥दोषाणांत्रितयोद्भवोप्यतिबलोलिंगैश्चसर्वैर्युतोदेयात्रत्र-
शिवागुडेनसहितामेघाब्दविश्वायुता॥ १४॥ अथसामा
न्यचिकित्सा॥ कच्छदादाडिमीजंबूशृंगाटकानांसुपत्रैश्च-
विश्वाब्दबार्हिषकैश्च॥ श्रीयुतंसुश्रृतंवारिगंगांनिरुध्यात्पु
नःकोतिसारोवराकोस्तिभूमौ॥१५॥ कंचटादिः॥ कुटजा
तिविषाघनवालमदाकुसुमैश्चसदाडिमलोध्रयुतैः॥शतनी
रमिदंस्वतिसारहरंयदिलोहितचन्दनयुक्तमहो॥१६॥ कुट
जादिः॥ पीयूषविश्वातिविषाब्दकानिनिष्क्वथ्यनीरेणचवेश्च
तानि॥आमातिसारस्यशमायपीतान्यरोचकस्यग्रहणीगद
स्य॥१७॥ अथेन्द्रयवाद्यंचूर्णम्॥ ॥महेन्द्रविश्वबिल्वलो
ध्रमेघचूर्णसंयुतंगुडंगदंचशाल्मलीप्रभूतमप्यहोहठात्॥
निपीयतक्रसंयुतंनिहंतिचापिसत्वरंनरोतिसारमुद्धतंनचा-
स्तिचित्रमत्रवै॥१८॥ अथरक्तातीसार॥निदानल०चि०॥

पित्ताधिक्येपित्तसंवर्द्धनंयद्भुक्तंतद्वैरक्तपित्तौप्रकोप्य॥ कुर्यान्नृ-
णांरक्तपित्तातिसारंरक्तस्त्रावंलक्षणंतत्रलक्ष्यम्॥ १९॥ जम्बाम्र
धात्रीसुमनःसमूहंशिलास्थमापेष्यशिलासुतेन॥ निष्पीड्य
वस्त्रेणरसंचदुग्धेऽजाजेविपाच्याथसएवपीतः॥ २०॥ रक्ता
तिसारप्रशमायनूनंमधूपयुक्तोहितथैवचान्यत्॥ गुडान्वितं
बिल्वमथापिभुक्तानामापिरक्तस्यनविद्रुतोस्यात्॥ २१॥
अन्यच्च॥ हैयंगवीनंमधुनान्वितंचसितासमेतंहिगवांनरोयः
॥रक्तातिसारंचजयेद्धिसोपिभुनक्तिनित्यंनहिचित्रमत्र॥ २२॥
॥अथान्नातिसारनि० ल० चि०॥ अन्नेजीर्णेदोषसंघाःप्रवृद्धा
धातून्कोष्ठेक्षोभयन्तइहन्मलांश्च॥ नानावर्णानेकशस्सारयंति
युक्तेशूलेरत्नजेचातिसारे॥ २३॥ श्रीवत्सविश्वातिविषाय
वाब्दवाल्हीकनिंबैश्श्रृतःकषायः॥ अन्नातिसारप्रशमाय
पीतश्छिन्नंनचेवात्रवदंतिवैद्याः॥ २४॥ अथछर्द्यातिसारनि०
ल० चि०॥ समानवायुःकुपितोयदोर्द्ध्वमायुस्तथाधोहिमलंन
येद्वै॥ वीध्यस्तदाछर्द्यतिसारएवपीडान्वितःश्छर्दिसमेतएव
॥ २५॥ बिल्वचूतास्थिसंजातंचूर्णंशर्करयान्वितं॥ अवलीढं
मधुयुतंछर्द्यतीसारनाशनम्॥ २६॥ अथतृष्णातीसार०॥
तृष्णानिरोधादहतापतोऽपिमायुःप्रकुप्याथमलेनराणां॥
संद्राव्यपश्चाच्चकरोत्यवश्यंतृष्णातिसारंनहितत्रचित्रम्॥
२७॥ ॥जम्बाम्रपत्राणिवदावरोहसुशीरमेतान्सकलान्वि
मर्ष्य॥तृष्णातिसारप्रशमायकुर्याद्रसंकषायंत्वथवापिचूर्णं
॥ २८॥ क्षौद्रान्वितंतंदुलवारियुक्तंज्वरातिसारंचवमिंसमूर्छां

रक्तस्रुतिं छर्दितृषाद्यनेकान्व्याधींस्तथाशीघ्रतरं निहंति॥२९
॥युग्मम्॥ अथशोफातिसारः॥ श्लेष्मानिलौवर्म्मणिसं
स्थितंचशोथंसमुत्पाद्यततश्चमासुः॥समानवायोश्चसहा
यमेत्यशोथातिसारंजनयेदजस्रम्॥३०॥जन्तुघ्नपःठातिवि
षाकलिंगदेवद्रुमुस्तामरिचैश्शृतस्तु॥शोफातिसारंशमये-
त्कषायोवन्हिर्यथाचाहुतिसंघमेकः॥३१॥ अथमलक्षयजः
॥ योदीप्तिवन्हिश्चमलक्षयेपिविषंसफेनांविसृजेच्चतत्र॥दे
यंहिसुंठीसहितंतुतक्रंतैलंघृतंवाथपयोगुडंवा॥३२॥ अथ
कृमिजः॥ यदामाशयेचाथपक्काशयेपिप्रवृद्धौहिशूलंचछ
र्दिर्भवेच्च॥अपानेतुकंडूपुरीषेकृमीणांतदादर्शनंजंतुजाता
तिसारे॥३३॥ स्रुवर्चलंशीर्षफलस्यमज्जांविडंगतिक्तेन्द्र
यवाहिबीजं॥जवानिकाशफ्नतरांबुसुंठीकृम्यातिसारेच
सतक्रमेतत्॥३४॥ अथज्वरातीसारे॥ भूनिंबविश्वाति
विषागुडूचीधान्याब्दपाठारुणचन्दनैश्च॥संवत्सकोशीर
कवालकैश्चज्वरातिसारप्रशमायनीरम्॥३५॥ अथातीसा
रोपद्रवाः॥ गुदेहाहोपाकोनिस्सृतिरपिपायोश्चपतनंज्वर
च्छर्दिश्शोथेस्तृडतिगुदपीडाचनितराम्॥महाशूलंचायोवि
विधवरवैद्यैश्चकथितास्त्वतीसारेदुष्टाबहवइहलूपद्रवगणाः॥
॥३६॥ अथगुददाहपाकयोश्चि०॥ यष्टीपटोलमधुकेस्तुश्रृ
तंहिदाहेनीरंहीतंहिगुदधावनशङ्कारि॥छागीपयश्चगुदपा
कयुतस्यजंतोःखंडान्वितंमधुयुतंपिबतंस्सुखाय॥३७॥ ॥
अथनिस्सृतोप्नंशेच॥ सद्रुतंकोलगांगेरींविश्वादधियुतंश्रृ

ते॥ पेयं गुदस्तेभ्रंशे सखंडं पद्मपत्रकं॥ ३८॥ अथ गुदपी[illegible]॥ ॥ तद्वद्गोधूमचूर्णं सतृणघृतयुतं गोलकीकृत्य पायोः स्वेदात्पीडाविनाशो नियतमिह मथो मूषकोद्भूतमांसैः॥ ॥भैषज्यं चातिसाराद्यखिलगदहरं वर्णितं चाथ वक्ष्ये पथ्यं यद्यात्रदेयं निखिलगदहरैः स्सर्वतंत्रान्विलोक्य॥ ३९॥ सर्वेष्वतीसारगदेषु पथ्यं मसूरयुग्मं द्वयथलाजसक्तून्॥ समाक्षिकं भक्तमथो यवागूं वदंति गोधूमभवांश्च वैद्याः॥ ४०॥ ॥ अथासाध्यलक्षणम्॥ ॥हिक्काश्वासास्थिशूलीदवथुबहुतृषाकासवैरुच्ययुक्तः श्वेतं कृष्णारुणाभं पलजलसदृशं पक्कजंबूफलाभं॥ यो वै मूर्छासमेतो बहुमलनिचयं चाल्पमल्पं सृजेच्च सो वै गंगातटस्थः शिवशिवकथयन्याम्यदूतान्पश्येत्॥ ४१॥ अथ ग्रहणीनिदानं लक्षणं चिकित्सा च॥ ॥ गतातिसारस्य विनष्टवह्नेः कुपथ्यसंसेवनलालसस्य॥ अथान्यया वापि विदूषिताग्नेर्विदूष्य सद्यो ग्रहणीगदः स्यात्॥ ४२॥ आध्मानं पीततास्यादखिलतनुगता रूक्षता चाप्यवश्यं कोष्ठे दाहैः क्षुधायामथ च यदि तदा रूपमेवाथ वक्ष्ये॥ जातायां चापि तस्यामिह यदि मनुजैर्भुज्यते तत्तु सर्वं ह्यामं चैवाथ पक्वं द्रवमथ च घनं चासु वेलं पतेत्तत्॥ ४३॥ कल्पाभितातङ्कश्च यंच विद्वान जीर्णं विदीपनपाचनैश्च॥ सामं निरामं त्वतिसारवद्धि विज्ञाय तक्रादिभिरेव पाच्यम्॥ ४४॥ ग्रहण्यास पाचनं वैद्यैरतीसारोक्तभेषजैः॥ वारिदातिविषाकुम्भः क्वाथश्चामस्य पाचनः॥ ४५॥ पथ्यं त्वा सुङ्गयूषं च नक्रं च धान्यजीरकसंयुतम्॥

सैंधवेनान्वितंतद्द्रसंपलसमुद्भवम् ॥ ४६ ॥ एतदामंतुसंपाच्य विशब्दंसारयेन्मलं ॥ लघुनापञ्चमूलेनपथ्यञ्चात्रनियोजये त् ॥ ४७ ॥ श्रीदाडिमीतक्रकपित्थजीरेणगैरिकाद्यैःपरिकल्पि ताच्च ॥ युक्तायवागूर्ग्रहणीविकारेसंपाच्यचामंशकृदेवकुर्या त् ॥ ४८ ॥ सुपथ्यसंसेवनमेवचात्रयद्भेषजंवैभिषजोवदंति ॥ अतोत्रपथ्यंपरिवर्ण्यपूर्वंब्रूमःप्रतीकारमथोत्रकिञ्चित् ॥ ४९ ॥ तत्रतावद्वातादिजातायाग्रहण्यालक्षणम् ॥ वातात्रसं फेनिलंचित्रवर्णंपीडायुक्तंसूचिकाध्यानयुक्तं ॥ पित्ताज्जीर्णं गंधतृड्दाहयुक्तंश्लेष्माकोपाच्छर्दिहृल्लासयुक्तः ॥ ५० ॥ कासश्वासारोचकैःसंयुतश्चवातादीनांविड्परीक्षेयमेव ॥ द्वंद्वैर्जातेद्वंद्वजंलक्षणंस्यात्सर्वैर्जातेसंकरंलक्षणानाम् ॥ ५१ ॥ शुभम् ॥ तावद्वातजायाम् ॥ गोपीसदीलवणपञ्चकसा रिवाभिर्वन्ह्यान्वितैःपवनजेग्रहणीविकारे ॥ चूर्णंचतत्सपय सामधुनाथवापिदद्यात्तथैववरवैद्यगणैश्वदेयं ॥ ५२ ॥ ॥ अथपित्तजायाम् ॥ कुशकाशजलेक्षुजटामयवञ्चजलप रिसेव्यचवेणुसमुद्भमूलसुतं ॥ अपहंतिचमाशुभवांग्रहणीं हियतोवरवैद्यगणैश्वविचार्य्यपुराकथितम् ॥ ५३ ॥ ॥ अथकफजा० ॥ व्याघ्रीग्रंथिकचव्यलोकेरजानीमेधाहूव न्दाभवंकल्कन्दाडिमवन्हिसंयुतमलंपीतपलासोद्भवांहन्या द्वःप्रवहांमहाग्रहणिकांमद्यंयथाशोकजांनेत्राम्बुप्रभवांन दीमिहतथासंपाद्यवे ॥ ५४ ॥ ॥ अथवातपित्तजायां ॥ ॥ मुस्तानागरधान्यहिंग्वतिविषादीप्याकलिंगोद्भवंचूर्णंचाति

विषाभयासुमिलितंसौवर्चलेनान्वितम्॥ भुक्त्वातक्रसमन्वितं चबहुधापथ्येपितक्रंपिबन्वायोर्मायुसमन्वितांग्रहणिकां-सद्योनिहंतिध्रुवम्॥५५॥ अथपित्तकफजा०॥ पाठावत्सकबीजविश्वबहुलप्रक्रूचूर्णंतुलसोदकैःपीत्वाचाथकलिंगजातफलजैःकल्कैर्घृतंसाधितं॥ हन्यान्मायुबलासजांग्रहणिकांश्रीरामबाणोयथादैत्यानांनिकरंतथाहनुमतासंदग्धलंकागतम्॥५६॥ अथसन्निपातजायां॥ अंबुदातिविषाबिल्वचूर्णंकुटजसंयुतम्॥ मधुनाविलिहंजंतुर्ग्रहणींहंतिसर्वजाम्॥५७॥ शतावरीश्रीफलशक्रयष्टीप्रियंगुपाठोत्पलमागधीभिः॥ स्थिरासमंगातिविषासमेतैर्नीलोत्पलिकाचंदनसंयुतैश्च॥५८॥ कलिंगनीरेणसुपेषितैश्चघृतंविपाच्यावतदेवपीतम्॥ हन्याद्विकारंग्रहणीभवंचत्रिदोषजातंनहिविभ्रमत्र॥५९॥ पित्तातिसारंग्रहणीगदंचसर्शांसिसर्वाणिविनाशयेद्वै॥ रक्तस्रुतिंचापिविनाशयेद्विशतावरीसाधितमेतदेव॥६०॥ विशेषकम्॥ अथसामान्यचि०॥ तावज्जातीफलाद्यंचूर्णम्॥ जातीफलैलात्वचन्दनत्वग्भुजंगपुष्पामलजीरचित्रैः॥ तालीसपथ्यातिलदेवपुष्पैःकर्पूरजन्तुघ्नशतावरीभिः॥६१॥ सपत्रसुंठीमरिचैस्तुसर्वैर्भंगांसमानांपरिपेष्यपश्चात्सर्वैस्समंशर्करयातुखंडंसमेल्यजातीफलचूर्णमेतत्॥६२॥ कर्षप्रमाणंमधुनावलीढंविनाशनंस्याद्ग्रहणीगदस्य॥ सश्वासकासारुचिसंघमेकंजातीफलाद्यंचनिराकरोति॥६३॥ अथग्रहणीकपाटोरसः॥ मृताभ्रसूतौचबलिर्टंकणौचतयोस्समान्चाविजयावचाच

॥जयंतिकाभृंगभवद्रवैश्चसर्वंविमर्द्यार्थदिनत्रयंतत्॥ ६४॥याम
र्द्धकंलोहविनिर्मितेहिपात्रेतुसंस्वेद्यसजीरकंतु॥ संपेष्यतच्छा-
ल्मलिजैर्गदैश्चसमैस्तथात्वातिविषासमंच॥ ६५॥ रंभाद्रवैर्भाव्य
चसप्तवारंपुनःपुनश्चूर्णयतस्तुभुक्तः॥निष्कार्द्धमानोमधुनान्वित
श्चजंतुप्रविश्वानलविश्वपर्दैः॥६६॥ घृतंचतप्तोदकमेवपश्चाद्दे
यैस्तुपानंसमुदाहृतंचै॥ रसःप्रसिद्धोग्रहणीकपाटोनामाग्निको
ल्येनगुणान्विदध्यात्॥६७॥ अथचलद्ग्रहणीनिदानलक्षण-
चि०॥ निम्नोन्नतायांभुविपादुदानादत्यध्वचाराद्गुरुभारतोपि
॥स्थानात्स्वकाद्याग्रहणीकलासानिर्गम्यचाधोर्द्धमितस्ततोवा
॥६८॥उत्फालमेवाथवितन्वतीसावायुप्रकोपादथजंघपीडाम्
॥मन्दाग्निशूलानभिसारकंचकरोतिनोवायुवशाच्चलच्या॥६९
॥चि०॥उत्तानसुप्तस्यनरस्यतैलैस्तिलोद्भवैस्तांमृदुपाणिनैव॥
विमर्दनाभेरभितोथकिंचिदेकांगुलोच्छ्रायमितंचनाभौ॥७०
॥सुगोमयंचापिनिधायचाथतस्योपरिष्टादपिदीपमेकम्॥त
स्योपरिष्टात्सुमृदूद्भवंहिनिधायचाधोसुखमेकभांडम्॥७१
॥यामार्द्धकंयामममथोपितावद्यावद्गदीनोहिजनेततस्तु॥आकर्ष
णात्तात्तुसएवदीपस्स्वस्थानगांवायुनिरोधनात्तु॥७२॥ करोति
तांचाथनिरीक्ष्यतत्रशरावमेकंपरिवध्यगाढं॥ क्षुधालवेव्योष
घृतान्वितंतुभक्तंप्रशस्तंत्रिदिनानिसर्वम्॥७३॥साध्येहिचलद्ग्र
हणींनभेषजशतैरपि॥तस्मात्प्रयत्नतःकार्य्यमेतदेवदिनत्रयं
॥७४॥ अथसंग्रहणी ॥ पक्षान्मासाद्द्वादशाहा१०च्चनित्यंका
पिकापिस्निग्धविष्टाप्रवृत्तिः॥कूजंतत्रोद्भूतमालस्यमत्रपीडाका

श्यंनेत्तदासंग्रहाख्याम् ॥ ७५ ॥ ग्रहणिकांप्रवदंतिमनीषिणाःद्रवमथो पिधनंहिकदापि ॥ वापाकृदिहैवनिरीक्ष्यदिवातुयैनिशिनतांकरिवेद नयान्विताम् ॥ ७६ ॥ चि० ॥ जयतिसूषमलंहिमसूरजंयदिमहौष धिबिल्वयुतंशतं ॥ पवनवेगकृतांहितथामतो ग्रहणिकांग्रहशब्दयु तामलम् ॥ ७७ ॥ अथग्रहण्युपद्रवाः ॥ शूलाध्मानविशूचिका श्वसनकरुंद्रावृषाद्यैर्युतादोषाणांत्रितयोद्भवाग्रहणिकवृद्धस्य नित्यंस्फुटं ॥ अनेषामपिकाशसंघसहिताश्वासान्वितागंधियुक् नीलाभ्रीयमधाममेवनियतांयात्येवसानान्यथा ॥ ७८ ॥ नत्वाभवं भीतिहरंजनानामत्रेवचार्शप्रतिमायकिंचित् ॥ ब्रूमश्चिकित्सांस्वगु रूक्तहृत्ग्रंथस्यभूयस्त्वथेनचारुयाम् ॥ ७९ ॥ सामान्यान्निदान लक्षणचिकित्साच ॥ त्वङ्मांसमेदांसिविदूष्यदोषास्थित्वान्न पानादियुनेनराणां ॥ कुर्वंतिमांसांकुररूपभूतान्यर्शांसिदोर्वल्यक राण्यनेके ॥ ८० ॥ ग्रहण्यतीसारगुदांकुराणिनिदानभूतानिपरस्परं स्युः ॥ विनष्टवन्हेस्तुभवंतियस्मादतःप्रदीप्याग्निमथोचिकित्सा ॥ ८१ ॥ जेयानिवातप्रभवानितैलैस्स्वेदादिभिःपित्तसमुद्भवानि ॥ स्यु रेचनाद्यैःकफजानिवैद्यैर्वल्याथमिश्राणिचमिश्रयोगैः ॥ ८२ ॥ त थार्शसांनाशनमत्रवैद्यैश्चतुर्भिरेवंचरकादिभिस्तु ॥ सद्योभिजा तेषुसदोषधैश्चनिरोद्भृतंक्षारनिषेवणैश्च ॥ धूपादिभिःपित्तसमु द्भवेषुसास्त्रेषुतद्वद्भुमांसलेषु ॥ शस्त्रैःकृतंपूर्णविचारदक्षैर्मया चकिंचित्परिलिख्यतेत्र ॥ ८३ ॥ युग्मम् ॥ सविड्गहेनक्रमिहप्रश मंयवानिकाविश्वयुतंचयाने ॥ यस्मात्स्मरोहंतिनतकृदग्धाधानाय थावन्हिविमर्जिताश्च ॥ ८४ ॥ लिप्तंमृदासूरणकंदमग्नौसंभज्यवै

घःपुटपाकवह्नि॥दुर्नामनाशायसतैलमेवदद्यात्सुसिंधूत्थयुतंतु सद्यः॥८५॥ अथचूर्णम्॥ एलात्वग्दलनागकेशरयुतैर्मरीच पांचालिकासुंठीभिस्तुविशेषशास्त्रनिपुणैर्वैद्यैःक्रमाद्वर्द्धितैः॥कू र्मंचूर्णमिदंसितासममहोभुक्तंहिचेन्मानवैरर्शांस्यग्निविनाशगुल्मस दनश्वासांश्चनाशंनयेत्॥८६॥ अथतिलाद्यंचूर्णम्॥ तिलभ ल्लातशिवाभिस्तुल्यगुडेन॥अर्शोविनाशोविहितस्तत्क्रयुतेन॥८७ ॥ अथलघुशूरणमोदकः॥ मरीचविश्वहुताशनशूरणाद्विगु णिताक्रमतस्तुयथोत्तरम्॥समगुडेनयुताःपरिभक्षितायदितदा र्शविनाशकरास्तणात्॥८८॥ ज्वलनदीपनशूलविदारणेनिरूप माजठरस्यगदापहाः॥लघुरयंप्रथितस्तुविशेषतस्सकलसंमत शूरणमोदकः॥८९॥ अथमहाशूरणमोदकः॥ भागाःषोडश शूरणादथतथाचाष्टौत्यहेश्चाप्यथोविश्वाद्वार्द्धमितानथैवमरिचंता लीसकारुष्करे॥पांचालीत्रिफलाविडंगचविकाभागाश्चविश्वास माःभागेश्चाष्टिभिरेवचात्रसुशलीभागेमानानतथा॥९०॥एला त्वक्चतथैवसर्वतुलितंशुद्धंगुडंयोजयेत्कृत्वाचाथकदाहकेहिम तिमान्संवध्यवामोदकान्॥भुक्त्वाचस्वबलप्रमाणविहितान्कुंभो द्भवेनैववाभीमेनाथपुरास्तुधार्थमसकृद्भुक्तान्नरोनिश्चितम्॥९१ ॥भीमागस्त्यसमोभवेच्चबहुधाप्रोक्तुंहिपाहुंतथादुर्नामग्रहणी प्रमेहभययुक्कासक्षयश्लीपदान्॥जित्वानानभयोभवेच्चनि तरांव्याध्योघमुक्तक्षणात्तुल्यःस्यात्पवनात्मजेनचतदासंवद्गगा त्रोद्दढः॥९२॥नविविधवैद्यकशास्त्रविलोकनैर्बहुविचार्यविविच्य विलेखितः॥महदयंखलुशूरणमोदकःपरमयोलवणादिनिरूप्य

ते ॥९३॥ ॥अथकल्याणलवणम् ॥ भल्लातदंतीत्रिफला ग्नियुक्तान्विश्वतुल्यंसकलंततस्तु ॥ ससैंधवंवैद्विगुणंसमस्तात्क पालपात्रेसकलंविपाच्य ॥ ९४ ॥ मृदूग्निनागोमयजेनपश्चाद्भुक्तं नदर्शक्षयकारकंस्यात् ॥ कल्याणनाम्नालवणंप्रसिद्धंश्रीसुश्रुता द्यैःपरिवर्णितंच ।९५॥ ॥अथक्षारः॥ कदल्यपामार्गप लाशजातान्क्षारांस्तथाषड्गुणनीरयुक्तान् ॥ संपाच्यतच्छागभ वैस्तुमूत्रैस्समानवर्णंतुविलोक्यनीरं ॥ ९५ ॥ सद्वस्त्रपूतंचवि धायभूयःकटाहमध्येतुनिधायचाथ ॥ पलाष्टकंशंखभवंच चूर्णंपलोन्मितान्यानिपृथक्पृथक्स्युः ॥ ९६ ॥ दंतीद्रवंचाति विषाकरंजान्कल्कीकृतान्वामुशलींचतद्वत् ॥ कंकुष्ठबाल्ही कदिवाकरांघ्रिचित्रांस्तथालांगलिकासमेतान् ॥ ९७ ॥ तत्रैव सर्वांस्तुनिपात्यभूयस्सस्व र्जिकाक्षारयुतान्विपाच्य ॥ संघ ट्यसंघट्यचकाष्ठहस्तोयावद्घनंलेह्यसमंभवेत्तत् ॥ ९८ ॥ उत्ता र्यसंस्थाप्यसुभाजनेहिकालेतथास्वाग्निबलंनिरीक्ष्यभु क्त्वार्शमंदाग्निभगंदरादीन्कुष्ठोदरव्याधिगणांहिहन्यात् ॥ ९९ ॥ नरक्तपित्तेनिसृतौकदापिननेत्ररोगेनतुगुर्विणीनाम् ॥ न वाशिशूनामतिजर्जराणांनवाकृशानांनतथाज्वरेपि ॥ १०० ॥ अथसर्पिः॥ पलाशभस्मांबुभिरेवभागत्रयैस्तुसंक्वा थ्यकटुत्रयंतु ॥ तेनैवसिद्धंघृतमत्रपीत्वात्वर्शांसिनश्यंतिचि रोद्भवानि ॥ १०१ ॥ ॥अथतैलम् ॥ दन्त्यश्वमारानलरु सैन्धवैस्तुकासीसजन्तुघ्नपयोभिरेव ॥ एलायुतैस्साधिततैल मेतद्दुर्नामनाशंह्निकरोतिशीघ्रम् ॥ १०२ ॥ अथधूपाः ॥

वृश्चीजटाग्निकणिकापुरैस्तु भंगासमेतैर्घृतसंयुतैश्च॥ धूपोर्श-नाशायमतः पुराणैः पीडाहरोन्योनपरोस्तिलोके॥ १०३॥ सुसर्प्प निर्म्मोकमनुष्यकेशैस्सुदंशचर्म्मान्वितभानुमूलैः॥ एभिश्शमी-पत्रयुतैश्चधूपोदुर्नामनामापिविनाशयेद्दै॥१०४॥ अथदध्यादि॥ त्वचंचित्रमूलोद्भवंसाधुपिष्टाप्रलिप्यायकुंभंतुनेनैव तत्र॥ घृतंनक्रदध्यादिकंसर्वमेवप्रपीतंतथार्शोविनाशेसमर्थं॥ ॥१०५॥ अथविशेषः॥ रक्तोल्बणाःपायुसमुद्भवाश्चकीलाव टारोहकविद्रुमाभाः॥ तेगाढविद्धोद्भववेदनाभीरक्तंस्रवंतीह्रच भेकतुल्याः ॥१०६॥ वर्णोत्साहबलक्षयेनचयुताश्श्यावंधनंरू क्षकंसत्यंज्यापिमलंकदापिबहुधावायोर्नचाधोगतिम्॥ कुर्वंती ह्रचनेषुवैद्यनिकरैरोध्यानरक्तश्चुतीदुष्टास्तेपरिरुंधितेपिसहसा शूलादयोवैयतः॥ १०७॥ दुस्पर्शतिक्तककिरातकचन्दनत्वग्दा र्वीमहौषधिनलाह्वकृतस्सनिंबः॥ अस्रार्शनाशकरणेरघुनाथ वाणः क्वाथश्चवैद्यनिकरैः परिवर्णितश्च॥१०८॥ धूपः॥ ॥ ससार्षपैस्सर्ज्जरसस्यतैलैर्धूपःपरः सकलवैद्यवरैस्तथोक्तः॥ यथाब्धिपानेघटजन्मभूमिरक्तार्शसांरक्तहरः प्रसिद्धः॥१०९॥ ॥ अथप्रलेपः॥ ॥शिरीषबीजान्वितलांगलीकाक्षारद्वयो ग्राश्मभसैंधवानाम्॥ स्नुहीपयोभिस्सहितः प्रलेपोदुर्नामनाशा यचसप्तरात्रम्॥११०॥ अथरसः॥ शूलिबीजविषसूर्य्यगंध कैश्शून्यलोहहुतभुक्समन्वितैः॥ कंदकार्द्रजरसैस्तु पंडितैःसप्त वारपरिपेषितैरयम्॥१११॥ नित्योदितोरसःप्रोक्तस्सेवितोम लबंधत्वत्॥ माषमात्रस्ससर्पिस्तुगुदकील हरःपरः॥११२॥

तिलन्चर्वणसेविनोजनाद्गुदकीलाःपलितारदोद्भवाः॥ नगदाः परिपीडयंतिवैविषयाश्शङ्करसेविनोयथा॥११३॥ ॥अथप थ्यं॥ ॥मुद्गगोधूमवार्त्ताकशालिकंदकदिल्लुकैः॥ वास्तूक जांगलैःपथ्यमर्शसांनाशनंपरम्॥११४॥ वेगावरोधकटुभोज नयानसेवास्त्रीसेवनोत्कटमहासनसेवनंच॥ अर्शोगदव्याथि तदेहयुतःकदापिसेवेत्सदापिनपुमान्नहिसौख्यमिच्छन्॥ ११५॥ अथसाध्यादिज्ञापनम् अथोवलीसंतिचयेहि साध्यास्तेदुर्निवाराःप्रथितांकुरावै॥ येमध्यसंस्थास्तुनतोर्द्धगा स्तुसर्वेप्यसाध्याभिषजैःप्रदिष्टाः॥११६॥ विविधभेषजसत्व हराहियेतद्द्दशस्त्रनिपातपरायणैः॥ सुलघुहस्तजनैश्चनिराक्र तानहिभवंतिकदापिगुदाङ्कुराः॥११७॥ गुरुपदाब्जरजोविल सत्तुमेशिरसियत्कृपयापरिबोधितः॥ चरणचालनवाद्धिशि शोरहंनहिबिभेमिनदुर्जनवादतः॥११८॥ ॥इतिश्री गुरुचरणाब्जमधुपकाशीनाथचतुर्वेदिविरचितायांचिकित्सा क्रमकल्पवल्ल्यांनानारोगचिकित्साप्रसंगांधिनश्चतुर्थस्तबक स्समाप्तः॥४॥ ॥जयतिगजाननदेवोजगतनयानन्दव र्द्धनस्सोयम्॥ यत्कृपयाप्यतिमन्दोवक्ष्येऽग्निमान्द्यादिप्रतीका रम्॥१॥ पुरुषार्थचतुष्टयंतनोरखिलंलभ्यतएवविश्रुतम्॥ तद हंविदधेतथातथानयथासाजठराग्निदुःखिता॥२॥ ॥ अथमन्दाग्न्यादीनांकारणंलक्षणंचिकित्साच यथा॥ ॥ मिथ्याहारविहारतोनिकुपितादोषाःकृशानुंभृशंसंछाद्याशुवि कारजालमसकृत्कुर्वन्तिरूपंततः॥ नैर्बल्यंयभनादिषुत्वाति

नरसुत्साहहानिःपराक्षुच्चड्डहानिकरैर्विकारनिचयैर्हीनिःप्र
भायास्फुटम्॥३॥ ॥अथमंदाग्नेर्विशेषलक्षणम्॥
यत्रस्वल्पंभुज्यमानेनपाकमेतिप्रायोगौरवंमूर्ध्निनाभौ॥छ
र्दिस्स्वादस्सप्रसेकस्तथैववैद्यैरुक्तंलक्षणंमन्दवन्हेः॥४॥
चि॰ साजमोदलवणांकटुत्रयंहिंगुजीरकयुगेनसंयुतम्॥चू
र्णितंघृतयुतंयदाशितंवन्हिमान्द्यहरणंतदाशुवै॥५॥ ॥
अथवृहद्धिंग्वादिचूर्णम्॥ ॥बाल्हीकक्षारयुग्माऽनलम
रिचकणाचन्द्रगंधाऽजगंधापथ्याकाश्मीरपाठाजरणयुगक
पातितिडीदीर्घगन्धा॥विश्वाचव्याऽजमोदाऽस्कलवणविपु
षाग्रन्थिदीप्याम्लजातंचूर्णंसौवर्चलाढ्यंकरकयुतमलंविड्यु
तंचाग्निमान्द्ये॥६॥आध्मानगुल्मानलमांद्यजाताःप्लीहाम
वातश्वसनादयोन्ये॥शूलास्यवैरस्यविबन्धकाद्यास्सर्वेपिन
श्यन्तिनिषेवितंचेत्॥७॥ युग्मं अपरं॥त्र्यूषणजीरकयु
ग्मैर्भागाष्टमांशहिंगुसंयुक्तैः॥सुलवणशकृद्घृताढ्यस्सुभृ
ष्टाजमोदसंयुक्तः॥८॥प्रथमग्रासविमुक्तोजाठरमग्निंप्रदी
पयेद्बलात्॥वायुविनाशेप्रथितोहन्यादत्युग्रगुल्मादीन्॥
९॥ अथतीक्ष्णाग्निः ॥अनल्पमल्पंयदिकिंचिदेवभु
क्तंहिसद्यःपरिपाकमेति॥तीक्ष्णाग्निरेषप्रथितःप्रियश्चचि
कित्स्यएवाशुबहुप्रचण्डः॥१०॥ चिकित्साथथा॥ ॥
सितायुतंपायसमेवचापिघृतान्वितावाकृसरापल वा॥
संपेष्टिकंस्निग्धगुडादिकानितथाप्रितैक्ष्ण्योप्यतिशान्तला-
नि॥११॥ ॥अथविषमाग्निः॥ मात्राऽशिताकापि

नपच्यतेवैभुक्तमाशणात्कापिविपच्यतेसा ॥ वन्हिस्तुवैद्यैर्वि
षमस्तदोक्तोधन्वंतराद्यैर्बहुशोविविच्य ॥ १२ ॥ आध्मानशू
लांत्रविकूजनानिनूनंत्वुदावर्त्तयुतानिचात्र ॥ उक्तानिकुक्षे
रतिगौरवादिस्त्वुक्तोतिसारश्चप्रवाहिकाच ॥ १३ ॥ ॥
चिकित्साच ॥ रास्नामागधिकाशटीप्रतिविषाब्राह्मी-
कसौवर्चलैर्विश्वासैन्धवसंयुतंचसुरसायुक्तंतुचूर्णंस्मृतं
॥ भुक्तंचेत्सकगुडानुपानविधिनावन्हेस्तुवैषम्यहृच्छास्त्रे
न्यत्कथितंसुवर्चलयुतंनिंबुद्रवंहिंगुना ॥ १४ ॥ ॥ अथ
भस्माग्निः ॥ ॥ यदारूक्षकद्वादिकेन्नेप्रभुक्ते कफःक्षीण
तांचैवयातोनरस्य ॥ तदामारुवायोर्बलंप्राप्यवन्हिःक्षणाद्ध
स्मसादेवकुर्य्यात्प्रभुक्तम् ॥ १५ ॥ असौभस्मकाग्निर्यदोपेक्षि
तोवैनदासर्वधातूंश्चभस्मैवसद्यः ॥ करोत्येवतृड्दाहमूर्छादि
भिस्तुसहायैस्समेतोहिवैस्वेदयुक्तैः ॥ १६ ॥ चिकित्साच ॥
सुकाल स्थिमज्जजंपिबेच्चकल्कमुत्तमंस्फशीतवारिसाधितं
नरोहियस्तुनिश्चितम् ॥ तथाचशक्ष्मनीरजान्वितैस्सितैःसुत
न्दुलैःसुछागिदुग्धसाधितंभुनक्तियस्तुपायसम् ॥ १७ ॥ जये
च्चभस्मकाग्निवृद्धिमन्यदत्रचौषधंवदामिचाधिमांसकंतदीय
हव्यसाधितम् ॥ अथोपिवानशान्तिमेतिचेत्तदातुवामयेद्धरी
तकीसपिप्पलीश्रुतैःपयोभिरेववै ॥ १८ ॥ श्लोकयुग्मेनयो
गचतुष्टयंबोध्यम् ॥ ॥ अथाजीर्णं ॥ ॥ रसनलोलुपदे
न्यनिपीडितैःसभयचित्तयुतैररतिरुग्युतैः ॥ यदिहभुज्यतएव
बलादितिगंतदजरंप्रथितंचविकारकृत् ॥ १९ ॥ ग्लानिगौरववि

वन्यमारुतोद्भूतकष्टसहिताश्मभादयः॥ संभवन्निबहुधामसं भवेन्नैवचामरहितेकदापिते॥२०॥ ॥अथचिकित्सा॥ ॥ अजीर्णभीतिसंयुतोनरस्तुपूर्वमेवहिप्रयेष्यविश्वसंयुतांशि वांप्रभुज्यभोजनम्॥ अथोहियस्यभोजनेविदह्यतेचहृद्गलं सगोस्तनींसमाक्षिकांशिवायुतांविशेषतः॥२१॥ ॥कुर्य्या दितिशेषः॥ ॥अथाग्निचक्रं॥ बाल्हीकोग्रामैथिलीशृंग वेरदीप्यांपथ्याचन्हिरुकूचूर्णमेतत्॥ पूर्वात्पूर्वात्क्रमाद्वृद्धि तंवाऽजीर्णाज्जीर्णंचाग्निचक्रंकरोति॥२२॥ पथ्यंच॥ क णोवन्हिविश्वाकणापादचव्यैस्सुसिद्धायवागूचपथ्येप्रदेया॥ महाशूलगुल्मानिलव्याधिहंत्रीतथाजाठराग्नेरुचेश्चापिकर्त्री ॥२३॥ अथराजशेखरवटी॥ ॥मृताद्रसाद्धिमानयुक्त गृह्यवत्सनाभकंवलीशिवाकटुत्रयंस्तथारसेनसंमितान्॥सु वर्णनागवल्लिकाद्रवैश्चभाव्यसप्तधावटीप्रघर्मशोषितांचण प्रमाणतोभिषक्॥२४॥ प्रकल्प्यचोष्णवारिणाप्रदापयेद्य दातदावटीहिराजशेखराविनाशयेदशेषतः॥ गदांश्चशूलगुल्म पांडुशोफवायुसंभवान्कफोद्भवाञ्ज्वरांस्तथानिहंतिचापिस त्वरं॥२५॥ ॥अथराक्षसाभिधः॥ ॥गभस्तिबाहुपारदा गगुन्निबीजतीक्ष्णकंदिनंविमर्द्यखल्वगंकटुत्रयेणसंमितं॥ ततोनिधायवालुकाघटेसुवर्चलान्वितंनदष्टयामप्राग्निगंविपा चयेद्भिषग्वरः॥२६॥ सुरक्तशाकदुग्धयुक्तभावितंविमर्दयेत्पुन स्तुमातुलुंगजैर्द्रवैश्चभाव्ययत्नतः॥ रसोभवेच्चराक्षसोहिशांक रेणभानवेप्रदत्तएषदापयेत्क्षणम्यतंसमाक्षिकम्॥२७॥सुगुं

जकाष्ठसंमितोबलंनिरीक्ष्यवापुनःकृशानुमांद्यजाठरागदाम-
शूलगुल्मकाः॥ विनाशमेवयांतितेनचित्रमस्तिचात्रवाप्रदापये
त्रभक्षितोहिपौरुषस्यवर्द्धनः॥२८॥ ॥अथशंखवटी॥ ॥
पलपरिमितचिंचाक्षारतुल्यंचपंचलवणमपिगृहीत्वाक्षुद्रनिंबु
द्रवाढ्यम्॥तदनुचशुभपात्रेकाचलिप्तान्तरेहिपलपरिमितशंख
स्यैवखंडान्निधाय॥२९॥ विधिवदथचदत्वासप्तवारंतदेवंद्रव
तिचविधिनैवंशंखमित्थंद्रवेण॥ पुनरथपलमानंत्र्यूषणांहिंगु-
नेमंविषमिहगादितंवैद्वादशेनैवभागात्॥३०॥ परितुलितमथो
वैशंभुबीजंभवानीप्रभवमपितथैवंशुद्धमेवात्रसर्वम्॥ विधिवद
थचरवल्वेमर्धकोलास्थिमानारसकलविधिवरिष्ठोवेद्यएवात्र
वंद्यः॥३१॥ कृत्वाप्रदद्यादुदरोद्भवेस्तुगदेस्तुसंपीडितमानवाय
॥ कल्याणमिच्छन्बहुधाक्रमेणशास्त्राज्ञयारोगविनाशनाय॥
३२॥ एषाशंखवटीत्वजीर्णशमनीशूलामयध्वंसिनीनानागुल्म
विषूचिकाग्निशमनप्लीहामविद्वेषिणी॥ येन्येचोदरमध्यलब्ध
निलयारोगायकृद्विद्रुहास्तान्सर्वानपिनाशयेच्चनितरांभुक्तास्व
भाग्योदयात्॥३३॥ ॥अथाजीर्णारिः॥ ॥दैत्येन्द्रसू
नौपलसंमितोच पलत्रयंगृह्यहरीतकीनाम्॥ तद्वच्चकृष्णाम
रिचंतथैवसुसैंधवस्यापिपलत्रयंच॥३४॥ चतुःपलांशाविज
यांनिगृह्यसंमेल्यसर्वंशुभनिंबुनीरैः॥ पुनःपुनर्मर्दनघर्मम
ध्येसंशोष्यसंशोष्यचसप्तवारम्॥३५॥ सिद्धस्त्वजीर्णारिरयं
प्रसिद्धोभुक्तस्तथास्वाग्निबलंनिरीक्ष्य॥ संपाचयत्याशुकरो-
तिवन्हिसजीर्णदोषंपरिहृत्यपूर्वम्॥३६॥ आहारंद्विगुणंविधा

यनितरांप्रुषिंपरांसंदिशेदापाकंजठरस्थितस्तुबहुधासंपाच्य संरेचयेत् ॥ तस्मात्सेव्यमिदंप्रभातसमयेवैद्येनदत्तःक्षणाच्छूलप्लीहमहोदरार्तिशमनोगुल्मामविद्वेषणः ॥ ३६ ॥
अथशंखद्रवः ॥ अपामार्गचिंचास्नुहीभानुजातंतिलाश्वत्थजातंतुभस्मप्रगृह्य ॥ स्रुवस्थेनिधायाशुदत्वाजलंवैतदेवाशुवस्त्रेणपूतंनिगृह्य ॥ ३७ ॥ पुनर्मन्दवह्नौतुलावत्प्रपाच्यंनयावद्भजेतज्जलंक्षाररस्यम् ॥ ततस्तत्समंटंकणंक्षारयुग्मंसमुद्रोद्भवंचापिकाशीसयुक्तम् ॥ ३८ ॥ परंसैन्धवाद्यंहियत्पंचकंतद्विभानंतुनीरेणवैद्याधिराजः ॥ समंमेल्यसर्वंतुकाचस्यकूप्यांदिनैःसप्तभिस्संधितंचाम्लयोगात् ॥ ३९ ॥ ततस्तद्धृतंवारुणीमंत्रमध्याद्धृतंचाग्नियोगाद्दृशंनीरतुल्यं ॥ स्वतेजोसृजत्येवयंत्रादभीक्ष्णंगुरूणांकृपादृष्टमार्गेणतच्च ॥ ४० ॥ निगृह्याशुतंकाचपात्रेनिदध्यात्प्रदेयंगदीजाठराग्निंविलोक्य ॥ वराटाश्मलोहादिकानप्यजस्रंविसंद्रावयत्येवकेन्येवराकाः ॥ ४१ ॥ महाजीर्णशूलामवातादयश्चयकृद्गुल्मसंस्तृष्टिसूचीसुखाश्च ॥ विनश्यन्तिसर्वेपिशंखद्रवोयंयदासेवितोवैद्यदत्तःक्रमेण ॥ ४२ ॥ ॥ अथमहाशंखद्रावः ॥ ॥ अपामार्गशिवत्थप्रभवमथचिंचास्नुहिभवंपृथग्वैग्राह्यभस्मप्रथममथभस्मादपिततः ॥ प्रगृह्याथोपश्चादपिचलवणान्येवसुधियस्ततस्स्वर्जिक्षारंलवणानिचयंटंकणमपि ॥ ४३ ॥ यवक्षारंलोणारमथजलधेःफेणसहितमथोस्रोमक्षारंविषमपिचसोरंसमशिलम् ॥ सतालं-

सौसर्ष्णी विडमथञ्च काशीसबलियुक्तनः पाषाणोत्थं रजइह च बाल्हीकसहितम् ॥ ४४ ॥ सतताप्यं गोदनां विधिवदथ शंखेन सहितां तथा नाभिप्रायस्सकलसमभागैकमिलितम् ॥ निधायाथो खल्वे ऽम्लजरसयुतं चापि बहुधा विशेषात्संभाव्यं पुनरथ पुनश्चातपगतम् ॥ ४५ ॥ तथा चाम्लाप्राप्तिर्यदि हच तदा लुंगजरसैर्विभाव्यं तत्पश्चादपि च नियतं शक्रमपि च ॥ घटीगर्भे दत्वा तदुपरि तदन्यां गुरुकृपा समयारां संस्मृत्य प्रथममथ शिक्षाविधिबलात् ॥ ४६ ॥ अधोवक्त्रां वक्त्रे विधिवदपि संयोज्य च ततो दृढां मुद्रां कृत्वा तदनु दहनं ज्वाल्य तदधः ॥ ततः किंचित्कालाद्धि सुजाति घटी छिद्रतजलप्रभं तेजस्वी यं तदपि च समामन्त्र्य विधिवत् ॥ ४७ ॥ द्विगुंज गुंजैकं तदा हि शुभवल्लीदलधृतं प्रदेयं भैषज्यग्रहणशकुनकाले तु भिषजा ॥ तदा सर्वे रोगा जठरपिठरीपीडनपरा विनाशं गच्छेयुः पशव इव कूपे निपतिताः ॥ ४८ ॥ ॥ अथाजीर्णलक्षणचिकित्से ॥ ॥ यथा भुक्तसुद्गारमेवा विदग्धं तथा चाङ्गं डाक्षिकूटोत्थशोथम् ॥ विलोक्योदरे गौरवं चामजातं तदाजीर्णभुक्तं तु धन्वंतराद्यैः ॥ ४९ ॥ चिकि० गुडादि योगः ॥ शुंठीगुडाढ्या मगदे प्रशस्ता जीर्णज्वरे मागधिका गुडाढ्याः ॥ पथ्या गुडाढ्या गुदजेषु तद्वद्वर्चोविबन्धेषु च दाडिमी च ॥ ५० ॥ ॥ अन्यच्च ॥ ॥ वचालवणसाधितैर्जलैश्च वान्तिरिष्यते ॥ वचालवणमागधीजलैस्तथा च शीतलैः ॥ ५१ ॥ कुस्तुंबुरीनागरजः कषायः पीतो मनाशं च विधाय सद्यः ॥ शूलस्य शान्तिं वितनोत्यवश्यं बस्तेश्च शुद्धिं क्षणतो नरस्य ॥ ५२ ॥ ॥ ॥

अथविदग्धाजीर्णम्॥ ॥विदग्धेभ्रमस्वेदमूर्छातृषश्वसदाहासधूमाम्लकोद्गारयुक्ताः॥ गदाःपित्तजास्सर्वएतेयदास्युस्तदाजीर्णमुक्तंविदग्धादिकंहि॥५३॥ ॥चिकित्सा॥ विदग्धकाजीर्णमथोनिहन्याच्छीतांबुपानात्सरितंनरस्य॥सप्ताहमाजांबुविभाविनाश्वहिंभिप्रमाणाश्वणकाश्वभुक्ताः॥५४॥ अथविष्टब्धाजीर्णम्॥ ॥यत्रैवचाधोगमनंनवायोराध्मानशूलौबहुवातपीडाः॥स्तंभोंगपीडाबहुमोहयुक्ताविष्टब्धपूर्वंतुनदेवबोध्यम्॥५५॥ अथचि०॥ विष्टब्धाजीर्णकंहन्यादभयालवणान्विता॥गोधूमहिंदलाक्काथस्वेदनादपिनश्यति॥५६॥ अथरसशाजीर्णलक्षणचिकित्से॥ शेषेरसेन्नस्यचशत्रुभावादशक्तिरेवोरसिगौरवञ्च॥तत्रौषधंलंघनमेवतद्वत्स्वापोदिवावातविवर्ज्जनंच॥५७॥ रसशेषप्रशांत्यर्थंनरस्त्र्यूषणसैन्धवैः॥प्रलिप्यजठरंहिंगुयुक्तैःसुप्यादनंतरम्॥५८॥ ॥अथभुक्ताजीर्णलक्षणचिकित्से॥ ॥भुक्तंयदाध्मानकरंनपाकमेत्येवचैभोजनपूर्वमेव॥श्रीशुक्रुतावैस्तदजीर्णमन्नभुक्ताऽभयाविश्वयुताहितायः॥५९॥ ॥अथप्रासवासरकं॥ ॥निद्राक्षगांभीर्यगलोत्थदाहत्दल्लासतृष्णांगविभंगताभिः॥युक्तंयदाभोजनजंदिनांतरस्थैर्य्येणवैवासरप्राप्तकंस्यात्॥६०॥ चिकि०॥ धान्यतुषोद शृतारवलुपथ्यावासरप्रासकमेवनिहन्यात्॥वामगधापिचसैन्धययुक्ताहिंगुयुताबहुपेष्यसुभुक्ता॥६१॥दन्दद्यतेल्दंझ्लकंचयस्यभुक्तंक्षणादेवविदह्यतेच॥द्राक्षासिताढ्यामधुनासमेतांलीढ्वाशिवांसस्सुरवमेतिसद्यः॥६२॥ अथवि

षमजीर्णम्॥ ॥भुक्तोपरिष्टादजरेचपूर्वेभुक्तंयदन्यत्तुनदे
वकुर्य्यात्॥ मूर्च्छाभ्रमाभ्यांसहितंसकंपंतृष्णायुतंवैविषमंत्व
जीर्णम्॥६३॥ तत्कालेवमनंकुर्याद्विषमाजीर्णप्रशान्तये॥वा
ऽमृताख्याशिवाभुक्ताविषमाजीर्णनाशिनी॥६४॥ अथा
मृतहरीतकीसंधानविधिः॥ हरीतकीशतंभिषक्सुनक्रयुक्त
पात्रकेनिधायचाथयुक्तितस्तदष्टिकोयवैपृथक्॥ पृथक्पुन
श्शलाकयानिवार्य्यवार्य्यवाततोवदाम्यथोविधिंपुरोसुवैद्यवर्य
कल्पितम्॥६५॥ यवानिकोषणापट्वग्निपंचपंचकोलकंसुजीरका
जमोदहिंगुसंयुतंतथोषणम्॥ प्रपेष्यचुक्रभावितंशिवानिधानग
र्भकेनिधायसुन्धयंत्वतःपृथक्पृथक्ततःपरम्॥६६॥ क्षारद्वयंवा
पिवदन्तिचेकेदेयंशिवाबीजनिवातगर्भे॥ सेयंशिवाचामृतसंज्ञयै
वलोकेपराख्यातिमुपागतापि॥६७॥ विषमाजीर्णप्रशमनीशूलवि
कारोगनाशिनी॥ वातारुद्वेषिणीपूर्वैरुक्तासर्वोदरार्त्तिहा॥६८॥
॥ अथवाताजीर्णे॥ उद्गारेवमनंभ्रांतिःशोषस्तद्भूतिगंध-
ता॥ विष्टंभोद्गारतृष्णाद्याःपिंडास्वेदोचवातजे॥६९॥ चि०॥
कांजीकंलवणंवाथगुडजंबीरपल्लवम्॥ आसामेकतमंपीतंवाता
जीर्णंविनाशयेत्॥७०॥ कौसुंभंनिवजंवाथतैलमर्द्दनतस्तथा॥ च
ञ्चीक्षारपरंनान्यद्वाताजीर्णप्रशांतये॥७१॥ ॥अथपैत्तम्॥
मुहुर्मुहुर्वांतिमुशांतिपैत्तेशूलंतथाचानिसृतिंविशेषात्॥सपादह
स्तादिसकलांगकेषुसंकोचनंयद्दहधाचदाहम्॥७२॥ शीतांबुपीतं
मधुनासमेतंपित्तोद्भवंचापिनिहंत्यजीर्णम्॥ भुक्तातथावारसपर्प
टीचजातीफलैनैवचवल्लभाना॥७३॥ अनुपानेचशीतांबुदेयंपथ्य

मथोच्यते॥ लाजाचूर्णंतुमधुनापित्ताजीर्णेप्रशस्यते॥७४॥ अथकफाजीर्णम्॥ ॥वान्तिश्चाग्नितिस्वेदशैत्यागंजाड्यैर्यष्टिः काष्ठैस्तुल्यनामेनियत्र॥ प्रोक्तंतद्दैशास्त्रविदूद्वैद्यैः सम्यक्सर्वंर्वबलासोत्थमेव॥७५॥ वामयेत्कफजेऽजीर्णेलंघयेच्चविशेषतः॥ श्वेतापराजितामूलैः कांजिकाक्तैस्तथांजयेत्॥७६॥ ईश्वरीबिल्वपर्णीनिशांखिनीचशिफातथा॥ आसामेकैकमूलस्यभक्षणादपिनश्यति॥७७॥ अथविषूचिकादयः॥ आहारवैषम्यभवंविशेषादजीर्णमस्मादपियेभवंति॥ तेवैविषूचीलसकोविलंबी स्वल्पादिनाम्नाकथिताहिवैद्यैः॥७८॥ विषूचिकालक्षणम्॥ सूचीसीवनतुल्यतोदनकरोवायुश्चयत्रोदरेमूर्छाशूलविदाहतृड्वमथुरुग्वैवर्ण्यहृद्वेदनाः॥ जृंभोद्वेष्टनमोहकंपनशिरःपीडातिसारभ्रमायत्रैतेचभवंतिसाहिसवितुः पुत्रानुजाषूचिका॥७९॥ विषूचिकोपद्रवाः॥ कंपोरतिर्मूत्रधातोनिद्राहानिर्विमूढता॥ पञ्चोपद्रवसंघोयंविषूच्यांचातिदारुणः॥८०॥ अथोलसकः॥ ॥वातवर्चोनिरोधश्चतृष्णोद्गारोचयत्रवै॥ नाधोर्द्ध्वगमनंवायोर्भुक्तंनैवचपच्यते॥८१॥ तेनसोलसकः प्रोक्तस्सद्यः प्राणहरोऽपरः॥ दंडालसकःप्रोक्तोलक्षणंतस्यकथ्यते॥८२॥ अथविलंबी॥ भुक्तंदुष्टंश्लेष्मवायोःप्रकोपान्नोर्द्ध्वनाधोयात्प्रवर्त्तेच्चयत्र॥ साप्रोक्तावैद्यवर्यैर्विलंबीत्यायुर्वेदेपूर्णदृष्ट्यासबोधैः॥८३॥ छर्द्यातिसारोस्तैर्दोषैरन्यैर्वेदनाधिक्यात्॥ दंडालसकःप्रोक्तोगात्रस्तंभादिकैर्लिंगैः॥८४॥ अथखल्ली॥ जठरेचमहानुशूलोहिकास-

र्वाङ्गसंधिषु॥ तोदस्तमःप्रवेशश्चखरवल्ली सूच्यास्तु लक्षणं॥८४
॥ अथवृद्धविषूचिका॥ ॥मूर्छातिसारक्रमदाहवांतिवै
वर्ण्यहृल्लासउरस्कपीडाः॥ सशूलजृंभास्सतृषोभवन्तिवृद्धिं
गतायांत्वविषूचिकायां॥८५॥ अथोत्क्लेशः॥ उत्क्लिश्यमा
नंहृदयमेवरोध्यबहिर्यदान्नंसमुपैतिनैव॥ हृद्रोगनिष्ठीवनदुः
प्रसेकयुक्तंतदोत्क्लेशमुदाहरंति॥८६॥ ॥अथविषूचिकादी
नांक्रमशश्चिकित्सोच्यते यथा॥ ॥अपामार्गमूलंजलेपेष्य
पीतंविषूचीहरंकारवल्लीजलाढ्यम्॥ सुतैलंचपीतंह्यथोवार्द्रनीरैः
र्वटीयुग्मकंजीविनीसंज्ञकायाः॥८७॥ योगत्रयम्॥ ॥
अथाजीर्णकंटकरसः॥ ॥रसविषावलिमानंनिष्कनिष्कैकमि
श्रमरिचमपिसमांशंपारदादेसमस्तात्॥ तदखिलमपिखल्वे
कंटकारीफलानांद्रवयुतमथमर्द्यैकविंशच्चवारम्॥८८॥ गुं
जात्रयंचैतदिहैवयुक्तमजीर्णकंटंतुविषूचिकाघ्नं॥ नाशंत्वजी
र्णस्यकरोत्यवश्यमग्निर्यथादारुसमूहकस्य॥८९॥ ॥अ
थांजनम्॥ ॥मयूरपत्रोषणसंमिलालाकृतांजनेनांजितने
त्रपद्मः॥ सुखीभवेन्नाबहुशोहिदृष्टंविषूचिकाभीतिभरैर्विमु
क्तः॥९०॥ अथालसकचि० ॥ भल्लातमाक्षिकमहौष
धसैंधवानामम्लेनचैवपयसापरिपेषितानाम्॥ कल्केनचैवप
रिसाधितहव्यलेपःसद्योनिहंतिचतथालसकस्यदोषम्॥९१
॥ ॥इतिभल्लातादिघृतं॥ ॥अथफलत्रयादिकमुद्वर्त
नम्॥ फलत्रयारुष्करमागधीनांपूतीकविश्वोषणसंयुता

१ अपामार्गश्चशिखरीप्रत्यक्पुष्पीमयूरकइतिनिघंटुः

नाम्॥ करंजपाठासुरसोनयुक्तमुद्वर्त्तनंवत्ससुमूत्रपिष्टम्॥९२॥उद्वर्त्तनंपरंश्लेषंनिहंत्यालसकंक्षणात्॥ नात्रचित्रंयतोवैद्यैरुक्तंश्रीसुश्रुतादिभिः॥९३॥ अथदंडालसकचिकित्सा॥ सूच्यग्रभागैर्नखसंधिदाहंकृत्वापुरश्चाग्रशिरोवपेच्च॥ छित्वाचछित्वाक्षुरकेणतत्रविषान्विते चर्ममसिंचैमलिप्य॥९४॥ गंधस्यधूपेनचधूपितोपिजीवेन्म्रियेद्वाथसभेषजेन॥ यद्यस्ति दंडालसकोनतत्रपरंतथाभेषजमत्रचैव वदंतिसर्वेभिषजांगणाश्च॥९५॥ अथविलंबीचि०॥ दहनंपूतिपिण्याकंभल्लातंगदसैंधवौ॥ क्षारद्वयंचचव्यंचपेष्यसंपाच्यलेपयेत्॥ विलंबीदुरतोयातिएतदुद्वर्त्तनंयदा॥ वैद्यदत्तंप्रयत्नेनलेपितंगात्रमंडले॥९६॥ अथरवल्वी०॥ स्नुह्यर्कधत्तूरजपत्रनीरंप्रस्थत्रयंशिशुजपत्रजातम्॥ प्रस्थोन्मितंचाथपरंहियत्तुवदामिमात्रांचविधिंविशेषात्॥९७॥ द्वेद्वेपलेसैंधवकुष्ठयोस्तुकल्कस्यदध्यम्लसुकाञ्जिकानाम्॥ पलद्वयंचापिपृथक्पृथक्चनिगृह्यसर्वंमृदुवन्हियोगात्॥९८॥ तैलंपचेत्प्रस्थमितंतदेवमभ्यञ्जनःखल्विविषूचिकाघ्नम्॥ अर्कादिकंतैलमिदंहिकुर्यात्क्षयंहियक्ष्मग्रहदुष्टवायोः॥९९॥ रवंजतामामवातंचपंगुलंगधसीमपि॥ विनाशयेद्यथावन्हिरेधितोतूलिसंचयान्॥१००॥ अथविषूचि० योत्रदूशूचीगदपीडितस्यान्नरसनीरंलवणान्वितंहि॥ पीतावमन्वांउमतेन्यथातुहृदिस्थितंतन्मलमेवहन्ति॥१०१॥ अथांकुशो॥ उक्तेशनाशायचपुष्पनीरंपिबेद्वाजलदस्यतद्वत्॥ जातीफलस्यापिचपूर्ववैद्यैर्योगंत्रयंचात्तुमितंहिचात्र॥ १०२॥

योगत्रयम्॥ ॥अथोदरलेपः॥ ॥बाल्हीकदारुगद हैमवतीशताह्वासिंधूत्थकैश्वरखलुचाम्लयुतैःप्रपेष्य॥ क्रुप्तः प्रलेपउदरेपरिलेपितश्चतद्वृद्धिनाशयतिजाठरदीर्घदुःखम्॥१०३॥ अथैतेमासुमद्रषाः॥ मूर्छाप्रलापवम थुःश्वसकंपमूत्रघातभसेकविरुचिप्रमुखास्तथैते॥निद्रा- विनाशसहिताश्चनितान्तमेवजायन्तएवंबहुधान्नविकारसं घाः॥१०४॥ अथासाध्यलक्षणम्॥ ॥रुचकोष्टनरख नियस्यश्यावान्यथसंज्ञारहितो[२]निवांतियुक्तः॥भ्रमस न्निवापियातिसघश्लथसंधिश्वरसंयुतोन्तरार्ग:॥ १०५॥ ॥अथनिवृत्तिः॥ ॥उद्गारशुद्धिरथवेगयथो चितत्वंमुत्साहएवचतनोलघुताक्षुधाच॥तृष्णाचयाक मुपयातियदेवचान्नंदोषेतथाविरमितेचभवन्तिचैते॥ १०६॥ ॥अथविशिष्टद्रव्याजीर्णचिकित्सा॥ ॥ पनसभक्षणजेकदलीफलंकदलजेपिघृतंघृतसेभवे॥ समुदितंशुभनिंबुजलंजलेलवणमेवचतन्दुलवारिषरे॥ १०७॥तन्दुलानिशिरतालबीजयोःपाचनान्यथतथाम्रज स्यचदुग्धमेव॥चकपित्थकस्यवैनिंबबीजमथतक्रजस्य- वा॥१०८॥ खार्जूरमालूरनृपादनानांमधूकहव्योश्चपरूष कस्य॥तक्रस्यवापाकविधौहिनिंबबीजंतथाचारुभवस्य

---

१हैमवतीवच. २दंतोष्टनखनिश्यामानि ३श्लथसंधानःक्षामस्वरश्चेत्य र्थः ४अंतराक्षोभ्यन्तरयोनेत्रः

पथ्या॥१०९॥ मृद्वीकखर्जूरशृंगाटजखंडजोत्थविश्वासिताहंति चतामपीह॥ मुस्तंतथोदुंबरबोधिजातेप्लक्षेचबेवाष्युषितंहिताय॥११०॥ धात्रीदाडिमबीजपूरलवलीजातंफलं वाकुलंभुक्तंनाशयतिस्वजीर्णमखिलंस्वीयंस्वमूलादनात्॥ नारंगोत्थमथोगुडंचसकलंमोचाफलोत्थंघृतंनीरंतन्दुलजंतथैवघृतजंपीतंनिहंतिस्वरा॥१११॥ तन्दुलेषुचपयःप्रशस्यतेदीप्यकंहिचिपिटेकणान्वितम्॥ यष्टिकादधिवनेनजीर्यतेकर्कटीचसुमनेषुशस्यते॥११२॥ खंडीकरोतिखलुमाषभवंतुखंडंगोधूमसुद्गहरिमंथसतीनजातम्॥ तद्वद्विनाशयतिमातुलपुत्रकंहितैलंकुलित्थजमथोविनिहन्तितद्वत्॥११३॥ श्यामाकनीवारकुलित्थकंगुजातंपयोवेदधिजंनिहन्ति॥ पीतंनिहन्याद्दपिकाजिकोपितद्वद्विशेषाद्विदलाभवंहि॥११४॥ पिष्टान्नजेसैन्धवमेवशस्तंशीतांबुतद्वत्कृशराभवेतु॥ मारखांडरीनिंबजंयानिहन्तिमोद्गंतथापायसजंहिजूषम्॥११५॥ वटःफेणिकापर्पटालड्डुकान्ताःक्रमाद्वेसवारेन्द्रपुष्पांजनोत्थैः॥ सुबीजैःकणामूलतोऽन्यच्चसर्वंतथाशष्कुलीमंठकापूपजातम्॥११६॥ वेसवारोयथा॥ वाल्हीकधान्यार्द्रकनागरैलामेथ्यूषणास्नेहलवंगजीरैः॥ एभिश्शृतोराजिकयारजन्याख्यातस्तासिंधूकवेसवारः॥११७॥ मत्स्यापुलाशानजातविकारःकांजीकपानरतस्सुखशायी॥ अद्भुतमेवहियन्हिविपक्वमांसमहोयदिमत्स्यविपाकी॥११८॥ रसालज

रसालजंसुबीजमेवनाशयेत् ॥ नदेववापुनस्तथापलाशनाल
सुस्थितम् ॥ ११९ ॥ चापकपोतकपिंजलमांसभोजनजातम-
जीर्णमथैकं ॥ काशजमूलमहोबहुदृष्टंपेष्यविनाशयतीह नि
पीतम् ॥ १२० ॥ जीर्ण्यतिशाकान्यखिलान्यजस्रंक्षारेणतद्व
त्तिलनालभजेन ॥ स्याज्जिह्मशील्यद्रुमसारनीरैः सिद्धार्थचं-
चूकवास्तुकानाम् ॥ १२१ ॥ पाककेसुकलावुमूलकुलकप्रोद्भू
तमित्युद्धृतंतद्वद्दशाभवांकुरोत्थमपिवाकारादिवस्तुद्भवम् ॥
वार्ताकोत्थमथोप्युपोदकिभवंयात्येवसर्षपक्षणाद्भुक्ते सोर्षप
शाकएवचपरेमेघादिशब्दस्यवा ॥ १२२ ॥ नारंगवच्छूरणाभे
तिपाकंतथालुकंचेल्लवणोत्थवह्निः ॥ घृतोत्थवच्चापिनिशोरसो
नसितोत्थवद्धाभिषजाविपाच्यः ॥ १२३ ॥ इक्षुजातरसपान
भवंहिशृंगबेररसएवनिहन्यात् ॥ किंशुकोत्थमसिताम्बुनत-
थैवपूर्ववद्गुणकरंचविशेषात् ॥ १२४ ॥ पयःपानजाजीर्णकं
तक्रमेवंयथागव्यतक्रोद्भवंकोष्णमंडम् ॥ तथामाहिषंमा-
णिमंथंनिहन्याद्यथाशंखचूर्णंचदध्नःप्रदृष्टम् ॥ १२५ ॥ संता
प्यसंताप्यचहेमतारौपुनःपुनःक्षिप्यचनीरमध्ये ॥ पीतंतदे
वाशुहरेदजीर्णंजलोद्भवंचापिनचित्रमत्र ॥ १२६ ॥ शिशिर

[1] खदिरोरक्तसारश्चगायत्रीदंतधावनः कंटकीबालपत्रश्चजिह्मशल्यःक्षितिद्रुमइति
निघंटुः खदिरसारक्वथितनीरमत्रभेषजमितिबोध्यम् [2] पटोलःकुलकःप्रोक्तःपांडु
कःकर्कशच्छदइतिनिघंटुः [3] सर्षपशाकेभुक्तेपरेमेघादिशब्दस्यमेघरवस्यतंदुलीय
स्येत्यर्थः केसकाद्यखिलभक्षणोत्थाजीर्णयोगद्वयमेवपाचनार्थमुक्तमितिबोध्यं
[4] यथानारंगपाचकोगुडस्तथैवगुडेनशूरणमितिध्येयम् लवणोत्थेतंदुलाभस्तथालु
जेपिइत्यंपूर्वपूर्वचिकित्सांसंस्मृत्यनिशारसोनसिताजातेष्वपिबोध्यमिति

गैरिकसेवनोपिवाकियदिरास्त्रवलंचकरोत्यलं॥ मधुकमेयथ
नागदनिर्मितंसुरवधूलंकवलंचविगंधरद्दत्॥१२७॥ मद्यमाद्
कता।निपीडितमानवोघृतशर्करांचेत्पिवेद्यदिवातदाक्षणतो
हरेदपितन्मदं॥ कुष्टनीरदधान्यवालुकयष्टिकेलसमुद्भवंद्या
समेवमुखेधृतंयदितस्यगंधहरंक्षणात्॥१२८॥ अलमन्न
वाग्भरैर्भृशंपरमन्यच्चयदामियद्धितम्॥ शिशिरेणहिचोष्णा
वत्परंयदिहैवास्तिचतस्यपूर्वकम्॥१२९॥ सानंदस्मितकुंद
कल्पदशनज्योत्स्नावलीदर्शितंप्रेमाधिक्यमथोहियेनकृपया
मन्दंसमालोक्यमाम्॥ सर्वाशापरिपूरकंनृपगणैःसंपूजितां-
घ्रिंभजेस्वीयंतंचगुरुंहियस्यनितरांदास्येनकिंचित्करः॥१३०॥
॥ ॥इतिश्रीनिजगुरुचरणसरोजमिलिन्दायमानचतुर्वेदि
काशीनाथविरचितायांचिकित्साक्रमकल्पवल्ल्यांमग्निमान्द्या
दिचिकित्सापरागन्वितःपञ्चमस्तबकः॥५॥ ॥
शशिगिरिशंचप्रणम्यवच्म्यहंचरकादीनपिसुश्रुतादिकान्॥ कृ
मिरुक्शमनींप्रतिक्रियामनुभूतांचसुतन्मलेखिताम्॥१॥
तावन्निदानम्॥ मधुराम्लगुडप्रियोदिवाशयनेवह्वमहादरी
ऽश्रमी[1]॥द्रवपिष्टविरुद्धभोजनोयदिवाजीर्णयुतोकृमीन्लभ-
मेत्॥२॥ अथपूर्वरूपम्॥ अयुष्णानान्तर्मधुरेरुचिश्च
प्रसेकविड्भेदसमुद्भवश्च॥ नाशःप्रभायानयनेनितांतंभवंति
नैतेकृमिपूर्वरूपे॥३॥ अथसाक्षाद्रूपम्॥ ॥ज्वरोतिसा

---

१ अश्रमीव्यायामादिश्रमरहितः

रस्सदनभ्रमश्वसद्रोगवैवर्ण्यशिवारूपीडाः॥ भक्तेतिजातो-
(पि)हिशत्रुभावैस्सर्वेकृमीणांखलुपूर्णरूपे॥४॥ पथ्यंच॥ ॥
अन्नमंडमथोपथ्येव्योषजन्तुघ्नसाधितम्॥दीपनंकृमिनाशा
यप्रत्यहंपेयमुत्तमम्॥५॥ अथप्रतीकारः जन्तुघ्नकं
जन्तुरिपुप्रधिषचूर्णेनसंधूलितमेवपीतम्॥नाशंकृमीणांवि
दधातिनूनंकृमिप्रभूतांश्चगदान्निहन्यात्॥६॥ इतिविडं
गक्वाथः॥ ब्रह्मद्रुबीजस्वरसंनिपीतंमाक्षीकसंयुक्तमथो
पिकल्कम्॥तक्रेणवाजंतुहरंविशेषात्तद्बीजजातंबहुशोनुभू
तम्॥७॥ योगद्वयम्॥ पीताजवानीखलुपारसीयागुडे
नचोष्णाम्बुयुताक्षणेन॥संपातयेज्जाठरजन्तुसंघान्मयानु
भूतानहिचित्रमत्र॥८॥निंबाजमोदाकृमिशत्रुहिंगुकाश्मीर
जातंसगुडंसुचूर्णम्॥ब्रह्मद्रुबीजैश्चसमन्वितंचभुक्तंक्षणात्पा
तनकरंकृमीणाम्॥९॥ ॥अथकीटमर्दोरसः॥ शुद्धोगंधक
पारदौकृमिरिपुब्रह्मद्रुबीजौतथाचूर्णीकृत्यविषादिमुष्टिसहि
तंभूयाजमोदायुतम्॥निष्कंकमधुनानदेतदखिलंलेह्यंसुमु
स्ताजलैरुक्तःकीटकमर्दएषनितरांनाम्नारसोदुर्लभः॥१०॥
अथबाह्यकृमयः॥ रूक्षाशनादतिमलादतिशोकतश्चस्वे
दात्तथाचबहुचिंतनतत्पराणाम्॥वायोःकफस्यनितरांबहुको
पतश्चलीक्षाश्चयूकसहितहिसमुद्भवंति॥११॥ अथयूका
दीनांपृथक्पृथक्नामलक्षणानि॥ ॥यूकाकृष्णाद्याहिती
यातुशुक्लाख्याताचान्याचर्मसंस्थातृतीया॥नद्धाचान्याया
चतुर्थीतुमूत्रोद्भूताख्याता तिंदुकीवर्तुलासा॥१२॥स्यात्सं

चिर्मीमत्कुणीकाभिधानातासांचिकित्सांक्रमशोथवक्ष्ये॥
धत्तूरपत्रोत्थरसोरसेनयुक्तःप्रलेपादपियूकहंता ॥१३॥ ॥
अथलीक्षाप्रतीकारः॥ शिलाविडंगंमधुकान्वचांपयसु
पेषितान्सकसार्षपेस्तुतैलकेसुतैलपाकपाचितान्॥निधायव
स्त्रखंडकेनिधार्यतैलसुत्तमंतदेवहि प्रलेपितंसुलीक्षकावि
नाशनम्॥१४॥ अरिष्टफेनघर्षणंतथागुणांविशेषतोरजोमृ
दांबुघर्षणंतुचर्मयूकनाशनम्॥१५॥ शटीयवान्यरिष्टपत्र
जंतुशत्रुमागधीरसोनशुल्कदंतिकातृवत्सनागवोञ्जलैः॥
त्रिपेष्ययत्नलेपिताहितिन्दुकीविनाशनेपरातथापरंतुवेहिम
त्कुणीविनाशनम्॥१६॥ सुधातुतूलिवर्त्तिकाविभाव्यशोष्य
पावकेस्सुसार्षपोत्थतैलयुक्तदीपकेप्रदीपिता॥तदाचसो-
धमुत्तमंविहाययांतिमत्कुणीगणाश्चतत्रवैयदातुतन्मरीचि
भर्त्सिताः॥१७॥ अन्यच्च कुलीरजांवसांतथाकुलीर
कस्यरवर्परेनिधायवर्तिसंयुतांप्रदीप्यचाथयत्नतः॥तदेववा
गृहस्थितंनिशास्वलंतुमत्कुणान्विकर्षयेदशेषतोनचित्रम
त्रवर्णितम्॥१८॥ अथगृहस्थितमाक्षिकादिजन्तु
दूरीकरणोपायः॥ तत्रहेतुश्च॥ जीवसौख्यमिहदेहतः
स्फुटंदेहसौख्यमिहगेहतोयतः॥गेहजन्तुशमनीमतोब्रुवे
पूर्वतन्त्रलिखितांप्रतिक्रियाम्॥१९॥ ॥अथमक्षिकाः॥
तक्रपेषितस्कनालले पितांसुतलीचगृहमध्यधारिताम्॥तांवि

१अत्रविषाशुकदंताज्ञेयाविश्वान्वभंगुरेतिनिघंटुः २ गवांमूत्रैः ३ अर्कफलो
स्थितातूलिः

लोध्रखलुमक्षिकाक्रंधंगन्धमीतिस्मरितताव्रजन्त्यलम् ॥२०
॥ अथमूषकाः ॥ मार्जारविट्तालस्रुतंविपेष्यतेनैवमूरवं
परिगृह्यलिस्वा ॥ संमोचयेत्तंभवनान्तरेस्येतेनैवसर्वेसहसंव्र
जंति ॥२१॥ अथसर्पादयः ॥ श्वेतापराजितजटाकृमि
शत्रुशलभल्लातकैश्वरचितःखलुनैषधूपः ॥ सर्पांश्चसौधतल
लब्धसुखप्रवासान्भूयांश्चमत्कुणगणांश्चनिराकरोति ॥२२॥
॥ अथवृश्चिकाः ॥ पलंकषारुष्करभानुपुष्पश्रीवासक
त्र्यूषणकैर्गुडेन ॥ युक्तोविडंगेनचधूपएषोनिवारयत्येषहिवृश्चि
कालीम् ॥२३॥ अथषट्पदाद्याविषजंतवः ॥ मुस्ताभानु
फलानिसर्षपगुडौभल्लातसिद्धार्थकौरालंबानरिकांप्रपेष्यम
तिमान्गेहेदहेद्धूपकम् ॥ सर्पामूषकमत्कुणाश्चनितरांयेन्ये
विषेणान्विताभृंगाद्याश्चमरीसुताश्चनिखिलादूरेगृहाद्यान्ति
वै ॥२४॥ अथपिपीलिकाद्याः ॥ ॥लाक्षासिद्धार्थरालाकृ
मिरिपुनलदोशीरकाश्मीरयातोधूपोपार्थद्रुदलपुरस्रुतोरेणुपत्र
प्रयुक्तः ॥ दूरीकुर्यात्पिपील्याद्यखिलकृमिगणान्नोहतोनान्त-
चित्रंतद्वद्वावर्वणिस्थोमशकबहुगणान्दूरमेवाशुकुर्यात् ॥२५
॥ अपरश्च ॥ श्रीवेष्टरालाककुभप्रसूनभल्लातकोशीर
कलांगलीनाम् ॥ धूपोविडंगान्वितचन्दनाढ्योयूकान्मशान्म
त्कुणकांश्चहन्यात् ॥२६॥ अथशरीराभ्यंतरकृमयः ॥
आमाशयस्थाकफजाविरूढास्सर्प्पन्तिसर्वत्रचब्रह्मतुल्याः ॥
केचिद्भिगंडूपदरूपिणोन्येधान्यांकुराभास्तनुदीर्घसूक्ष्माः ॥२७
॥ श्वेतास्त्वरक्ताबहुधात्रसप्तप्रकारभेदान्चनामयुक्तः ॥ तेषां

हिनामानिचिकित्सितंचब्रवीमिधन्वंतरिवर्णितंयत् ॥२८॥ अं त्रादाश्चभवंन्त्येकेजठरादास्तथापरे ॥उदरे वेष्टिनश्चान्येहृदयादामहाकुहाः ॥ चुरवोदर्भकुसुमास्ससुगंधास्तथापरे ॥अरोचकास्त्रस्त्रवणंहृल्लासज्वरकारकाः ॥२९॥ मूर्छाविपाकवमथुस्त्रवथ्वानाहपीनसान् ॥ कार्श्यंचापिविशेषेणकुर्वन्त्येतेकफोद्भवाः ॥३०॥ ॥अथैतेषांप्रतीकारः॥ वचेन्दुगंधाकृमिजित्पलाशबीजाजिगंधाशुभहिंगुयुक्तः ॥ शुषेणयायुक्तभसौनिपीतोतमोदकेनैवकृमीन्निहन्यात् ॥३१॥ अथरक्तजाः ॥ रुधिरवाहिशिरास्त्रसमुद्भवारुधिरजाःकृमयस्त्वणवःपरे ॥खलुभवंत्यथताम्रसम प्रभात्र्यपदएवचकेशविनाशनाः॥ ३२॥ अथप्रतीकारः॥ विश्रोतापासिकोविडंगमगधादीप्यारसोनैःकृतंचूर्णंनिंबसुपत्रयुक्तमशितंकंपिल्लयुक्तंतथा॥ गोमूत्रेणनिपातयेच्चशतशोजन्तून्यथाविष्णुनासुक्तंचक्रमथोतथासुरगणान्सदैत्यदनुजंहठात् ॥३३॥ अथपुरीषजाः॥ पक्वाशयेमलभवाकृमयस्त्वथाधोसर्प्यन्तिपूर्वमिहचामगताविवृद्धाः॥ विड्भेदशूलतनुकार्श्यकरास्तथैवपीतास्सिताश्चसितवर्णयुजोभवेयुः॥३४॥ ककेरुकामेकरुकास्सौसुरादास्सल्ल्नकाः ॥लेलिहानोभवंत्येतेनाम्नापञ्चैववर्त्तुलाः॥३५॥ रोमहर्षाग्नि

---

१श्यामातनुम्लालविक्रमसूरविदलाचसाकालाईन्वन्द्रःकालिंदीसुषेणाकालवंतिकेनिनिघंटुः २अतिविषाशुक्लदंताज्ञेयाविश्वाचभंगुरेतिनिघंटुः ३ तापसीजालिनीचैवहारिद्रःपीतकंदकइतिनिघंटुः ४ रक्तनिशोथः कर्चूरः

सदनकारिणोधोविसर्पिणः ॥ विष्टंभपारुष्यकरास्तुदाण्डूक राअलम् ॥ ३६ ॥ पाण्डुतांजनयन्त्येवद्वाभ्यानिविमार्गगाः ॥ तस्मादणवएवैतेपातनीयाविशारदैः ॥ ३७ ॥ प्रतीकारस्त्वथ था ॥ पिप्पल्यादिचूर्णम् ॥ कणाकणापादवचानलानांसजीरयुग्मान्वितधान्यकानाम् ॥ पलद्वयान्मृत्वथपृथक्पृथक्चवसुनागपुष्पेणसमन्वितानाम् ॥ ३८ ॥ तालीसपत्राणिचपूर्ववद्धिसौवर्चलस्यापिहिपञ्चभागाच् ॥ सुंठ्याः पलेकंमरिचस्यतद्वदजाजिकायास्तुपलंनिगृह्य ॥ ३९ ॥ एलात्वचौचाथपलार्द्धमानौग्राह्यौतथावैकुडवद्वयंच ॥ सामुद्रकस्याप्यथदाडिमस्यनिगृह्यचैकंकुडवंहिवैद्यः ॥ ४० ॥ अम्लादिकस्यापिहिवेतसस्यपलद्वयंगृह्यविपेष्ययत्नात् ॥ चूर्णंप्रदेयंखलुनष्टवन्हेर्विनाशनंसर्वकृमीरुजानाम् ॥ ४१ ॥ कंडूहरंरुचिकरंस्करयानिपीतमोदकेनचतथामविकारमुग्रम् ॥ सद्योविनाशयतितत्कनिपीतमेतदर्शांसिचाथमहतींग्रहणींचतद्वत् ॥ ४२ ॥ अथस्नायुककृमिः ॥ ॥ जातस्तुकफरक्ताभ्यांस्नायुकःपरिकीर्तितः ॥ तोदाध्मानकरस्सोयंस्नाय्वाकारोध्रुवंकृमिः ॥ ४३ ॥ चि० स्नायुजन्तुप्रशमनंतीक्ष्णयोगेविरेचनम् ॥ सुरसादिगणेपेयोयवकोलकुलत्थकैः ॥ ४४ ॥ विडंगस्नेहलवणैर्युक्तःकथितएवहि ॥ स्नायुजन्तुहरस्सद्योयवागूस्तत्कसाधिता ॥ ४५ ॥ विडंगव्योषमरिचैर्युक्तासौवर्चलान्विता ॥ शिग्रुबीजसमायुक्तातन्दुलानांसुभक्षिता ॥ ४६ ॥ अथमार्गद्वयगाः ॥ कृमिजित्क्रमुकोत्तुमस्तुना-

कृतकल्कोखलुपानतःक्षणात्॥ शमनोप्रथितोह्यमार्गग
कृमिजालस्यसुपथ्यभोजिनः॥ ४७॥ अथगंडूषदाः॥
ज्वरोरुस्फोटनंभ्रांतिर्विड्विबन्धोविवर्णता॥ गर्ज्जनंजठ
रेशूलमतीसारंतुफेनिलम्॥ ४८॥ मन्दाग्निस्तंपिपासाच
नेत्रयोःपीततातथा॥ जातेषुकिंचुकेष्वेतेसर्वेजायन्तएव
हि॥ ४९॥ तेषांप्रतीकारः॥ धनदनेत्रदलोत्थरसंपिबे
त्पलमितंकिलकिंचुशमायवा॥ मरिचसप्तकसंयुतमेवहि
प्रथितरामशरेणसमीक्षितो॥ ५०॥ अथसूचीमुखाः॥
सूचीमुखास्सूचिसमंतुदंतिरक्तातिसारंरुधिरान्वितंच॥
छर्दिंश्चकुर्वन्त्यथमानवानांयकृद्गुजश्चातिदिशंतिपीडा
म्॥ ५१॥ स्वेदोमुखेऽरुचिर्जाश्यंतृष्णाहृल्लासएवच॥
मन्दज्वरश्चमन्दाग्निर्जायन्तेतेकृमीरुजाम्॥ ५२॥
अथचिकित्सा॥ ॥गवादिनीनीरधरारवुपर्णीफलत्र
याणांचजलेनपिष्टम्॥ कल्कंचदेवद्रुसुशिग्रुयुक्तंविडंग
कृष्णान्वितमेवपेयम्॥ ५३॥ अथान्योयोगः॥ ॥
सुरसासुरदारुमागधीत्वृद्दुग्धातृवृत्तारसोनजम्॥ त्रि
फलाकृमिशत्रुदन्तिनीसहितंसूचिमुखान्विनाशयेत्॥ ५४
॥ ॥इतिसुरसादिकल्कं॥ अथधान्याङ्कुराभाःकृ
मयः॥ मलाशयस्थाःकृमयश्चपाण्डुजग्धांतिधान्याङ्कु
ररूपभूताः॥ यदानदाल्केव्यमथोहिरोमहर्षाव्यवायै-
विमनस्कताच॥ ५५॥ विड्भेदविष्टंभगुदोत्थकण्डूश्रम
श्चगात्रेप्यतिजाड्यमेव॥ क्लेदस्तुहृन्नेत्रभवस्तथैवय-

ष्ट्यांच रौक्ष्यंखलुजायतेत्र ॥५६॥ प्रतीकारः ॥ कटुतैल-समायुक्तास्सक्रचोगुदवेशिताः ॥ शिग्रूनांनाशयन्त्येवधान्यांकुरनिभान्कृमीन् ॥५७॥ अथनिंबपत्रादिपानम् ॥ निंबपत्रकृमिजिद्रसोत्तजंमातुलुंगजठयासमन्वितम् ॥ साजमोदसरलासमन्वितंपानमत्रचगवांजलैर्युतम् ॥५८॥ अथकृमीणामुपद्रवाः ॥ आध्मानज्वरशूलविड्ग्रहयुताः पाण्डुः पिपासापिवाती सारोजठराग्निमांद्यसहिताःशोषश्चछर्दिस्तथा ॥ सर्वेत्वेवभवन्त्युपद्रवगणानूनंकृमीणामलंजेतुंशास्त्रविचारसारनिपुणैर्योगैस्तुशास्त्रोदितैः ॥५९॥ अथोपद्रवाणांचिकित्साच ॥ एकविंशतिवाराणिपर्पटींरसपूर्विकाम् ॥ स्नुहीदुग्धेनसंभाव्यकृम्याध्मानेप्रदापयेत् ॥६०॥ पलाशास्थ्यजमोदाभ्यांक्षीरिणीरसगन्धकौ ॥ कृमिशूलहरैतद्दद्यान्मुषणीसमुद्भवम् ॥६१ ॥सताम्रंरसमेवैकंपीतंशूलनिवारणम् ॥ कृमिज्वरेचतस्यावाकषायःशर्करायुतः ॥६२॥ अथासाध्यलक्षणम् ॥ ॥ वर्ज्जयेत्कृमिवन्तन्तंसर्वोपद्रवपीडितम् ॥ क्षीणमांसंविड्भ्रान्तंसर्वत्रकृमिसंयुतम् ॥६३॥ अथनिवृत्तिः॥ स्वाहारलब्धिश्चपराक्रमश्चभवेद्दलंपूर्ववदेवतद्वत् ॥ आध्माननाशश्चमलप्रवृत्तिस्सम्यक्कृमीणांचविनाशनेऽलम् ॥६४॥ जयतिचनित्यंनिजगुरुशिक्षा ॥ ममबहुजाड्यंशमयतियासा ॥६५॥

॥ इतिश्रीनिजगुरुचरणाब्जमधुपचतुर्वेदिकाशीनाथकृ

---

१ गुन्जाभांडीत्रिभांडीस्यात्काकासीसरलान्वितम् इतिनिघंटुः

तायांचिकित्साक्रमकल्पवल्ल्यांकृमिरोगप्रतीकारपरागगंधितः षष्ठस्तबकः॥६॥ ॥प्रणम्यगौरीसुतमाखुपत्रंवृषध्वजंशंकरमप्यहंवै॥ब्रवीमिपांड्वामयसच्चिकित्सांभिषग्वरिष्ठाश्च्वगुरूंश्चतद्वत्॥१॥ पांड्वामयाःपञ्चभवन्तितत्रत्रयश्चवातादिभिरेवतुर्य्यः॥स्यात्सन्निपातेनतुपञ्चमश्चमृद्भक्षणादेववदन्तिवैद्याः॥२॥ तत्पूर्वरूपंतन्निदानंचलक्षणानिचयथा॥ लवणमद्यमृदांपरिसेवनादतिदिवाशयनादतिमैथुनात्॥खलुनतीक्ष्णरसाम्लनिषेवणाद्रुधिरमत्रविदूष्यनयन्तिते॥त्वचितुपांडुरताव्यथनेषुभाङ्नयनकूटगताखलुशोफता॥भवतिमूत्रविशांबहुपीततात्वचिचविस्फुटनंतनुसादता॥४॥ मृद्भक्षणेच्छात्वथवाविपाकोनिष्ठीवनञ्चापिभवन्तिसर्वे॥जातेचतस्मिन्नथकाशयुक्तश्श्वासोनरवत्वङ्नयनेषुतद्वत्॥५॥ पांडुत्वमेवाथवमिश्चसादोत्वभ्रमेश्चशोथस्यसमुद्भवश्च॥वक्ष्येथवातादिषुतस्यलिंगंप्रन्थस्यभूयस्त्वभयेनकिञ्चित्॥६॥ कृष्णारुणत्वंनयनादिकानांवातेनपित्तेनचपीतताच॥शैत्यंकफेनैवचसर्वजातेसर्वाणिलिंगानिभवन्तिपांडौ ॥७॥ अथोपशयः॥ पुराणयवगोधूमशालीनांचप्रशस्यते॥मुद्गाढकीमसूराणांजांगलानांरसस्तथा॥८॥ अथप्रतीकारः॥ मण्डूरचूर्णंसुरभीजलेनसंसाधितंवैसुरभीजलेन॥भुक्तंगुडाढ्यंखलुपांडुरोगंसयक्ष्मशूलंविनिहन्तिसद्यः॥९॥ अथपुनर्नवादिवटी॥ ॥पुनर्नवादारुनृपद्रुडं गव्योषत्रियामात्रिफलानिकुंभैः॥कलिंगतिक्ताघनरूप्ययवानीशृंगीकणामूल

सुकारिवीभिः ॥१०॥ सकट्फलाभिश्चविकायुताभिश्चित्रान्विता भिर्द्विगुणेनतद्वत् ॥ मण्डूरकेणापिसमन्विताभिर्मूत्रेणचैवाष्टगुणे नवापि॥११॥ संपेष्यपूर्वंचविमिश्रिताभिस्संपाच्यवैद्यैर्वटकीकृ ताभिः॥ पाण्डोर्विनाशश्चनिषेविताभिःपूर्वैस्सुवैद्यैःपरिवर्णिता- भिः॥१२॥ मंडूरवत्यश्चपुनर्नवाद्याःपांडोर्हिताश्चाश्विविनिर्मिता श्च॥नसाम्यमायान्त्यपराश्चवट्योयस्माद्गुणेनैवततोविशिष्टाः॥ १३॥ मुक्तावटीस्वाभिबलानुकूलानामापिपाण्डोश्चविनाशयेद्दे॥ श्वासांश्चकासांश्चहलीमकंचनेत्रोद्भवांकामलिकांनिहन्ति॥१४॥ अर्शांसिप्लीहमाध्मानंग्रहणींचापिकुष्ठकम् ॥ वातरक्तंक्रमिश्चा पिमुक्तातङ्केणनाशयेत् ॥१५॥ अथवातजे॥ दशांघ्रिविशौ षधिनीरमेवपेयंकणाचूर्णयुतंनरेण॥ तथातुलस्योषधिसंशृतं वावातोद्भवेपांडुगदेविशेषात् ॥१६॥ अथकफजे॥ यष्टीम धुगदसिद्धंहव्यंपीतंसुवैद्यधुर्य्येण॥ दत्तंयदिचनितान्तंपाण्डुंपि त्तोद्भवंहन्यात् ॥१७॥ अथलोहगर्भोरसः॥ अष्टभागमित- लोहभस्मतोऽप्यर्धभागमितसूतभस्मकम्॥ वन्हिमेघकुटज त्वचामथोजन्तुशत्रुकटुकत्रयस्यवा ॥१८॥ शंभुनेत्रफलयायुतस्य चैचूर्णकेनचविपेषितंहितत्॥ लोहगर्भरसएवभण्यतेपथ्यमत्र चमृगांकवद्भवेत् ॥१९॥ मधुनाखलुकर्षसंमितंतदिदंलेह्यमथा त्रवापिबेत्॥ तदनुप्रथितंघनादिकंक्वथितंनीरमथोतदुच्यते॥ २०॥ जलदातिविषाचिरबिल्वगुहाजगदौषधिसंशृतनीरमलम्॥

---

१अमृतामृतवल्लीत्रगुडूच्यथवरागुहाइतिनिघंटुः

निशिशीतलमेवपिबेद्यदिचेन्मधुनासहितंखलुपाण्डुगदे॥२१॥
॥ अथकफजे॥ ॥तत्रकामेश्वरोरसः॥ पलंसूतंगंधंपल
परमितंचाथदहनंहरीतक्यास्तद्वत्र्यमथपलंसार्द्धपलकं॥प
योदस्यैलायाःपलपरिमितंत्र्यूषणमथोकणामूलंतद्वद्विषमपि
तथानागकुसुमम्॥२२॥सुकर्षैकंरेणोरिहचविहितंचार्द्धपल
कंतथैलावस्त्वचंगुडमपिपुराणंनिगदितम्॥समस्तस्याप्यर्द्धंस
कलमपितेनैवचशतंपुनःखल्वेयामंकनकदलनीरैरथपुनः॥
२३॥घृतेनैवंमर्द्यंतदनुबदराकारगुटिकांनरःकृत्वाभुक्त्वानि-
शिचकफपांडौयदितदा॥रसोयंकामेशश्शमयतिचपांड्वामय
मलंमयावारंवारंयदलमिहदृष्टंबहुगुणम्॥२४॥ अथसन्नि
पातजे॥कालविध्वंसनोरसः॥ शुद्धंसूतंहेमतारंसताम्रंतु
ल्यंसर्वंखल्वमध्येनिधाय॥जंबीरोत्थंनीरमेवाशुदत्वादत्वा
किंचिन्मर्द्दयेच्छोषयेच्च॥पिष्टिंलब्ध्वातांचसूतादिजातांसुन्म
त्ताख्येसत्फलेसन्निधाय॥२५॥दोलायंत्रेतच्चमहंपाच्यसम्य-
क्चूर्णद्रावैरेवसंचूर्ण्यपश्चात्॥बध्वावस्त्रेनेषिकायंत्रगंतत्स्या
च्चगंधंपेष्यजंबीरनीरैः॥२६॥ऊर्ध्वाधस्तात्तुल्यमेवात्रदत्वा
तस्मात्सर्वंस्मात्ततःषड्गुणंहि॥पाच्यंपश्चाच्चाल्पकेसंपुटेत
ज्जीर्णेगंधेमारितंतुल्यलोहम्॥२७॥संमिश्र्यैवंकंटकारीद्र
वाद्यंमर्द्यपश्चात्तत्कपोतेदिनैकं॥रुध्वापाच्यंवैकरीषाग्निम
ध्येशीतंपश्चात्सेव्यपूर्वद्रवैश्च॥२८॥त्रिधात्रिधाभाव्यतथाद्र
हृत्याद्रवैस्त्रिधाभाव्यपुटैस्त्रिभिस्तु॥वन्ह्यर्कयोश्चापिरसैस्त्रि
धैवसंभाव्यसंभाव्यपृथक्पृथक्च॥२९॥नक्तादिमालद्रवसं

घृतंच त्रिधा विसंभाव्य पुनः पुटेच्च ॥ दत्वा दशांशं शशभवत्सनाभं स्वभावशीतं तु निगृह्य पेष्य ॥ ३० ॥ गुञ्जामितं पांडुगदातुरायका लादिविध्वंसननामधेयम् ॥ गोमूत्रपिष्टां च शिवां प्रदद्यादस्यानुपाने खलु वैद्यवर्य्यः ॥ ३१ ॥ अथ मृद्भक्षणोत्थ पांडुः ॥ सूनगंडाक्षिकूटभ्रूशूनपाय्वाचमेहनः ॥ श्वासकासशिवारुग्भ्यार्शस्सदारुचिनिपीडितः ॥ ३२ ॥ तन्द्रालस्यसमायुक्तः कृमिकोष्ठोतिसारवान् ॥ कफक्लेंयुतं तत्र मलं मृद्भक्षणाद्भवेत् ॥ ३३ ॥ अथ तत्प्रतीकारः ॥ तत्र बिल्वादिघृतम् ॥ शांडिल्यव्यासैरात्रिहृय जलदकणाविश्वकालीद्विदृश्वीपाठाजन्तुघ्नभार्गीहरनयनफलादेवकाष्ठैः सदुग्धैः ॥ आज्यं संपाचितं यन्मरिचयुतमलं लोहभस्मप्रयुक्तं दत्तं भुक्तं सुवैद्यैः शमयति नितरां मृद्विकारोत्थपांडुम् ॥ ३४ ॥ अथागंतुकपांण्डुः ॥ गमनकलहसेवाचिंतनायासरोधव्रणजपरिनिपातान्मानवानामजस्रम् ॥ भवति च खलु पांण्डुः प्रोच्यते ऽऽगन्तुको सौ विविधनृपतिमान्यैर्वैद्यभूपालवर्य्यैः ॥ ३५ ॥ भूनिंबनिंबत्रिफलाब्दशुंठीशु क्लात्रिवृद्देवलताशिवानाम् ॥ सच्चूर्णानां क्वथितं निहन्ति मार्गादिसंसेवनजातपांडुम् ॥ ३६ ॥ विहारजपांडुलक्षणम् ॥ निधुवने युवतीवहुसेवनाद्रुधिरशोषणतो नितृशो नरः ॥ रमयमां रमणीतिजपे

---

१ बिल्वश्शलाटुः शांडिल्योत्हृग्यगंधो महाफल इति निघंटुः २ पुनर्नवापराकूरो व्यासो मंगलपत्रक इति निघंटु ३ दृश्चिकः क्षुद्रवर्षा मृदीर्घपत्रः कठिल्लक इति निघंटुः ४ त्रिफला.

त्स्वपबद्ध त्तृषासहितःखलुपाण्डुकी॥३७॥ अथतत्प्रतीकारः॥ आमलक्याद्यवलेहः॥ ॥जलेनयंत्रंपरिशोध्यपूर्वंतस्मिन्निधायामलकानिवैद्यः॥ संपीड्यतेषांस्वरसंनिगृह्यद्रोणप्रमाणंमृदुवह्निनैवम्॥३८॥ संपाचयेत्तत्रचप्रस्थमेकंपाल्यालिचूर्णंमधुकस्यतद्वत्॥ पलद्वयंगोस्तनिकाभवंहिपिष्टंचप्रस्थोन्मितमेव देयम्॥३९॥ तथातुगोक्षीरिपलद्वयंचसुशृंगवेरस्यपलद्वयंच॥सुशर्करायास्तुतुलार्धमेवप्रस्थोन्मितंचापिमधुप्रदेयम्॥ ४०॥ घनंतुतल्लेहमथोसुभुक्तंपलोन्मितंनाशयतीहनूनम्॥ हलीमकंकामलिकांचपांडुंक्षयोस्थपांडोन्नपरोस्तिचास्मात्॥४१॥ अथपांडोरुपद्रवाः॥ ॥शोथस्फोटश्चाथमूर्छातिरुक्काछर्दिस्तृष्णाविभ्रमश्चक्लमश्च॥ पांडोर्ज्ञेयादिङ्मितोपद्रवाश्चहृल्लासोन्योवाज्वरोरोऽचकश्च॥४२॥ अथैतेषांप्रतीकारश्च॥ ॥मूर्वानिशावासकमागधीभिस्त्रायंतिकातिक्तकवारिभिश्च॥तिक्तापटोलाब्दसुचन्दनैश्चसपर्पटैरक्षमितैर्घृतंपचत्॥४३॥प्रस्थोन्मितंचाथचतुर्गुणेहिक्षीरेसुसिद्धंहितदेवयुक्तम्॥ पांडुत्वविस्फोटहरंविशेषाज्ज्वरेतिशोथेतिहितंगुदोत्थे॥४४॥ पित्तास्रनाशनंत्वेतद्धृतमुक्तंभिषग्वरैः॥ मूर्छातिनाशनंवक्ष्येपूर्ववैद्यैश्चवर्णितं॥४५॥ मृत्तिकारिष्टपत्रोत्थरसैस्तुल्यैर्विभाविता॥ मृद्वेषणार्थंदत्ताद्यामूर्छातोबहुधास्मृतम्॥४६॥ अथासाध्यलक्षणम्॥ उपद्रवैःपांडुकिनंसमस्तैर्युतंयशोथींहिहतेन्द्रियंच॥ परित्यजेद्दूरतएवयस्माद्विरोद्भवस्सिद्धतिनोखरेस्तु॥४७॥ सकफवद्धहरि

१ढुधेरितिद्वि॰ २अनिरुद्धक्षितसमस्तधातुरिति॰

न्मलमेवपस्त्र जतिछर्दितृषार्दितमूर्छितः॥ बहुलपांडुरराशिवि
लोकनाद्व्रजतिभानुसुतस्यनिवेशनम्॥ ४८॥ अथगतपां
डुलक्षणम्॥ ॥तनोस्तुष्टिर्मनस्तुष्टिस्तनुवर्णस्तुपूर्ववत्॥
सुलक्षणोचाप्यरुचिर्गतपाण्डोश्चलक्षणम्॥४९॥ अथका
मलानिदानम्॥ यःपांडुकीचाथपरश्चयस्तुनिषेवतेचैवबहूपि
त्तलानि॥ तस्यासृग्मांसान्यलमेवदग्ध्वाकरोतिपित्तंखलुकाम
लादीन्॥५०॥ अथैतस्याःपूर्वरूपम्॥ दाहाविपाकारुचिव
न्हिमांद्यंमन्द ज्वरस्स्यादयुतंहिकार्श्यम्॥ पूर्वेतुरूपेखलुकाम
लायाःपूर्णेतुयत्तत्तुवदामिचाग्रे॥५१॥ नखरनेत्रविशांबहुपीत-
तातनुगतारवलुभेकसवर्णता॥ भवतिपूर्णगदेचतथैवसाव
दनगाखलुमूत्रगतैवसा॥५२॥ अथोपशयः॥ यवामुद्गा
शालीमरिचमथितंचाप्यथगवांपयोहव्यंश्यामाढकियुतमलं
जांगलपलम्॥ प्रदेयागोधूमायइहमनुजःकामलिकयागतः
स्वेदंतस्मैयदलमथपित्तप्रशमनम्॥५३॥ अथप्रतीकारः॥
गुडूचिकायाःपिचुमन्दकस्यदार्व्यास्तथावाथफलत्रयस्य॥ र
सःप्रभातेमधुनाविमिश्रश्शीतोनिपेयःखलुकामलायाम्॥५४
॥ योगचतुष्टयंबोध्यम्॥ गुडूचिकापत्रजकल्कमेकंप्रातः
पिबेत्तक्रयुतंविशेषात्॥ तथाञ्जनंवैद्यवरैरिहोक्तंसुद्रोणपुष्पी
रसमेकमेव॥५५॥ धात्रीलोहरजोनिशामधुयुतंव्योषंघृतंशर्क
रालेहंलीढमलंनिहन्तिबहुधाजातांमहाकामलाम्॥ कर्कोटी

---

१ क्वचित्कचित्खुर्वतंत्राडिखिनलाम् हतेंद्रियइत्यपिपाठस्साधुः

न्दयाकृतंचनियतंनस्यंप्रयोज्यंत्वथोजालिन्याःफलमेकमे
वनितरांलहुत्वनस्येहितं॥ ५५॥ योगत्रयंबोध्यं॥ अथाम
लकारिष्टम्॥ धात्रीफलानांद्विसहस्रमेवनिष्पीड्यनेषां
स्वरसंनिगृह्य॥ तदष्टमांशेनमधुप्रगृह्यचूर्णंकिणायाःकुड
वार्द्धमानम्॥५६॥ तुलार्द्धमानेनचशर्करांहिस्निग्धेघटेमेल्य
चपक्षमेकम्॥ संस्थाप्यसिद्धंचपिबेदजस्रंयःकामलीस्वाग्नि
बलानुकूलम्॥ ५७॥ वातास्रग्विषमज्वरानपहरेत्पाण्डुंतथा
कामलांहृद्रोगंकसनंनिहंतिनितरांहिक्कांनिपीतंत्विदम्॥उक्तं
शास्त्रविचारचारुनिपुणैर्वैद्यैररिष्टंत्विदंधात्र्यादिप्रथितंक्षितौ
बहुहितंवैकामलानाशनम्॥ ५८॥ अथसंप्राप्तिस्तत्रादौ
कुंभकामला॥ दवथुविरुचितृष्णानाहनेत्रारुणत्वंश्वसन
कसनहिक्कासंयुतोवाज्वरश्च॥ यदिभवतितदेयंकुंभकाद्याम
लास्यादपिनयदिहसाध्याश्वासहिक्केनचेत्सा॥ ५९॥ शाखा
कामलिकांवदन्तिमुनयश्चेमांयतस्त्वांस्थिताशाखास्वेवशिला
जतुप्रतिदिनंपेयंसकृन्मूत्रकम्॥ मंडूरंमधुनायुतंचनियतंसे
व्यंचलोहंपरंनिर्षेकंखलुकुंभकामलिगदेयुक्तंतुयोगत्रयम्॥
६०॥ अथकोष्ठकामला॥ दग्धमांसरुधिरप्रकोपतोर
क्तपित्तबहुकोपतोदपिच॥ कामलाभवतिकोष्ठकादिकाश्रां
तितृड्डहुलशोथसंयुता॥६१॥ अथैतस्याश्चिकित्सा॥ ॥
मुस्ताचित्रकजंतुशत्रुमगधाविश्वामृतानांकृतंचूर्णंलोहसम
न्वितंमधुयुतंपांडुंनिहंतित्वरा॥ भुक्तंनाशयतीवनिश्चितमिदं

१ कसनारुचिश्वसनकं हिक्कां निपीतंत्विदमित्येव पाठःसाधुः

कोष्ठादिकांकामलांदुर्धर्षांचचिरोत्थितामतिहलीमोयथानर
कास्॥६२॥ अथमलकामला॥ कामलागदिनिपीडितोहिय
स्सार्यतेचतिलपिष्टवन्मलम्॥ श्लेष्मबद्धगुदएवतस्यवैकामला
चमलशब्दपूर्विका॥६३ ॥अथास्याःप्रतीकारः॥ निकुंभप
टोलकाथेप्रस्थेन त्कल्कसाधितंसर्पिः॥ नाशंकरोत्यवश्यंमला
दिकामलामल गदस्याशु॥६४॥ अथहलीमकम्॥ यदापां
ण्डुकीकामलार्तश्चनूनंहरिद्वर्णयुक्त स्तथाश्यावपीतः॥बलो
त्साहहीनस्तुतन्द्रासमेतोऽग्निमान्द्येनयुक्तोतिमन्दज्वरेण॥६५
तथस्त्रीषुहर्षोंगमर्दस्सदस्सतृष्णारुचिर्वाभ्रमश्चापियस्य
॥तदावाहलीमादिकंशास्त्रविद्भिस्सवायोश्चपित्तस्यकोपेनचो
क्तम्॥६६॥ ॥अथैतस्यप्रतीकारः॥ अमृतारसकल्कसाधि
तंतुरगाद्विड्घृतमेकमेववै॥ पयसाचतुर्गुणेनचशमनंचापिह
लीमकस्यहि॥६७॥ अन्यच्च॥ कांस्येनपिष्टशिलयासमे
तःसंपाचितःपारदएवचैकः॥तीक्ष्णेन ताम्रेणमृतेनयुक्तस्संसे
वनीयस्तुहलीमकाख्ये॥६८॥ अथपानकी संतापोभि
न्नवर्चस्त्वंनेत्ररागश्चपांडुता॥ अंतर्बहिश्चशीतलंपानकीलक्ष
णंभवेत्॥६९॥ अथैतस्याःप्रतीकारः॥ सूतंचेदपलंचप
ञ्चपलकंगंधंतथाषट्पलंसत्वंचापिविषूचिकाभवमथोव्यो
षंतथामूलिका॥ तालाद्यात्रिफलाचशाल्मलियुताचाभ्रंतथैव
स्मृतंलोहस्याष्टपलानिमेत्यमतिमान्खल्वेविसंचूर्णयेत्॥७०॥
चतुःषष्टिसंभावनास्तत्रभृंगीरैःफलानांत्रिकोत्थैस्तदर्धास्तुतस्मि
न्॥तथामार्कवद्रावयुक्ताःपुनश्शिग्रुनीरेणचाषोडशैवतथाचित्र

कस्याप्यथो कन्यकायाः॥ ७१॥ तथैवार्द्रनीरस्यदत्वाप्रगृह्यप्रद द्यात्क्षयश्वासपाण्डुप्रहत्यै॥ नरेंद्रैश्चसेव्योरसश्चैषनूनमथोस्या नुपानान्त्रवीस्येयवसम्यक्॥ ७२॥ शोथान्वितेस्याद्यवचिंचकाया नीरेणवास्यादजयादिपालैः॥ वज्रीघृतेनापिहितायसम्यङ्नि- ष्कार्द्धसेतस्यमृगांकवह्नि॥ ७३॥ नरेन्द्रयोगीन्द्रमतोऽनुकूलःस्या त्सानकीनाश करस्तथायम्॥ त्रैलोक्यनाथाभिधएवनूनंबकीवि नाशेत्वयथासुरारिः॥ ७४॥ अथत्रिदोषोत्थकामला॥ क चिन्नृत्यत्येवंक्वचिदपिचरोदित्यथपुनर्वदत्येवं मामाजहिजहिभवा न्मारयसिकिं॥हनस्त्वंतिष्ठतिक्वचिदपिचवल्गत्यथपुनः पतत्येवंभूमौ त्रयकृतमहाकामलिगदी॥ ७५॥ ॥प्रतीकारश्च॥ त्रिदोषोत्थे दाहंखलुचमणिवंधह्रप्रगतंवदंत्यन्येपाद्यैरथचसुरनद्याश्शुभ तटे॥ अयेरामस्वामिन्सकलदनुजारण्यदहनप्रसीदेत्यालापैस्थि तिमथतथाशंकरशिवे॥ ७६॥ अथकामलोपद्रवाः॥ श्वस नंकसनंविसंज्ञताज्वरमाध्मानवमीश्चविड्ग्रहम्॥ श्वयथुंचतथा तिसंस्रुतिंत्वथवाक्षण्य मिमानुपद्रवान्॥ ७७॥ प्रशमंविनयेद्य थातथंखलुचैतेषुनशान्तिमत्रये॥ विहितौषधिसेवनादपिखलु तान्वैद्यकशास्त्रतोब्रुवे॥ ७८॥ हृल्लासज्वरकासछर्दिसहितः श्वासेनशोथेनवाविड्भेदक्लमदाहमोहसहितोरक्तास्यनेत्रोहियः ॥नखाभिःखलुकृष्णपीतबहुलंमूत्रंमलंसार्ध्यतेत्तद्भुतंद्राऽरुचिभि श्चकामलिगदीशुक्रोयमंगच्छति॥ ७९॥ अथनिवृत्तिः॥ ने त्रद्वयेनिर्मलतानखेषुनखक्रमाद्येश्वसनंप्रयासैः॥ दीपादिसं दर्शनतोऽतिसौख्यमस्यानिवृत्ताबुदितंसुवैद्यैः॥ ८०॥ अपाङ्ग

ातोममसद्गुरूणांक्षेमायकल्पेच्चपराभवाय॥दुष्टस्यधृष्टस्यस
मत्सरस्यशोणस्सकोपेनचतत्रशान्तः॥८१॥ ॥इतिश्री
गुरुचरणसरोजमिलिन्दायमानचतुर्वेदिकाशिनाथकृतायांचिकि
त्साक्रमकल्पवल्ल्यांपाण्डुामयादिचिकित्सापरागगन्धिनस्सप्तमःस्त
बकः॥७॥ ॥शमस्तु॥ ॥गजास्यंगिरीशंहिमाद्रेस्त
नूजांसुधन्वन्तरिंसद्गुरुंचापिनत्वा॥ब्रवीम्यस्रपित्तप्रतीकारमन्त
र्निधायोदितंशुश्रुताद्यैःसुवैद्यैः॥१॥ तावन्निदानम्॥ पित्तंवि
दग्धंबहुघर्मसेवाक्रोधाध्वतीक्ष्णोष्णकटुव्यवायैः॥ क्षारैस्तथा
बालवणैरथाम्लैर्व्यायामतश्चापिदहत्यथास्रम्॥२॥ अथा
पूर्वरूपम्॥ शीताभिलाषस्सदनंचकंठधूमायनंलोहसमोहि
गंधः॥श्वासोभविष्यत्यस्मिन्भवेच्चवांतिर्हिपित्तास्रबहुप्रकोपे
॥३॥ अथरूपं॥ ऊर्ध्वंचनासाक्षिमुखश्रुतिभ्योत्द्यधस्तुलिंगा
द्गतश्चपायोः॥कोपाद्विशेषात्तनुरोमकूपसंधात्स्वरूपेस्रसमुद्ग
मस्स्यात्॥४॥ बलासंसंसृष्टमथोर्ध्वगंतद्वातानुगंगच्छतितद्द्य
धस्तात्॥द्विमार्गगंतत्कफमारुताभ्यामथोर्ध्वगंतत्त्वसुसाध्य
मेव॥५॥तथैवचाधोगमथोयदात्वेन्नचोत्थितंचैवनचातिवेगं॥
सुखेहिकालेनिरुपद्रवंचेद्विमार्गगंयद्युगपद्गतंहि॥६॥यन्मांस
संक्षालितवारितुल्यंयद्वाभवेद्क्वथिताम्बुवद्धि॥ यत्कर्दमांभो
निभमेवयत्तुपूयास्रकल्पंखलुमेदसापि॥७॥ तुल्यंचजंबूफल
वत्तथैवयकृत्समंनीलमथापियच्च॥ असाध्यमेभिःसकलार्थ
विज्ञैर्वैद्यैस्तथेन्द्रायुधतुल्यवर्णम्॥८॥ इतिकालापकम्॥
अथैतस्योपसर्गाः॥ दौर्बल्यकासज्वरवान्तितृष्णाःकोष्ठस्य

भेदोदवथुश्च मूर्छा॥ श्वासोमदश्चाथशिरोतितापः पित्तास्त्रकोपे ऽप्युपसर्गसंधाः॥ ९॥ शुक्रेविदाहस्त्वधृतिस्तुभक्ते द्वेषाविपाकोविकृतिस्तथैव॥ सपूतिनिष्ठीवनपाण्डुतापिपीडातथा हृद्यसमा भवेच्च॥ १०॥ युग्मम् अथप्रतीकारः॥ अथाम्लतोवैबलिन स्तुपित्तरक्तेहिवैद्यःप्रथमंविचार्य॥ संस्तंभयन्गुल्ममहाज्वरादि त्वक्पाण्डुकुष्ठीहकरंतथैव॥ ११॥ नवान्यंविरेच्यनवाक्षीणमांस बलंबालकंशोषिणंचाथवृद्धं॥ समंभेषजैरेतितद्दोषवृद्धिर्यथातत्र वैद्यैश्चिकित्साविधेया॥ १२॥ सशर्करंमाक्षिकसंयुतंवात्वारस्वधे नैवचवामलक्या॥ विरेचनंचोर्द्धगरक्तपित्तेहरीतकीभिस्त्रिवृताथवा॥ १३॥ जलधरेन्द्रयवैर्मधुयष्टिकामदनदुग्धमधूत्तरमेव वा॥ रुधिरपित्तमधोगमितंमितंसमवलोक्यशमंवमनंहितम्॥ १४॥ अथपथ्यानि॥ अथचरुधिरकोपेसुपथ्येहिताश्शालयोषष्टिनीवारमुद्गाहकीकोरदूषादयःसाधिकाश्च॥ चणकमथमकुष्ठामसूरास्तथाश्यामयावाप्रियंगुश्चभोज्यार्थसूपायमूशार्थमेतेप्रशस्ताः॥ फलमथचतथादाडिमीधात्रिजातंप्रदेयंतथाचाम्ल मिक्षुस्तथोशाकमिक्षुन्पटोलानिवेत्राग्रवटदलगणान्यान्यसंपादयेत्तंदुलीयंतथामांसमुक्तंहिपारावतस्याथवाशुक्लकापोतमेवाथलावंतथातैत्तिरंहाससुकंमृगाणांशशानांत्वथोकालपुच्छोद्भवंचाथकापिंजलम्॥ १५॥ खर्जूरकोदुंबुरगोस्तनीनांकाश्मीरपथ्यामधुभिःसमेतः॥ लीढोवलेहःखलुरक्तपित्तंविनाशयेदत्रनकांपिचिंतः॥ १६॥ अथचंदनाद्यंचूर्णम् चन्दनंनलदपद्मकेशरं नागपुष्पमथभद्रमुस्तकम्॥ लोध्रमुत्पलमुशीरधातकीनीलकंज

युतपद्मकेशरम् ॥ १७ ॥ शृंगवेररसजाम्रमज्जया पाठया नकुटजेनसंयुतम् ॥ जाववंचरवलुसारमेवहि बिल्ववालकयुतंतथाविषा ॥१८॥ दाडिमीफलभवत्वचायुतं सूक्ष्मयानरवलुचैलयानथा ॥ शाल्मलीगदयुतंसमंगयासंयुतंचसितशर्करान्वितम् ॥१९॥ तन्दुलाम्बुमधुनायुतंपिबेच्चानुपूर्वमिदमेव भक्षयेत् ॥ चन्दनादिकमिदंसुसेवितंरक्तपित्तनिकरंविनाशयेत् ॥ २०॥ अर्शसांज्वरिणांचैतद्रक्तपित्तगदस्यच ॥ हितंमदोपसृष्टानांतृष्णातीसारनाशनम् ॥ २१ ॥ स्थापनंच्युतगर्भाणांस्त्रीणांचाथरजोगृहे ॥ मूर्छायामश्विनोश्चैतत्संमतंचंदनादिकम् ॥ २२ ॥ अथवासाप्रयोगः ॥ माक्षिकतुल्यंवासकनीरं लोहितपित्तेपेयमजस्रम् ॥ २३ ॥ अन्यच्च ॥ वासकस्वरसभावितपथ्यासमधेवमगधापितथैव ॥ माक्षिकेण सहितायदिलीढारक्तपित्तमिहकिंचतदाक ॥ २४ ॥ योगद्वयं ॥ नवासासमाविद्यतेरक्तपित्तक्षयश्वासकासापहाभूमिपृष्ठे ॥ यदाशाभवेज्जीवितेसेवनीयातदाक्वाथचूर्णावलेहादिकेषु ॥ २५ ॥ रक्तगन्धिनिचोद्गारेनिश्वासेलोहगंधिनि ॥ गोस्तनीशाणमात्रांतुदापयेद्द्विगुणशर्कराम् ॥ २६ ॥ अथैलादिवटी ॥ एलाशिलामधुकगोस्तनिकात्वचांहिवैद्यःपलंपलमथार्द्धपलंकणायाः ॥ खर्जूरकंपलमितंत्वपलैकमेवद्राक्षांचपत्रमथपेष्यमधूपयुक्ता ॥ २७ ॥ अक्षोन्मिताशकभवटीयदिभुज्यतेसा पित्तास्रकासवमिशोषरुजंनिहन्ति ॥ श्वासंनिहन्तिचशमंनयतिज्वरंहिचैलावटीक्षपयति स्वरभेदमुग्रम् ॥ २८ ॥ अथप्रलेपः ॥ धात्रीफलंपेष्यघृतप्रभृष्टंमूर्द्धिप्रलेपाच्चरुणाद्धिरक्तम् ॥ नासाप्रवृत्तंतुजलस्यवेगंसे

तुर्यधारामकृतः पयोधौ ॥२९॥ अथपेयंनस्यंच॥ घ्राणप्र
वृत्तस्यचलोहितस्यसमाप्यपेयंचसशर्करांबु॥ पेयंपयोनासि
कयातथावाद्राक्षारसंक्षीरघृतंसुखेन॥ ३०॥ सशर्करंचेक्षुरसंत
थैवपेयंत्वथोदाडिमपुष्पनीरं॥ दूर्वारसंनस्यविधानदक्षः प्रदा
पयेद्वाबहुधात्रनस्ये॥३१॥ अथान्योयोगः॥ प्रियंगुमृल्लोध्र
मथांजनंहिसंभाव्यवासास्वरसेविपेष्य॥ प्रदापयेन्माक्षिकसंयु
तंतुनासामुखाभ्यांभगलिंगयायोः॥३२॥ गतंहियल्लोहितपित्त
मुग्रंशास्त्रक्षताद्यत्स्रवमानमेव॥ तदप्यनेनैवयथास्थितिस्याच्चू
र्णेनतुर्णीभिषजोवदन्ति॥३३॥ अथदूर्वाद्यंघृतम्॥ दूर्वालो
ध्रमुशीरमुत्पलभवंकिंजल्कमेवंपरंमुस्तंचन्दनचन्दनद्वयमथो
द्राक्षामधूकंतथा॥ एलावालुकपद्मकेप्यथपुनर्मंजिष्ठयाकाश्म
रीमूर्वायुक्तमथोघृतंहिविपचेद्दूर्वादिभिः कार्षिकैः॥३४॥ दत्वा
वेदगुणंचतन्दुलजलंछागीपयश्चाप्यथसिद्धंतद्घृतमेकमेवव
मनोरक्तंहितंपाययेत्॥ नस्यंघ्राणघृतेन्चतस्यविहितंकर्णौतथा
पूरयेत्कर्णाभ्यांचगतेन्चचक्षुषितथामेढ्रेचपायौत्वचि॥३५॥
इतिदूर्वाद्यंघृतंश्लोकयुग्मेनोक्तम्॥ अथवासाघृतम्॥
समूलंसशाखंसपत्रंप्रगृह्यस्फुसिंहाननंक्वाथ्यतत्पुष्पकल्कम्
॥ घृतेसौद्रयुक्तेसमस्तंपचेत्तद्धृतंरक्तपित्तापहंशास्त्रदृष्टम्॥
३६॥ अथलघुशतावरीघृतम्॥ वरींदाडिमींतिंतिडीवै
विदारींसमेदांचकाकोलिकांचापिदुग्धं॥ समस्तंघृतेपाच्यसेव्यं
घृतंतच्छवद्रक्तकासज्वराणांप्रकोपे॥३७॥ अथबृहच्छता
वरीघृतम्॥ शतावरीमूलरसस्यप्रस्थद्वयंचदुग्धस्यघृतस्यचै

कम् ॥ विदारिकांलोहितचंदनंचमेदाद्वयंचैवमधुकंचपर्ण्यौ ॥३८ काकोलिकायुग्ममिहैवनूनंप्रदायजीवर्षभकोचमूद्वीं ॥ संपाचये त्तद्घृतमेवदेयंसशर्करंचैवमधुनासमेनम् ॥३९॥ रक्तपित्तशमनंपरं मतंवातरक्तशमनंनतत्परम् ॥ क्षीणशुक्रबलवीर्य्यवर्धनंकामि- नीषुबहुहर्षवर्धनम् ॥ ४०॥ हरत्यन्तर्दाहंशमयतिशिरोदाहम- थतज्ज्वरंपित्तोद्भूतंक्षपयतिसदाहंभगभवम् ॥ महाशूलंकुक्षौच दृशिनियतंपित्तजनितंसमस्तंतत्सर्पिर्नयतिबहुधाशांतिमचिरात् ॥ ४१॥ शतावरीछिन्नरुहावलानांसतालमूलीत्रिफलावृषाणां ॥ तपोधनागर्दभशाकरक्तसारद्रुमाणांचसपुष्कराणाम् ॥ ४२॥ पृथ क्पृथक्पंचपलानिगृह्यद्रोणेजलेक्काथ्यतदष्टमांशम् ॥ क्वाथंत थाचाप्यवशिष्टमेवसद्वस्त्रपूतंहिनिगृह्यतस्मिन् ॥ ४३॥ क्षिपेच्च दिव्यौषधिमारितस्यवामाक्षिकेणैवहतस्यनूनम् ॥ पलंतथाद्वाद शकेहिरुक्मलोहस्यचूर्णंचघृतंचखण्डम् ॥ ४४॥ प्रस्थोन्मितं ताम्रमयेकटाहेपचेद्यथातद्गुडवद्घनंस्यात् ॥ ततस्तुप्रस्थार्द्धमि तंप्रपात्यसुमाक्षिकंयांस्तुवदामिचाग्रे ॥ ४५॥ त्वक्पत्रशृंगीम गधाविडंगशुभाश्मलाक्षासितजीरकाणाम् ॥ पलंपलंगृह्यपलं तथैवसुधान्यकस्यापिफलत्रयस्य ॥ ४६॥ व्यस्तांक्षिपेत्तत्रचनाग पुष्पचूर्णंतथाचैवमरिचस्यतस्मिन् ॥ संमेल्यसर्वंघृतभाजनेहिनि धापयेत्तच्चयथोक्तकाले ॥ ४७॥ विडालपदकंभजेदनुपिबेच्च गव्यंपयोरसंसक्षुदितंतथापलभवंचमुख्यंगुरु ॥ सुभोजनमथो-

१ इंमतमितिडिं २ मुशली ३ श्रावणीस्यान्मुंडितिकाभिक्षुश्रवणशीर्षिका॥ श्रवणा ह्वाप्रव्रजितापरिव्राजीतपोधनाइतिनिघंटुः मुंडीइतिलोके.

त्रैयमदिहन्तुहणंतत्त्ववापरात्परतरंतथाजगतिखण्डखाद्यंस्मृतं॥
४८॥ हरत्यस्त्रपित्तंक्षयंपक्तिशूलंप्रमेहंवमिंवातरक्तकृमंच॥
तथापाण्डुरोगंसशोथंचकुष्ठंत्वनाहंचरक्तंक्षुतिंचाम्लपित्तम्॥
४९॥ इतिखण्डखाद्योवलेहः॥ अथखण्डकूष्मांडावलेहः
॥ पीनंपुराणंकठिनंप्रगृह्यकूष्मांडकंबीजशिरादिभिश्च॥ शून्यं
त्वचाचापिप्रकल्प्यखंडास्तस्यैवतान्नीरतुलाद्वयेन॥ ५०॥ तु
लामितान्याच्यसुवस्त्रखण्डेनिष्पीड्यतेषांस्वरसंनिगृह्य॥
निधायपात्रेथपुनस्तुपिष्टंकूष्मांडजंताम्रमयेसुपात्रे॥ ५१॥
निधायघर्मेचविशोष्ययत्नाद्घृतेथसंभर्ज्यपुनःकटाहे॥ प्रस्थो
न्मितेनाम्रसमानवर्णंविलोक्यमृष्टंहितदुत्थनीरं॥ ५२॥ निक्षि
प्यतस्मिंश्चसितांप्रदायतुलोन्मितांलोहसमेविपक्वे॥ विश्वा
कणाजीरकयुग्मकानांपलंपलंचूर्णितमाशुदेयम्॥ ५३॥ त्व
क्पत्रधान्याकसदूषणानांसैलंसुचूर्णंतुपृथक्पलार्द्धम्॥
क्षौद्रंघृतार्धंचविमिश्र्यतस्मिन्देयंपलेकंचयथाबलंवा॥ ५४॥
रुधिरपित्तविनाशकरंपरंप्रदरकार्श्यवमिज्वरनाशनम्॥ हृदय
रोगहरंस्वरभेददद्रवथुनाशकरंक्षतहारकम्॥ ५५॥ खण्ड
कूष्मांडावलेहस्तुकासश्वासनाशकः॥ वैद्यभूपैस्तथाचोक्तो
बृंहणोबलवर्द्धनः॥ ५६॥ अथान्योवलेहः॥ कूष्माण्ड
कस्यस्वरसंपलानांशतंचगोक्षीरमथोहितेन॥ तुल्यंहिवैद्यः
परिपाच्ययत्नाद्धात्रीफलानांचपलाष्टकंच॥ ५७॥ चूर्णंचचूर्णे
नसमांसितांहिसंमेल्यभक्ष्यंचपलार्द्धमानम्॥ दाहास्त्रपित्त
प्रशमायनूनंतृष्णाम्लपित्तेऽपिचकामलायां॥ ५८॥ ॥

५८॥ अथस्थलपद्मावलेहिका ॥ स्थलपद्मसहस्त्रसंभवं शुभगंधंहिसुयंत्रसाधितम् ॥ कमथोवरताम्रजेक्षिपेदथतस्मिं श्वसिताकटाहके ॥५९॥ परिपाच्यचसेटकद्वयंसुघृतंभस्थमितंप्रदापयेत् ॥ मधुतत्रघृतार्द्धकंक्षिपेदखिलंयत्नवदामितत्तथा ॥ ६०॥ गजकेशरपत्रजत्वचांपलमेकैकमथोतथाकणाम् ॥ कपिबीजबलेन्दुकुंकुमातिबलाचूर्णयुतंविमिश्र्यतत् ॥ ६१॥ अवलोक्य सुशीतलंक्षिपेत्सुशुभांचाथतथाविदारिकाम् ॥ सितचन्दनमभ्रकंतथामृतवंगंचपलार्द्धसंमितम् ॥ ६२॥ सुकशेरुमथोहिगोस्तनीपरिपेष्याथतथैलयायुतां ॥ परिमेल्यसुवैद्यभूपतिस्स्थलपद्माद्यवलेहिकामिमाम् ॥ ६३॥ खलुलोहितपित्तनाशिनींबहुपित्तज्वरमोहशातनीम् ॥ रतिनाथसवर्णकारिणींपलमानांचप्रदापयेदिमाम् ॥ ६४॥ तृषांविड्विबंधंक्षयंश्वासकासानपस्मारमुन्मादसुप्रहरेच्च ॥ शिरोत्तिंज्वरंघर्म्मजंशोषमुग्रंप्रशांतिंनयेन्मोहनाशंकरोति ॥ ६५॥ अथरक्तपित्तकंडनोरसः ॥ कनकमाक्षिकपारदंगंधकंभुजगरंगप्रवालसमंसमम् ॥ विधिवदेनदलंहिपरिक्षिपेन्मृतमथोवरखल्वशुभोदरे ॥ ६६॥ शिशिरकंजसुमालतिकाद्रवैरथचकोरकसिंहमुखीभवैः ॥ अथतथैवहिधान्यभवद्रवैरथवारणजैश्चबुसारसैः ॥ ६७॥ अथशतावरटोस्थजटोत्थितैरमृतजैःपरिभाव्यपुनस्त्रिशः ॥ रुधिरपित्तकुलस्यहिकंडनोघपदलद्रवमाक्षिकसंयुतः ॥ ६८॥ माषैकमानःपरिसेवितोयंपि

१ कंशिरोजलमाख्यातमित्यनेकार्थः २ इन्दुशब्दश्चन्द्रपर्यायःसन्कर्पूरापक्षः उक्तंचविधुःशशिनिकर्पूरेह्मसमध्यमणावपीतिविश्वः

तास्त्रिणां प्राणद एव भूमौ ॥ नान्यः परोस्मादिह रक्तपित्तनाशाय सद्वैद्यनृपा वदन्ति ॥ ६९ ॥ पित्तज्वरेन्तर्बहिरेव सेव्यं यद्वा क्षतक्षीणहितं न देव ॥ देयं सुवैद्यैर्बहुधात्र रक्तपित्तप्रणाशाय विशेषतो हि ॥ ७० गुरुपदाब्जपरागनिषेवया द्भ्रमरवन्न मया मधुसन्निभम् ॥ कृतमशुद्धियुतं यदि शोधयन्त्विह कृपार्द्रदृशो विबुधाः ध्रुवम् ॥ ७१ ॥ ॥ इति श्रीगुरुचरणाम्बुजमधुपचतुर्वेदिकाशीनाथकृतायां चिकित्साक्रमकल्पवल्ल्यां रक्तपित्तप्रतीकारपरागगन्धितोऽष्टमस्तवकः ॥ ८ ॥ ॥ शम् ॥ सुशीतरश्मिशेखरं वरं प्रणम्य चाथ यक्ष्महम् ॥ क्षयौषधं यदोदितं यथा तथा हि साम्प्रतम् ॥ १ ॥ तावन्निदानम् ॥ वेगावरोधात्क्षयसाहसाभ्यां पुंसां तथा वै विषमाशनाच्च ॥ संजायते हेतुचतुष्टयाद्धि यक्ष्मा गदो त्कृमतरस्त्रिदोषः ॥ २ ॥ अथ पूर्वरूपं ॥ रसवर्त्मसु रोधितेषु लं कफमुख्यैरथ वातिमैथुनैः ॥ दितिपुत्रगुरोगतेन तथा बहुधा क्षैण्यमथाऽनुधातवः ॥ ३ ॥ परियान्ति न देव मानवो बहुशुष्यत्यथ तद्भविष्यति ॥ खलु लिंगमिदं हि वस्यते न तत एवाशु चिकित्सितं चरेत् ॥ ४ ॥ श्वासकासमदपीनसनिद्रावह्निसादकफसंस्रवयुक्तः ॥ जायते पलपरस्त्ररिरंसुस्तालुशोषवमिपीडितदेहः ॥ ५ ॥ स्वप्नाः ॥ नीलकंठशुकशल्लुकिकाकवानराश्वकृकलासगणाश्च ॥ वाहयन्ति खलु स्वप्न इहैवं तं सिताक्षमथ चापि सगृध्राः ॥ ६ ॥ सोपीह पश्यति नदीर्विजलास्तथैव शोषार्दितः पवनधूमदवार्दितांश्च ॥ शक्कांस्तरूंश्च नियतं हि भविष्यकाले स्वप्नेषु थापि निवदामि च तस्य रूपम् ॥ ७ ॥ पार्श्वौ

१ षड्भिः पार्श्वावित्यादिभिर्लक्षणैर्वक्ष्यमाणैः

शतापः करपादयोश्च ज्वरश्च सर्वांगगएव चात्र॥ पूर्णेहि रूपेविबु धोदितन्तु क्षयस्यचैव लक्षणमेतदेव॥ ८॥ स्वरेहिभेदोनिलजातशूलं पार्श्वांशसंकोचअथोज्वरश्च॥ दाहोतिसारः खलुपित्तकोपाद्रक्तस्यचैवागमएवचात्र॥ ९॥ शिरस्यपूर्णत्वमथारुचिश्च ध्वंसोहि कण्ठस्यतथैवकासः॥ कफस्यकोपेनवदंतिवैद्यायुक्तस्तथैकादशभिश्च षड्भिः॥ १०॥ अथचरकसुश्रुतभोजोक्ता ऽसाध्यलक्षणानि॥ यथा पार्श्वार्त्तिकासातीसारस्वरभेदारुचिज्वरैः॥ त्रिभिश्चाथतथायुक्तं ज्वरकासासृगामयैः॥ ११॥ युक्तेस्त्याज्यः क्षयीत्थं चरकमुनिमतं शुश्रुतस्यापितद्वद्भोजस्याप्याशुबुध्वा निजशुभयशसे वैद्यभूपेन्द्रतुल्यैः॥ रुद्रैः षड्भिस्त्रिभिर्वायदिभवतियुतोलक्षणैः क्षीणमांसस्सद्योगच्छत्यभीक्ष्णं यमभवनमथो यस्तथासोमयोऽपि॥ १२॥ अथोपशयः॥ गोधूमशालियवषाष्टिकमुद्गजान्नं पथ्यं तथान्नमृगपक्षिपलानितद्वत्॥ पेयं कुलित्थयवनागरदाडिमादियुक्तं कणामलकसंयुतमाजमेव॥ १३॥ मांसोत्थसद्रसमथोविविधानिमद्यान्याशवेवशोषहरणप्रथितानिलोके॥ देयंसितावकुलवल्कलमेकमेवदुग्धेनमाक्षिकबलाकपिहव्ययुक्तम्॥ १४॥ युग्मम्॥ अथैतच्चिकित्सा॥ वाराहकर्णीवृषभीरुविश्वाकाश्मीरछिन्नादशमूलकानाम्॥ संसेवनान्नागबलायुतानां यक्ष्माक्षयंयातिसुदुग्धपा

[1]एकादशभिः पार्श्वांशतापइत्यादिभिः पूर्वोक्तैः [3]अश्वगंधावाजिगंधाकुंभकश्चावरोहकः॥ वाराहकर्णीतुरगीवल्याचाजीकरीस्मृतेतिनिघंटुः [4]अतिविषाशुक्लकंदाचज्ञेयाविश्वाचभंगुरेतितिनिघंटुः [5]मूलं पुष्करमूलंतुपुष्करंपौष्कराह्वयं॥ काश्मीरंपुष्करजटावीरंतत्पद्मपत्रकमितितिनिघंटुः

नात्॥१५॥ ॥दोहा॥ कपिपलमेवसुचूर्णितंपयसानित्यंदेहि॥ क्षयशमनंनंर्हितत्परंसुश्रुतलिखितमवेहि॥१६॥यदिनवनीतमधूपलानित्यंलीढायेन॥ शोषानङ्गजिगीषयाकवचंबद्धंतेन॥१७॥ मांसंपयोघृतंछागंशुंठीयुक्तंप्रयोजयेत्॥ छागमध्येतुशयनंसर्वथाक्षयनाशनम्॥१८॥ अथजातीफलाद्यंचूर्णम्॥ जातीफलंचित्रकमिन्द्रपुष्पविडंगतालीसतुगाकणाच॥शुंठीशिवाचन्दनचन्द्रचन्द्रप्रभातिलाश्चामलकीनतंच॥१९॥ तथोपकुंचीमरिचंचतार्यक्षप्रमाणेनपृथक्पृथक्च॥विचूर्णयित्वाविजयांहिसप्तपलोन्मितांचाथसितांहितुल्याम्॥२०॥ संमिश्र्यजातीफलकादिचूर्णंक्षयक्षयंसंविदधातिनूनम्॥ श्वासंनिहन्तिग्रहणीविकारमरोचकंचानलमान्द्यमुग्रम्॥२१॥ अथलवंगाद्यंचूर्णम्॥ लवङ्गैलापत्रंनलदचपलावालकयुतासठीसुंठीशृंगीतगरखदिरंचागरुयुतम्॥घनःकुष्ठंजातीफलमनलकर्प्पूरकनभस्सुरद्रुर्वांसीकात्वगपिफलिनीचाप्यतिविषा॥२२॥ शिवाधात्रीयष्टीकलितरुफलंकोलमरिचंनवाद्राक्षामासीभुजगकुसुमंजीरकयुगम्॥तथाजातीपत्रीसरसशतमूल्याम्लसहितंसितातुल्यासर्वैर्विधिवदपिसंचूर्णितमिदम्॥२३॥लवंगाद्यंचूर्णंब्रुहदितिचपूर्वंनिगदितंप्रभातेसायान्हेविविधगदहृत्येसमुदितम्॥ बलंपुष्टिंवीर्यंजनयतिचमेहारुचिहरंक्षयंकासस्वासंप्रदरगलरोगंरसनजम्॥२४॥ त्रिदोषंहिक्कार्शंदशिभवगदांश्चापिशमयेदतीसारेपांडौस्वरविविधभेदेहितनरम्॥निदाघेचाश्मर्य्या

---

१चंद्रःकर्पूरः २चंद्रप्रभाकर्पूरम्.

मनिलभवरोगेसमुदितंतथानासारोगे ऽ ल्तनुतनुशरीरंप्रकुरुते ॥ २५॥ नचित्रंपूर्णे ऽ स्मिन्भजतिभजते रुक्शमनिधिंयतःप्रागाचार्य्यैर्बहुमतविचारेणकथितम् ॥ सुपथ्यंपद्देयंसकलमपिसंत्याज्यनिथ तंकुपथ्यंसंसेव्यंपयइहसदैवंद्यत्रुपिबेत् ॥२६॥ अथताली साद्यंचूर्णम्॥ तालीसाद्विगुणंहिचोषणमथोभागत्रयंनागरात्पिप्पल्याभिषजोदिताःखलुतथाच त्वारिभागास्त्वचः॥ भागार्द्धंत्रुटिजंतथैवद्दिगुभागाश्चलार्य्यथोभागामासदिनोन्मितायुभसिता यास्तैवनेत्रधिकाः॥२७॥ तालीसाद्यमिदंचशोषमरुचिंछर्द्यतिसारज्वरान्प्लीहाध्मानमशेषयत्यतितरांवह्निंचसंदीपयेत् ॥ भागानस्यचवैद्यभूपतिवरःकर्षैःपुराकल्पयेन्नत्यश्चाच्चविशेषविच्छुभतरेकालेतुसंदापयेत् ॥२८॥ युग्ममेतत् अथसितो पलाद्यंचूर्णम्॥ सितोपलाषोडशकार्षिकीस्याद्वंशीतदर्धाथ कणातदर्धा॥ त्रुटिस्तदर्धात्वगथोत दर्धाचूर्णंघृताक्तंमधुनास मेतम् ॥२९॥ लीढंतुहस्तांघ्रिभवंहिदाहंक्षयंचपार्श्वार्त्तिमथोऽरुचिंच॥श्वासाग्निमांद्यास्रसमेतपित्तज्वरंचदूरीप्रकरोतिनित्यम्॥ ३०॥ अथच्यवनप्राश्यावलेहः॥ द्राक्षाब्दजीवनबलादशमूलशृंगीपथ्याबुजकाकनसिका ऽ मृतपुष्कराणाम् ॥ प्रत्येकमाक्षिकमथोत्रुटिकाविदारीवृश्चीवृषाः गुरुसटीत्रुटिचन्दनानाम् ॥३१॥ धात्रीशतैर्जलघटेखलुपञ्चभिस्तुसंपाच्यप्रस्थमितशेषजलंकणाढ्यं॥ सर्वंतथास्थिरहितांभिरलंशिवाभिर्युक्तंहिषट्पलघृतेपरिभर्ज्यपश्चात् ॥३२॥ शुभ्रांसितामथतुलार्धमितांविमिश्र्यसंपाच्येन्मधुचषट्कलिकंतुगांच॥ऊनांतथापलयुगेनतदर्धमानांश्यामां-

तथाविधिसुरवोन्मितद्रव्यजातम् ॥३३॥ शरभेकालेभुक्तोहरतिच जरामृत्युमचिरात्क्षयंकासतद्ज्वरबहुलकोपंशमयति ॥ शतात्क्षौद्राढ्योयदिपलशतैर्बस्तिजजलैर्युतःसिद्धःश्वासंहरतिबहुकासंकफगदान् ॥ ३४ ॥ विभीतिकावलेहश्चायमेव॥ अथद्राक्षासवः॥ तुलार्द्धंद्राक्षायाःपयसिविपचेद्द्रोणयुगुलेनतश्शेषेपादेऽन्वितपयसिवैवःश्वसुगुडम् ॥ तुलाग्रुग्मोन्मानंमरिचफलिनीजन्तुहरणंकणैलापत्रत्वक्पलपलमितंचूर्णितमिदम् ॥ ३५॥ प्रदायाश्वेवंकेशरमपितथास्थाप्यसकलंघृतस्निग्धेभाण्डेकियदपिदिनंचाथतदिदम् ॥ विशेषाद्यक्ष्माणांहरतिनियतंचाप्ययमहोक्षुरस्संधिंकुर्यान्निजबलसमानंपिबतियः ॥३६॥ चतुर्थांशंतुगोस्तन्याधातकीमत्रकेचन॥ वैद्यवर्य्याःप्रयच्छन्तियतोवीर्य्यंकरोतिसा ॥३७॥ अथशिवागुटिका॥ वारत्रयंवैद्यवरस्तुपूर्वंनीरेशिलाजत्वथवाकषाये॥ सत्त्रैफलेभाव्यदशांघ्रिनीरेछिन्नोद्भवायाश्चरसेकषाये ॥३८॥ याष्ट्याह्वकस्याथपटोलनीरेयष्टीकषायेहिगवांचमूत्रे॥ दुग्धेचतासामथवक्ष्यमाणद्राक्षादिकानांहियथोत्तरन्तु॥ ३९॥ द्राक्षाक्षजैर्वाथजलैर्विदारीद्वयहिपर्णीस्थिरपौष्कराणाम् ॥ सुस्थायिनीकोटजरेणुमत्स्यपित्तारसांबुप्रदभिक्षुकाणाम्॥ ४०॥ दन्त्यग्निचव्यागजमागधीनांवीरादिवर्गौषधिसत्कषाये॥ संगृह्यसंगृह्यपलंपलंचद्रोणेननीरेणपृथक्पृथक्त्व ४१॥ संपाच्यसंपाच्यतुरीयभागशेषेचशेषांहिविधिंवदामि॥ स

१ पाठावर्षांवस्त्रकीचप्राचीनायामन्नेलिका॥ रक्षानिक्तावरातिक्तापाचिका स्थायिनीरुकीइतिनिघंटुः

भाव्य संभाव्य विशोष्य तस्मिन् धात्रीफलं मेषविषाणिकाच ॥ ४२ ॥ कटुत्रयं पंचभिरेव नूनं द्वाभ्यां पलाभ्यां च विदारिकायाः ॥ पलेन ताली सपलैश्चतुर्भिर्घृतेन तालीससमेन तद्वत् ॥ ४३ ॥ घृतार्द्धतैलेन चतुर्गुणेन क्षौद्रेण संयोज्य भिषग्वरिष्ठः ॥ पलैः सिताषोडशभिस्तथैव त्वक्क्षीरिकापत्रककेशरैश्च ॥ ४४ ॥ बिल्वांशकैस्त्वक्चतुरिसंप्रयुक्तैरक्षोन्मितावैगुटिकाः प्रकल्प्याः ॥ तासामथैकां विधिवत्सुमान्यः प्रातर्निषेवेत सुपथ्यशीलः ॥ ४५ ॥ नस्यार्बुदग्रन्थ्यधिमंथशोथप्रमेहवातास्त्रकिलासजन्तून् ॥ हृद्रोगवाग्निज्वरपाण्डुरोगान् तूणीप्रतूणीक्षयकुष्ठसंघान् ॥ ४६ ॥ योन्यामयान्वायुभवानने-कानुन्माद पित्तास्त्रभगंदरादीन् ॥ पानात्ययापस्मृतिमूत्रकृच्छ्रा ण्यर्शःप्रवृद्धानुदरामयांश्च ॥ ४७ ॥ स्थौल्याश्मरीकार्श्यहलीमकांश्चप्रभञ्जनासृक्पिटिकाद्यनेकान् ॥ वृद्ध्योनिरोगानथशर्कराश्चापुरःक्षतं वेपथुमप्यसत्यम् ॥ ४८ ॥ विनाशयेद्वज्जरयाकृतं तदका-लिकं चापलितं तथैव ॥ तत्तुंमनोजप्रतिमांलभेत्सरूत्रीणां शतं गन्तुमसौसमर्थः ॥ ४९ ॥ अशितागुटिकाशिवाभिधाकुरुते शम्भुसमीपतामसौ ॥ खलु तस्य जनस्य साम्प्रतं सकलार्थज्ञगुरोः समानताम् ॥ ५० ॥ अथ वसंतकुसुमाकरोरसः ॥ प्रवालसूतमौक्तिकाऽभ्रकान्पृथक्पृथक्तथाहि वेदभागसम्मितास्त्ववर्णमर्द्धभागकं ॥ प्रगृह्य नाथहाटकेन संमितं सुरोप्यमेव लोहसर्प्परंगकं ल चत्रयेण सम्मितम् ॥ ५१ ॥ शुभेन्हि तत्सभस्त मेव भावयेद्द्रवैः पृथक्च षोत्थितैर्विशेषतुजे पृथक्पुनस्तु स —— सशः ॥ तथासरोजमालतीप्रसूनजैः पयोगजोत्थमूलचन्दनद्रवैस्तथैव नाभिसंभवैः ॥ ५२ ॥ नाम्ना वसन्तकु-

सुधाकर इत्यथ यः ख्यातस्समस्तगदवारिधिवाडवोस्ति॥ ब्रूमस्समस्तगदयोगहितानुपानान्वैद्योदितान्निखिलतंत्रसुलेखितांस्तु॥ ५३॥ क्षयमयतिक्षयमेषमधूषणैस्समशिनस्तु शिलाजतुमिश्रितः॥ हरतिमेहगणंमधुशर्करारजनिमिश्रितएव यथातथा॥ ५४॥ रुधिरपित्तमसौशिलयाद्वैर्मलयजैरथवावृषपत्रजैः॥ समधुभिर्वभिरोगहरोथवासमशिनःखलुशंखभस्मनजैः॥ ५५॥ समशिलक्षयवारणचन्दनैःस्तुतस्तुष्टिकरोबहुपुष्टिदः॥ मनसिजंजनयत्यथकामिनीशतमसौद्रवतांनयतिक्षणात्॥ ५६॥ अनुपिबेज्जलजंजलमेववैसुमधुरंमधुरवण्डसमन्वितम्॥ प्रशमनायचपित्तगदस्यवैप्रथममम्लपदंप्रथितस्यवा॥ ५७॥ अथतथान्यगदेषुयथोदितैस्तुभजन्ननुपानमहौषधैः॥ नियतमेववबलयुगंनरोमनसिजप्रतिमोभवतिध्रुवम्॥ ५८॥ अथामृतेश्वरः॥ रसभस्मगुडूचिकाभवंशुभसत्वंवसलोहभस्मकं॥ अमृतेश्वरनामकंघृतैर्मधुनालीढमलंक्षयप्रणुत्॥ ५९॥ अथमृगाङ्कः॥ हरनयनमितांशामारिताभ्यंभुबीजात्कनकभसितभागंत्वेकमेवाथताम्रात्॥ गिरिनृपतिसुपुत्र्याबीजभागद्वयंवैपृथगथचशिलायास्तन्मितंशुद्धतालम्॥ ६०॥ तदलसखिलमेवंखल्वगंसंविचूर्ण्यप्रथममनुवराटीःपूरयेत्तेनवैद्यः॥ सुरवमथखलुतांसांछागिदुग्धप्रपिष्टैःपृथगिहशुभकालेटङ्कणैश्चाशुरुध्वा॥ ६१॥ मृत्पात्रेहिनिधायताश्चमतिमान्कुर्वान्मुद्रांदृढांवैद्येन्द्रश्वविपाचयेद्गजपुटेतस्वाङ्गशीतंयदा॥ प्रोक्तोराजमृगांकनामकअसौवैवेदगुंजामितोवातश्लेष्मभवक्षयक्षयकरश्चा-

१ध्रुवमित्यपिपाठस्साधीयान्-

स्यादनुपाना श्रुवे ॥ ६२॥ एकोनविंशौर्मरिचैर्मधुनाथघृतेनवा॥द
शभिःपिप्पलीभिर्वासेव्योयंबहुधानरैः॥ ६३॥ अथहेमगर्भः
॥ निष्कद्वयंपारदभस्मनस्तुप्रगृह्यहेम्नश्चतदर्धभागम्॥निष्क
द्वयंशोधितगन्धकस्यहुताशनद्रावयुतंसमस्तम्॥ ६४ ॥ संमर्द्य
संशोष्यपुनर्द्वियाममन्तेवराटीःखलुतेनपूर्य्याः॥ ताःमुन्मयेरोध्य
सुपुष्टभाण्डेतद्वैगजाख्येसुपुटेपचेच्च॥६५॥ शात्वानलस्वाङ्गशी
तंसकलनृपगणैर्वदनीयस्सुवैद्यःपिष्टासद्धेमगर्भामथभयहर
णीपोटलीपूर्ववच्च॥ कासश्वासेन्यरोगेनिजगुरुचरणौचाभिवा
द्यमदद्याद्दृष्ट्वानदेहवीर्य्यबलमथचपुनःपथ्यमुक्तंविशेषात्॥ ६६
॥ अथशंखनाभिरसः॥ नाभिंशंखभवांगवांशभपयोपिष्टं
चमूषीकृतांभागैःषोडशनिष्कैश्चतुलितामादायतस्यांभिषक्
॥निष्कार्द्धंभवबीजभस्मचतथागंधंनथैवध्रुवांक्षिप्त्वातास्यपिधे
षयेच्छुभतरैर्वस्त्रैस्ततोमृत्तिकाम्॥६७॥ लिप्त्वाचोपरिपाचयेद्ग
जपुटेगुंजामितंदापयेत्पिप्पल्यामधुनाथवाघृतयुतैर्मारिचचू
र्णैःक्षये॥जैपालस्यतुचूर्णयुक्तमथवालोकान्वितैर्गोघृतैश्शूले
गुल्मगदेत्रिदोषशमनस्स्याच्छृंगवेरद्रवैः॥६८॥ युग्ममेतत्॥
अथभस्मसूतः॥ सभस्मसूतटंकणांकणामजापयोयुतान्
फलत्रयैःकटुत्रयैस्ससमाक्षिकैःक्षयक्षये॥६९॥ अथरत्नगर्भ
पोटलीरसः॥ रसंमाक्षिकंविद्रुमंहेमतारंसुवज्रंचशंखंचहिना
गंचलोहम्॥ तथामारितंताम्रमुक्तंहिमुक्ताफलंतुल्यमेतत्सम
स्तंप्रगृह्य॥७०॥ हुताशद्रवैर्मर्दयेत्तच्चसप्ताहमेवाथसंशोष्य
स्तेनतेन॥ वराटीःप्रपूर्याथतासांमुखानिखैर्दुग्धपिष्टेनवैटंकणेन

॥७१॥निरोध्यायतो मृन्मयेरोध्यभाण्डेगजाख्येपुटेपाच्यसंचूर्णयेप श्चात्॥पुनर्वैद्यभूपश्चनिर्गुण्डिकायारसैःसप्तधाभाव्यसंशोष्यप श्चात्॥७२॥ तथाशृंगबेरद्रवैश्चापिसप्ततथैकाधिकाविंशतिश्चि त्रकस्य॥द्रवैर्भावनाश्चाथशक्यंप्रपिष्टंद्विगुंजाद्वयंराजरोगप्रहा रि॥७३॥रत्नगर्भपोट्टलीरसोनिहन्तिसत्वरंनिषेवितोहिमागधी मधुप्रयुक्तएववा॥मरीचहव्यसंयुतःक्षयंगदंज्वराधकंनिजानुयो गसंयुतोतिसारमुग्रकासकम्॥७४॥ अथकासश्वासोपद्रवाः ॥ छर्दिस्तोदास्यशोषश्वसनकसनकौजन्तवःकार्श्यतापौभक्त द्वेषोतिसारःसकलशुभमहानन्धविद्भिःप्रदिष्टाः॥कासश्वासाख्य रोगेदशपरिगणितान्वैवचोपद्रवांवैतेषांसम्यक्चिकित्साक्रमत इहमयालिख्यतेसैवकार्य्या॥७५॥लाजाचूर्णसैन्धवेनान्वितंच तद्वल्लेह्यंमातुलुंगस्यमूलम्॥ पीयूषोत्थंसद्रसंमाक्षिकेणवान्तेर क्तेऽलक्तकंवातथैव॥७६॥ योगचतुष्टयम्॥ घृतंसवत्सना भकंशरत्तविमर्दयेद्बुधःततोंगतोदनाशनंकवोष्णवारिधावनम्॥ ७७॥ आस्यशोषेचवान्तौचफलंजात्याःप्रशस्यते॥तन्दुलीयज टातद्वन्मीनाक्षीपाटलातथा॥७८॥ अयोयोगाः॥ खर्जू रपथ्याकणयासमेतादुरालभाकर्कटशृंगिकापि॥मृद्वीकयामाक्षि कगोघृताभ्यांलीढाक्षयेश्वासविनाशनाय॥७९॥ शतावरीपुनर्न वाशिवासवाजिगन्धयाविदारिकासमन्वितायुतेस्समाक्षिकैर्मुहुः ॥नरोऽवलिह्यनाशयेत्क्षयेमहाधिकारणंविशेषतोहिदुर्निवारका समत्रवर्णितम्॥८०॥ विडङ्गाजमोदासतक्रानिपीता क्षयेजन्तु शान्त्यैतथाभोजनान्ते॥८१॥ अतसीसपुनर्नवातिलाश्शतवीर्य्या

विकन्याविदारिका ॥ मधुकंमधुसर्षपाबलाह्यगन्धागदमाषतन्दु
लाः ॥ ८२ ॥ तिलकिट्टसमन्वितंत्विदंयवचूर्णैर्द्विगुणैश्वसर्वतः ॥ अ
रणीशिखरीसमन्वितंसहजीवन्तिकयाप्रपेषितम् ॥ ८३ ॥ दधिसंयु
तदेहलेपनादिदमुद्वर्त्तनकंक्षयोद्भवम् ॥ बहुकार्श्यमपाकरोतिवैब
लवीर्य्यादिकरोतिवर्णकृत् ॥ ८४ ॥ विशेषकम् ॥ क्षयोत्थतापना
शनंहिमंरसेनयोजयेत् ॥ सुकोकिलाक्षबीजकैर्गुडेनजीरकेणवा ॥
८५ ॥ यवानींबदरंचाम्लंतिन्तिडीमम्लवेतसम् ॥ नागरंदाडिमंचैवक
र्षिकानुपकल्पयेत् ॥ ८६ ॥ धनिकासौवर्च्चलंजीरवराङ्गंचार्द्धकार्षि
कम् ॥ कणाशतंशतेद्वेतुमरिचस्यचचूर्णितम् ॥ ८७ ॥ शर्करायास्तु
चत्वारिपलान्येकत्रमिश्रयेत् ॥ मुखांजिव्हाशोधनंतद्भक्तद्वेषनिवा
रणम् ॥ ८८ ॥ हृद्यंहृत्प्लीहपार्श्वांशशूलविबंधनाशनम् ॥ काशश्वा
सग्रहणयर्शोविबन्धानाहनाशनम् ॥ ८९ ॥ सर्पाक्षीदधिसंयुतायदि
नरैःपीतातिसारंक्षयेशत्रोवाविजयाचमाक्षिकयुतालीढाविशे
षाद्बुधैः ॥ काशश्वासविकारमुल्बणमिदंदूरीकरोत्याशुवैपूर्वैर्वैद्य
वरिष्ठवर्णितमिदंयोगद्वयंलेखितम् ॥ ९० ॥ आगन्तुकायेबहुव-
स्तुशोषास्तेपूर्वतन्त्रेषुचलेखिताश्च ॥ ग्रन्थस्यभूयस्त्वभयान्नचा
त्रतेषांचिकित्सांखलुनेचुहश्या ॥ ९१ ॥ नौमिगुरोःपादयुगंशिष्य
जनजाड्यहरम् ॥ दुःखहरंभव्यकरंपापहरंतीर्थवरम् ॥ ९२ ॥ ॥
इतिश्रीगुरुचरणाब्जमधुपकाशीनाथचतुर्वेदिकृतायांचिकि
त्साक्रमकल्पवल्ल्यांक्षयचिकित्सापरागगन्धितोनवमस्तबकः
॥ ॥ दोहा ॥ ॥ हिमकरराजितभालवर लंबोदरविघ्नेश ॥ ना
थयनाथितमाशुमम गौरीपुत्रगणेश ॥ १ ॥ ॥ अथोरक्षत

निदानचिकित्से॥ ॥आयम्यतोधनुरथोद्वहतोतिभारान्संयु
ध्यतोऽतिबलिभिःपततोऽतिमात्रात्॥उच्चाद्रुपंवहृषभंचमत्तं
गजंवासंगृण्हतोश्मगुरुदारुशिलाविघातान्॥२॥विशेषतः
प्रक्षिपतोतिमात्रंविनिघ्नतश्चाथपरानऽथोच्चैः॥अधीयमान
स्यततोद्रुतंवासंगच्छतोवाप्यतथाह्वयेश्च॥३॥उत्फालमेवा-
तिविलन्घतस्तुप्रनृत्यतस्तूर्णमिथोनदीर्वा॥ विशेषतःस्सन्तरतः
कश्चिच्चक्रूरैस्तथान्यैरथकर्मभिस्तु॥४॥ अभ्याहतस्याशुचवि
क्षतेह्रिवक्षस्यथोरक्षतनामधेयः॥उज्जृंभतेव्याधिरयाऽतिबा
मासक्तस्यरूक्षाप्रमितोशिनस्तु॥५॥विभिद्यतेऽस्यर्थमुरस्तदेव
सन्दह्यतेचाथविभज्यतेवा॥उत्पीड्यतेचाथतथैवपार्श्वेशुष्यत्य
थोगंह्रिप्रवेपतेच॥६॥वर्णंबलंवीर्यमथारुचिश्चवन्हिर्विनश्यत्य
चिरेणपुंसः॥विड्भेदद्दैन्याभिबलाह्रतिश्चज्वरोव्यथात्यर्थमपीभ
वन्ति॥७॥श्यावोदुष्टोदुर्गन्धोनाल्पोविष्टोवापीतः॥शुक्रःका-
शेवासात्स्नोजायेतैवन्तङ्कात्॥८॥क्षतात्संक्षीयतेत्यर्थक्षया
च्चुक्रौजसोस्तथा॥अव्यक्तंलक्षणंतस्मिन्पूर्वरूपमिदंस्मृतं॥
९॥पूर्णेरूपेजायतेचाप्युरोरुक्कपान्तोरक्तंकाशएवात्रनित्यम्
॥क्षीणेतद्वद्रक्तमूत्रत्वमुक्तंकट्याःपृष्ठस्याथपार्श्वग्रहोपि॥१०॥
साध्योयंवैचाल्पलिंगोनराणांरोगस्सद्योयावदावत्सरंतु॥नाग्नि
र्मन्दोनैवनाशोबलस्यनावत्सश्चात्पूर्णरूपस्त्वसाध्यः॥ ११॥उरो

१ अश्मशिलेतरप्रस्तरखण्डः २ शिलास्थूलदीर्घपाषाणविशेषः ३ विघातो
निर्घातेतिप्रसिद्धोस्त्रविशेषः ४ तान्पूर्वोक्तानश्मादीन्प्रक्षिपतःप्रकर्षेणबलात्का
रेणप्रेरयतः ५ अतीतकालभोजनंसेवयतः

मन्थीलाजान्पिबतिपयसामाक्षिकयुतान्क्षतीनहत्खण्डमयुतम
थपार्श्वयहद्युतः ॥ सुराद्युक्तान्नूनंव्रजतिदहनःपित्तमपिचय-
दामांद्यंसोयंजयतिनिखिलांस्तानथगदान् ॥ १२ ॥ मुस्ताश्वग
न्धातिविषाबलाश्चपुनर्नवाढ्याबहुयुग्नियुक्ताः ॥ श्रीपर्णिकाव
त्सकपाठयापिसेव्याःपयोभिःक्षतशोषशांतये ॥१३॥ जीव-
कर्षभकोलिल्यान्छर्करामधुसंयुतौ ॥ क्षीरानुपानंवैकुर्य्या-
द्योसौक्षीणतरःकृशः ॥१४॥ संधानार्थंक्षतीसद्यःपद्मकेश
रचन्दनैः ॥ इक्ष्वालिकाविषाग्रन्थिश्टतंमधुयुतंपिबेत् ॥१५
॥ क्षौद्राज्ययुक्तंसकृदेवलीढंचूर्णंचलाक्षाकृतमेकमेव ॥
शोषोद्भवंयैरुधिरस्यवान्तंदूरीकरोत्याशुनचित्रमत्र ॥१६॥
एलाकणापत्रजक्षारहृरालत्वचांतथाचार्द्धपलंसितायाः ॥ ख
र्जूरमृद्वीसमधूककानांपलंपलंचूर्ण्यमधुप्रयुक्ताः ॥ अक्षो
न्मितावैगुडिकाःसुकार्य्यास्तासामथैकांहिदिनेदिनेयः ॥ सं-
भक्षयेन्नाखलुतस्यकाशश्वासज्वरंछर्दिमथोभ्रमंच ॥ १८
॥ मूर्छामदंशोषमरोचकंचरक्तस्यनिष्ठीवनपार्श्वशूलौ ॥
प्लीहाढ्यवातांश्चतथैवरक्तपित्तंक्षतोत्थक्षयमाशुहन्यात् ॥
१९ ॥ एलाद्यानर्प्पयीवृष्यास्वरभेदविनाशिनी ॥ हिक्काप्रश
मनीन्नेषावटीशास्त्रविलेखिता ॥ २०॥ इत्येलादिवटी ॥
यष्टीनागबलाकषायसहितेक्षीरेसमेसहृद्वंवांशीपिप्पलि
काकृतेपिचशुभेकल्केपयस्यास्तथा ॥ सिद्धं नागबलार्जुनां
बुसहितंयष्टीमधुभ्यामलंहृद्रोगक्षतशूलकाशपवनाद्येषु
पित्तेषुवा ॥२१॥ यष्ट्याद्यंनागबलाद्यंचघृतमत्रपदेयोगद्वयंवा

ध्यम्॥ अथमृद्वीकाद्यंघृतम्॥ मृद्वीकायास्तुप्रस्थैक
मस्यार्द्धंमधुकंतथा॥पचेत्तोयाढकेतेनपादशेषेणयोजयेत्
॥२२॥पलिकेमधुकद्राक्षेपिष्टेकृष्णापलद्वयम्॥सर्पिषः
प्रस्थमेकंतुक्षीरंचैवचतुर्गुणम्॥२३॥पचेत्सिद्धेततश्शीते
खण्डप्रस्थपलोन्मितम्॥संमिश्र्यमुक्तंद्राक्षाद्यंघृतंक्षीणक्ष
तेहितम्॥२४॥वातपित्तज्वरेश्वासेविस्फोटकहलीमके॥प्र
दरेरक्तपित्तेचसेव्योमांसबलप्रदः॥२५॥ अथरसराजः
॥ मुक्ताहेमसिताभ्रवंगमखिलंतुल्यंप्रवालान्वितंछिन्ना
नीरयुतंमृतंतदखिलंनीरैर्वरीसंभवैः॥संभाव्यैवतुसप्तवार
मथतद्वयंमरीचान्वितैस्तुल्यैर्माक्षिकसद्युतैरतनुकृत्सेव्यंतथो
रक्षते॥२६॥भजतियस्तुनरोरसराजकंयदिचवल्लमितंबहु
योषिताम्॥निधुवनेभजतीतिसुनिश्चितंगणमहोजयतीति
किमद्भुतम्॥२७॥ अथतत्रसम्यक्सामान्याऽऽचरणविधिः
॥ अन्यच्छीतलतर्पणंखलुशुभंयच्चाऽविदाहिध्रुवंसेव्यं
चैलघुभक्ष्यमन्नमथवापानंहितंयद्भवेत्॥देवान्विप्रगुरूं
श्चनित्यमसकृत्संशीलयेद्बुद्धिमांस्तेषांवाश्रृणुयाच्चविप्रव
दनात्पुण्याःकथानित्यशः॥२८॥स्त्रियंशोकंक्रोधंत्यजति
यदिचासूयनमथाप्युदारान्भोगान्योभजतिहिसदारक्ष
नगदी॥अयेराधाकान्तामलगुणशिवेशंकरहरप्रसीदेत्या
जल्पन्भजतिखलुनेरुज्यमचिरात्॥२९॥ ॥
इतिश्रीगुरुचरणाबुजमधुपकाशीनाथचतुर्वेदिकृतायांचि
कित्साक्रमकल्पवल्ल्यांसुरक्षतचिकित्सापरागन्धोनोदश

मस्तबकः ॥ १० ॥ ॥ गणेशंमहेशांशिवांसुभ्रुत्ता दीन्गुरूंस्वैधधुर्य्यान्प्रणम्याथवक्ष्ये ॥ चिकित्साहिकाश्वस्य सम्यग्विचार्य्यप्रपद्याशुतेभ्योऽनुभूतान्तुसर्वैः ॥१॥ ॥ तत्रतावत्काशनिदानम् ॥ ॥धूमस्यैवोपघातादृजसंअ यतथारूक्षभोज्यमसंगं। आयामोद्धाविमार्गप्रगतबहुल- भोज्यादलंवेगरोधात् ॥ वायुःप्राणाभिधानोनुगतअथत थाचाप्युदानाभिधानंकाशाश्चैवाप्यनेकान्क्षयथुभयमहा दोषंतस्सन्तनोति ॥ २ ॥ अथसामान्यकाशचिकित्सातत्रा द्युपशयः ॥ वातप्रानिचयानितानिमनुजोतद्धत्कफघ्ना निवातिक्तान्येवकटूनिचाथनितरांपानौषधादीनिवा ॥ का शेनित्यमसौभजेत्क्रमातिमानार्द्रोदकंभोजनेपानेचौषधसे वनेऽपिचतथापक्वंप्रपिष्टंनवा ॥ ३ ॥ मरिचंखलुकर्षसंमितं मरिचार्द्धमगधापलोन्मितम् ॥ खलुदाडिमवल्कलंगुडं द्विपलंवाशुभयावशूककम् ॥ ४ ॥ परिपेष्यसमस्तमेवयोभ जतीहैकमथोहिमानवः ॥ सजयत्यपिकाशमुद्धतप्रथितं पूयमसृग्वमन्स्वसन् ॥ ५ ॥ युग्मम् ॥ अथकंटकारिकाथः ॥ भृतःकंटुकारीकषायस्सकृष्णाःप्रपीतस्तुकाशान्स- मस्तान्निहन्यात् ॥ ६ ॥ चूर्णञ्च ॥ कणाकंटकारीकृतं चूर्णमेकंभजेन्माक्षिकैःकाशरोगापहत्यै ॥ ७ ॥ अथक्षु द्रादिक्वाथः ॥ क्षुद्रामहौषधकणामरवाह्निकानांक्वाथस्स पुष्करजटस्सृतएवनूनम् ॥ काशंनिहन्तिमधुनासहसन्नि- पीतंस्तद्ज्वरंकफभवंसहसाक्षिणोति ॥ ८ ॥ अथचूर्णं

वादिः॥ ॥भूनिंबनिंबमगधामरवल्लिकानांशुंठीसठीशुभवरीसहयोजितानाम्॥ क्षुद्रान्वितंशृतपयःकफजंज्वरंवैशीघ्रंविनाशयतितूलिचयंयथाग्निः॥९॥ अथलवंगाद्यं चूर्णंवटीवा॥ भागान्नखरसमांलवंगमगधाज्जातीफलानांपृथक्भारघंचार्द्धपलोन्मितंतुमरिचंग्रस्याष्टमांशंतथा ॥शुंठ्याश्चैवसमस्तमानतुलितावाख्यासितामानवैश्चूर्णं वाथवटीचकाशविकृतिश्वासाग्निमान्द्यज्वरे॥१०॥ अथ मरीचादिवटी॥ मरीचलवङ्गकलिङ्गवल्कलानांखदिरभवंशुभसारमत्रतुल्यम्॥ अखिलमिदंखलुबर्बुरोत्थनीरैःपुनरथभाव्यकृताबटीतुकार्या॥११॥शमयतिवैघटिकाष्टकांतरएवंखलुसुखवारिजधारितान्नितान्तम्॥ नहिबहुचित्रमिदंवतनुमन्येसुखगतरावणपुत्रएवयन्नु॥१२॥ युग्मम् कुनटीगदसैन्धवंकणामरिचंविश्वविडंगसंयुतम्॥ अवलेह्यमिदंगुडान्वितंखलुकाशेमधुहिंगुसंयुतम्॥१३॥ हिक्काश्वासंच काशंवहरत्येवकृतनिश्चितम्॥कुनट्याद्यवलेहोयंपूर्वतंत्रसुसंमतः॥१४॥ अथहरीतकीमोदकः॥ हरीतकीकणोषणाकृतस्सविश्वमोदकःगुडान्वितस्तुकाशहापरस्तथाग्निदीपनः॥१५॥ अथसम्भाविस्तत्रादौवातजकाशलक्षणचिकित्से॥ यदिभवतिमनुष्यश्शंखमूर्धोदरेषुहृदिचखलुनवैरंपार्श्वयोश्शूलपीडा॥ वदनकमलगौवेक्षामताथस्यतद्धिहनवलइहैवंचौजसोवास्वरस्य॥१६॥ यदिभवतिचतद्वत्तेण्यमेवाथसोयंबहुलपवनकाशीभिन्नकांस्यस्वरस्तु॥कथय

पिबहुकाशत्येवशफकंविशोषापिखलुपरिसीदन्सक्तवेगोहियस्तु॥
१७॥ सुगमम्॥ कृतःपंचमूलीकषायःसकृष्णःपिबेद्वायुकाशो
रसान्नंसमश्नन्॥१८॥ अथापराजितावलेहः॥ सठीशृंगीभा
र्ङ्गीयुतजलदयासेरथतथासुमध्वाढ्यस्तैलाढ्यइहगदितोवायुज
निते॥महाकाशेसेव्योवरखिबुधसंवर्णितअसौकणायुक्तोलेहःख
लुजयतिकाशांस्तुनिखिलान्॥१९॥ अथपित्तजकाशलक्षण
चिकित्से॥ ॥उरोदाहस्तृष्णाज्वरवदनशोषार्दिततनुर्वमेत्पि
त्तासित्तान्यथबहुकटुंस्तिक्तगलकः॥क्वचित्पीतंसास्यंसकल
तनुनापार्निविकलस्तदाकाशत्येवंसकलवरवैद्योक्तिरखिला॥
२०॥ अथबलादिक्वाथः॥ बलाकंटकारीयुगंद्राक्षवासादरू
षंसमस्तंसमानंसनीरम्॥शृतंखंडयुक्तंचमध्वान्वितंपैहरेत्पि
त्तकाशंमहद्वांनिपीतम्॥२१॥ अथशरादिपंचमूलक्वाथः॥
शरादिपंचमूलकैस्सगोस्तनीकणान्वितैश्शृतंपयःपयोयुतंस
शर्करंसमाक्षिकम्॥पिबेच्चपित्तकाशरोगनाशनंतथामतंपथा
भिकीलमुत्थितंपयोधरांबुवर्षणम्॥२२॥ अथघृतम् गव्यंमा
हिषमाजमाविजपयस्तुल्यंहिधात्रीफलप्रोद्भूतंस्वरसंगवांशफम
घृतमस्येनमध्वन्वितम्॥संसिद्धंवरवैद्यपार्चितमिदंसेव्यंध्रुवं-
नित्यशःपित्तोत्पादितकाशमत्तमुकरीशार्दूलविक्रीडितम्॥२३॥
॥ अथकफजकाशलक्षणचिकित्से॥ कफपूर्णतनुःमलिप्य
मानमुखेन्दुःशिरसीहपीडितः॥अरुचेःखलुसम्भवादसौसक
फःकाशतिसान्द्रमेवचा॥२४॥व्याघ्रीश्यामाद्विशतमपमलेद्रोण
नीरेसपाच्यंतस्मिन्क्वाथेगुडमथतुलोन्मानमेवाथदत्वा॥शीतेन

स्मिन्पुनरपिभिषङ्माक्षिकंषट्पलंवातस्याद्वैत्रिकटुकमथोपत्र
जैलात्वचाच॥२५॥ श्लक्ष्णंपिष्टंपलपलमितंकेशरंनागपूर्वंसंपि
श्र्येवंकफभवमहाकाशरोगेप्रदद्यात्॥ मन्दाक्रांतासुखकमल-
गाकण्ठदेशोत्थकंडूयुक्तंहिकाश्वसनकसनंपीनसंचाशुहन्यात्॥
२६॥ युग्मम्॥ इतिकंटकार्यवलेहिका॥ कफजेवमनंविशेषतो
यवयूषाः कटुतिक्तकाहिताः॥ बरमत्रचलंघनंतथाखलुकाशेवर
वैद्यवर्णितम्॥२७॥ अथनवाङ्गयूषः॥ मुद्गाधात्रीदाडिमीलो
कशुंठीसत्कर्कन्धूर्मैथिलीसत्कुलित्थैः॥ यूषस्सेव्योमूलकैर्वापिवै
स्तुकाशेनूनंवैकफोत्थेनवाङ्गः॥२८॥ सठीमेघशृंगीवृषाशृंगबे
राभयानांमपिष्टन्तुचूर्णंसहिंगु॥ तथासैन्धवेनान्वितंश्लेष्मका
शीसुखाम्बुयुतंवैलिहेच्चानुवेलम्॥२९॥ अथवातपित्तजः॥
तृषाकुक्षिशूलश्चकंडूश्चनिद्राधिकावातपित्तोद्भवेशष्ककाशे॥
यमस्याऽतिथिःक्षीणदेहोमनुष्योभवेदत्रराधापतिंचिंतयेत्सः॥
३०॥ अथकफवातजः॥ कफाधिक्यतःकण्ठदेशेतिशूकैरि
वासंवृतोमस्तकस्यातिभेदात्॥ मनुष्योहिवातादिनावैकफोत्थेन
काशेनवैपीडितोयस्तुसोयम्॥३१॥ वचामेघधान्याभयालोकशृं
गीसुराह्वासभार्ङ्गीयुतैःकट्फलाद्यैः॥ तथाकचूर्णैर्वर्मयुक्तैस्सु
तंतुसहिंगुंनदामाक्षिकाढ्यंभजेच्च॥३२॥ अथपित्तकफजः॥
यदापीतवर्णस्सधूम्राङ्गगन्धोभवेत्क्षिप्रपाकीसरक्तस्तृषार्त्तः॥तदा
श्लेष्मकान्तेनपित्तेनजातेनवैपीडितोकाशरोगेणसोयम्॥३३॥भजे
त्सिंहवल्काऽमृतासिंहिकानांकषायंतथामाक्षिकेणान्वितंवा॥ रसं
माक्षिकाढ्यंपिबेद्वासकस्याहिताशीनरोरक्तपित्तेविशेषात्॥३४॥

अथसन्निपातजः॥ ॥ भवेत्सन्निपातोद्भवेदाहकंडूशिरश्शूल शोथार्दितःशोफयुक्तः॥ अतिश्वासहृल्लासछर्दिप्रधानैर्यदारोच-केःपीडितोयस्तुसोयम्॥३५॥ पिबेद्भेषजंजान्हवीनीरमेकंरमावल्लभंराघवंरावणारिं॥ भवव्याधिभीतोविशेषेणवैद्यंहरिंचाशुनाराय णंचिंतयेद्वै॥३६॥ अथसमस्तकाशेषवलेहादयोयोगाः॥ समूलासपुष्पांसपत्रांप्रगृह्यतुलांकंटकार्य्याजलद्रोणयुक्ताम्॥ पचेन्नीरमस्याश्चदत्वाशिवानांशतंपादशेषंप्रगृह्याशुतस्मिन्॥३७॥ पलानांशतंसद्गुडस्याथदत्वापचेल्लेहवच्छीतलेतत्रदेयम्॥ फलानांत्रिकंत्र्यूषणस्यापितस्याःपुनःपुष्पजातंरसषट्पलंवै॥३८॥ चतुर्ज्जातिचूर्णंपलोन्मानमस्मिन्पुनःप्रक्षिपेत्साचितोभुक्तएषः॥ हरेद्वातजंपित्तजंवैकफोत्थंद्विदोषोद्भवंवैत्रिदोषोत्थकाशम्॥३९॥ क्षतोत्थंक्षयोत्थंतथापीनसंत्वविशेषेणहन्यात्क्षयोरक्षतादीन्॥ भृगोर्वक्त्रपद्माद्यंनिर्गतोवाऽवलेहोजरामृत्युहारीप्रसिद्धः॥४० ॥अथकाशकर्त्तरीगुटिका॥ रसंगंधकंपिप्पलींचाशिवांवासकंभार्ङ्गिकांभागवृद्ध्याप्रगृह्य॥ ततस्तत्समंखादिरंसारमेकंपुनर्भावयेदेकविंशत्प्रवारान्॥४१॥ शृतैर्बर्बुरत्वग्जलैस्तद्वटीवैसुखेधारयैत्सर्वकाशापकर्त्री॥ मनुष्यस्सुखीसर्वकाशाद्विमुक्तोभवेत्कर्त्तरींकाशपूर्वांप्रपूर्वाम्॥४२॥ नवाऽऽगन्तुकाशप्रतीकारमत्रमयावर्णितंग्रंथभूयस्त्वभीत्या॥ अतोविज्ञवैद्यैश्चतन्त्रांतरेभ्योविलोक्यंसमस्तंविशिष्टंविशेषात्॥४३॥ गुरूणामपाङ्गाजयंत्येवनित्यंकृपार्द्रप्रचीत्थंसपत्लेममैव॥ यतोमन्दबुद्धिस्तुकिंचित्करोमिस्मिसरोषास्तुतस्मिन्सरोषेकृतोमे॥४४॥ ॥इतिश्रीगुरुचर

णावृजमधुपकाशीनाथचतुर्वेदिकृतायांचिकित्साक्रमकल्पवल्ल्यांका
शचिकित्सापरागाभिधएकादशस्तबकः ॥११॥ ॥ दोहा॥
सिन्दूरारुणगजवदनसफलितसेवककाम ॥ नाथयनाथितमाशफ
ममसुनिजनसेवितनाम ॥ अथहिक्कानिदानम्
॥ विदाहिविष्टंभिगुरूणिजग्ध्वारूक्षाण्यभिष्यन्दिसुभोजनानि
॥नरोहिधूमातपशीतपानाशनान्यथोस्थानरजोनिलांश्च॥ २॥
व्यायामकर्माध्वसवेगघातापसर्प्पणान्येवगुरूंश्वभारान्॥संसे
व्यहिक्काश्वसनंचकाशंलभेदलंचान्ननिदानमेतत्॥३॥ अथा-
स्यास्साक्षाद्रूपम्॥ यकृत्प्लीहांत्राण्येवकथमपिवायुःप्रकुपितः
क्षिपन्वक्त्रान्नूनंमुहुरिवयदोदेतिसहसा॥तदाहिक्कासेयंहिगिति
बहुवारान्प्रकुरुतेहरत्येवप्राणान्बहुगदकृशस्याशफनितराम्॥४
॥वायुःकफेनानुगतोनृणांवैहिक्कास्तुपञ्चैवकरोतिदुष्टः॥अन्नो
द्भवैकायमलाद्वितीयाक्षुद्रातृतीयापिचयाचतुर्थी॥५॥गंभीरि
कासाप्रथितास्तिशाऽस्रेयापञ्चमीसामहतीप्रदिष्टा॥तासामथा
सामिहलक्षणानिसम्यग्ब्रवीम्येवतथायथावा॥६॥ युग्मम्॥
पानान्नरुद्धोऽतिभुक्तेनवायुःकरोत्यन्नजांसूर्द्ध्वगोमूर्यनूनम्॥७॥
चिरेणबेगैर्यमलैस्तुनूनंप्रवर्त्ततेयाचशिरःस्सकंठम्॥विकंपयंतीय
मलेतितांवैवदन्तिवैद्याश्वरकादयोये॥८॥विकृष्टकालैरथमंद
वेगैःप्रवर्त्ततेधावतिजत्रुमूलात्॥वदंतितांवैखनुपाःपुराणाःक्षु
द्रेतिनाम्नाप्रथितांचहिक्काम्॥९॥गंभीरनादंकुरुतेचनाभेःप्रधा
वितायोरतमातुयासा॥शफशोषकंठास्यकरीचकाशश्वासप्रदिक्षे
पद्रववर्ज्जनीया॥१०॥ मर्माणिसर्वाण्ययपीडयन्तीसंतृष्यतोधो

बवतीसवेगा॥ गात्राणिसर्वाण्यतिकंपयंतीसाचाप्यसाध्यासहृतीमदिष्टा॥ ११॥ अथासाध्या यदाऽऽयम्यतेहिक्कतोयस्यदेहंतयोर्द्धंत्वहष्टिर्भवेत्ताम्यतेयः॥ भवेत्क्षीणदेहोन्नविद्वेषयुक्तोयमस्याऽतिथिस्त्वांत्यहिक्केतिनिन्द्यो॥१२॥ व्याधिक्षीणोवृद्धोयोवानव्यपत्यस्यांवामासक्तः॥ १३॥ धात्विन्द्रयस्थैर्य्ययुतोप्यदीनोनक्षीणदेहोयमिकांजयेत्सः॥ शुक्तांप्रलापार्त्तिविमोहतृष्णादिभिस्सतोन्यत्तुनिहन्तिसैव॥१४॥ अथप्रतीकारः॥ प्राणावरोधनवितर्ज्जनभाषिकाभिर्विस्मापनेनचविभीषिकयानितान्तं॥ हिक्कांजयेच्चबहुरौद्रकथाप्रसंगैस्तद्वत्सुमांश्चबहुधामनसोऽभिघातैः॥१५॥ छागंपयोनागरसाधितंतुरसान्फलाम्लांश्चसुलाजसक्तून्॥ हिक्काभिभूतस्तुनरोनिषेव्यतांचाभिभूयाशुनिहन्तिदुष्टाम्॥१६॥ अथनस्यत्रयम्॥ नारीपयोलोहितचन्दनेनघृतंसुकोष्णंचसुसैन्धवेन॥ नीरेणवासैन्धवमेकमेवनिहन्तिनस्यत्रयमेवहिक्काम्॥१७॥ अन्यच्चनस्यत्रयम्॥ मधुकंमधुसंयुतंतथामगधाशर्करयान्वितापिच॥ गुडनागरमेवहिक्कतांहितकृन्नावनकत्रयंत्विदम्॥१८॥ यष्टीमाक्षिकसंयुताविजयतेहिक्कागदध्वंसनेरवण्डाढ्यामगधातथाघृतमथोकोष्णंपयोवारसः॥ इक्षोःकिंचिदपीहलेह्यमथवाभोज्यंचपेयंतथायोगानांवरपञ्चकंनिगदितंहिक्काहरंतत्क्रमात्॥१९॥ इत्यवलेह्यादियोगपञ्चकम्पञ्चस्वपिहिक्कासुक्रमादुक्तम्॥ लाजाञ्जनाभ्यांबदरस्यमज्जातिक्तायुताकाञ्चनगैरिकैस्तु॥ धात्रीकणालोकयुतासिताऽपिकपित्थकासीसकृत्तथैव ॥२०॥ फलप्रसूनैरथपाटलीनांखार्जू

रमुस्ताकणयानथैव॥ षड्डवल्लीदामधुनावलेह्याहिक्कांजयंतीह नचिन्नमत्र॥२१॥ युग्मम् सौवर्चलंचमधुनाखलुमातुलुंगनीरैःपिबेन्मधुकणामलगोकचूर्णम्॥ लिह्याच्चहिक्काश्वसनातुरोपःसितायुत योपितदेवचूर्णम्॥ २२॥ हिक्काश्वासौभार्ङ्गीविश्वांसेवेन्नीरेणोष्णेनैवम्॥२३॥ दशान्चरणकषायस्यानुपानेनसूतोजयतिचखलुहिक्कामन्यथाश्वासकाशे॥ हितकरमपियत्स्याद्भेषजंतत्तुसेव्यंविविधबुधविचाराद्भिक्तामेतदेव॥२४॥ निक्तागैरिकबीजपूरकरसैर्युक्ताभवंभस्मयन्मुक्ताहाटकभानुकान्तजमथोसद्वीजपूरद्रवैः॥भुक्तंवल्लमितंचमाक्षिकयुतंसौवर्चलेनान्वितंतद्वन्माक्षिकताम्रभस्मजयतिप्रायस्तुहिक्काशतम्॥२५॥ अथश्वासः॥ महोर्ध्वछिन्नास्तमकस्तथैवक्षुद्रस्तुपंचैवभवन्तिभेदाः॥महागदस्यास्यचपूर्वरूपंश्वासस्यपूर्वंहिनिरूप्यतेथ॥२६॥ हृत्पीडाशूलमाध्मानंवैरस्यंवदनस्यच॥आनाहःशंखनिस्तोदोभविष्यतिभवन्त्यमी॥२७॥ अथैतेषांप्रत्येकंलक्षणानि॥ स्रोतांसिसंरुध्ययदेववायुःकफेनरुद्धोव्रजतीवविष्वक्॥ मत्तर्षभोवानिशमेवनष्टसुज्ञानविज्ञानविशीर्णवाग्यः॥२८॥विभ्रान्तनेत्रोविवृताक्षवक्त्रोनिबद्धवर्चास्तुनिबद्धमूत्रः॥दीनश्चदूरात्श्वसितंतुयस्यविज्ञायतेसौन्चविपद्यतेत्र॥२९॥ युग्मम्॥ इतिमहाश्वासः॥ अधोविघत्तेनचदीर्घकालमूर्ध्वंश्वसत्यत्रहिशङ्कवक्त्रः॥ कफावृतास्योतिविरुद्धगन्धवहार्दितोत्या-त्तविलोचनश्च॥३०॥ इतस्ततोमुह्यतिवेदनार्तसतना स्यनेवारतिपीडितोयः॥नयोर्ध्वदृष्टिश्चविपश्यतेसौश्वासेत्वधोर्ध्वेपिवि

पद्यतेवा ॥३१॥ युग्मम् इत्यूर्द्ध्वश्वासः य स्सर्वप्राणैरपि पीडितस्तु छिन्नश्श्वसत्येव विचेतनश्च ॥ स छिन्ननाम्नाश्वसनेन भानुपुत्रस्य गेहं व्रजति प्रलापी ॥ ३२॥ इतिच्छिन्नः ॥ यदा नरस्य प्रतिलोममेव स्रोतांसि वायुः प्रतिपद्यते च ॥ शिरस्स कंठं परि सन्निगृह्य श्लेष्माणमित्थं समुदीर्यतेन ॥ ३३॥ करोति वै पीनसमेव रुद्धो नरस्य वै घुर्घुरुकं तथैव ॥ अतीव तीव्रं च सुदुष्टवेगं प्रपीडकं श्वासमथापि वायोः ॥ ३४ ॥ प्रताम्यतीत्यत्र च वेगतोपि संत्रस्यते चाथ निरुध्यते च ॥ मुहुर्मुहुर्गच्छति काशमानस्संसुच्यमानेन कफेन मोहम् ॥ ३५॥ सदुःखितस्तस्य विमोक्षणान्ते- सुखी मुहूर्तं भवति कचिच्च ॥ उद्ध्वंसते कंठ अलस्तु किंचित्स कृच्छ्र एवात्र च भाषते सः ॥ ३६॥ निद्रां लभेन्नैव कचिच्छयानः कचिच्छयानस्य च वायुरस्य ॥ पार्श्वे निगृह्णात्यत एव किंचिदासीनमात्रो लभते सुखं वा ॥ ३७॥ उष्णान्नथाचाप्यभिनन्दतीह संस्विद्यता चैवललाटकेन ॥ प्रायोर्त्तिमान्नुच्छ्रितनेत्रयुग्मश्शुष्कास्यपद्मस्स भवेन्नितान्तम् ॥ ३८॥ श्वासो मुहुश्चास्य गजाधिरूढवच्चाल्यते गात्रमथो मुहुस्तु ॥ मेघांबु शीतैरथवायुभिश्च वा श्लेष्मलैश्चाशु विवर्द्धते सो ॥ ३९॥ श्वासो हि याप्यास्तमकस्तथा वा साध्यो यदि स्यान्नवउत्थितो वै ॥ मूर्छाज्वरार्त्तस्य स एव नूनं प्रशब्दपूर्वः प्रथितो हि शास्त्रे ॥ ४० ॥ उदावर्त्तद्विजोऽजीर्णक्लिन्नकायनिरोधतः ॥ संवर्द्धते सोतमसा शीतैश्चाशु प्रशाम्यति ॥ ४१॥ इति तमक प्रतमकौ ॥ अथ क्षुद्रः ॥ रूक्षायासोद्भूतः कोष्ठे क्षुद्रश्श्वासो वायूर्नूनम् ऊर्ध्वं नीत्वा दुःखैर्नांगं बाधायुक्तं कुर्वन्त्यन्ये ॥ ४२॥ सर्वे ऽ

[1] अयं क्षुद्रश्वासो दुःखैर्नांगबाधां न करोति अन्ये न क्षुद्रातिरिक्ताः सर्वेपि पीडां कुर्वन्तीत्युक्त्यास्य सुखसाध्यत्वमुक्तम् ॥

साध्याःश्वासरोगानराणांसर्वेसाध्यश्चाप्यथाऽव्यक्तरूपाः॥
क्षुद्रंहित्वायश्चतुर्थस्तुकृच्छ्रः सोपित्याज्योदुर्बलस्यैवनूनम्॥४३
अथैतेषांप्रत्येकंवातादिदोषादुत्पत्तिमाह्नच्चे॥ श्वासोमहांश्चापि
सवायुमायोः कोपादथोर्ध्वस्तुकफादिवायोः॥सश्लेष्मपित्तादथ
छिन्नकस्तुकफातिकोपात्तमकस्तथैव॥४४॥क्षुद्राभिधानःखलु
वायुजातःपञ्चैवमुख्याःप्रभवन्तियेस्तु॥तेदोषसंघाःप्रथमंवि
चार्यविधैश्चिकित्साकरणप्रवीणैः॥४६॥ अथप्रतीकारः॥
श्वासेषुविद्वान्विदधीतपूर्वंवायोःकफस्यापिनिवर्हणंयत्॥स्वे
दंमृदंवायकुलत्थशुंठी सिंहास्यसिंहीयुतसागराम्बु॥४७॥ इतिकु
लत्थादिः॥ अथदशमूलादिकाथः॥ दशमूलकषायमुत्तमं
प्रपिबेत्पौष्करचूर्णसंयुतम्॥श्वसनंकसनंविनाशयेत्खलुशूलं
जयतीहपार्श्वजम्॥४८॥ अथदेवदार्वादिः देवदारुयुतकं
टकारिकाविश्वभेषजवचायुतौष्करैः॥श्वासकासशमनःकषा
यकःकट्फलेनसहितस्मृतोनृणाम्॥४९॥ गुडविश्वशिवाघन
जागुटिकामुखपंकजगायदिहंतिलदा॥ श्वसनंकसनंसबलं
सकलंफलमेवकलिद्रुमजंतुयथा॥५०॥ इतिगुडादिगुटीवि
भीतककवलश्च॥ रंभाकुन्दशिरीषपुष्पनिचयंसंचूर्णितंपि
प्पलीयुक्तंतंदुलवारिणापरिपिबेच्छ्वासापहंनित्यशः॥कूष्मा
ण्डस्याशिफाप्रवरंखलुतथाचूर्णंचिकोष्णेनवाश्वासंकासम
पिद्रुतंप्रशमयेन्नीरेणपीतंखलु॥५१॥ इतियोगद्वयम्॥
शृंगीपञ्चपटूनिपुष्करजटासाङ्गीफलानांत्रयंक्षुद्राचापिप
टुत्रय चमतिमान्संचूर्णयित्वातथा॥५२॥ दद्याच्छ्वासग

दोर्षवातुकासनेषुप्रायशोहन्तिनां स्नदत्त्वाप्यसर्वंवनपीनसमथोको
ष्णांबुपीतन्विदम्॥५२॥ इतिशृंग्यादिचूर्णम्॥ यदिगुडकटुतै
लयुतंभजेदपिजयेत्सबलंश्वसनंनरः॥ खलुमहोषधिगर्दभशाक
जंजयतिचूर्णमथार्द्रकवारिणा॥ इत्यवलेत्त्वयोगद्वयम्॥ निशा
द्राक्षारास्नामरिचगुडतैलैश्वरचितोऽवलेहःपाञ्चालीयुतअथस
टीचूर्णसहितः॥ यदालीढःश्वासःप्रभवतिकथंप्राणहरणेयथा
मंत्रैरुद्धोवितथबलवीर्यःफणधरः॥५४॥ अथश्वासकुठारो
रसः॥ रसंविषंटंकणगंधकौचमनःशिलाटंकमितंसमस्तम्॥
पृथक्पृथग्वा मरिचाष्टटंकान्प्रगल्भखल्वेविनिमर्दयेद्दै॥५५॥
एकैकमेवंमरिचंचदत्वाकटुत्रयंकट्फलकंहिपश्चात्॥ संमिश्र्यसं
चूर्ण्यचकाचकूप्यांनिधायसंस्थाप्यचनागवल्याः॥५६॥दलेनगुं
जामितमेतदेवदेयंयथावातबलासजेषु॥ गदेषुकाशश्वसनाग्निमा
न्द्यादिषन्यदोषत्रयमोहितेषु॥ ५७॥ मूर्छास्वपस्मारगदेषुनस्यंचैत
स्यदेयंविबुधावदंति॥ यथार्थनाम्नाप्रथितोस्तिशास्त्रेश्वासादिक
श्वासकुठारकान्तः॥५८॥ कालापकम्॥ अथस्वरभेदनिदा
नम्॥ वातादयोत्युच्चविभाषणेनविषादिनावाध्ययनाभिघातात्
॥स्रोतस्सुनूनंस्वरवाहकेषुस्वरंनिहन्युस्सचषड्विधस्स्यात्॥५६
॥वातेनकृष्णाननेत्रमूत्रवर्चाश्शनैर्गर्दभवच्चसोयम्॥ पित्तेनपी
ताननेत्रमूत्रवर्चागलेनैवसदाहितेन॥५७॥ब्रूयात्कफेनैवकफा
वरुद्धकंठोदिवाचापिशनैश्चकिंचित्॥ सर्वात्मकेसर्वविकारजुष्टंत
च्चाप्यसाध्यंमुनयोवदन्ति॥५८॥ धूम्येतवाग्वाक्षयसंभवेतुसं
क्षीयतेऽन्यत्रचवाग्विनाशे॥ मेदोन्वयाज्जल्पतिमेदसैवसंदिग्ध

कंठस्त्वविलस्यवाच्यम् ॥५९॥ अथासाध्यलक्षणम् ॥ ॥
जरातुरस्यापिकृशस्यजन्तोःक्षीणस्यचश्चापिसहोपजातः ॥
त्रिदोषजोवास्वलुमेदसावाचिरोत्थितोवानहिसिद्धिमेति ॥६०॥
॥ अथैतेषांप्रतीकारः ॥ स्वरोपघातेनिलजेविशेषाद्धृतंचभु
क्तोपरिचोषणेन ॥ तथैववान्यत्खलुकाशमर्दरसेनशार्ङ्गीसृतमे
वपेयम् ॥६१॥ योगद्वयम् ॥ गुडोदनंघृतान्वितंप्रभुज्यकोष्णकं
पिबेत् पुनःपुनश्चतेनवैप्रशाम्यतीहवातजः ॥६२॥ अथपित्तजे
॥ ॥विरेचनंपित्तरवामयघ्नंपयस्तथावामधुरैश्शृतंतु ॥समा-
क्षिकंवामधुरंचद्रव्यंनदेवसंचूर्णितमेवपेयम् ॥६३॥ सुदुग्धवृक्ष
शुंगमत्रवल्कलंभिषग्वरःप्रपीडयतद्रसेनदुग्धमेकमेवपान्वितम् ॥निं
प्रर्णिकासयष्टिकासुकल्किताघृतंनयापिपान्वितंसशर्करंतथासु
गंडूषंस्मृतम् ॥६३॥ योगद्वयम् ॥ अथकफजे ॥ कणाकणामू
लयुतांचशुंठींपीताजमूत्रेणतथोषणेन ॥ कफोत्थितंयत्स्वरभंगमा
शुशीघ्रंनिहन्यान्नहिचित्रमत्र ॥६४॥ अथत्रिदोषजे ॥ हुता-
शनस्सारनिशाजमोदाधात्रीभवंचूर्णमथोघृतेन ॥ समाक्षिकंली
ढमजस्त्रमेतद्दोषत्रयोद्भूतरवामयघ्नम् ॥६५॥ अन्यच्च त्रिक
टुकंहरनेत्रफलायुतंखलुचयावकशूकसमन्वितम् ॥ अपिकुलिं
जनमेकमथोसुखस्थितमलंचसुपौष्करमेववा ॥६६॥अपिशिवांस
निपातरवामयप्रमथनायचयोगशिवाक्षकम् ॥ समुदितंवरवैद्य

१आशुशीघ्रंकफोत्थितंसद्योजातस्यसाध्यत्वात् २शीघ्रंहन्यादित्युक्तेनपुनरुक्तिदोषोत्रचिंत नीयः ३शिवाक्षसंनिपातरवामयइति- वातादित्रयाणांनिपातस्सन्निपातस्तदुद्भवोयोरवा मयस्स्वरभेदस्तस्यप्रमथनायनाशाययोगशिवाक्षंयोगत्रयंश्लोकयुग्मेनोक्तम् ॥

नृपैरलं द्रुतमिदं प्रथितं न विलंबितम् ॥६७॥ युग्मम् योगत्रयम त्र क्षयजेक्षयवर्णितं विधिं स्वरभेदे विदधीत वैद्यराट् ॥ अपिनि क्तकषायकैर्जयेदपि मेदः प्रभवं तथोषणैः ॥६८॥ अथ सामान्य प्रतीकारः ॥ चव्याग्नित्रिकटूनिजीरकतुगातालीसगंधत्रयैस्सा कं चैवलुतितिंतिडीगुडयुतान्यापेष्यसंभक्षितम् ॥ चूर्णं वाशु तथाम्ल वेतसयुतैवैस्स्वर्य्यकासादिकान्नूनं हंतिनचपीनसंचविविधान्व्याधी न्कफोत्थानपि ॥ ६९ ॥ इति चव्यादिचूर्णम् ॥ व्याघ्रीनीरैः पाचि तमेकं घृतमुच्चैरास्नाव्योषैर्गोक्षुरयुक्तैः परिभुक्तम् ॥ वाट्यालेना पिस्वरभेदं प्रणिहन्तिकाशान्नूनं पंचविधांस्तद्दृदयेदम् ॥७०॥ इति व्याघ्रीघृतम् ॥ रसार्कलोहभस्मचैव भावितं त्रिसप्तधाररसे स्तुकंटकारिकाफलोत्थितैर्वटी शुभा ॥ सुमुद्गकान्नसन्निभा सुख स्थितारवामयं निहन्ति चापि सत्वरं गवादिरक्षनाथिका ॥७१॥ इति गोरक्षनाथवटी ॥ दिशतु च नित्यं शिवमिह देवः गिरिवरपुत्र्याः पतिसुत एकः ॥७२॥ ॥ इति श्रीगुरुचरणाब्जमधुप काशीनाथचतुर्वेदिकृतायां चिकित्साक्रमकल्पवल्ल्यां हिक्काश्वा सस्वरभेदचिकित्सापरागगन्धितो द्वादशस्तबकः ॥१२॥ ॥

॥ इन्दुखंडपरिभूषितभालं प्राक्प्रणम्य गिरिजासुतमेकम् ॥ सुश्रुतादिमतमेव विचार्य्य प्रब्रवीम्यरुचिनाशनयोगान् ॥ १ ॥ ॥ तावदरोचकनिदानम् ॥ प्रभंजनादिदोषकोपशोकरोषसं भवस्तथातिकामवैमनस्यनष्टरूपगंधजः ॥ अरोचकोऽस्य पूर्व रूपमंगमर्द्दजृंभकाशरीरसादपूर्वका भवंत्यमी भविष्यति ॥२॥ रूपम् ॥ मुखगतमन्नं त्वनशितुकामः भवति च नूनं कुमपरियु

कः॥३॥ अथोपशयः॥ अरुचौकवलाःप्रशंसिताःखलु धूमासुखधावनान्विताः॥ सुमनोज्ञमथान्नपानकान्यथसंहर्षणकादिसञ्चरेत्॥४॥ भोजनाग्रेत्रसंसेव्यंलवणार्द्रकमेवहि॥अग्निसंदीपनंहृद्यंजिह्वाकंठविशोधनम्॥५॥ अन्यच्च रसोदाडिमस्यास्यगोमाक्षिकाढ्यस्तथाचार्द्रकस्याशुपीतोनराणाम्॥महारोचकंश्लेष्मजांश्चाथरोगान्प्रतिश्यायमप्याथदूरीकरोति॥६॥ राजीजीरकहिंगुनागरमिदंभृष्टंसमस्तन्तथायुक्तंगोर्दधिसैन्धवैस्तुमतिमान्सद्वस्त्रपूतंखलु॥तावन्मानमितंयथारुचिकरंसाम्लंन्निरन्नंचवाद्याद्वैयवरोमहाऽरुचिहरंसद्योग्निवृद्धिप्रदम्॥७॥ अथशिखरिणी॥ गवान्दुग्धंतद्वद्दधिच महिषीजातममलंनिबद्धंसंघृष्टंखलुशुभपटेखंडसहितम्॥ लवंगैलाचन्द्रप्रयुतमरिचैरप्यथरुचिंप्रकुर्वाणालोकेजयतिनितरांसाशिखरिणी॥८॥ पलद्वयंदाडिमकस्यचाष्टौपलानिखंडस्यपलत्रयंच॥ कटुत्रयस्याथपलेकमत्रगन्धत्रयस्यैववि चूर्णयित्वा॥९॥ तन्मात्रयायुक्तमलंसचूर्णमरोचकंहंतिचदाडिमाद्यम्॥ कासंज्वरंपीनसमप्यसह्यंप्रदीप्यवह्निंचनिराकरोति॥१०॥ इतिदाडिमीचूर्णम्॥ कटुत्रयंफलत्रयंनिशाद्वयंच चूर्णितम् सयावशूकमाक्षिकैर्मुखस्यचात्रधावनम्॥११॥ ॥ इतिमुखधावनम्॥ अथसंप्राप्तिस्तत्रादौवातजः॥ भवेद्धृष्टदन्तःकषायास्यपद्मोनरोवातजेरोचकेतत्रसोयम्॥वचानीरपानेनवातांविधायपिबेदुष्णतोयंचतैलंचमद्यम्॥१॥कृष्णानागरजंतुशत्रुलवणैर्वाल्हीकभार्ङ्गीयुतैरारनाजीर

ककुष्ठखंडमरिचैस्तैलान्वितैर्माक्षिकैः॥ युक्तोवैयवभस्मना
विडसमस्सैलोहरेणवश्रितस्सोयंवैकवलग्रहस्समुदितस्सो
वर्चलाढ्यःपरः॥१३॥ भवेत्पित्तजेचाथकट्वम्लमुष्णंमुखं वा
थवैरस्यमत्यूतिगन्धि॥ सितासीतनीरेणपक्वाम्लिकायारसं
दैवपुष्योषणेलाक्षपेषैः॥१४॥ पिबेच्चान्यदेवान्नपित्तापहा-
रिभजेत्तच्चवैद्योक्तियुक्त्याविचार्य्य॥ तथाशीतभानोःकरैर
ञ्चितेहिसुधारागृहेचाश्रवासंविधाय॥१५॥ युग्मं इति-
पित्तजे॥ अथकफजः॥ भवेच्चाथमाधुर्य्यपैच्छिल्यशैत्ये
र्युतोगौरवस्नेग्ध्यदौर्गन्ध्ययुक्तेः॥ कफारोचकेयस्तुनिंबांबुपी
त्वाविधायाशुवांतंसुखंप्राप्नुयात्सः॥१६॥ अन्यच्च॥ नृप
द्रुमाम्बुमाक्षिकैर्यवानिकासमन्वितैः पिबेत्तथोषणांबुमान्समा
क्षिकंभजेदपि॥१७॥ योगद्वयम्॥ अथवातपित्तोद्भवः
॥ तृषादाहशूलंभवेद्वातपित्तोद्भवेऽरोचकेतन्नसेव्यंवदामि॥
कणायाश्शतंद्वूशतंचोषणस्यसितायाश्चतुष्कंपलानांप्रगृह्य
॥१८॥ पलार्द्धंतथानागरस्यापिधान्यत्वगेलायवान्यम्लवृक्षादि
कञ्च॥ ससौवर्चलंजीरकंदाडिमंकोलमम्लादिकवेतसंकार्षि
कांश्च॥१९॥ तथाचाभ्रभागांश्चगृह्याथपेष्यप्रयुक्तंतुचूर्णंहि
वातादिपित्तान्॥ समुद्भूतमेवाप्यथोरोचकघ्नीहकाशादिकान्
खांडवोयंचनूनम्॥२०॥ गुल्मार्त्यनाहादिशूलादिकांश्चविबं
धन्तथासंग्रहंपन्मलस्य॥ इतीत्येवदूरीकरोत्यन्नचिन्तानका
र्य्याकिंचिच्छास्त्रदृष्टंमृषान॥२१॥ अथकफवातजः॥
कफवातसमुद्भूतेऽरोचकेत्हृदयेनिरुक्॥ प्रसेकेनसमायुक्तो

जायतेचात्रमानवः॥ २२॥ तालीसंनागपुष्पंचमरिचंलवणंत
था॥तुल्यान्येतानिकृष्णायाग्रंथिकस्यत्वचस्तथा॥ २३॥ ति
त्तिडीकस्यवन्हेश्चक्षीरकाख्यस्यवालथा॥ भागद्वयंत्रयंचाथ
घनशिखाम्लवेतसाम्॥ धान्याजमोदबदरैर्भागत्रयसमन्वि
तैः॥युतोदाडिमपादाढ्यःसिताईपरिमिश्रितः॥२५॥ कंठा
स्यजठरव्याधीन्नाशयेदग्निदीपनः॥ विषूचिकागुल्मकाश
श्वासच्छर्द्यरुचीर्हरेत्॥ २६॥गुदांकुराणिवार्ताश्चमूढवातांस्तू
द्रुजस्तथा॥ नाशयत्येवमुक्तोसौमहाखांडवसंज्ञकः॥२७
॥ अथपित्तकफजः॥ तृट्प्रसेकःकफःशुष्कःपित्तश्लेष्मभ
वारुचौ॥तत्रसेव्यश्चधान्यैलापद्मकोशीरमासिकैः॥२८॥क
णाचन्दनपथ्याभिर्लोध्रोत्पलकटुत्रयैः॥ तेजोवतीसतैलैश्च
सयवाग्रजएषवै॥ २९॥ कवलश्चालयेवान्यःकारवीजरणंगु
डम्॥गोस्तनीमरिचंक्षौद्रंवृक्षाम्लंदाडिमंतथा॥ ३०॥ सौवर्च
लसमायुक्तःपूर्वोक्तःकवलस्तथा॥ नानाऽरोचकनाशायसे
वितोयंतथापरः॥३१॥ अथसन्निपातजः॥ नानारसा-
न्वितमुखेखलुसन्निपातजानारुचिस्सकलवैद्यवरैःप्रदिष्टा॥
तस्यांलवंगसितचन्दननीलपद्मविश्वाकणागुरुजलैस्सुतुषा
रकैश्च॥ कंकोलनीलजरणैर्नतवालकैलाभृंगैस्सनागकुसुमै
र्नलदप्रयुक्तैः॥ सोशीरवंशजसुरोचनयासमैतैःकृष्णान्वितैः
खलुसिताईमितैस्समस्तैः॥३२॥ चूर्णंकृतंपरमरोचकनाश
नंचवन्हिप्रदीपनमथोबलदंचवृष्यम्॥सेव्यंप्रमेहहरमत्र-
चतर्प्पणंचतृष्णाहरंकसनपीनसनाशनंच॥ ३३॥ हरत्यती

सारमुरोविबन्धमुरस्क्षतंवैग्रहणींचतद्वत् ॥ इदंलवंगादिकमेवचूर्णं त्रिदोषरोगापहरंप्रदिष्टम् ॥ ३५ ॥ इतिलवंगादिचूर्णम् ॥ अथान्येयोगाः ॥ आर्द्रदाडिमनिर्य्यासःखंडजीरकसंयुतः ॥ त्रिदोषारोचकंहंतिगंडूषविधिवत्तथा ॥ ३६ ॥ अथभक्तद्वेषः ॥ संचिन्तयित्वामनसान्वदृष्ट्वास्पृष्ट्वातथाभोजनमेवयत्र ॥ उज्जृंभतेद्वेषअलंतथात्रद्वेषस्सउक्तःखलुभक्तपूर्वः ॥ ३७ ॥ प्रयोजयेत्तत्रसपक्वकोलामथोयवागूंचकुलित्थयूषम् ॥ तथाढकीनामथमुद्गजंवावैद्योऽनवद्योविधिवद्विशेषात् ॥ ३८ ॥ अथासाध्यः ॥ यदाप्रक्षिमणःक्षीणदेहस्यवापितथावृद्धदेहस्यकामातुरस्य ॥ त्रिवर्षादथोर्द्धस्थितोहद्विजश्चतदारोचकोऽसाध्यउक्तोभिषग्भिः ॥ ३९ ॥ अथनिवृत्तिः ॥ अन्नश्रुतिर्भवतिचापिमनोरमाहिशब्दान्तरग्रहणशक्तिमपाकरोति ॥ तच्छ्रोत्रयोर्नयनयोरपिदर्शनंचाप्यन्नस्यवांछतिमनःक्षुधितस्यतस्य ॥ ४० ॥ गुरोःपदाब्जसत्परागपानजातसन्मधोः रसंपिबन्तुमत्कृतेः सुपंडिताविशोध्यवै ॥ ४१ ॥ ॥ इतिश्रीगुरुचरणाब्जमधुपकाशीनाथचतुर्वेदिकृतायांचिकित्साक्रमकल्पवल्ल्यां त्रयोदशस्तबकः ॥ १३ ॥ ॥ गौरीसुतंगजमुखंचगुरुं प्रणम्यश्रीसुश्रुतंचचरकादिमुनीन्समस्तान् ॥ छर्देर्विनाशनमथोहिविलोक्यशास्त्रंकिंचिद्ब्रवीम्यपिमतेरनुकूलमत्र ॥ १ ॥ ॥ ॥ तत्रतावन्निदानम् ॥ ॥ दुष्टैर्दोषैर्वासमस्तैःपृथग्वाबीभत्साघालोकनैर्वैनराणाम् ॥ संजायंतेछर्दयोयाश्चपंचतासांलक्ष्यंडलक्षणान्याशुवक्ष्ये ॥ २ ॥ अतिद्रवैरस्निग्धैरसेर्हृ

द्वेस्तथातिमात्रैर्लवणैरकाले ॥ तथाचसात्म्यैरथभोजनैश्चश्र
मान्द्ययाद्वाक्रमिदोषतश्च ॥ ३ ॥ आपन्नसत्वाप्रमदाप्रसंगा
दजीर्णदोषाद्रुतमश्नतश्च ॥ उत्क्लेशितोवैद्रुतमाननंवाप्यच्छा
दयन्नंगविभंजनैश्च ॥ ४ ॥ तथाद्यन्वैवबहुवेगसंघैर्निरुच्य
तेछर्दिरितीहदोषः ॥ प्रधावितोवक्त्रमथास्यपूर्वरूपंब्रवीम्य
त्रविचार्य्यसम्यक् ॥ ५ ॥ तद्यथा हृल्लासोद्गाररोधाद्याःप्रसे
कोलवणास्यता ॥ वमीनांपूर्वरूपेतुद्वेषस्स्यादन्नपानयोः ॥ ६
॥ अथवातजा ॥ हृन्नाभीपार्श्वशिरसामतिपीडनेनशोषे
णाचापिहिमुखस्यस्वरस्यभेदः ॥ काशेनतोदबहुपीडितमान
वानामुद्गारशब्दबहुलंवसफेनकंच ॥ ७ ॥ विच्छिन्नकृष्णतनुका
चकषायकाचकृच्छ्रेणचाल्पमथवाबहुवेगकार्तिः ॥ छर्दिःप्र
भंजनभवाखलुवेद्यभूपेरुक्ताचदुःखबहुलाप्यथपित्तजाया
म् ॥ ८ ॥ मूर्छास्यशोषबहुतालुशिरोक्षितापयुक्तस्तमोभ्रम
निपीडितएववपीतम् ॥ उष्णंतथाहरितधूम्रसतिक्तकंचतृष्णा
न्वितःखलुवमेच्चसदाहमेवा ॥ ९ ॥ सतन्द्रास्यमाधुर्य्यसन्तो
ष्यनिद्रास्तथाश्लेष्मपूर्वःप्रसेकोरुचिश्च ॥ भवन्तीहसस्निग्ध
मेवाथशीतंघनंश्लेष्मजायांवमेद्धृष्टरोमा ॥ १० ॥ अथसंनि
पातजा ॥ शूलदाहबहुमोहपिपासासंयुतोयदिनरोप्यनु
वेलम् ॥ सान्द्रनीललवणाम्लरसंवाशीतमुष्णरुधिरंचवमेद्वा ॥
११ ॥ वातपित्तकफजासुयदेवतत्तदेवचसमस्तभवायाम् ॥ लक्ष
णंसमुदितंवरवैद्यैश्चाविपाकमरुचिश्चयथास्याम् ॥ १२ ॥
अथासाध्यलक्षणम् ॥ स्वेदस्यमूत्रस्यविशस्तथैवजलस्य

संरुध्ययदोर्ध्वमेति॥ स्रोतांसिवायुःकुपितोनितान्तमुत्सन्नदोषस्य समान्वितंतु॥१३॥ दोषंसमुद्धूयजनस्यकोष्ठात्विण्मूत्रगंधंचसमानवर्णं॥ काशार्त्तितृष्णाश्वसनप्रसक्तंप्रच्छर्दयेद्दुष्टमथातिवेगात् ॥१४॥ तयार्दितोयंशमनातिथिस्स्यात्सुधांनिपीयापिजनोनितान्तम्॥ नोभेषजंतत्रभृशंयशोर्थीकदापिकुर्यादितिमेविचारः॥१४ ॥बीभत्सजेकारवल्लुदौर्हृदाच्चजाताद्वितीयात्वपरामजाच॥ सेयंतृतीयारवलुयाचतुर्थीसायात्म्यजान्याक्रमिजातथैव॥१५॥ याशूलहृल्लासयुताविशेषात्साजन्तुजान्यैरपिलक्षणैश्च॥ हृद्रोगजन्तुप्रसुरवैश्चनूनंसंलक्षिताश्चाप्यपराश्चबोध्याः१६॥ सशोणितापूयसुताचसेयमतिप्रसक्तारवलुछर्दिरत्र॥उपद्रवैरप्यरिवलैरसाध्यासाचन्द्रिकाक्षीणजनस्यनित्यम्॥१७॥ अथास्या उपद्रवाः॥ वैचित्यकाशज्वरपूर्वकाश्चसश्वासतृष्णास्तमकादयोये॥ हृद्रोगहिक्काप्रसुरवास्समस्तात्सुपद्रवाश्छर्दिगदस्य चोक्ताः॥१८॥ अथप्रतीकारः॥ आमाशयोत्क्लेशभवाश्छर्दयस्सकलास्ततः॥ लंघनंकारयेत्पूर्वंविनामारुतजांभिषक्॥ १९॥ संशोधनंविशेषेणकफपित्तभवासुच॥ ससेंधवंघृतंतद्द्वातजायांप्रशस्यते॥२०॥ अन्यच्च॥ लवणत्रयसंयुक्तंलवणेकेनवातथा॥ पयःपयोयुतंपीतंवमिंवातभवांजयेत्॥२१ ॥ पवनवम्यरुचिप्रशमायवैपरिपिबेत्खलुधान्यदशांघ्रिकैः॥ क्वथितवारिशृतांस्तुरसांस्तथात्यपिचलोकयुतैश्शुभयूषकान् ॥२२॥ रसंशरवपुष्पीभवंमाक्षिकाढ्यंप्रपीतन्तुमारीचचूर्णप्रयुक्तम्॥ वमिंवातजातांनिहन्त्यान्वितान्तंयथामामयप्रांभोऽमृतंतु

खजालम्॥२३॥ अथपित्तजायाम्॥ लाजामुद्गमसूरकेरयिप्यवैः कृसायवागूर्हितायूषाश्चाथसुगन्धद्रव्यमधुरैस्तिक्तेरसैर्योजिताः॥मृद्वीकष्टरखलुलोध्रमथवापेयंतृषायांध्रुवंसेव्याःपित्तजछर्दिरोगजमहादुःखौघशान्त्यैसदा॥२४॥ अक्षमात्रशिशीरेणसंयुतंमाक्षिकामलरसंपिवेदलम्॥ चन्दनेनचमृणालवालकौतन्दुलाम्बुननमाक्षिकैर्दृषैः॥२५॥ चंदनादियोगद्वयम्॥ अन्यच्च॥ मुद्गपरियाचितनीरंलाजचूर्णमधुरखंडसमेतम्॥ छर्दिदाहशमनायप्रपीतंनाशयेज्ज्वरमथोप्यतिसारम्॥२६॥ इतिमुद्गकषायः॥ मधुनासहितंशिशिरीचकृतंखलुपर्प्पटजंचशृतंतुपयः॥अपहन्तिभृशंपरिपीतमिदंबहुपित्तवमिंसशिरोक्षिगदाम्॥२७॥ इतिपर्प्पटक्वाथः॥ शिवाचूर्णमेवंनरोमाक्षिकेणविलिह्याशुपित्तोद्भवांछर्दिमुग्राम्॥अधोमार्गगेदोषसंघेनचित्रंजयेद्वैद्यविद्याप्रवीणैरिहोक्तम्॥२८॥ समाक्षिकचन्दनसंयुतचविणमक्षिकाणांचासितासमेतां॥उपद्रवैरप्यखिलैस्तुयुक्तांनिहंतिपित्तप्रभवांचछर्दिम्॥२९॥सितायुतान्लाजभवांश्चसक्तून्समाक्षिकान्सद्घृतसंयुतांश्च॥लिहेन्तदापित्तभवाचछर्दिःशाम्यत्यनेनैवबदन्तिवैद्याः॥३०॥ अथकफजाप्रतीकारः॥ मदनसैंधवसर्षपपिप्पलीयुतजलैरपिनिंबसमन्वितैः॥कफजवांतिशमायचवामयेदपिनरंनररोगचिकित्सकः॥३१॥ यवमुद्गमकुष्टषष्टिकाःखलुगोधूमयुताश्चशालयः॥

१मक्षिकाविट्वर्वरकोरुपादाशनएवचेतिभद्दाद्रिघंटूक्तत्वात् मक्षिकाविट्पोदीनाइतिलोकप्रसिद्धिः

अपितक्कपटोलयूषकाः कफवान्तिप्रशमायभक्षिताः॥३२॥वि
डंगविश्वात्रिफलाकृतंचचूर्णंलिहेन्माक्षिकसंयुतंहि॥वमिःक
फोत्थाद्रुतमित्यमत्रशाम्यत्यनेनैववदन्तिवैद्याः॥३३॥ अथत्रि
दोषजाप्र०॥ द्राक्षायाश्चपलंपलैकमथवाधान्याःफलंशर्करा-
तत्तुल्याखलुमाक्षिकंपलमितंनीरेणपेष्यं तथा॥तच्चैवाष्टपलो-
न्मितेऽप्यथपुनर्वस्त्रेणवैगालितंछर्दिंहन्तिसमस्तदोषजनितांपी
तंत्विदंपानकं॥३६॥ अन्यच्च॥ दाडिमीफलरसेनसक्तवोमा
क्षिकेणचमसूरसंभवाः॥पानवच्चपरिसेवितान्नृणांनाशयन्ति
हिसमस्तजा वमिम्॥३७॥ सत्वंगुडूच्यामधुनावलीढंछर्दिंचदो
षत्रयजांनिहन्ति॥जातीरसंमागधिकाकपित्थमध्व न्वितंपीत
मथोतथैव॥३८॥ योगद्वयमिदम्॥ अथैलादिचूर्णम्॥ ॥
एलाचन्दनमेघनागचपलालाजाकणाकोलजामज्जाचापिफली
सदिन्द्रकुसुमंसर्वैस्समानासिता॥ संचूर्ण्याथविलिह्यमाक्षि
कयुतंचूर्णंनरोनिश्चितंदोषाणांत्रितयेनचाप्यतिबलांछर्दिंनिहं-
न्तित्वरा॥३९॥ अथसामान्यछर्दिप्रतीकारः॥ कपित्थलाज
माक्षिकैःकणोषणासमन्वितैःहरीतकीसलाजधान्यजीरकैः
कटुत्रयैः॥समाक्षिकैश्शिवासिताकणोषणादिभिस्तथासमा-
क्षिकैस्त्रयंत्विदंवमिंजयेत्संशयम्॥४०॥ योगत्रयम्॥ म
नश्शिलाकपित्थलाजमागधीसुचूर्णितंसमाक्षिकं तथोषणेनसं
युतंवमिंजयेत्॥तथामयूरपक्षभस्ममाक्षिकेणसंयुतंचलीढ
मेवगोणिकासुभस्मवारिमाक्षिकैः॥४१॥ योगत्रयम्॥ सु
मातुलुंगनीरलाजशर्कराकणादिभिस्समाक्षिकैःप्रसेवितैर्वमि

र्विनाशमेतिवै॥ तथाफलत्रिकामृतापटोलनिंबसंशृतंपयोघृतं चमाक्षिकेणपित्तजांवमिंजयेत्॥४२॥ योगद्वयम्॥ सद्वयं स्वगुरुं चभजेशुभदम्॥ ॥इतिश्रीगुरुचरणाब्जमधुपकाशीनाथचतुर्वेदिकृतायांचिकित्साक्रमकल्पवल्ल्यांछर्दिप्रतीकारपरागतश्चतुर्दशःस्तबकः॥१४॥ ॥ ॥

सुधांशुमौलिंचशिवंप्रणम्यश्रीसुश्रुतादीनखिलान्विलोक्य॥ तन्म्यांश्चिकित्सामथसंब्रवीमितृष्णातुराणांचसुखार्थमेव॥१॥

॥तत्रतावन्निदानकम्॥ भयश्रमाभ्यांबलहानितश्वाप्यूर्द्ध्वंचितंपित्तविवर्द्धनंयत्॥ सवायुपित्तंभजतांनराणांतृष्णाकरंतालुगतंप्रकुप्य॥२॥ दोषैर्नूनंवारिवाहिष्वथोवास्रोतःस्वेवंदूषितेषु प्रकृष्टः॥ तृष्णास्तिस्रोथाचतुर्थीक्षतात्सा जातावान्यापंचमीसाक्षयोत्था॥ आमोद्भूतायाचषष्ठीतथान्याभक्तोद्भूताकीर्तितासप्तमीसा॥३॥ अथैतासांपूर्वरूपाणि॥ स्यातांचेत्तोददाहौवदनदलकयोरोष्ठतास्वोश्चतद्धेसंतापश्चांतिपूर्वप्रलपनमथचैपूर्वरूपाणितासाम्॥ रूपंपीत्वापिबन्वापुनरपिखलुचैनैवतृप्तिंसमेतिक्षामास्यश्चशंखमूर्द्धिप्रभवतियदिचेत्तोदएवास्यनीरं॥४॥ अथवातादिसमुद्भूतानांतासांपृथग्लक्षणानि॥ स्रोतोरोधोनिलोत्थावदनविरसतावातजायांविशेषाद्दाहोमूर्छारुणत्वं

१ पित्तविवर्धनंयद्वस्तुतज्जनतामिति २ नतुवारिवाहिष्वित्यत्रबहुत्वंविरुद्धं ५ द्वेउदकवहेइति ३ श्रुतोक्तत्वाद्भेदं नयोरेवातिभतानयोगादितिबहुवचनंसाधु ४ पुनरपिपुनः पुनःनीरंपीत्वातृप्तिंनैवसमेतीत्यन्वयः

नयनगतमथोवक्त्रगंवाकटुत्वम्॥ अन्नद्वेषोतिशोषोभवतिखलु तथाशीतलेवाभिलाषस्संतापःपित्तजायामथकफजनितालक्षणं संब्रवीमि॥५॥ वांत्यस्यैवाथरोधात्कफवतदहनेचातिनिद्रागुरुत्वं माधुर्य्यंवक्त्रगंचेत्तृडतिकफभवायांचशुष्यत्यवश्यम्॥ तृष्णातुर्या क्षतोत्थायदिभवतिहिरुक्छोणितस्यातिवृद्धिश्चान्यायावैपरास्या क्षयपरिजनितापंचमीसाक्षयोत्था॥६॥ रसक्षयेयोनिचलक्षणा नितान्येवचास्यांतुभवंतिनूनम्॥ तयाभिभूतोनसुखंप्रयातिपा- नीयपानेनमुहुस्तुमर्त्यः॥७॥ दिवानिशंतप्यतिसन्निपातजातां तुकेचिद्विषजोवदंति। त्रिदोषचिन्हामभवाचषष्ठीहृच्छूलनिष्ठी वनसादकर्त्री॥८॥ स्निग्धाम्लगुर्वन्नभुजस्तथैवनूनंयथावालव णाशिनस्तु॥ यासमभीताम्यतितत्रसोयंदीनस्वरास्योथविशुष्ककण्ठः॥९॥ अथासाध्यालक्षणम्॥ ज्वरक्षयश्वाससका शवान्तिप्रसक्तदेहामनुजास्तथास्याम्॥ सोपद्रवायांयमराज- धानींव्रजन्तिवैयक्षितिपावदन्ति॥१०॥ अथप्रतीकारः॥ यदिकफभवितृष्णावातजानीरपानादुदरमपिचपूर्णंचर्करीत्यत्रवि द्वान्॥ सकणजलविपानैर्वामयेत्तंतदेवमनशितमिहवैद्यैर्योग्यमु क्तंनकैश्चित्॥११॥ दाडिमाम्रतकमातुलुंगकैःकार्यमेवप्रतिसार णंबुधैः॥वायुनाशकरमन्नपानकेशीतलंमृदुलघुप्रयोजयेत्॥१२ अन्यच्च॥ शिरसिसकलगात्रेष्वेवसद्गन्धितैलंप्रमृदितमथतत्रा

---

१ननुकफस्यशैत्यप्राधान्यात्कथंकफजातृष्णेत्यतआह स्वकारणकुपितकफेनहतोय आच्छादितोग्निराभिः तस्मिंस्तथाभूतेतस्योष्मणावारिवाहस्रोतश्शोषणात्कफजेतियावत्॥ उक्तंचपुस्तके हृत्पीडाकफश्चस्यतृष्णापुंस्त्वहानिस्तथा वर्चःकार्श्यमूर्च्छाचक्रमःक्षीणेरसेभवेदिति. साकंअभसहादियोगोक्तनीया.

रस्वर्णलोष्ठैःप्रतप्तैः ॥ जलमग्निचरूरखोष्णंपीतमाशुप्रकर्षाद्दलय तिबहुवातोद्भूततर्षविशेषान् ॥१३॥ सशर्करंमाक्षिकसंयुतंकनिर्वा पितंवालुकयानिपीतम् ॥ तृष्णान्तथावातभवांनिहन्तिदोषंयथासू र्य्यकरप्रचण्डम् ॥१४॥ अथपित्तजायाम् ॥ सुस्वादुतिक्तद्रवशी तपानंपित्तोत्थतर्षेथनियोजनीयम् ॥ उशीरकाश्मर्य्यधनाढ्यमृद्वी खंडादिमूर्वाशिशिरैर्युतंकंस् ॥१५॥ विमलतन्दुलवारिसितायुतंशि शिरपङ्कयुतंचसमाक्षिकम् ॥ अपिसलोहितपित्ततृषार्दितदवथुमो हशमायपिबेदलम् ॥१६॥ अथकफजायाम् ॥ कटूष्णतिक्त द्रवमम्भतांचतृष्णाक्षयंयातिकफप्रवृद्धा ॥ बिल्वाढकीधातकिपं चकोलदर्भैःश्रृतंवारितथात्रपेयम् ॥१७॥ सुनिंबपत्रैःश्रृतवारिपानैः स्संछर्दनंयःकुरुतेनरस्तु ॥ सुखंव्रजेद्धैकफतर्षपीडायुक्तोनयोगः परमोस्तितस्मात् ॥१८॥ अथसामान्यविधिः ॥ सौवर्चलं जीरकमार्द्रकंचसश्रृंगवेराईजलप्लुतानि ॥ मद्यानिलद्व्यानित्वग श्ववंतिनिपीयतर्षंविजयेन्मनुष्यः ॥१९॥ जलोदकंमाक्षिकहारहू रारवर्जूरवंशीकसितासमेतम् ॥ पीतंतथातर्षविनाशनायदावाग्नि नाशाययथांबुवृष्टम् ॥ २०॥ द्राक्षेक्षुनीरपयसांसमधूत्पलानां य ष्टीमधुप्रयुतनीरथिपेपितानाम् ॥ शाम्यंतितर्षनिचयास्सकलाः प्रवृद्धाःपानान्नृणामखिलतंत्रसुलेखितानाम् ॥२१॥ इतिद्रा क्षादिपानम् ॥ धान्याम्लैःपरिपेषितामलफलंसद्दाडिमाम्ल द्रवैःपीत्वावार्द्रपटावृताखिलवपुर्जलाढ्यहर्म्येशस्ते ॥ नीरोत्क्षेप नयंत्रनिर्गतजलावृष्ट्यान्वितेधूपितेतृष्णास्तत्रनरस्तथाचविजये द्वहुवासुन्दरीम् ॥ २२॥ अथवटप्ररोहवटी ॥ वटप्ररोहान्ति

तनीलमुत्पलंसलाजचूर्णंमधुनाविपेषितम्॥ गुटीकृतंतन्मुखपंक जेस्थितंनिहन्तितर्षन्तुभृशंचिरोथितम्॥२३॥ अथक्षतोत्थादितर्षप्रतीकारः॥ रसानामसृजश्चापिपानैस्तद्रोगनाशनैः॥ क्षतोद्भवांजयेत्प्राज्ञःक्षीरेणान्यांक्षयोद्भवाम्॥२४॥ वचाबिल्वयुक्तैस्तथादीपनानांकषायैर्नरश्चामजांवाहरेच्च॥ यथैवेहगुर्वन्नजातांहिवैद्यःप्रकर्षेणचोल्लेखनैर्नक्षयोत्थाम्॥२५॥ छागमांसरससमाज्यसमेतंशीतलंसमधु खंडयुतंयः॥ नाशयेत्खलुपिबेच्चतर्षकंमोहदाहमदसंयुतमुच्चैः॥२६॥ रसनारक्तागुटिकानिशुभानिरमेवसुखबृजगतानिहिता॥तृषमाशुजयेच्चयथा घनयंजलमेवतुगांगमथापियथा॥२७॥ पूर्वातङ्कनिपीडितस्तुतृषितोनोवाल भेच्चेज्जलंमोहंप्राप्यपुरानतःपरमसौप्राणैर्वियुज्येद्यतः॥तस्मात्तांवरभेषजैःपरिजयेत्पूर्वंजितायांजितप्रायायेनगदास्ततःपुनरथोनीरंनवार्यंसदा॥२८॥ प्रणमामिसदेवनिजांस्तुगुरून्॥ ॥ ॥इतिश्रीगुरुचरणाब्जमधुपचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्ल्यांतृष्णाचिकित्सापरागगान्धितःपञ्चदशस्तबकः॥१५॥ ॥ नत्वाश्रीगणनाथतातममरैस्संपूज्यमानंसदाहृत्वासुश्रुतवाग्भटादिकमलंतन्त्राणिचान्यान्यपि॥मूर्छापस्मृतिमद्यपानजमहारोगाविशोत्थाश्चयेतेषामत्रचिकित्सितंपरमथोवक्ष्येऽद्भुतंहितम्॥१॥ तत्रतावन्मूर्छानिदानम्॥ क्षीणस्यवैविपुलदोषयुतस्यहीनसत्वस्यवाबहुविरुद्धकृताशिनश्च॥ वेगावघातमभिघातमथापिकुर्वन्नूनंनरस्यकरणायतनेषुदोषैः २ आभ्यन्तरेषुचबहिःप्रभवेषुदुष्टानूनं

विशन्निवयदैवतदैवमर्त्यः ॥ संमूर्च्छतीह खलु रूपमथापि चास्या-
स्सत्वन्न वर्णितमहं हितनो ब्रवीमि ॥३॥ अथ रूपम् ॥ संज्ञाव
हासु सकलासु च नाडिकासु नूनं तथैव पिहितास्वनिलादिभिस्तु ॥
हृद्व्यथोह करमाशु तमोभ्युपेति तस्मान्नरः पतति काष्ठवदेवशी-
घ्रम् ॥४॥ मोहो मूर्च्छेति नामा भवति च खलु सा षड्विधा चाथ वाता
देकापित्ताद्द्वितीया कफ परिजनिता यात्तृतीया प्रदिष्टा ॥ अस्रेणा
न्या चतुर्थी भवति च नियतं मद्यजान्या विषोत्था तास्वेवं षट्सु पि
त्तं प्रभवति सहसा नत्सभुत्वं यतो रस्याम् ॥५॥ हृत्पीडा जृंभणं ग्ला
निः संज्ञादौर्बल्यमप्यथ ॥ तासां च पूर्वरूपाणि यथास्वं ताभि-
र्भावयेत् ॥६॥ नीलारुणं कृष्णमथापि पश्यन्नभस्तमः प्राविश
तीह शीघ्रम् ॥ प्रबुध्यते वाथ स वेपथुस्तु काश्याङ्गमर्दैन युतस्तु
जन्तुः ॥७॥ श्यावारुणच्छाय तनुर्विशेषाद्भ्रश्च शूलवान्वायुभवे ऽ
थ पित्तात् ॥ जाते च रक्तं हरितं च पीतं पश्यन्वियद्यातमभ्युपैति
॥८॥ संतापतृष्णासहितस्तथा सौ प्रबुध्यते स्वेदसमन्वितश्च ॥ स
भिन्नवर्चाः खलु रक्तपीतनेत्राकुलश्चाथ कफोद्भवे तु ॥ ९॥ तमोघ
नैरावृतमेव मेघसंकाशमाकाशमथापि पश्यन् ॥ तमस्तथा प्रा
विशतीह नूनं प्रबुध्यते वाथ चिराच्च सो यम् ॥१०॥ सान्द्रेण चैवा-
प्यथ चर्मणेव संप्रावृतैरंगभरैश्च युक्तः ॥११॥ प्रसेकहृल्लाससयुत
स्तथा सौ मूर्च्छाय एवाथ च सर्वजाते ॥ ११॥ विनैव बीभत्सकचेष्टि
तैस्तु सर्वाकृतिः पातयतीव शीघ्रम् ॥ यथागतापस्मृतिरेव जन्तु
मथो ब्रुवे लोहितजं तथैव ॥ १२॥ पृथ्व्यापश्च तमोरूपं रक्तगन्धश्च
तन्मयः ॥ श्रुविमूर्च्छति तेनैव रक्तगन्धेन मानवाः ॥ १३॥ स्तब्धांगदृष्टि

स्त्वसृजाविमूढोच्छ्वासश्वसंमूर्छितएवनूनम् ॥ मद्येनशेतेविलपन् विशेषाद्विनष्टविभ्रान्तमनामनुष्यः॥१४॥ गात्राणिभूमावपिविक्षिपसोप्यावज्जरांयातिनिनतत्तथैव ॥सस्वप्नतर्षश्वसवेपथुश्चतमोऽपिनूनंविषमूर्छितेतु॥१५॥ मूर्छापित्ततमोद्भवाऽनिलरजःपित्तोद्भवोथभ्रमःश्लेष्मावाततमोद्भवापिचतथातन्द्राथनिद्रारवलु नहूतश्लेष्मतमोद्भवापिचयदासर्वेन्द्रियार्थेष्वपिनोवृत्तिःक्लमगौरवावपितथाजृंभातन्द्रागदे॥१६गतवेगेषुदोषेषुमदमूर्छादयश्चये॥स्वयमेवोपशाम्यन्तिसंन्यासोनौषधैर्विना॥१७॥ वाग्देहमानसभवामथयाचचेष्टामाक्षिप्यतामतिबलाश्चमलाविशेषात् ॥न्यस्यन्तिजन्तुमबलंपरिश्वस्थितातःप्राणाश्रयेषुचनरःखलुकाष्ठवद्वा॥१८॥ सन्याससन्यस्तनरोविशेषान्मृतोपमःप्राणगणैर्विमुक्तः॥भवेच्चसद्यःस्सफलांक्रियांवात्यक्त्वाऽचिकित्स्योथसुवैद्यधुर्यैः॥१९॥ ॥ अथासाध्यलक्षणम्॥ जलजवेणुमृदङ्गनिनादनैरपिचगीतमुरैर्बहुपल्लकैः॥स्मृतिमथापियदैवनयातियोव्रजतिभानुजसन्निधिमेवसः॥२०॥ अथप्रतीकारः॥ ॥व्यजनाधुतयश्चशीतलान्यपयानानिसुगन्धवन्तिच॥ मणिहारधृतिस्तुशीतलान्यवगाहादिविधीन्निकारयेत्॥२१॥ अथात्रपथ्यानि॥ नीराणिनूनंमधुरेगणेहिसिद्धानिवाजांगलजारसाश्च॥ सैंदाडिमालोहितशालयश्चमूर्छासुपथ्याश्वसतीनमुद्गाः॥२२॥ सकोलमज्जोषणकेशराणिसोशीरकाण्येवजलप्लुतानि॥निपीयलीढ्वामधुनाथकृष्णांमूर्छांजयेदत्रनचित्रमस्ति॥२३॥ योगद्वयम्॥ लोकाऽमृताग्र

१ सदाडिमाजांगलजारसाइत्यन्वयः

न्धिकपुष्करणां सुधान्वितानां सकणं कषायम् ॥ स्विन्नामलं विश्वमधुप्रयुक्तं द्राक्षान्वितं वाथ तथैव लीढम् ॥ २४ ॥ मूर्छासु रक्तप्रभवासु विषं यथाविधिस्तु मद्यप्रभवासु निद्राम् ॥ सेवेत तद्वद्भिषजा सुपद्यद्विषप्रयुक्तं च तदेव सर्वम् ॥ २५ ॥ दशनं दंशनकेशविलुंचनान्यनलदाहनखान्तरवेधनम् ॥ प्रधमनान्यवपीडसुतानिवाकृषणघर्षणधूमनिषेवणम् ॥ २६ ॥ खलु विबोधनमेभिरथात्र वा प्रशमाय कषायममुं पिबेत् ॥ यदुदितं सघृतं च दुरालभाकृतमथामलकीरससस्कृतम् ॥ २७ ॥ युग्मेस्मिन्योगद्वयमुबोध्यम् ॥ सूतं कणामाक्षिकसंयुतं तु सेकावगाहादिकशीतलं च ॥ मूर्छासु कल्याणघृतं च सेव्यमपस्मृतौ चाथ मदेपि तद्वत् ॥ २८ ॥ अथ पानात्ययः ॥ ये वै विषस्य च गुणाः खलु तेपि मद्ये भेदस्तु तत्र सबलास्त्वबलास्तथात्र ॥ मिथ्योपयुक्तेन भवंत्यतस्तु तेनैव दुष्टो हि मदात्ययोयः ॥ २९ ॥ प्राणाः प्राणभृतो मथान्नमुदितं तद्वच्च मद्यं स्मृतं तद्वाऽयुक्तिनिषेवितं विषमहो युक्त्या विषं चामृतम् ॥ तस्मान्मद्यनिषेवणं समुदितं स्निग्धान्नमांसैः समं काले चैव सुमात्रया परिपिबेद्धृष्टो जरामृत्युजित् ॥ ३० ॥ अथैतन्मदाः ॥ बुद्धिप्रीतिसुखस्मृतश्च जनयेत्पानान्ननिद्रारतिं संपाठस्वरगीतवृद्धिमतुलां रम्यो हि पूर्वो मदः ॥ मध्ये बुद्धिगवां स्मृतेरपि तथा चाव्यक्ततावाप्यते सोन्मत्ताकृतिरप्रशान्तहृदयश्चालस्यनिद्राहतः ॥ ३१ ॥ अप्रक्ष्याणि खादेदगम्यां च गच्छेद्गुरूंश्चावमन्येद्वदिस्यानियानि ॥ वदेत्तान्यसंज्ञोऽस्वतन्त्रः पुमान्स तृतीये मदे वा चतुर्थेपि सोयम् ॥ ३२ ॥ भवेत्तैव गूढो यथा प्रमदारुस्तथा निष्क्रियोऽकार्य्यकार्य्या

द्यवेत्ता ॥ मृतादप्यसौ चामृतस्तादृशं कोमदं भाविदोषैर्विमूढं विनैव ॥ ३३ ॥ नभीतो न कामातुर्जेनापियुक्तो न तृष्णान्वितो न क्षुधासंयुतश्च ॥ नशोकाभितप्तो न भाराध्वपीडापरिक्षीणदेहो न वे गावरोधी ॥ नचात्यम्लरूक्षान्नयुक्तोदरो यो न सोजीर्णभोजी न चैवाऽव लोयः ॥ निचोष्णाभितप्तो न निर्भक्तमेकं पिबेत्क्वापि मद्यञ्च नाना विकारान् ॥ ३५ ॥ शरीरस्य भेदादिकान्दुष्टरोगा ह्युत्पाद्यपानात्य यादीन्विशेषात् ॥ पिबेच्चेत्तदा देहनाशं विदध्यादतस्तानगदांस्तच्चिकित्सां च वक्ष्ये ॥ ३६ ॥ पानात्ययः परमदः पानाजीर्णमथापि च ॥ पानविभ्रमसुग्रं हि तेषां वक्ष्यामि लक्षणम् ॥ ३७ ॥ हिक्काश्वास शिरःकंपपार्श्वशूलप्रजागरैः ॥ बहुप्रलापिनां बोध्यं वातप्रायं मदात्ययम् ॥ ३८ ॥ दाहतृष्णाज्वरस्वेदमोहातीसारविभ्रमैः ॥ बोध्यं हरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ ३९ ॥ हृल्लासारुचिच्छर्दीद्यैस्तन्द्रास्तैमित्यगौरवैः ॥ बोध्यं शीतपरीतस्य कफप्रायं मदात्ययम् ॥ ४० ॥ त्रिदोषजस्सर्वलिंगैर्ज्ञेयश्चाथ मदात्ययः ॥ वक्ष्ये परमदं वापि यथोक्तं सुश्रुतादिभिः ॥ ४१ ॥ श्लेष्मोच्छ्रयोंगगुरुतामुखवैरस्यमेव च ॥ विण्मूत्रशक्तिस्तन्द्रा चाप्यरुचिस्तर्ष एव च ॥ ४२ ॥ शिरोरुक्सन्धिभेदश्च मदे चैव परपूर्वके ॥ पानाजीर्णमथो वक्ष्ये यथोक्तं परमर्षिभिः ॥ ४३ ॥ आध्मानं च विदाहोंगे तथा चोद्गिरणं खलु ॥ पित्तप्रकोपजातानि पानाजीर्णे भवन्ति च ॥ ४४ ॥ हृद्गात्रतोदः कफसंस्रवश्च कंठस्य धूमायनमत्र मूर्छा ॥ द्वेषोन्नमद्यप्रसुखेषु तेषु चान्ति शिरोरुग्वदनप्रवाहाः ॥ ४५ ॥ पानविभ्रम एनानि लक्षणानि भवन्ति हि ॥ अतीमिलक्षणं नेषां यदस्माध्यं समीरितम् ॥ ४६

सहीनोत्तरोष्ठंतथा॥ मन्ददाहंचशीतंह्रितैलप्रभास्यंसहिक्कम्॥ज्व
रश्रांतिहृल्लासवान्त्यादिभिस्तुतथापार्श्वशूलेनकाशेनयुक्तम्॥
४७॥सदन्तोष्ठजिह्वा॥सितंवापिनीलंचपीताक्षमेवंक्षतोत्थास्त
माशु॥व्रजन्तंसभांधर्मराजस्यमत्वाहरेर्नाम्नसाहाय्यमस्मै
प्रदेयम्॥४८॥ इतिपानात्ययादीनांनिदानलक्षणानि॥
अथैतेषांप्रतीकारः॥ तत्रतावत्पानविधिः॥ अविधिनापरिपी
तमिदंमधुप्रकुरुतेबहुरोगगणान लम्॥ प्रथममेवविधिस्तु
निरूप्यतेअतइहैवचमद्यनिषेवणे॥४९॥ तत्रतावन्मात्रानत्पा
नकालेभ्ययथा॥ पलद्वयंशुद्धतनुः प्रभातेमध्यान्हकालेद्वि
गुणातुतस्मात्॥ सुस्निग्धभोज्येनपिबेच्चमद्यंप्रदोषकाले॥ष्टप
लास्यमात्रा॥५०॥ माध्वीकादिसुशीतलंचमधुरंग्रीष्मेपिब
त्तन्निशितीक्ष्णोष्णांखलुगौडिकंसुमुदितंवापैष्टिकंशीतले
॥वर्षायांचतथावसन्तसमयेयत्किंचिदेतन्मधुपेयंसर्वरसायनं
चसुखदंकालंमयावर्णितम्॥५१॥ स्थितावामेश्यामारमणाकु
शलापूर्णचषकंस्थितंसव्येंचाग्रेमरिचलुलितंछागपिशितम्॥
तथावीणानादेस्सरसकविभिर्मोदितमना॥पिबत्येवंमद्यंयदि
भवतिवैभैरवकृपा॥५२॥ अथास्यपानेविशेषविधिः॥ कु
सुमितलतोद्यानेषुप्रगूढप्ररूढांकरैर्मयूरहिरेफावलीनीलकंठा
दिपक्षिप्रचारैस्तथाकूजितेर्वेणुवीणादिवाद्योद्भवैस्स्वनैर्द
क्षिणाशासमीरोल्लुलत्पत्रहस्तप्रसारैर्युवावृक्षसंघैस्समालिं
ङ्गिताभिर्लताभिर्विशेषेणसंशोभितेष्वेवसौधेषुकारूकचातु

१नेत्रइतिशेषः २रक्तनेत्रम्

र्घ्यनिर्माणजालान्तरप्रासपीयूषभानुप्रकाशप्रकाशीकृताचित्र
मालाविराजत्सवज्जन्म्रसलूशीकरैर्भ्रमतर्षप्रचारेषु शृंगारसंभार
संभूतरत्नाढ्यभूषाविराजन्नवस्त्रीकरेणोपनीतं सुपात्रस्थितं मा
त्रयातच्चमांसोपदंशं पवित्रं पिबेदत्र मद्यं मदोषेषु विद्वानित्थं सद्विधि
मद्यपाने प्रदिश्य यथोक्तामिमां ये विधिं त्यज्य मद्यं पिबन्त्येव मूढा-
स्तु तेषां तु नो पानजाता गदा ये तु तेषां विनाशाय शास्त्रोदिता सच्चि
कित्सा मया कथ्यते सा यथा ॥५३॥ अथैतेषां प्रतीकारः ॥
सौवर्चलं व्योषयुतं तु किञ्चिज्जलान्वितं जीर्णमदाय मद्यम् ॥ तद्वा
तपानात्ययनाशनाय देयं बुधैः शास्त्रविदो वदन्ति ॥ ५४॥ सन्मातुलुं
गाम्लसुदाडिमीभिः पानानि वा जांगलजा रसास्तु ॥ स्निग्धोष्णभू
तालुवणास्तथैव वातोत्थपानात्ययनाशनाय ॥५५॥ अथपि
त्तजे ॥ ॥वटशृंगहिमं हिमं पिबेदथ पित्तोत्थमदात्ययापहम् ॥
ससितं सजलं ततः परं कियदप्येव हिमद्यमन्वहम् ॥ ५६॥ ससितं
च हिमं परूषकामलखर्जूरकगोस्तनीद्रवम् ॥ अपहन्ति च पित्त-
संभवं खलु पानात्ययमेव सेवितम् ॥ ५७॥ अथकफजे ॥ ॥
मदात्ययेकफोत्थिते पुनःपुनस्तदेव वा ॥ पिबन्स्रुशं वमन्सुखं ल
भेद लं निरंतरम् ॥५८॥ एलात्वङ्मरिचादिभिर्द्विगुणितं सौवर्चलं
जीरकं वृक्षाम्लं च तथाम्लवेतसमथो खण्डैकभागं तथा ॥ अष्टांगलव
णं तथैव दहनं संदीपयेद्भक्षितं तद्वद्वा कफजं मदात्ययमहो निःशेषयत्येव हि ॥
५९ ॥ अथत्रिदोषजप्रतीकारः ॥ यदा शंकरे शंकरो शंक

१ यदा शंकरं सान्निपाते शंकरश्चिकित्साशंकरः नशांकरोत्येव नदा मद्यं परित्यज्य दुग्धं निषेवेदिति च यथोक्तं च सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितं आभिः क्रियाभिः सिद्धाभिः शान्तिं यान्ति मदात्ययाः नचेन्मद्यं क्रमं हित्वा क्षीरमस्योपकल्पयेत् ॥ लंघनाद्यैः कफे क्षीणे जाते दौर्बल्यं लाघवे नेजस्तुल्यगुणं क्षीरं विपरीतं तु मद्यवदिति पुरातनसंमत इति ॥

रोस्येवनोचेत्परित्यज्यमद्यंचदुग्धम्॥ निषेवेत्कफस्यैर्यदौर्बल्यनाशे॥ऽन्यथानोभजेत्क्वापिकिंचिद्विरुद्धम्॥ ६०॥ फलत्रिकंमाक्षिकसंयुतन्निशिगुडार्द्रकं चैवतथोषसिप्रभवम्॥ विमूर्छितोयस्तुमदान्वितोभजेत्सकामलोन्मादगदान्वितोपिच॥ ६१॥ पानात्ययंसस्रदिनानिवाष्टावजीर्णमूर्द्धं भजते हि पानम्॥ नाशायतस्यैवविमार्गगस्यश्लोष्मोपनाशोक्तविधिःप्रदिष्टः॥ ६२॥ अथेतरस्मादकवस्तुविशेषभक्षणसंजातमदप्रतीकारः॥ कुस्कमफलजनीरंपीतमेकंगुडेनशमयतिमदमुच्चैःकोद्रवाणांतथैव॥ प्रबलमदमथोयद्धूर्तबीजोद्भवतदपहरतिनिपीतंचाजदुग्धंसिताढ्यं॥ ६३॥ वृन्ताकघन्तस्वरसोनिहन्याद्धूत्तूरबीजोत्थमदंयथैव॥ आकण्ठपीतंतुपयस्तुशीतंपूगोद्भवंचापिमदन्तथैव॥ ६४॥ विजयतेविजयामदनाशनेसकलमम्लरसंचफलादिकम्॥ अथतथाप्यहिफेनविषादिजंशमनशीतलवस्तुहरेदलम्॥ ६५॥ सशर्करंघृतंपिबेद्यदेवचेज्जनःक्वचित्॥ मदनंयातिमद्यजंपिबन्नसौप्रशंसुङ्कः॥ ६६॥ अन्यच्च॥ जलस्नातस्स्रग्वीतुहिनशिशिरामोदितनत्रुस्सभक्तांवाराश्रीसघनमधुकोल्लागदस्युतम्॥ सधान्यैलावालुप्रयुतकवलंयस्तुसमुखेदधानस्तद्गन्धंश्र जतिनपुनःक्वास्तित्वमदः॥ ६७॥ रसगन्धककज्जलीनरस्ससितांचामलकीरसेनयः॥ पिबतीहमधुप्रपानजानपहन्यादखिलान्गदांस्तुसः॥ ६८

॥ अथदाह० तत्रतावन्मद्यजदाहनिदानचिकित्से॥ शीशःपायात्

१अहानिसप्तवाष्टौवानृणांपानात्ययःस्मृतः पानंहिमर्जनेऽजीर्णमतऊर्द्धंविमार्गगम् पानाजीर्णविनाशायकुर्यात्कफहरंविधिमितिमाज्ञः २कूष्माण्डनीरंगुडेनसाकंछागीदुग्धं ३मदात्ययेदाहोस्यंनीतिमदात्यया॰ नन्तरंदाहोम घज मथममुच्यते.

चरत्वयस्छन्दः॥ रक्तपित्तमूर्छितेनचोष्मणात्वचंगतेन॥ मद्यपान तोग्रतेनदाहरोगएवतेन॥६९॥ भिषक्तुतत्रपित्तवन्नियोजये च्चभेषजम्॥ पुराणधान्यमुद्गकान्सितापयश्वशीतलम्॥७०॥ श तधौतघृतेनमानवोबहुधाभ्यञ्जनमाचरेत्तथा॥ यवसक्तुककोलदाडिमामलकाम्लान्दवथोभजेदलम्॥७१॥ तथारुनालार्द्र सुवाससैवसंछादयेद्दह्यमुतस्यचांगम्॥ समस्तसुखैः परिवीजये त्तंतालस्यवृन्तेनचचंदनाक्तम्॥७२॥ अथरक्तजदाहः॥ सक लतनुगमेवोद्रिक्तरक्तंनराणांदहतिचखलुबाह्याभ्यन्तरेषुप्रकाम म्॥ अपिबतखलुसोयंचूष्यतेत्र्यप्यनेवारुधिरेनयनदेहोलोहग न्धाङ्गवक्त्रः॥७३॥ रक्तजोक्तसमंपित्तसंभवेखलुलक्षणम्॥ भेषजंचतयोस्तुल्यमन्यत्सर्वन्तुपूर्ववत्॥७४॥ अथतृष्णानि रोधजः॥ क्षीणेधातौचाथतृष्णानिरोधात्तेजोवृद्धंचान्तरेवाब हिर्वा॥ दाहंकुर्य्यात्तत्रशुष्कास्यकंठोजिव्हांकृत्वावाबहिर्वेपतेसो ॥७५॥ रुधिरपूरितकोष्ठजएवयोदवथुरस्तिचदुस्सहएवसः॥ अथचधातुधिनाशभवेनरोतृषितएवमुहुःपरिमूर्छति॥७६॥ क्रियाहीनः क्षाम स्वरइहभृशंपीडिततनुर्व्यथोमर्माघातप्रभवदव थोत्वा मृतमपि। पिबन्नेवप्रायोव्रजतियमराजस्यभवनंत

१ मद्यपानकुपितोष्मा कायाग्निः तेनरक्तपित्तमूर्छितेनपुनर्मद्यपानतोग्रतेनउत्उद्गनेनत्वचंप्राप्तेनतेनैवदाहरोगइत्यर्थः उक्तंचसुश्रुतादिभिः त्वचंप्राप्तस्समानोष्मारक्तपित्ताभिमूर्छितः दाहंप्रकुरुतेघोरंपित्तवत्तत्रभेषजमिति २ आचूर्णवद्रसनामनुभवतीत्यर्थः ४ रक्तनेत्रशरीरः ५ कायाग्निः ६ रुधिरइतिशस्त्रप्रहारजनितरक्तपूर्णकोष्ठजंदहमाहतचरक्तजेनास्यपौनरुक्त्यम्सकलतनुगमेवोद्रिक्तरक्तमितिवच नात्

थान्येशीतांगव्रजयुतजनास्समस्रकृभूशम्॥७७॥ अथक्रमाद्दे तेषांप्रतीकारः॥ रसैर्जांगलैस्तृसदेहस्यशाखाश्रयांरोहिणीं वेधयेद्वैद्यभूपः॥ शिरांरक्तजस्याशुनाशायनूनंयथान्यायमेवं चदाहस्यपुंसः॥७८॥ अथतृष्णानिरोधजे॥ पयोष्णमंभः परिपीयविद्वान्दुग्धंतथावारसमिक्षुजातम्॥सुशर्करांभक्ष्यथयो क्रमन्यत्तृष्णानिरोधोत्थगदाद्विमुच्येत्॥७९॥ अथरक्तपूर्ण कोष्ठजे॥ सकलमसितमंगंयस्यपादाद्युधस्यमुखमलमथव ध्वानस्थकूपोत्थ तोये।।परिपिबतिनरोयःपाचितस्याशुनीरंस- तुभवतिविमुक्तोरक्तकोष्ठोत्थदाहात्॥८०॥ अथसामान्यत स्सर्वेषांप्रतीकारः॥ तत्रतावल्लेपः॥ सेव्यलोध्रफलिनीकु टन्नटान्नागपुष्पजलसंयुताच्भिषक्॥कालिकाफलरसेनपेषि- तान्लेपयेद्दवथुनाशनायवै॥८१॥ ह्रीबेरपद्मकजलांबुभिरेवपू- र्णासोशीरचन्दनसुवासितशीतलाम्ब॥द्रोणींनरस्समवगात्य सदासदाहहन्याज्ज्वरंभवभयंचयथैवगङ्गाम्॥८२॥ अन्यच्च शि शिरपङ्कजपंङ्कजमालतीप्रभवपुष्पभवक्त्वधराब्जजम्॥जलम लंजलनिर्झरयंत्रगंदहतिदुरंतमहोबकुदाहजम्॥८३॥ मदनफे लजफेणंकन्दमेकञ्चमोचातरुजमथचपिष्टंनिंबपत्रोत्थफेनम्॥

१तथान्येपिदाहिनश्शीतांगव्रजयुक्ताश्शीतांगसमूहाजनास्समस्तापिसाध्या साध्य दाहेष्वसाध्याएवेतियावत् सर्वएवहिवर्ज्यास्स्युः शीतगात्रेषुदेहिषितिपूर्वग्रंथ स्थितत्वात्सुराननवैद्यचिनिर्णीतएवायमिति. २पुंसःपुरुषस्यजांगलैरसैस्तृप्तदेहस्यरक्त जस्यदाहस्याशुनाशायशाखाश्रयांभुजाश्रयांरोहिणीनाम्नीं शिरांनाम्नींयथान्यायंयथा त्कमुहूर्तेपयोमात्ररक्तंयथानिस्सृतंभवतितथाशारीरपुष्टानुकूलांवैद्यभूपः वेधयेच्छिरा मोक्षणंकुर्यादितियावत् ३कुक्कुटस्यश्यामस्य ४ नागकेशरं जलंबालकम् कालिकाफलरसेनकरवंकनिबुरसनति कालिपस्यचरसेनस्यपिपाकःसाधुः

हरतिदवथुमुच्चैर्लिंगमंगेषु सम्यग्ज उरघृतमथोवाकांस्यपात्रंसनीरम् ॥ ८४॥ वापीकञ्जसुगन्धशीतलजलाधारागृहानिर्मलाःकांता शारदपूर्णचन्द्रवदनास्तारुण्यदर्पालसाः॥ श्रीरवेंडाब्धिसुतार्द्रपीवरकुचागंभीरनाभीह्रदाहृव्याधिशमयावैद्यधरणीपालैःपरावर्णिता॥कुशकाशशरेक्षुश॥लिमूलैस्सुमती धावनिकाविषाणिकाभिः अपिजीवकंसयुतंश्टतंवासुघृततैलमथापिदाहहृत्॥८६॥ इतिकुशाद्येतैलघृते॥ अथोन्मादाधिकारः॥

तत्रादौतन्निदानम्॥ श्रीः॥ एकैकशश्चाप्यथसर्वशश्चदोषैरथोत्थर्थसमुच्छ्रितैस्तु॥दुःखेनतद्वत्खलुमानसेनस्यात्पञ्चमोन्योविषजश्चषष्ठः॥ ८७॥उन्मादसंज्ञस्सखलुप्रवृद्धस्तारुण्यमेवागमितोमदाख्यः॥ यथास्वमत्रप्रथितंविचार्य्यचिकित्सितंसंविदधीतविद्वान्॥ ८८ ॥उन्मादयन्तित्रयएवदोषाद्युन्मार्गगायेभयहर्षशोकाः॥ विषाभिशापाद्यभिचारदुष्टग्रहाद्धिकावेशगुरुप्रकोपाः॥ ८९॥विरुद्धदुष्टंयदयदशुचिनयोग्यंभजतियस्सुभोज्यंमन्वान स्त्रिदशगुरुविप्रद्विड्ःनिशम्॥ सचोन्मादीनूनंभवतिभयहर्षादिभिरपिप्रदुष्टंयच्चेतोव्रजतिविषमंचेष्टितमलं॥ ९०॥ तस्यवंवाल्पसत्वस्यचमलनिचयाःप्राक्प्रदुष्टानिचासंबुद्धेस्सन्दूष्ययत्तद्धृदयमपिमनस्थानभूतानियानि॥स्त्रोतांस्यास्थायतानिप्रबलविषसमामोहयन्त्याशुचेतसोयंधीरो

१ श्रीखंडंचंदनं अब्धिसुतः कर्पूरः २ विदारगंधासुमतीदीर्घमूलाथपीजिनीतिनिघंटुः ३ कोद्रववल्लीपश्निपर्णीकलशीधावनीसुहेनिनिघंटः ४ ऋषभोधूर्वहोधीरोमातृकोवृषभोवृषः॥ विषाणीककुदेन्द्रश्चबंधुरोगोपतिस्मृतइतिनिघंटुः

प्यधीरःप्रभवतिसहसाबुद्धिहीनोग्रबुद्धिः॥९१॥ अथवातोन्मादः॥ रूक्षाल्पशीतलैरन्नैरुपवासैर्विरेचनैः॥ धातुक्षयान्नराणांचकुद्धश्चातिबलोनिलः॥ चिन्तादिदुष्टंहृदयंसंप्रदूष्यततः परम्॥ हन्तिबुद्धिंस्मृतिंचापिद्युन्मादयतितद्यथा॥९४॥ हसतिरोदितिगायतिनृत्यतिक्षिपतिचांगमथोबहुजल्पति॥ परुषतारुणताऽखिलदेहगाऽनिलजकार्श्यमथोबलजीर्णता॥९५॥ अजीर्णोष्णकट्वम्लदाह्यन्नभोज्यैश्चितंपित्तमुग्रन्तथोदीर्णवेगम्॥ हृदिस्थन्तथानात्मकस्याशुकुर्याद्यथोन्मादसंज्ञंहिरोगंसवेगम्॥ ९६॥ अमर्षातिसंरंभयुङ्नग्नभावाविसंतर्ज्जनाभिद्रवद्दुष्टरोषाः ॥सुशीतान्नसच्छायशीतांबुवाञ्छाभवन्तीहपित्तोद्भवेपीतवर्णाः॥९७॥ कफश्चोष्मणामर्सणिप्राक्प्रवृद्धश्चतत्पूरणैर्मन्ददुश्चेष्टितस्य॥ स्मृतिंहन्तिबुद्धिंचचित्तंविशेषात्प्रमोहंनयेच्चैवमुन्मादमुग्रम्॥९८॥ वाक्चेष्टितंमन्दमथारुचिश्चविविक्तनारीप्रियतातिनिद्रा॥ यातिश्चलालापतनाल्पभोज्यनखादिशौक्ल्यानिकफात्मकेस्युः॥९९॥ सर्वैःसर्वैर्लक्षणैर्हेतुभिश्चतद्वत्सर्वाण्येवरूपाणियस्मिन्॥ सोयंवर्ज्यस्सन्निपातोद्भवोवैवैद्यैःसद्वैद्यशास्त्रप्रवीणैः॥१००॥ अथागन्तुकः चौरैर्नृपतिदूतशत्रुभयकृत्प्रेतादिसंत्रासितः कोशागारसुतासवैभवसुखैर्हीनोऽनिशंदुःखितः॥ मंत्राराधनविघ्नितोपिमतिमानुन्मादसंबाधितःकार्याकार्यविचारशून्यहृदयोवैद्यैःसुखंसाध्यते॥१०१ ॥अथ प्रतीकारः॥ स्नेहपानमथवातजेयथाप्राग्विरेकइहपित्तजेतथा॥ श्लेष्मजेतुवमनंयथोदितंबस्तिपूर्वमखिलन्तुसर्वजे॥१०२

वारिवन्हितरुशैलदुर्गमाद्यन्यदुष्टजनजन्तुसंगमात् ॥ पूर्वमेवप
रिरक्ष्यतंसदाभेषजेश्चशमनानयेत्ततः ॥१०३॥ देहदुःखजभ
योदपरंयत्प्राणबाधजनकंभयंमहत् ॥ प्राणबाधकरभीषणैर
तस्ताडनादिभिरसुंवशंनयेत् ॥१०४॥ यथा बद्धंसर्षपतैल
लिप्तवपुषंनीत्वातपेस्थापयेत्तसैः स्नेहजलादिभिस्त्वथवरो वै
द्यस्पृशेदातुरम् ॥ सर्पैरुद्धृतदंष्ट्रिभिस्त्वथगजैस्सिंहादिभिस्त्रा
सयेद्रुद्ध्वाविजनेगृहेरवलुकशाक्षेपैर्दृढन्ताडयेत् ॥१०५॥
अथागन्तुके॥ इष्टानिष्टवियोगयोगजनितेयोगंवियोगंतथा
स्मृत्वावैद्यवरस्तवाभिलषितंमाभैःक्षणात्साधये ॥ ब्रूयात्सत्यम
सत्यवत्यतिपदंब्रूयुर्जनास्साधकास्सत्यंकिंवरवैद्यभूपतिसुखा-
ज्ज्ञातंवचोनोमृषा ॥१०६॥ अथसामान्यप्रतीकारः॥ ब्राह्मी
रसोवामधुकुष्ठमिश्रःकूष्माण्डजोवाप्यथशंखपुष्प्याः ॥ षड्ग्रंथि
कायाःअथवातथैवाप्युन्मादनाशायपृथक्प्रपीताः ॥१०७॥
अन्यच्च॥ ब्राह्मीनीरशंखपुष्प्युग्रगन्धायुक्तकुष्ठस्वर्णबीज
प्रयुक्तम् ॥ पीतंशीतंहन्तिचोन्मादरोगंभूतोन्मादंचाप्यपस्मार
मुग्रम् ॥१०८॥ अथजलकल्याणघृतंव्याख्यास्यामः गवाक्ष्यग्ना
कौन्तीशिशिरगदतालीसबृहतीप्रियंग्वेलानीलोत्पलकुसुदराग्नि
द्व्यजलैः॥ स्थिरायुग्मानन्ताऽरुणत्रिदशदारुप्रतियुतैःप्रसूनैर्मा
लत्यारभिनवतरैर्दाडिमफलैः॥ १०९॥ विडंगैलावालुप्रयुतकल
शीकेशरवृषाऽगकाष्ठैर्वैगोपीयुगुलसहितैःकर्षतुलितैः॥ चतु
र्भागंनीरंघृतमपिचप्रस्थोन्मितमिदंशृतंसिद्धंजेत्थंभवतिजलक
ल्याणकमलम् ॥ ११० ॥ क्षयोन्मादेशोषेज्वरदहनमान्द्येनिल

गदे करीशूले कुच्छे प्यहिविषहतेपांडुगरजे ॥ प्रमेहेभूतोपाहत
सुमनसांवायुरुधिरप्रकोपेतार्नीयज्वरकृशतनौयोज्यमतुलम्
१११ ॥ प्रतिश्यायेकाशेप्यथबहुलकंडूगदयुतेप्रशस्तंवन्ध्याना
मपिचनियतंसुप्रजनकम् ॥ दरिद्राणांलक्ष्मीकरमिदमलंपुंस्त्व
जनकम्बलंबुद्धिकांतिंस्मृतिमखिलपाठेषुकुरुते ॥ ११२ ॥ अ
थसुमनादिघृतं सवैयामंदसिंहविलोकिनेन यथा सुमनासु
मनांसिनिशायुगुलंस्थिरस्थानलदंशिशिरंसघनम् ॥ घनसार
प्रियंगुविडंगवरीवदरामलकीजलजंसजलम् ॥ जलमंबुरुहं
स्थलजंसकलंविधिवत्कृतघृतंसुमनादिशरतम् ॥ शरतभूमिज
वारिजवारिसुसाधितमाशुमनोगदहृत्सवलम् ॥ ११३ ॥ अ
थपैशाचिकंघृतम् ॥ शतावरीछिन्नरुहाजयाभिश्छत्रातिछ
त्राकटुरोहिणीभिः ॥ कटंभरीचोरकपूतनाभिर्विराजयाचार
टिकावरीभि ॥ पलंकषोग्राजटिलास्थिराभिर्वाराहकंदासहि
ताभिराभिः ॥ घृतंपचेद्विष्णुसमानवर्णापिपर्णाजयन्त्याप्यथ
कीशबीजैः ॥ ११५ ॥ संसाधितंवैद्यवरैर्घृतंतुपैशाचिकंनाम-
जगद्धिताय ॥ सत्रायमाणंस्मृतिबुद्धिमेधाकान्तिप्रदंबालगद
प्रमुक्तम् ॥ ११६ ॥ उन्मादमुन्नाशयतिप्रपीतमपस्मृतिंवाग्रहदो
षशान्त्यै ॥ अभ्यंगनस्यादिषुयत्रतत्रप्रदेयमेतद्घृतमीयसेयम्
॥ ११७ ॥ अथान्यदपिनस्यादिकम् ॥ सर्षपरजनीयुगल
त्रिफला कटभीश्वेताश्यामाक्षफला सारुणाहिंगुवचामरस
हिता ॥ यष्टिशिरीषजबीजजसहिता ॥ छागपयोभिर्गुटिकार
चिता ॥ अंजननस्यादिषुवरसुचिता ॥ ११८ ॥ कुष्ठस्यचैवा-

प्यथजंबुकस्यलोमानिछागस्यपयस्सहिंगुः ॥ सुशल्लकीजंस्फल
णंवचाचधूपस्तथैषांग्रहदोषहारी ॥ ११९ ॥ कार्पासबीजानिमयू
रपिच्छपिंडीतकत्वग्वृषदंशविड्भिः ॥ वचाहिनिर्मोकगजेन्द्रदन्तन्तके
शगोशृंगमरीचयुक्तैः ॥ १२० ॥ निर्माल्यमांसीबृहतीसहिंगुतुल्यैस्स
मस्तैस्सघृतैस्तुधूपः ॥ पिशाचरक्षोरगयक्षदेवग्रहादिकावेशहरः
प्रसिद्धः ॥ १२१ ॥ अन्यच्च ॥ गजाह्वाकणामूलधात्रीफलानि
त्रिकंवाकटूनांतथासर्षपांश्च ॥ विपेष्याथपित्तैस्तुमार्जारगोधाभ
वैर्नाकुलैर्नस्यपानाञ्जनानि ॥ १२२ ॥ अन्यच्च सर्षपाश्वनखभूर्ज
पत्रकैर्निंबपत्रघृतमिश्रितैरलम् ॥ धूपितंत्ववचयासमन्वितैर्मानुषंन
हिविशन्तियसद्ग्रहाः ॥ १२३ ॥ अथसारस्वतंचूर्णम् ॥ गदलवण
पटूनित्रीणिपाठाजमोदाजरणयुगुलयुक्ताशंखपुष्प्यश्वगंधा स
मलवतुलितास्तास्सर्वतुल्योग्रगन्धापुनरपिपुनरेवंभाव्यब्राह्मीर
सेन ॥ १२४ ॥ मधुघृतपरियुक्तंश्लक्ष्णपिष्टंचलीढंविधिसखपरिगी
तंचैवसारस्वताख्यम् ॥ अपहरातिविशेषादुग्रमुन्मादरोगंजनय
तिदिवसैस्तत्सप्तभिर्बुद्धिमुग्राम् ॥ १२५ ॥ पाठेषुजाड्यंमनसोति
शाठ्यंतथैवजाड्यंरसनेतिकार्श्यम् ॥ ततोतुमांद्यंजठराग्निमान्द्यं
बुद्धेश्चमान्द्यंहिनिराकरोति ॥ १२६ ॥ ऐश्वर्य्यमनसश्चधैर्य्यमतु
लामेधांप्रविन्देत्परांश्लोकानांचसहस्रमेकदिवसेसार्थंपठेद्धारयेत् ॥
जिह्वाग्रेपरिनृत्यतीवसततंवासंभजेच्छारदासस्साह्यात्खलुसिद्धिदं
संप्रुदितंचोन्मादिनांवेधसा ॥ १२७ ॥ नस्यम् ॥ सुनीलजातरू
पबीजपंचकेनपर्पटीघृतेननावनेप्रयोजयेद्भिषग्यदा ॥ तदासचो
न्मदाहृदातुरंविमोचयेद्यथाघनोदवातुरंवनंवनस्यवर्षणैः ॥ १२८ ॥

अथवारुणी॥ सवैया॥ वरपद्ममृणालनिशाकरपद्मधराभव पद्मसुगोस्तनिका मधुकामलचन्दनशाल्मलिकात्वगलातुफला गुरुयुग्धनिका जलजामलकीदशमूलत्वकीकदलीफलदाडिमशुक्तुटिका सकलैःपरिसाधितकारुणिकाखलुपित्तमनोगदनाशनिका॥१२९॥सुमनःपरिवासितयासितया परिपीतमिदंबहुरोगहरम्॥ अपि लोहितपित्ततृषार्दनमाशुमनोगदनाशनकारिपरम्॥ ज्वरदाहजदारुणकारणवारणवारणवारुणयोगवरम्॥ चरकादिमुनिप्रथिताखिलतन्त्रगणाःखलुतेषुवरम्॥१३०॥ अथात्र विविधदोषजनितोन्मादविविधप्रतीकारादिकं मालतीसवैयाछन्दसा यथा० रेचनसेचनपाचनशोधनबोधनभावणभीषणमानैः॥शङ्करतोषणगोद्विजपोषणहाटकभूषणभूगजदानैः॥ अञ्जननावनधूपनधावनतीर्थनिषेवणयुग्बलिदानैः॥ उन्मदमानसमानुषमामिषहीनतनुंबिभृयादनुमानैः॥१३१॥ अथापस्मारनिदानपूर्वरूपरूपोपशयप्रतीकाराः॥ चिंताशोकादिभिर्वाप्रकुपितनिचयादोषसंघाःप्रवृद्धाःस्थित्वाहृत्स्रोतसिद्रागमलतरधियांसंस्मृतिंनाशयन्ति॥ मूर्छाध्मानंप्रमोढ्यंप्रभवतिसहसामूढनाशन्यंतोरःखेदःकार्श्यंतृषावाप्रभवतिबहुधाजागरंपूर्वरूपे॥ १३२॥ संरंभादितमःप्रवेशनमहादोषोच्छ्रयैःसंस्मृतेर्नाशंयत्रभवेत्सवैद्यधरणीपालैरपस्मारकः॥ उक्तस्तत्रतुभेषजंतदुचितंदोषानुमानेनचोन्मादादेःखलुयच्चिकित्सितमथाप्यन्यच्चवाब्रूमहे॥१३३॥ब्राह्मीरसोवैमधुनाशतावरीरसस्सदुग्धोलशुनःसुतैलः॥ एकैकमेकैकमपिप्रपीतमपस्मृतिघ्नंत्रययोगसंज्ञम्॥ १३४॥ सिद्धा

र्कागैरवचूर्णितैश्चलङ्घितैरप्यथवापितैश्च॥ गोमूत्रपिष्टैस्स्व
कृतांगलेपविधिप्रयुक्तैःस्मृतिमाशुकयांति॥१३५॥ इतिप्रलेपः
अथनस्यम्॥ निर्गुंडिवन्दाककृतांचनस्यादपस्मृतिर्यातिवि
नाशमाशु॥ मनश्शिलातार्क्ष्यकपोतविड्भिःकृताञ्जनोऽपस्मृति
हीनदेहः॥१३६॥ अञ्जनंच पाठान्तरेणयोगद्वयम्॥ यथा
निर्गुंडिवन्दाकभवंहिनश्यंमपस्मृतिर्भद्रयमत्रचान्यत्॥ वचार
जोमाक्षिकसेवनंयत्पथ्यंतुदुग्धौदनमत्रभेदः॥१३७॥ अथा
न्ययोगद्वयम्॥ब्राह्मीरसोगागदशंखपुष्पीशृतंघृतंनैवभजेच्च
यावत्॥ डोकीदमेषोविनिगृत्यवद्धवपस्मृतैर्नैवभयंहितावत्॥
१३८॥ अथसम्प्राप्तिस्तत्रतावद्वातजः॥ दशतिदन्तगणान्
दशनैर्निजैर्वमतिफेनमलन्तुसवेपथुः॥ परुषलोहितकृष्णतरा
ण्यथोनयनभोग्यकराण्यपिवातजे॥ १३९॥ सुङ्गानकपित्थान
थशारदांश्चसोशीरकांश्चाथयवामभजेद्॥ व्योषेणछागस्यच
मूत्रबस्तिंदद्यादपस्मारगदाहिदष्टे॥१४०॥ अथपित्तजः॥
पीताङ्गवक्रोऽपिचपीतरक्तःपीताक्षएवाप्यथपीतदर्शी॥ पीतं
तुफेनंचमतेत्तृषार्त्तःपित्तोद्भवापस्मृतिलिंगमेतत्॥१४१॥ गो
घृतंगोशकृदुग्धदधिमूत्रसमंःशृतम्॥ उन्मादेवाप्यपस्मारेपैत्ति
केचचतुर्थके॥१४२॥ कफापस्मारनि०चिकित्से॥ शुक्लाक्षि
श्शुक्लवर्णांगवक्राःशुक्लंपश्यत्येवशीतार्तियुक्तः॥ हृष्टःपुष्टःश्ले
ष्मजापस्मृतोवासद्यसाध्योवैद्यभूपैःप्रदिष्टः॥१४३॥ भार्ङ्गी
कषायान्वितमायसंयच्चूर्णंतदिक्षुजविकारसुगन्धिमिश्रम्॥
कुंभेनिधायबहुधान्यजराशिसंस्थमपस्मृतिंहन्तिनिपीतमा

शु॥१४४॥ द्विदोषजेत्रिदोषोत्थे लक्षणंयत्समीरितम्॥ तत्प्र-
तीकारमन्यच्चतथोन्मादसमंस्फुटम्॥ १४५॥ तोमरम्॥ ग
जवक्त्रमामवतात् निजभृत्यतामवदात अवदेहिविघ्नदमाय
करमाशुमूर्द्धिनिधाय॥ १४६॥ ॥इतिश्रीगुरुचरणाब्ज
चञ्चरीककाशीनाथचतुर्वेदिकृतायांचिकित्साक्रमकल्पवल्ल्यां
मूर्छाधनेकरोगचिकित्सापरागगन्धितःषोडशःस्तबकः॥१६॥
॥ अथवातामयाः॥ श्रीनीलकंठात्मजवक्रतुंडंनत्वाप्रस
न्नंस्वगुरुंतदुक्तिम्॥ स्मृत्वाथवातामयसच्चिकित्सांवक्ष्येयथा
शास्त्रमलंयथावा॥१॥ तत्रतावत्तन्निदानम्॥ रूक्षाल्पशी
तान्नसुसूक्ष्मभोज्यैर्व्यायामचिन्तातिनिषेवणैश्च ॥प्रजागरैर्लंघ
नशोकरोगापकर्षणाद्व्यसृजोविमोक्षात्॥२॥ तथोपचराद्वि
षमाच्चधातुक्षयाच्चशून्यान्यपियानिदेहे॥स्रोतांस्यवारुध्य
करोतिवायुस्सर्वांगकैकांगसमाश्रितांश्च॥३॥ अत्यध्वसेवा
जनसंप्लुवैश्चव्याधीन्बलिष्ठोस्यचपूर्वरूपम्॥ रूपंचसामान्य
विशेषशेष चिकित्साम्॥वक्ष्येनम-
स्कृत्यगुरुंस्वतातमाद्यंपुराणंशशिशेखरंच॥ स्वांमांतरंवैक
मलांप्रणम्यधन्वन्तरिंश्रीगणनाथमम्बाम्॥५॥ अथवात
व्याधेःपूर्वरूपम्॥ रूक्षांगताजृंभणगात्रपीडालस्यादिवैव
पर्थुतोमनुष्यः॥ स्यादिकृतिस्तस्यचवातरोगःपुरस्सरंरूपम-
थोभिधास्ये॥६॥ अथरूपम्॥ यदापार्श्वसंकोचशूला
र्तिचेष्टाविभंगांगसुप्तत्वशीतत्वयुक्तः॥ भवेदंगतोदःस्वरेक्षा
मतावातदापूर्णरूपंजगुर्वायुरोगे॥७॥ अथोपशयः॥

श्यामानीवारमुद्गाढकिचणककलीनादिनिष्पावकान्ताः॥मांग
न्यंकोद्भवांश्चाप्यथत्रिपुटमलं हंसकाद्यान्विहाय वायोर्वाथुप्रको
पप्रशमनदुकान्सो कोलत्थकादीन्सेवेन्मध्वाज्य तैलान्यपिचगुड
मद्योचातसीतूलिकोर्णाः॥८॥ अथातो शीतिसंख्याकवात-
व्याधिलक्षणचिकित्सेक्रमेणाव्याख्यास्यामः॥ तत्रादौसामा
न्यतस्सकलवातव्याधिचिकित्सा॥ चतुराढकसंमितंभिष
ङ्गतिलतैलंसुकटाहकेक्षिपेत्॥ परिशोध्यचपंचपल्लवोद्भवकल्के
नचदोषशान्तये॥९॥ तदनंतरमेवतत्समंसुपयोगव्यमथाजिक
त्तुंवा॥स्वरसंचशतावरीभवम्प्रपचेद्द्वैघनपस्तुपूर्ववत्॥१०॥द
शमूलबलापुनर्नवाऽतिबलादर्भजटाप्रसारिणी॥ अपिनागब
लाकरञ्जकःखदिरश्चन्दनशिग्रुलोध्रकान्॥११॥ जलजाम
लदाडिमीफलंककुभैरंडकदंभरानलम्॥ वरुणाश्शिखरीबिभी
तकंहयगन्धासकुलत्थमाधवी॥१२॥ जवकोलशिरीष वृश्चि
कासुमनास्वर्णरिपुश्चकेतकी॥ सहचारकपित्थहारकानल
जम्बूखरभीडन्नीडकम्॥१३॥ कलिनीयुगलंचनिंबयोरपिशेफा
लिकयाचकन्यका॥ सपलाशविशल्यसिंहि कासुशलीहंस
पदीससिंहिका॥१४॥ अथशालयुगंचचाशनंबहुकार्प्यासम
जबीजजास्थिकम्॥ स्नुहिकासहितात्चरास्नयासमवत्सादि
निकाप्रियालुकम्॥१५॥ वरमश्मकभेदमात्मगुप्तपनःपार
परत्तुभद्रकम्॥ त्वगुदुंबरजंवचासमंसहसंपाकसुमज्ज्वव-
ल्कलम्॥१६॥ आसांपलानांदशकन्तुवैद्यभूपःपयस्यष्टगु
णापचेच्चेन्॥ पादावशेषंशुभवस्त्रपूतंतेनैवतैलेनभिषक्छ्रूर्वे

१७ ॥ छागोथमेषोहरिणः शशश्च व्याघ्रस्ससिंहोश्ववरस्तथाश्वश रन्ध्रशिवावान्हन्यवराहरवड्गिभल्लूकमुषारुरुदर्दुरश्च ॥ १८ ॥ एणस्तथान्योबहुश्रृंगकश्चकपिर्बिडालोथपरोबिडालः ॥ गोधा तथावैमहिषोथलावस्सरवञ्जरीटोप्यथतित्तिरिश्च ॥ १९ ॥ चा षश्चकोरोथकपोतपारावताश्चहंसोगरुडस्सचक्रः ॥ कारंडवः कुक्कुटयुग्मकञ्चक्रौंचस्सगृध्रः कलविंककाश्च ॥ २० ॥ उलूकड लीशशगार्गरस्तु पिकस्तथादर्दुरकोथवाभिः ॥ सरोहितान्येबहुम त्स्यसंघास्तद्वन्महामत्स्यककच्छपोच ॥ २१ ॥ नक्रस्तथान्यशिशु शुमारकश्चनघंटिकानेथदिगोधिकाच ॥ बिलेशयायेचनभश्चरा श्चस्थलेचरायेचजलेचरास्युः ॥ २२ ॥ मांसान्यमीषांकथितानि तोयैस्तैलेनतुल्यानिचतानितानि ॥ भिषकूपचेच्छास्त्रविधिंवि चार्य्यमात्रायथैषाञ्चयथातथावा ॥ २३ ॥ सुरारास्नारात्रिद्वयमि सिधनोशीरकरञ्जावचासूर्वापर्णीनगशिशिशिरारुक्करसमाः ॥ घृ णालंजीवन्तीनतगदकणामेघसरलंवरीचश्चीयष्टीकनकद्वयमा रोत्पलसमाः ॥ २४ ॥ लवङ्गैलाद्राक्षाकृमिरिपुकरणामूलकदली पलाशीकैवर्त्तार्जुनकवचकुन्तीन्द्रजगजाः ॥ त्रिवृत्पर्णीयुग्मानल दह्यगन्धाः गतुहिनंक्षुरंगोक्षूरंवैरजमरुयाकेतककणा ॥ २५ ॥ जयन्तीत्रायंतीमृगमदनकोसुंभकुसुमम् वकंमूर्वजातीफलयु तमथोचाष्टकमलं ॥ षानीलंपद्मंबु लधरभवंवानरभवम् सचो रंस्यौणेयंचगुरुसहितंपुष्करमथोतथायासद्रोणंतदिदमखिलं कर्षयुगलम् ॥ पृथक्कृत्वीभूतंशुभतरमुहूर्तेद्विजवरान्भिष ग्भूपान्दत्वाविविधधनवस्त्रादिसकलम् प्रपूज्यादौदेवंसकल-

भयसंहारतरलंसुचक्रंश्रीनारायणममरवृन्दैर्युतमलम् ॥ ॥
कराहैहेम्नोवारजनरचितेवाथसकलंतथानाम्नोम्नूतेप्यथच-
शुभत्त्वोहैप्यविरतंभिषग्भूपैःपाच्यंनिजगुरुनिदेशेनसहितम् ॥
२८॥ अभ्यञ्जनेनस्यनिरूहपानावगाहनेषुप्रयतोनियुंजन्ति।
किंवाबहूक्तेनचवायुजातानशीतिमेकोविनिहन्त्ययत्नात्॥२९॥
शिरोललाटभ्रूकुटीषुनासाकपोलनेत्रश्रुतिपक्ष्मकेषु॥ जिह्वोष्ठता
लूरदमूलकेषुसजत्रुकंठांसभुजाशयेषु॥३०॥ वक्षोजवक्षोदरना
भिमध्यश्रोणीषुजंघोरुसुसंधिगुल्फे॥ पादांगुलीषुप्रपदेनरवे
षुबहिस्तथान्तर्गतरोगसंघाः॥३१॥ प्रयान्तिनाशंनहिचित्रमत्र
जरानराणांनकरोतिकिञ्चित्॥शैथिल्यबुद्धिस्मृतिवीर्यहानिं
नदन्तचापल्यमकालशौक्ल्यम्॥३२॥ यथाजलोत्सिक्ततरोस्तुप
ल्लवादयस्तथाभ्यंजनतोऽस्यधातवः॥स्त्रीणांनराणामपिया
तिवृद्धिंनयोनिरोगानचलिंगरोगाः॥३३॥ वन्ध्यापिपुत्रंलभ
तेविशेषान्नगर्भपातोनचसूतिरोगाः॥ भवन्तिनान्येप्रदराद
यस्तुनक्षीयतास्याद्धसूतिजाता॥३४॥ सुरासुराणामसुरो
द्धतानांयुद्धेप्रवृत्तेह्यसुरैर्हतानाम्॥ भग्नान्विलोक्याथसुरान्क
पार्द्रदृष्टिस्तुनारायणआदिदेवः॥३५॥ स्वनाममंत्रौषधितुल्यवी
र्यमत्रास्वतैलंखलुतत्रतत्र॥ नियोज्यतांस्तानसराश्चकारदेवा
नदेवानसुरान्विजेतुम्॥३६॥ किंवाबहूक्तेनचजंगमायेयेस्था
वराग्रामवनेचराये॥ तेवाश्रुभग्नाःकिमुतान्यरोगनिपीडितायें
विषयुग्मदग्धाः॥३७॥ स्मरणाच्चतेस्यश्रुतिगीतकीर्तेर्विदन्ति
सौख्यान्यतुलान्यजस्रम्॥ नारायणेनकृपया कृतस्यस्व

नाममाहात्म्यसमस्यतस्य॥ ३९॥ अथ बलाद्यन्तैलम्
॥ बलाश्वगन्धावृहतीद्वयानां प्रसारिणीनिंबशलाटुकानाम्
॥पुनर्नवापाटलिकाग्निमन्थस्योनाकसिंहीजरराजकानाम्॥
आसां पलानां दशकं पृथक्‌ च पचेच्चतुर्द्रोणजले च शिष्टे॥ पादे त
थाचातिबलायुतानां तैलाढके तुल्यशतावरीजे॥ ४०॥ चतु
र्गुणे गोपयसा च वश्यमाणौषधीभिश्च पृथक्‌ पृथग्वा॥क-
ल्कीकृतैः कुष्ठवचाबलाभिः शैलेयसिन्धुत्रुटिदेवकाष्ठैः॥ ४१
॥मिस्यश्वगन्धेन्द्रजमांसिकाभीरास्नाबलापर्णिचतुष्टयैश्च
॥ तथागकाष्ठैः प्रपचेत्तु तैलं नारायणं नाम यथाप्रभावम्॥४२
॥बस्तौ नश्ये ऽप्यभ्यञ्जने पानहेतौ पक्षाघाते वा हनुस्तंभवातौ
॥मन्यास्तंभे वा गलग्राहवातौ कुब्जेन दृक्शुक्रनाशे त्रवृद्धौ
॥४३॥ बाधिर्य्ये च कटिग्रहे क्षयगदे गात्रस्य शोषेन्द्रियध्वंसे चा
पि कुरंडके तु शिरसो वाथो च सर्वांगग॥ एकं गान्त्रिनवुषवायु
जनिते व्याधौ च पंगौ तथा वन्ध्यायां च प्रसूतये च विदुषां बुद्धि
प्रदां सेवनात्॥ ४४॥ गतिभंगकटिग्रहदन्तगदे ज्वरगृध्रसि-
कादिसमस्तगदे॥ भवभञ्जननामसमानमिदं गदगंजनमा
शु भिषग्विदितम्॥ ४५॥ ॥इति नारायणतैलम्॥ ॥
अथो माषमर्द्दादिकं चेतु लाई दशांघ्रेः पलं चापि छागस्य त्रिं
शत्॥ पलान्याशु वैद्यस्तु द्रोणे भसौवे विपाच्याप्यपादाव-
शिष्टे नतेन॥ ४६॥ तिलानां तु तैलं च प्रस्थप्रमाणं चतुःप्रस्थ
गोदुग्धयुक्तं विधिज्ञः॥ शतावहारुणा जीवनीयैः समस्तैर्बला
व्योषकृष्णाग्निचव्यानलैश्च॥ शिवैरंडधान्यामृगुसाश्वगं-

न्याबचाकुष्ठरास्नाग्निकैरेश्वशाद्या ॥ नथादेवकाष्ठैः पटूनां
येश्वसमंकक्लितैरक्षमात्रैः पृथग्वा ॥ सुसिद्धंमहामा
संज्ञंविशेषाद्दूरेत्पक्षघातंहनुस्तंभसुग्रम् ॥ शिरोनेत्रकप
मंयेग्रीवरोगेपबाहोच्चपंगौचरवहौ विमर्द्यम् ॥ ४८ ॥ ४९
श्रुतोपूरणेऽभ्यञ्जनेनस्ययोगेतथाबस्तिकर्मण्यथोपा
योगे ॥ त्रिदोषेचवायोसमस्तेसमस्तैर्मुनीशैरलन्तैलमे
त्यदिष्टम् ॥ ५० ॥ इतिमहामाषाद्यम् ॥ अथलघुमा
माषानसीजवकुरंदकडुंडुकानांक्षुद्राग्निगोक्षुरकमर्कटि
दिकानाम् ॥ प्रदेकमेतदखिलंचमुनिप्रमाणेऽसकुप्यचाथ
लकेश्वभिषङ्मुहूर्ते ॥ ५१ ॥ संपाच्यवेदगुणितेनजलेना
दशेषेणाचाथबदरंशणबीजकंच ॥ कार्पासकास्थिसा
तंचकुलत्थकंचधिया १४ पलंचसकलंचपृथक्पृथक्च
॥ ५२ ॥ संपाच्यपूर्वविधिनाचजलेनतेन छागस्यचाथप
लंरवलुप्रस्थमानम् ॥ तद्वात्तथैवपरिपाच्यजलेननेनकल
स्योमिसिबलात्रुटिपिप्पलीनाम् ॥ ५३ रास्नाश्रुरुक्क
डुकागदसारिणीनाम् पौनर्नवह्नि लवणोत्तमसांसिक
नाम् ॥ क्वाथादिभिश्चक्रमशः परिपाचनीयंमृद्वग्निनाति
जतैलमलंहिमस्यम् ॥ ५४ ॥ माषादितैलमखिलान्वि
हन्तिवानव्याधीनशेषशिरसोरुकरप्रकंपान् ॥ पक्षप्रघा
मपिचार्दितबाहुरोगानाक्षेपकादिसकलान्परिमर्दनेन ॥
५५ ॥ इतिलघुमाषाद्यम् ॥ अथबलाद्यम् ॥ बल
याश्शतंवैगुडूच्याश्चपादस्तथादार्विकायास्तुवस्वंशका

जलस्याढकानांशतंपाच्यताभिशतंचावशिष्टेहिनीरेद
धेश्च॥५६॥ ततश्चेक्षुनीरेसुसूक्तेपचेत्तैलमप्याढकंचाजा
दुग्धंप्रदाय॥शटीचन्दनैलारुणापद्मसुस्ताबलादेवपु
ष्पप्रियंग्वादिकानाम्॥५७॥ नतंव्याधिकंकोलमेदान
रवानांसकाश्मीरचाम्पेयरालायुतानाम्॥ तथासप्तप
र्णाह्वरेणुप्रगन्धाऽतिपूर्वाबलाकामपत्रादिकानाम्॥५८
पलैकैकमात्राकृतंकल्कमासांपयोधारयाशालदाव्योश्च
तद्वत्॥पचेच्चाद्यतैलाढकंमन्दवन्हौशुपूतम्बलादिप्रसिद्धं
यथार्थम्॥ ५९॥ हरेच्छ्वासकासांक्षयंछर्दिमुग्रांज्वरप्ली
हशोथांश्चमूर्च्छान्तथैव॥ अपस्मारवातान्समस्तानलक्ष्मीं
बलाद्यंसतैलंविमर्द्यविशेषात्॥ ६०॥ अथभृंगराजतै
लम्॥ भृंगराजकटुतुम्बिकारसंक्वाथमत्रदशमूलसंभ
वम्॥नीरमत्रबकुपल्लवोद्भवंमाषयूषसहितंकुलत्थकम्
॥ ६१॥ आजकेनदधिनासमंसमंतैलमर्धमिहपूर्वभाग-
तः॥मन्दवन्हिपरिपाचितन्तथाऽभ्यंगतोनिखिलवातना
शनम्॥ ६२॥शिरःकर्णशूलादिशंखप्रुरोगान्निहन्त्याशु
नस्यप्रलेपंप्रपातैः॥ अपस्मार पामाग्रहावेशकुष्ठनैःस्त्व
चोदोषमभ्यञ्जनादेवसद्यः॥ ६३॥ भृंगराजाद्यम्॥
अथविषगर्भतैलम्॥ कुडवपञ्चकह्लादकजंरसंसम
लवंरवलुतेनचकाञ्जिकम्॥गदवचादहनोत्थजलाढक-
त्रिलवकंमरिचाच्चविषान्नव॥ ६४॥ रसलवंकनकस्यच
बीजकंकटुकतैललवंमुनिविंशतिः ॥ तिलजतैलम

थोविधिमात्रया सकलतैलविधाननिदानया ॥ ६५ ॥ अपिशृतंविष गर्भसमाख्ययानिगदितंबहुमारुतनाशनम् ॥ अपिसदागतिजा तरुजस्तनोरथविमर्दनतोहरतेध्रुवम् ॥ ६६ ॥ अथप्रसारिणी तैलम् ॥ ॥ प्रसारिणीक्षुस्सशतंपलानिद्रोणेंभसांपाच्यतुपाद हीनम् ॥ क्वाथन्दधिक्षीरस्कतैलमर्द्धाढकंतथाकांजिकभागयुग्म म् ॥ ६७ ॥ प्रसारिणीमूलपलद्वयस्यकल्केनभल्लातफलैश्चत्रिंशत् ॥ राष्णोष णाक्षारपलत्रयंचपलार्द्धकाश्मीरयुतंपचेच्च ॥ ६८ ॥ मृद्वग्निनाकुब्जकटिग्रहाद्यपंगुत्वग्रीवाहनुपृष्ठवायो ॥ श्लेष्माम यान्वातगदांस्तथैवस्त्रीणांनराणामपहन्तिशीघ्रम् ॥ ६९ ॥ बल वर्णाग्निविवर्द्धनंनिपीतमपिवायूनखिलान्निहन्तिशीघ्रम् ॥ अपि तैलंविधिनानिषेवितंवैनियतंगृध्रसिकादिनाशनंहि ॥ ७० ॥ इ तिप्रसारिणीतैलम् ॥ अथविजयभैरवतैलम् ॥ रसंगन्धतै लंसमलवमिदंनापिशिलयाशिलापिष्टंश्लक्ष्णंवरदधिजमंडैश्च बहुशः ॥ नयंसूक्ष्मंवस्त्रंसमसकलमेभिश्चपरिलोपि लिप्तं तद्व र्तिसतिलभवतैला मथदहेत् ॥ ७१ ॥ प्रदीप्तायावर्त्तेर्मुखमथ मधःकृत्यविगलत्स्कतैलंसंमर्द्यविजयपरतोभैरवमिदम् ॥ समस्ते केकांगाश्रितसकलवायोर्गदचयान्निहन्त्येवंभुक्तंजठरजगदादि व्याधिमचिरात् ॥ ७२ ॥ अथवातगजांकुशोरसः ॥ मृतंसूतं लोहंवत्सिमपिचताप्यंविषशिवेसुमाक्षीकाशृंगीत्रिकटुकसमंट कणमथो ॥ तथाण्यांनिर्गुंडीश्चवममलंमुंडिजरसैर्दिनंमर्द्यंवात द्विरदशमनर्वांऽकुशमदः ॥ ७३ ॥ सन्ध्यास्थिवातकरदिप्रशमा यवल्लमस्यप्रसेव्यमपिवातगजांकुशस्य ॥ हन्यादशीतिमपि

वाग्गदद्विपानामेकोगजांकुशइतिप्रथितोजगत्याम्॥७४॥
अथरसोनाष्टकम्॥ रसोनहिंगुसिंधुजीरसर्ज्जिकाकटुत्रयैः प्रपेषितैश्चमाषकैःप्रभक्षितैःसदागतिः॥ विनाशमाशुयातिवैरु ककतैलयोगतः अत्रहवैद्यभूमिपालसुश्रुतादिवर्णितम्॥७५॥
॥ ॥अथसंप्राप्तिस्तत्रादौशिरोग्रहः॥ यदारक्तमाश्रित्यवा युःप्रकुर्य्याच्छिरास्सूक्ष्मकृष्णास्सपीडास्तुमूर्ध्नः॥ असाध्यशि रोरुग्ग्रहान्तस्तुतत्रशिराऽक्रियाऽभ्यंगतद्दत्तयश्च॥१॥ ॥
अथजृंभा॥२ यदानिलश्श्वासमथैकमेवानिपीयवेगात्त्यज तिप्रकामम्॥आलस्यनिद्रासहितस्तुजृंभासास्यांसताम्बूलसु भोजनानि॥२॥ ॥अथहनुग्रहः॥३ जिह्वाविनिर्लेखनशु ष्कभक्ष्यसंसेवनाद्धात्यभिघाततश्च॥हनुश्चवायुश्चहनुंप्रगृ ह्य प्रस्रंसयित्वाविवृतास्यतांच॥३॥ वासंवृतास्यत्वमसुप्र कृच्छ्रास्याच्चर्वणंभोजनभाषणादि॥ करोत्यतस्तच्चिबुकंतु वैद्यभूपस्तुसंस्वेद्यविनामयेच्च॥४॥ अथास्यप्रतीकारः॥
कर्णार्द्रचव्यानिचतप्ततोयैर्निष्ठीवनार्थंप्रथमंततस्तु॥रसोन तैलैःपरिमर्द्यपश्चात्संस्वेद्यतेनैवतदेवभोज्यम्॥५॥ ससैन्धवं मूर्ध्निचतस्यतैलबस्तिंविदध्यान्मृदुवन्हिनैव॥संस्वेद्यनिम्बास्तु फलंसुपक्वंसुखेनिदध्यात्सगुडंविशेषात्॥६॥हनुग्रहश्शा- म्यतिचाथजिह्वास्तंभस्ययल्लक्षणमेववक्ष्ये॥ अथजिह्वा स्तंभः॥४॥ वाग्वाहिनीयात्रशिरास्तितत्रवायुस्स्थितोवैरसनां विशेषात्॥७॥ संस्तंभयित्वान्नविशोषयानवाचामनीशत्वमसौ करोति॥चिकित्सितन्तत्रयथार्द्दितेवैकुर्य्याद्यथाचस्थमथात्रवा

योः॥८॥ ॥अथरास्नादिक्काथः॥ ॥रास्नाशिवानागर देवदारुप्रसारिणीदीप्यदुरालभानाम्॥शतावरीपौष्करवृद्धदा- रुबलाशटीगोक्षुरगुग्गुलूनाम्॥९॥दुरालभारग्वधपंचमूलपु नर्नवैरंडमृगेन्द्रचक्रैः॥मुंडीसमंगातिविषाश्वगन्धापीयूषशैलेय शिलोद्भवैश्च॥१०॥तुल्यैःसमस्तैर्हृषुषायुतानांक्वाथोत्रतद्वन्मि सिसंयुतानां॥गंडूषसंधारितएवजिव्हास्तंभन्निहन्त्याशुनचित्रम त्र॥११॥सन्ध्यस्थिमज्जागतवायुरोगाःसर्वांगगाःकंपशिरोग्रहा द्याः॥पक्षापघातार्दितजानुगुल्फकटिग्रहाःकुब्जमुखास्तुस र्वे॥१२॥सामानिरामास्त्वथसप्तधातुगताश्चरोगाःप्रलयंप्रयांति ॥तथार्द्दतेःनाद्दलरक्तवातेरास्नादिरात्रेयवभाणचैवम्॥१३॥

अथमूकः॥ धमनीःसकफस्तुवायुरेवबहुधावृत्यचशब्दवाहि- नीः॥अवतिष्ठतियस्यसोत्रनूनमथमूकत्वयुतोनिरन्तरम्॥१४॥

॥ अथास्यप्रतीकारः॥ लवणाञ्जनलोध्रधातकीपलिकैर्ब स्तिपयःप्रपेषितैः॥वचयाघृतप्रस्थपाचितैरथसारस्वतहव्यसेव नात्॥१५॥जडगद्गदमूकमिन्मिनाःस्मृतिमेधाप्रतिभायुवाग्वचः ॥प्रभवन्तिनचित्रमत्रवावरवैद्याधिपतिप्रभाषितम्॥१६॥ इ तिसारस्वतघृतम्॥ अथमिन्मिनाः॥ धमनीःखलुशब्दवा हिकायदिचाक्रम्यचनासिकाश्रितः॥प्रबलस्तुप्रभंजनोतदाखलु यस्यापितमिन्मिनंवदेत्॥१७॥ ६॥ अथास्यप्रतीकारः॥ निशावचाकुष्ठकणाजमोदायष्टीसलोकापटुजीरकाणाम्॥चूर्णं समानांमधुकान्वितानांगोसर्पिषालोड्यनरोवलिह्य॥१८॥ घ नस्वरःकोकिलनिस्वनश्चमेधांस्मृतिंशास्त्रचमक्रियांच॥लभे

श्चवाचस्पतितुल्यवाचमेकाधिकैर्विंशतिवासरैश्च॥१९॥ ॥ इतिकल्याणकावलेहः॥ अथगद्गदः॥७॥ धमनीःखलुश ब्दवाहिनीर्यदिचाक्रम्यहितालुसंस्थितः॥सकफोऽनिलएवकेव लंप्रतिकुर्यात्खलुगद्गदंनरम्॥२०॥ अथास्यप्रतीकारः॥ कृमिशत्रुवचाभयाकटुत्रयब्राह्मीवृषशिग्रुचित्रकैः॥लवणोत्तम पर्णिकासमैरथभार्ङ्गीसहितैस्तुपाठया॥२१॥सुशृतञ्चघृतञ्च छागिनीपयसासिद्धमलंनिरन्तरम्॥प्रभजन्नृविलभेदसंशयंस्मृ तिमेधासुवर्चासिगद्गदी॥२२॥ इतिसारस्वतंघृतम्॥ अथ प्रलापः॥८॥ स्वहेतुकोपमेत्यवायुरेवकोसलैः प्रलापमाशु कारयेद्विशेषतोजनस्तदा॥निरर्थकंवचोवदेदसंयतस्तुनित्यशः ससंभ्रमंविलोकयेन्निवारितोपिभूरिशः॥२३॥ अथास्यप्रती कारः॥ नताश्वगन्धावरतिक्ततिक्तादशांघ्रिपाठीरघनादिका- नाम्॥उसीरद्राक्षायुतशंखपुष्पीसभारतीरैवतसंयुतानाम्॥२४ ॥कृतःकषायोमधुसंयुतश्चपीतोप्रनित्यंवरवैद्यभूपात्॥श्रुत्वा देल्लापप्रशमायनूनमदूरतोदूरतरंवदुः॥२५॥ अथरसाज्ञा नवायुः॥९॥भुक्तेन्नेनरसान्वेत्तिरसज्ञारसनायदा॥मधुरप्रभृ तीज्जुक्तंरसाज्ञानंबुधैस्तदा॥२६॥ अथास्यप्रतीकारः॥ त्रिकटुकपटुचूर्णैराजिकाकृष्णजीरैरनलमरिचशुंठीपिप्पलीकल्कि जैश्च॥रसनमभिविघर्षज्जातजन्तुःकदापिप्रभवतिचक्षुधावैभोज नान्नभोक्तुमिशः॥२७॥ अथत्वकृशून्यता॥१०॥त्वचिस्पृ- श्यमानोनशीतोष्णतीव्रमृदून्वेत्तितद्दत्तु चाशून्यतासा॥प्रसुप्तं नमेकेतुवैद्याधिराजाजगुःप्रायशोरक्तमोक्षन्तुतत्र॥२७॥ अथा

स्यप्रतीकारः॥ एरंडतैलंत्रिफलाहुताशगोमूत्रगोहूव्याविषाणि भक्त्वा॥ संमर्दयेत्तैरखिलांगमस्यप्रसुप्तवातातुरदीनजंतोः॥२८॥ ॥ अथान्यच्चधूपः॥ लवणागुरुतैलैरनलविदग्धैर्वरधूपैर्धूपित-देहोप्यपगतामोहस्तनुशुद्धिम्॥ लभतेऽनिलसुप्तंत्वचिपरिगुप्तंपरितप्तम् मृदु खरशीतंतनुपरिनीतंतद्बुद्धिम्॥२९॥ ॥अथार्दितवायुः॥ उच्चैर्व्याहरतस्तथातिकठिनान्संखादतोजृंभतोभाराद्वा विषमाशनाच्चहसतोमूर्द्धाक्षिनासौष्ठगः॥वायुर्वाचिबुकेललाटफलकेनत्सर्वसन्धिबलंवक्रंवक्रमथार्धमाशुपरितोवाप्यर्दये-दर्दितं॥३०॥ ग्रीवापवर्त्ततेतत्रवाग्भंगः शिरसस्तथा॥ प्रकंपश्चिबुकदन्तादितत्तत्पार्श्वेत्ववेदना॥३१॥ अथास्यप्रतीकारः॥ दशमूलरसैःपयोयुतैस्तिलतैलंखलुजीवनीयकैः॥ शृततैलमिदं त्वमर्दनादिषुपानाननुवासनादिषु॥३२॥ उदितंविदितन्तथान्यदप्यनिलघ्नान्यथमर्दनानिच॥ अशनानिचयानितानिवाप्युपनाहावरधूपनानिच॥३३॥ अथवातार्दितम्॥ लालास्रावातवव्यथास्फुरणकास्तद्द्वनोर्वैवचनग्रहोवाश्वयथुस्तथोष्ठयुगलेस्थौल्यंचवातार्दिते॥ अथास्यप्रतीकारः॥ क्षीरंतत्रदशांघ्रिसंभृत-जलैर्वामातुलुंगीरसैर्वापक्वाम्रिजलैस्तथापिबलयानित्यंपिबेद्धीमान्॥३४॥ अन्यच्च॥ हैयंगवीनेनचमाषपिंडंजग्ध्वारसैर्मांसभवैश्चदुग्धम्॥पीत्वादशांघ्रिप्रभवंपिबेच्चभुक्तोपरिष्टाद्घृतमत्रपेयम्॥३५॥ वस्त्यभ्यञ्जननस्यानिस्वेदना निपुनःपुनः॥ वा-तार्दितोनरोनित्यंनिषेवेच्चसुखायवै॥३६॥ अथपित्तार्दितं॥ पित्तार्दितेपीतमुखोज्वरार्त्तस्तृष्णातुरोमोहयुतःसधूमः॥ तत्रापि

शीतांश्चभजेञ्चतैलान्वस्तिंघृतेनैवचसंविदध्यात्॥ ३७॥ अ-
थास्यप्रतीकारः॥ पित्तार्दितेपयःपानंकेवलंसंप्रशस्यते॥जि
ह्मीभूताननेमूकेसदाह्येप्यथवार्दिते॥३८॥वानपित्तप्रतीकारंशि
रसोरेचनंहितम्॥शिरसोरक्तमोक्षंवादाहेपित्तप्रसेवनम्॥३९॥
अथकफार्दितम्॥ शोथस्तुगंडेशिरसीहमन्यायास्तंभउक्तस्तु
कफार्दितेहि॥सतीक्ष्णनस्यांचपुराणहव्य पानं तथाचात्रक
फप्रणाशि॥४०॥ अथास्यप्रतीकारः॥१४॥ कल्कंरसोनस्य
सतैलमत्रपेयन्तथामर्द्दनमत्रकार्य्यम्॥ भोज्यान्नपानानिचबृं
हणानिवातप्रमांसप्रभवोदकानि॥४१॥ अथमन्यास्तंभः॥
१५॥दिवातिबीभत्सुविकारघोरोमहानसाध्यस्त्वरःकदाचित्
॥मनस्विन शुद्धजितेन्द्रियस्यकफादसृक्कवायुभवस्तुरोगः॥४२॥
मन्यास्तंभोरागउक्तस्तुतत्रसेव्यःक्वाथोदिग्जटासंभवस्तु॥ अथा
स्यप्रतीकारः॥ रूक्षंस्वेदंचापिनस्यंप्रयोज्यंक्वाथन्तद्दत्पञ्चमूली
शृतञ्च॥४३॥ अन्यञ्च॥ कुक्कुटांडद्रवैराज्यासिन्धूद्भवैरुष्णकै
श्चापिग्रीवांविमर्द्याथवातैलहव्यैरथोभाजुपत्रैश्चपीतैःसमावे
ष्ट्यबद्धेश्चपूर्वोक्तमेव॥४४॥ अथबाहुशोषः॥१६॥ अंशदे
शाश्रितोवायुश्शाखाभेदंसबन्धनम्॥ असभेदनशोषास्या-
द्बाहुशोषस्सवेदनः॥४५॥ अथास्यप्रतीकारः॥ कल्याण
सर्पिःप्रपिबेच्चभुक्त्वाबलाजटासैन्धवपक्वनीरम्॥बाहुप्रशोषे
चकरस्थवाते मन्यागतेस्तंभकरेचवायौ॥४६॥ अथापबाहु
कम्॥ बाहुस्थवायुस्तुशिरास्समस्तास्संकोच्यकुर्यादपबाहु
कन्तत्॥ अथास्यप्रतीकारः॥ बलाकषायेनतथामगुमार

सेनयीतेनजयेन्नितान्तम्॥४७॥ अन्ययोगः॥ नस्यन्तथोमा रसजविशेषान्माषैःशृतंसैन्धवतैलमाशु॥वातारिमूलोत्थरसेन नस्ययोगत्रयंवजभुजकरोति॥४८॥ अथविश्वाची॥ तल- स्थप्रत्यंगुलिकंडुरायाबाह्वोस्तुपृष्ठतअसौरवलुतत्रबाह्वोः॥ क र्मक्षयंसंविदधीतसावैविश्वाचिकावैद्यनृपैरतोक्ता॥४९॥ अ थास्याप्रतीकारः॥ दशमूलबलासुमाषकंप्रपिबेत्तैलघृताढ्य मुत्तमम्।अपिनस्यविधौतदीरितंयदिसायंन्ननभोजनात्परं॥ ५०॥ अन्ययोगः॥ माषोग्रगन्धादशमूलहिंगुरास्नाबलासैं न्धवनागरैश्च।तैलंपचेत्त्वापिशतावरीजरसेनतत्पूर्वभुजानरेण ॥५१॥पीतन्तथानस्यविधानमस्याविश्वाचिकाव्याधिविनाशना य॥सदागतोपक्षगतेऽर्द्दितेपितथापबाहोबहुधानिषेव्यम्॥ ५२॥ अथोर्ध्ववातः॥ वायुःकफेनापिचमारुतेनतेनाहतो धःप्रकरोतिनूनम्॥उद्गारबाहुल्यमतोर्ध्ववातमाचक्षतेशास्त्र विदःपुराणाः॥५३॥अथोप्रतीकारः॥ दशभागमिदंचनाग रंसममेभिःखलुवृद्धदारुकम्॥शिवनेत्रमिताहरीतकीत्रयभा गान्वितवृद्धहिंगुकम्॥५४॥अनलस्यचभागमेकमेवमुदितंसैं न्धवभागमेकमेव॥अपहन्तितथोर्ध्ववातमुग्रंगजयूथंचहरिर्यथै वमुक्तम्॥५५॥ इतिशुंठ्यादिचूर्णम्॥ अथाध्मानम्॥२० साटोपमत्युग्ररुजंचवातनिरोधनादेजठरंपदेव॥आध्मातमा- ध्मानमुशान्तिपूर्वंकुर्यादथऽस्मिन्खलुलंघनंप्राक्॥५५॥ ॥ अथास्यप्रतीकारः॥ कुर्य्यात्तथादीपनपाचनानिप्रयोजयेद्दै फलवर्त्तिकादीन्॥विशोधनंवारवलुवस्तिकर्मकुर्याद्भिषक्शास्त्र

विधिंविनाप्य॥५६॥ अथपिप्पलीचूर्णम्॥ कृष्णाकर्षमितापलोन्मितत्रिवृत्तुल्यातथाशर्कराचूर्णीकृत्यसमस्तमस्तुलितंसंसेवितंमाक्षिकैः॥ कुर्यात्हैमवतीसदाफलवर्णैरम्लैर्वरी ह्निंगुभिर्लेपश्चात्रविशेषतोनिगदितश्चाध्मानदारीभृशम्॥५७॥ लेपश्चार्द्रैन॥ अथप्रत्याध्मानम्॥ विमुक्तपार्श्वंहृदयंतदेवमामाशयोत्थंप्रतिपूर्वमुक्तम्॥ आध्मानमत्रैवकफेनरूनमपानवंचोदरसंस्थवन्हेः॥५८॥ अथास्यप्रतीकारः॥ प्रत्याध्मानेछर्दनंलंघनंप्राकृतद्वत्कुर्यात्पाचनंदीपनंच॥ कुर्यात्तद्वद्वस्तिकर्माथवश्येप्रत्याध्मानेसेवितव्योनराचः॥५९॥ अथनाराचविधिः॥ श्यामारग्वधदन्तिकामलत्रिवृद्भागान्पलैकान्पृथक्प्रत्येकंप्रपचेज्जलाढकयुगेतद्वत्स्नुहीसंयुतान्॥ तत्पानीयमथोष्टमांशमखिलंसद्वस्त्रपूतंभिषङ्नीत्वानिस्तुषदन्तिबीजपलकंसत्सूक्ष्मवस्त्रेनवम्॥६०॥ बध्वातच्छिथिलंपचेदथपुनर्भीवह्नुनं तद्भवेत्तन्नीरेखलु खल्वगेपुनरथोजेपालभागान्क्षिपेत्॥ अष्टौ ८ रामा ३ मिताश्चलोकतअथोद्वौद्वौशिवाशंकरोद्वौभागौमरिचादथोखलुपुनस्संमर्दगाढंदृढम्॥६१॥ नाराचनामारसनायकोयमाध्मानमानाहसशूलगुल्मान्॥ सर्वोदरान्तस्यगदान्निहन्याद ध्मानमन्यत्प्रतिशब्दपूर्वम्॥६२॥ भुञ्जीतगुञ्जैकमितंसुशीतनीरेणवेगेशमितेततस्तु॥ दध्योदनंसैन्धवसंयुतंवादध्योदनंशर्करयासमेतम्॥६३॥ अथाष्ठीला॥२२॥ नाभेरधस्तादचलश्चलोवात्यष्ठीलिकावत्तुघनोपिग्रन्थिः॥ ऊर्ध्वायतश्चोन्नतवायुजातामष्ठीलिकान्तांभिषजोवदन्ति॥६४॥ कुर्याद्बहिर्मार्गनिरोधनं

साहिंग्वाष्टकेनोष्णजलेननित्यम्॥ संसेवितेनाशुविनाशमेति त न्नाशनार्थंपरमुच्यतेऽत्र॥ ६५॥ अथास्याः प्रतीकारः॥ ॥
हिंगूग्रगन्धाविदशुंठ्यजाजीजयासधान्याक्षधवामयैश्च॥ निकुंभकुंभप्रभवैश्चदन्त्याश्चूर्णैश्चभागोत्तरवर्द्धितैश्च ॥ ६६॥ पीतैश्च कोष्णेनजलेनकोष्ठरुजश्चगुल्मोदरजाठराद्ये॥ अष्ठीलिकायाःप्र शमंप्रयान्तिसर्वेचिकित्सानिपुणावदन्ति॥ ६७॥ अथप्रत्यष्ठीला ॥ एतामेवरुजान्वितामथशकृद्वायोश्चसंरोधिनींमूत्रस्यापिचति र्य्यगुत्थिततरांनानागदैःसंयुताम्॥ अष्ठीलांप्रतिपूर्वकांपरिजगु र्वैद्याश्चहिंग्वाष्टकम् सेव्यंतत्रविलोमपानतुलितन्तद्रोगनाशायच हि॥ ६८॥ अथात्रमूत्रावरोधप्रतीकारः॥ बलाजटालवसि तासुचूर्णितन्तुकार्षिकम् निषेवयेश रावमर्द्दमाशुगोपयोन्वितम्॥ हरीतकीविभीतकामलानिवामृतायसस्सुचूर्णितानिमाक्षिकेणमू त्ररोधशांतये॥ ६९॥ अथमूत्रनिग्रहः॥ २४॥ बस्तिस्थवायुःकु पिताश्शिरासुशोषंप्रकुर्याद्यदिनिग्रहस्स्यात्॥ मूत्रस्यतोदेनच्युति स्त्वकस्मात्सेव्यंजवक्षारसितासुचूर्णम्॥ ७०॥ अथास्यप्रती कारः॥ कल्केनामलकीभवेनविधिवत्कुष्मांडबीजस्यवाकर्क र्याश्चत्रपुबीजजेनबहुधाबस्तिंविलिंपेत्ततः॥ ७१॥ तेनैकेनच मूत्रनिग्रहगदोनाशंप्रयातिध्रुवंयोगानांत्रितयंसुवैद्यभणितंमू त्रंबहिःसारयेत्॥ ७१॥ अथगृध्रसी॥ क्रमात्स्फिगूर्वोरुक टीसपृष्ठस्सजानुजंघापदमास्थितोसौ॥ गृण्हातिवायुःखलुगृ ध्रसीतिसंस्तंभसस्पन्दसरुक्प्रतोदैः॥ ७२॥ स्तंभताजानुजंघो रुसंधीनांस्फुरणंभृशम्॥ वायुजायांभवेत्तोदोदेहेचातीववक्रता

॥७३॥ अथास्याः प्रतीकारः॥ गृध्रस्यां प्रथमं नरञ्च वम नेनैकेन दीप्तानलं ज्ञात्वा वैद्यवरो निरामम सकृत्सद्बस्तिभिस्स-ञ्चरेत्॥ नो शुध्यति यावदेव मनुजो बस्तिं न तावच्चरेद् गस्म न्यैव कृतं यथा खलु न यात्स्नेहो भवेत्सर्वथा ७४॥ अथान्ययो गः॥ एरंडबीजानि निकुट्य दुग्धे संपाच्य तत्पायसमेव भुक्त्वा ॥ शूलं च कट्याश्च यथ गृध्रसीं वा हन्याच्च तैलार्द्रकमातुलुंगैः॥ ७५॥ अन्यच्च॥ घृतैस्तु तुक्रं सगुडं पिबेत्तद्रोगस्य संयमलया यनित्यम्॥ प्रगृध्रसी वातबलाशजान्या सवान्हिसान्धेन च गोर चेण॥ ७६॥ मुखप्रसेके न च तन्द्रया च सभक्तविद्वेषयुता तु तन-स्याम्॥ २६॥ रुबूकतैलेन च धेनुमूत्रं समागधीचूर्णमलं पिबेद्वा ॥७७॥ अन्ययोगः॥ मृगेन्द्रास्यदंतीकषायस्तथा रग्वधै-रंडतैलेन पीतो विशेषात्॥ प्रकृष्टा प्रगृध्रस्य लं नाशमेति प्रया ते गतिं तन्निरुद्धां लभेच्च॥ ७८॥ अथ पञ्चशूलीवायुः॥ जङ्घा पार्श्वत्रिकोरुष्वपि च चलितः पृष्ठदेशे च शूलं कुर्याद्दाह्याम लिगश्च यशु अपि वा पञ्चशूली स वायुः॥ रास्नैरंडामृतारग्व धसुमनसां काष्ठकैश्च त्रिकंटैः क्वाथो वै भव्य पत्रैर्भवनजरजोयु क्त एव त्रसेव्यः॥७९॥ अथास्य प्रतीकारः॥ पथ्याक्षाम लकीफलक्रमशतं प्रात्वांद्विभागं पुरः प्रस्थैकं च जलैकद्रोणउषि तं रात्रौ प्रभाते पुनः॥ लोहे पात्रवरे शृतार्द्धमखिलं सद्वस्त्रपूतं पु-नः संपाच्यानलतो च ता यत्नतो द्रव्याणि चैतानि तु॥८०॥ जन्तु घ्नत्रिफलामृतामगधजादन्तीत्रिवृन्नागरान्सञ्चूर्ण्यार्द्धपलानि त-त्र मरिचैर्युक्तान्यलं प्रक्षिपेत्॥ पानीयं त्वशनं यथेष्टमसकृत्सी

त्वातुभुक्तेपिनभुक्तोनूतनखंजतांचजठराण्यापांडुतांगृध्रसीम्॥
८१॥ गुल्मप्लीहरुजंहरेच्चसहसायामास्त्रवातौतथापथ्यादिप्रथित
स्तुगुग्गुलुरलंकुर्य्याच्चनागो पमम्॥ मातुष्येसबलंजवेनतुरगंदे
हेदृढंमानवंनेत्रेगृध्रसमेक्षतस्यसहसासंधानकोपुष्टिदः॥८२॥
॥ अथखंजः॥२८॥ कट्याश्रितोवायुरथोत्रसक्थ्नो याःकंडुरा
स्ताश्चसमाक्षिपेच्च॥खञ्जस्तदावैमनुजस्त्वथैकपादस्तथाचा-
स्यचिकित्सितंहि॥८३॥ अथास्यप्रतीकारः॥ आभाकुंड
लिनीवरीसहपुषाश्यामाजवानीशटीरास्नागोक्षुरपीवरीमिसि
जगद्दीप्येसमैश्चूर्णितैः॥तुल्यंकौशिकमभ्रहृव्यमुचितं तस्या
र्द्धभागंक्षिपेदक्षाईंसुरयाचकोलपयसाक्षीरेणयूषैस्तथा॥
८४॥ तद्वन्मांसरसेनभुक्तमसकृत्संध्यस्थिवातेतथामज्जा
स्नायुगतेकटिग्रहयुतेबाहुस्थितेपृष्ठगे॥गृध्रस्यांचहनुस्थिते
पदयुगेजानुस्थितेवाकफेयातेवातगदेचयोनिजगदेभग्नास्थि
खंजेक्षते॥८५॥ अथकलायखंजः॥ नाभेरधस्ताद्गच्छ
न्यःकम्पतेचयदावधि॥ कलायखञ्जउक्तोसौमुक्तसन्धिप्र
बन्धनः॥८६॥ अथास्यप्रतीकारः॥ शृंगचर्मखुरवर्ज्जि
तमाजंमांसमेवदशमूलसमेतम्॥द्रोणमानजलपाचितपा
दंक्काथमत्रतिलतैलसमेतम्॥८७॥ जीवनीयगणदुग्धस
मंतत्स्यमानतुलितंखलुपक्ष्या॥साधितंचसरसंनववर्ष्योर्ध्वछागलाद्यमखिलार्तिहरंहि॥८८॥ अर्दितेगृध्रसीकुब्
जखंजापतन्त्रेऽपतानेचमूकेतथामिन्मिनेपि॥कर्णशूलेचखञ्जेथपङ्गोतथाकर्णबाधिर्य्यमुक्तेचवायौसमस्ते॥ तैलमेत-

द्रुतंचापिसंपाचनीयंविधिज्ञैर्भिषग्भिर्यथार्थं तथैव॥भोज
नार्थंपरंसर्ववातप्रभूतास्समस्तागदागद्गदाद्यास्तुनस्युः॥८९
अथपंगुः॥ सक्थ्नोः कट्याश्रितोवायुःकंडुरमाक्षिपेद्यदा
॥पादयोश्चद्वयोर्जन्तुः स पन्थ्यांपंगुरुच्यते॥९०॥ अथा
स्यप्रतीकारः॥ व्योषामृताकुष्ठशटीवचाभिरास्नाकणामू
लसुसैन्धवैश्च॥दार्व्यश्वगंधामधुकामरैश्चकल्कीकृतैरप्र
मितैस्समस्तैः॥९१॥तैलंपचेन्मन्दहुताशनेनवातेषुसर्वेषुहि
तंविशेषात्॥शिरोक्षिरोगेतिमिरेर्दितेपिवातेऽपदन्तेश्रुतिशू
लरोगे॥९२॥ हनुग्रहेपक्षहतौचखंजेपंगौचपांगुल्यगदेऽप
बाहौ॥बाहुग्रिग्रीवाशिरसांगदेचस्यपानबस्त्यौव्यथमर्दने
पि॥९३॥ अथक्रोष्टुशीर्षम्॥ सदागत्यस्रजश्शोथोम
ध्येजानोर्महारुजः॥क्रोष्टुशीर्षसमस्थूलोवातोऽसौक्रोष्टुशी
र्षकः॥९४॥ अथास्यप्रतीकारः॥ अमृतात्रिफलाजलैः
पुरःपुनरन्यत्पयसारुबूकजम्॥प्रपिबेदथतैलमेववाप्रथित
स्वात्रतथैवदेवदारु॥९५॥ अन्ययोगोनन्दादोहाया॥ ॥
तित्तिरिपलरसयुक्तंगुग्गुलमेहि॥जंबुकशिरगजनाशोसिंहमवे
हि॥९६॥वातरक्तहरमौषधमुग्रम् क्रोष्टुशीर्षहरमेवप्रसिद्धम्
॥सुश्रुतादिमुनयोजगदुस्तेवैद्यशास्त्ररचनाघटिताये॥९७
॥ अथखल्ली॥ जंघोरुपादकरमूलशिरावमोत्थखल्लीकरो
तिसहसाव्रमिशूलरोगान्॥कल्कस्तुकुष्ठगदसैन्धवजस्तुतैल
युक्तःसुखोष्णमभिमर्द्यनिवारयेत्ताम्॥९८॥ अथान्ययो
गः॥ भल्लातकुष्ठामरदारुसिक्थशुंठ्यम्लतैलैश्चपटुप्रयुक्तैः

कल्कीकृतैः कोष्णतरैर्विशेषात्स्वल्पीविजेयाभिषजाल्पकाले ॥९९॥ अन्योयोगः॥ अभिन्नसवरलोहशलाकातापना पितपदद्वयमाशु ॥ खल्लिकागदसदागतिराशुतंविहायय तनेपरिगन्तुम्॥१००॥ अथवातकंटकः॥ गुल्फाश्रितंन वातेनरुक्पादेविषमेश्रमात् ॥ न्यस्तेवाजायतेनत्रवातकंटं जगुर्बुधाः॥१०१॥ अथास्यप्रतीकारः॥ रक्तावसेचनपद द्वयसूचिदाहावेरंडतैलवरपानमुशन्तितत्र॥ अथपाददाहः ३४॥ वातस्तुपित्तरुधिरेणचचंक्रमाद्वैपादद्वयेचसततं प्रकरोतिदाहम्॥१०२॥ अथास्यप्रतीकारः॥ तंपाददा हंशतशीतनीरसंपेषितैर्निष्कुलितैर्मसूरैः॥ संपेष्यपादद्वयले पितैस्तुसंमार्जितैश्चोष्णजलैर्निहन्यात्॥१०३॥ अन्ययो गः॥ नंदादोहा॥ नवनीतंयदिलिप्तंपादतलेहि पदतल दाहविनाशस्सत्यमवेहि॥१०४॥ अथपादहर्षः॥ बला शवातकोपतःप्रहृष्यतेपदद्वयम् प्रसुप्तताभवेद्ध्रुवंचपादहर्ष ईरितः॥ रुबूकबिल्वकाश्मरीबलाश्वगन्धिकांघ्रिभिस्तुलैक मानसंमितैः पृथक्पृथक्प्रपेषितैः॥१०५॥ जलैस्तथैवपाद लाशुतैश्चवेदद्रोणकैर्विपाचितैस्तुपादहीनसंश्रितैःकषायकैः शतावरीनागरत्वगग्निहिंगुदन्तिकाकुमीध्रसत्त्रुटीनलंस मंगयासमंस्तथा॥१०५॥ सरास्नयाचसैंधवैर्विपक्वमाशु तैलकंविमर्दितंसदागतिंकफान्वितंविनाशयेत्॥ समस्तवा युरोगहृत्समस्तपित्तनाशकंकफापहंपरंस्मृतंचपादहर्षना शनम्॥१०६॥ अभ्यंगपानावपिबस्तिकर्मनस्यंतथानेन-

विधाय सम्यक् ॥ यद्यत्र युक्तं च तदेव तत्र वैद्याधिराजो विजयेत्र रोगान् ॥ १०७ ॥ अथाक्षेपकः ॥ ३५ ॥ धमनीः सकला प्रभंजनः कुपितोऽभ्येति मुहुर्मुहुश्चरः ॥ तनुमाक्षिपती ह सर्वतो भिषजाक्षेपकवायुरीरितः ॥ १०८ ॥ अथास्य प्रतीकारः ॥ आक्षेपवायौ च शिराविमोक्षं कुर्यात्सुवैद्यस्तु यथाक्रमेण ॥ रास्नाग्निकृष्णाबहुपुत्रबिल्वगोकंटकैः सैन्धवपुष्कराभ्याम् ॥ १०९ ॥ संसेवितं चाशु समं प्रपिष्टैर्घृतं हि वातार्तिहरं विशेषात् ॥ रास्नादिकं वैद्यवरैर्यथार्थमुक्तं च शास्त्रे विदितं समस्तैः ॥ ११० ॥ अथ दंडकाक्षेपः ॥ ३६ ॥ स्तभ्नाति पाण्यंघ्रिशिरांसि पृष्ठश्रोण्योस्तु वायुः खलु दंडकादिः ॥ आक्षेपकोऽसाध्यतमो भिषग्भि रायैश्चिकित्स्यो न कदापि धीरैः ॥ १११ ॥ इति दण्डकाक्षेपोऽचिकित्स्यः ॥ ॥
अथ दंडापतानकः ॥ ३७ ॥ कफावृतः प्रभञ्जनो यदा धमन्यवस्थितः स दंडकापतानकः करोति दंडवत्तनुं ॥ ११२ ॥ अथैतस्य प्रतीकारः ॥ बलामूलक्वाथैरपि च दशमूलीशृतजलैर्यवोत्थैः कोलत्थैर्वसुवसुमितैः सैन्धवयुतैः ॥ कुलित्थानां क्वाथैरथ सुपयसा तैलममलं शृतं नत्वङ्गागैकं मधुरगणवद्योषधिगणैः ॥ ११३ ॥ नतं कुष्ठं रालं त्रिदशवरदारुं मिसिमलं सपत्रं मंजिष्ठाऽगुरुशानजटापद्मकजटाः ॥ तथोग्राशैलेयं त्रुटिहृद्यसुगन्धाश्वसरलं सकालामञ्जिष्ठाद्वय पर्णिकाव्यासपर्ण्यः ॥ ११४ ॥ सुसिद्धं च्चैताभिः प्रथितमखिलव्याधिहरणे बलाद्यं सत्तैलं हरति सहसाक्षेपकगदम् ॥ सुवर्णाढ्ये पात्रे रजतरचिते वाप्यथ घटेनिधायां थोत इद्वरणिमणिकाचादिजनिते ॥ ११५ ॥ विशेषा

सं सेव्यं नृपतिनृपमान्यैश्च धनिभिः प्रसूताभिस्तद्वद्दुत्तविपुल सन्तानजनकम्॥ बलाद्यं वन्ध्याभिः प्रकृतिसुकुमारैर्बृहदिदं विनाशायाक्षेपादिकगदगणस्याशु नितराम्॥११६॥ हिक्काकासश्वासगुल्माधिमन्थभग्नक्षैण्यक्षीणवीर्य्यक्षयादीन्॥ क्षीणं वातं चात्रवृद्धिं विशेषाद्धन्त्याशीतं नस्यवस्तिप्रलेपैः॥११७॥ अथान्तरायामः॥३८॥ सर्वांगुलीगुल्फसुजाठरोरोहृत्कंठसंस्थस्तु प्रभञ्जनोलम्॥ क्षिपत्यथोवेगतएवनाडीः स्नायूनितत्राशुविवृत्तनेत्रः॥११८॥ कफम्वमन्भग्नसुपार्श्वकस्संस्तब्धाहनुर्वास्यधनुर्यथैव॥ विनामयेच्चान्तरतो विशेषात्सोभ्यन्तरायामउदीरितस्तु॥११९॥ अथास्य प्रतीकारः॥ अथसदागनिशात्रुतुलां पचेदपिचद्रोणजले शृतशेषके॥ सुनितैलमलं चगवां पयो युतनमं त्वथवेदमिदं भिषक्॥१२०॥ अपि च सैन्धवजीरककुन्धनैस्त्रिकटुगर्दभशाकसुसर्ज्जकैः॥ अपि पयोव्रततीद्वयश्रेयसीजटिलयाक्षुरकैकिजलैः शृतम्॥१२१॥ अपितथाक्षमितैश्चपलाण्डुकैर्वरसितैरपि खंडभवैरपि२२ अभ्यंगनस्यादिषुभोजनेषुयुक्तं सदा यातगदापहारि॥ अधोर्ध्ववातेषु च पक्षघाते कुब्जे ऽपबाहौ शिरसः प्रकंपे॥ सेव्यः सदैवाशु भिषक्प्रणीतशास्त्रोदितं तैलमलं विशेषात्॥१२३॥ अथोन्तरायामसदागतौ च शिरोक्षिरोगेऽर्दितवातजाते॥ सकण्डुरास्नायुशिरासुजातान्रोगान्निहंत्याशु च तैलमेतत्॥१२४॥ अथ बाह्यायामवायुः॥ महाहेतुभिर्वा बलीवायुरेव शिराः कंडुरास्नायवः पृष्ठगाश्च॥ तथैवात्र मन्यासु संस्थास्तु बाह्या

विशोष्याथबाल्येविनम्रीकरोति॥१२५॥ सबाल्यादिरायाम
वायुस्तुतत्रविमर्दसुतैलंविशेषेण वक्ष्ये॥द्विपर्णीबलापुत्रि
णीवात्तशत्रुधनाध्यक्षपूतीकवानारिमूलैः॥१२६॥ शतावहा
रसैः कंटकारीजटाभिःपलैकप्रमाणैश्चप्रस्थंतिलानाम्॥सु
तैलंपचेत्क्वाथकल्कैःपयोभिर्गवांछागिनीनांतथावेदभागेः
॥१२७॥गजाश्वानरावातभग्नाश्चकेचित्तथाजन्तवोगोसुरवान्येपि
सर्वे॥समस्तांगपीडाविनिर्मुक्तदेहास्सदायातरोगेश्चसर्वैर्वि-
मुक्ताः॥ १२८॥ तथाऽयानरोगेऽश्मरीशर्करासुक्षयेपित्तरेक्तेऽ
र्दितेवातरक्ते॥ अथोकामलायांतथापांडुरोगेसशूलेत्वदिमा
यशो वीर्यहीने॥१२९॥विशेषाद्विमर्दंचपीत्वापिवन्ध्या
लभेत्पुत्रिकापुत्रसंघान्बलाढ्यान्॥ परंविष्णुतैलंचविष्णुप्रणी
तंहरेद्वातयमायाममेवंचवायोः॥१३०॥३९॥ अथधनुस्तंभः
॥ धनुरिव नमयतिसहसावायुर्दुष्टोयदेवमनुजानाम्॥ त
नुमपिसहसाकुरुतेनम्रंसधनुस्तंभउक्तोवै॥१३१॥ प्रतीकारः
॥ प्रसारिणीछिन्नरुहाबलानामेरंडद्विकमूलशतावरीणाम्॥कि
रातचाराहश्रुतीपलानांशतंशतंकुम्भजलार्पणेहि॥१३२॥विपा
च्यपादंपरिगृह्यतेनमांसोदकंपक्वमलंचकोष्ठः॥दुग्धन्दधेर्म
ण्डसुतन्तुसूक्तमम्लेनकांजीकमथोद्विभागम्॥१३३॥ शुंठीवि
षाव्दशटिकात्रुटिपत्रकानितताुरुणारुक्कसितचन्दनानि॥पलै
कमानानिचकल्कितानिपृथक्पृथक्पेष्यनियोजितानि॥१३४
॥रास्नोवर्णोर्मत्स्यकगन्धयाचपाञ्चालिमूल्याहिसुभूतकेशी॥
प्रसारिणीचन्दनजीवनीयैःकृष्णागुरुःकटुकरोहिणिकादिका

भिः॥१३५॥ पचेच्चतैलंभिषगत्रयुक्त्यानियोज्यवातान्निखि
लानजस्रम्॥ निहन्तिनित्यंपरिशीलनेनप्रायोधनुस्तंभगदंक्ष
णेन॥१३६॥ अश्वागजावातजरोगयुक्तानरास्समस्तांगजप
क्षघातैः॥एकांगसंस्थैरखिलैश्चवातैःसमुक्तदेहास्सुखिनोभ
वन्ति॥१३७॥ आत्रेयभणितंतैलंप्रसारिण्याःप्रभावतः॥ध
नुस्तंभापतानौचनिहन्तिविनिषेवितम्॥१३८॥ अथकुब्ज
वायुः॥४१॥ हृत्पृष्ठमाक्रम्यसरुक्प्रकुर्यात्तथोन्नतंयत्रचकु
ब्जवायुः॥ तत्राशुवैद्यस्तुप्रसारिणीनांशतंशतंकुड्यपृथक्पृ
थक्च॥१३९॥ तोयार्मणेपाच्यचपादशेषेतैलंपयोभिर्दधि
काञ्जिकाभ्यां॥ पचेद्विभागैरखिलैश्चकल्कैःपलद्वयैश्चित्र
कपिप्पलीनाम्॥१४०॥ मूलैश्चसिन्धूत्थसुनाककाष्ठेरास्ना
करीन्द्राच्चपलाजटाभिः॥ प्रसारिणीनांचतथाजटाभिर्भ
ल्लातकैर्मन्दहुताशनेन॥१४१॥ सिध्यात्तथैवमधुकेनचकुब्ज
वातंश्लेष्मान्विलान्वातगदान्निहन्यात्॥ ॥नारीनराणा
मपिवातजातानशीतिमेतद्धिनिहन्तिशीघ्रम्॥१४२॥ शिरःपृ
ष्ठग्रीवाहनुस्तंभकुब्जसपंगुलखंजलवातेऽर्दितेहि॥परन्तैल
मेतद्धिमर्द्यंविशेषात्प्रकृष्टोन्नतंकुब्जवातन्निहन्ति॥१४३॥
अथापतन्त्रोवायुः॥ स्वैःकोपनैःकोपमुपेत्यवायुःस्थाना
द्यदोर्द्ध्वंप्रवर्त्ततेहि॥संपीडयन्वाहृदयंचगत्वाशिरश्चशं
खावपिपीडयन्हि॥१४४॥ गात्राणिनम्राणिधनुःसमानिवा
क्षिप्यमोहोच्छ्वसनानिकुर्यात्॥तदाजनस्तब्धविलोचनस्तु
निमीलकःकूजतिनष्टसंज्ञः॥१४५॥ कपोतवच्चात्रचसोपत

न्योनतत्रबस्तिंवमनंनिरूहम्॥ कुर्यात्तथान्यत्कफमारुताभ्यां प्रध्मासकोच्छ्वासवहाधमन्यौ ॥१४६॥ विरेचयेच्चाथविधिंविचार्य शीर्षरेकप्रवदन्तितज्ज्ञाः॥ अतोभिधास्येप्रथमंप्रयोगमल्पेनकालेनचरोगहारि॥ १४७॥ जन्तुघ्नमारीचफणिज्जशिग्रुबीजानिपिष्ट्वाखलुनस्यमेषाम्॥ प्रधम्यमानंनसिशीर्षरेकाद्दैर्घ्येर्जयेयोप्यथवापतंत्रः॥ १४८॥ पंचश्लो० एकान्वयः॥ अन्यच्च॥ हरीतकीवचाघृतैःसुसैंधवाम्लवेतसैस्सुरास्नयार्द्रकान्वितैश्चपाचितैश्चलङ्घनैः॥ सुसेवितैर्विशेषतोऽपतन्त्रवायुनाशनंप्रकीर्तितंचसुश्रुतादिवैद्यभूपवर्णितम्॥ १४९॥ अथापतानः॥ हृष्टिंसत्त्वस्यसंज्ञामपिचबहुधानाशयित्वातुकण्ठेकूजत्येवंनरोवैहृदिचनियतंमुच्यमानेपि किंचित्॥ लब्ध्वास्वास्थ्यंपुनरपिततोयातिमोहंसदावैवातेनैवंजगुरथपुनर्दारुणञ्चापतानम्॥१५०॥ अथास्यप्रतीकारः॥ अप्रुताक्षमवेपनंत्वरमाणसाशुमुपाचरेत् यावदाशुनशय्यगोनिपतेच्चभूतलमेवसः॥तावदेवदशांघ्रिसंशृतनीरमेवहिकेवलं पाययेन्मगधान्वितंपल्लवारिभक्तमथोनतः॥ १५१॥ अन्ययोगश्च॥ स्वेदस्तैलविमर्द्दनंचगदितंतीक्ष्णञ्चनस्यन्ततःस्रोतश्चापिविशोधनंघृतमथोपेयंत्वशुक्लापुनः॥दध्यम्लंपरिपीतमाशुमरिचैःस्नेहस्यबस्तिःपुनर्हन्त्युस्तेप्यपतानकंगदमलंवातप्रभूतंस्फुटम्॥१५२॥ अथपक्षघातः॥४४॥ गृहीत्वार्द्धकायंशिरास्नायुशोषंविधायाश्चवायुश्चपक्षांनिहन्ति॥ समंसन्धिबन्धान्विमोक्ष्यार्द्धदेहमक

र्मेक्षमंकृत्स्नमन्यत्प्रकुर्यात्॥ १५३॥ तमेकांगवातञ्च पक्षेकघा
तजगुः केचिदन्येपुराणास्सुवैद्याः॥ ससंतापमूर्छायदाहैः प्रयुक्तो
भवेत्पित्ततश्लेष्मणाशोथयुक्तः॥१५४॥ तथागौरवंशीततन्द्राचात्र
नित्याप्यथोवातजः केवलंसाध्यउक्तः॥ क्वचित्साध्यमन्येनयु
क्तस्तथापिनसाध्याभवेद्यः क्षयोत्थस्तुतत्र॥ १५५॥ अथो-
स्यप्रतीकारः॥ माषात्मगुप्ताबिल्ववातशत्रुवाट्यालमूलीशृ
तनीरमेकम्॥ ससैन्धवंहिंगुयुतंविशेषात्पक्षैकघातंविनिहन्ति
शीघ्रम्॥ १५६॥ माषिकेहिंगुसिन्धूत्थेमाषाद्याश्शाणिकास्मृ-
ताः॥ पांचालिमूलंपाञ्चालीरास्नालोकाग्निसैन्धवैः॥१५७॥
कल्कितैर्माषनीरैश्चशृतंतैलंविशेषतः॥ पक्षघातंनिहन्त्याशु
वायुर्जलधरानिव॥१५८॥ अन्ययोगः॥ माषबलारसना
शनपन्थासैन्धवगुप्ताशृततिलतैलम्॥ माषबलाश्रि नवेदप
योभिः पक्षहतिंविनिहन्तिविशेषात्॥ १५९॥ अथसर्वांगग-
तवातः॥ सर्वांगवातेकुपितेनगात्रसंमज्जनंसंस्फुरणंविशे
षात्॥ यास्सन्धयस्तस्यचवेदनाभिः स्फुटंस्फुटन्तीवचतत्रवे
द्यः॥१६०॥ प्रतीकारः॥ तैलावगाहेनसमस्तगात्रजातन्त
थैकांगगतंविशेषात्॥ शिराविमोक्षैश्चजयेत्तथैववायुर्यथा
मेघचयनभस्तः॥१६१॥ अथपित्तयुक्प्राणः प्राणेवा
योपित्तयुक्तेनराणांछर्दिर्दाहोवेदनावातजान्याः॥ जायन्ते
चैतद्धृदिप्रायसोत्रसेव्याछिन्नाकोष्णानीरैर्मरीचैः॥१६२॥ प्र
तीकारः॥ पिबेदुष्णांभसाप्रातर्गुडयुक्तांविचक्षणः॥ हृद्या
निलनाशायचाश्वगन्धांविभीतकम्॥१६३॥ अथकफयुक्

प्राणः॥ प्राणोचापिकफान्वितेसिसदनंदौर्बल्यतन्द्रान्वितम्वै
रस्यंहृदयेरुजश्चवहुधाश्लेष्मप्रकोपोभवेत्॥ देवानांचसविश्व
काष्ठमसकृत्पीत्वासुखीजायतेहृद्यातोत्थविकारसंचयरहितःपुष्ट
स्तनोरस्संभवेत्॥१६४॥ अन्ययोगोनन्दादोहृया॥ अंशुम-
तीजलसिद्धंहृदिकुपितेहि काकोल्यस्वुनिसिद्धंसाम्लन्देहि॥१६५
॥भिषकूप्रयुक्तंबालेगोपयएवं कफयुतप्राणोगदितन्त्तहृयमेव॥
१६६॥ अथापानस्सपित्तः॥ समानपित्तकोपतःप्रदत्सने-
यऊषणा॥ सजीरकंसिताग्रुतंस्तनोश्नमाशुगोपयः॥१६७
॥पिबेदथोपरंब्रुवेहितिआपुसादिसत्फलात् सुबीजजातमज्जिका
सिताघृतैश्चभर्जिता॥१६८॥ युग्मेनयोगहृयम्॥ अथस-
कफापानः॥ श्लेष्मापानेसंयुतेधश्शरीरेशैत्यन्तद्वौरवं न
श्चिकित्सा॥ राष्णान्वय्यंचित्रकंतिन्तिडीकंस्वर्जक्षारंधान्यकंजी
रयुग्मम्॥१६९॥ तालीसोग्रापत्रकत्र्यूषणानिजावक्षारंवैपटू
न्यल्वराश्रिम्॥ मिस्यादीप्यातुंबुरुंवस्तगन्धादाडीम्यान्यत्
पौष्करंमत्स्यतुल्याम्॥१७०॥ अम्लन्तद्वहतसंत्रेफलंचतुल्यं
सर्वसद्रसोनंचतस्मात्॥ सर्वस्माद्वैमात्स्यमेवात्रवेदसंख्यो
न्मानंसद्दुतेःपिंडयित्वा॥१७१॥ श्लेष्मापानंहन्तिमासोदके
नयद्वाबुग्धैःसेवितंतद्वदेव॥ तूण्यांगुल्मेक्रोष्टुशीर्षेक्षयेचप्र
मेशूलेवातयुक्तेबलाशे॥१७२॥ सेव्यन्तद्ज्वारवैषम्यतायां
मांद्येवातेवाहनुस्तंभवायो॥ कुर्य्यात्तुल्यंस्वर्णतुल्यंमनुष्यं
जायापुत्रैर्भृत्यसौख्यैःसमेतम्॥१७३॥ अथसकफसमा
नः॥ समानवायौकफसंयुतेचाग्निमूत्ररोधस्त्वचरोमहर्षः

॥स्तब्धत्वमेवाशु च जाठरश्चेत्तस्य प्रतीकारमहं ब्रवीमि १७४
५६ चित्रकेन्द्रजवपाठकट्वीभंगुराभिरभयाकथितोयम्॥
नाभिजातकफरोगविनाशे रामबाणसदृशः कथितोयम्
॥१७५॥ अथसपित्तसमानः॥ मूर्छातृष्णास्वेददाह
स्समानेवायौपित्तेनान्वितेतच्चिकित्सा॥ चर्वेल्पकोवाप्सु
शीरप्रभूतस्सेव्योनित्यंश्चोषणैःसत्सिताभिः॥१७६॥ ॥
अथसपित्तोदानः॥ भ्रमोदाहोमूर्छाक्लमअपिसपित्तेभ
वतित्वेदुदानेधात्रीणांमरिचसितयाचूर्णमसकृत्॥प्रभुक्तन्त
द्रोगंहरति सहसामेघनिचयंयथावायुःपापंहरिरिवसदा-
ध्यानचरणः॥१७७॥ अथसकफोदानः॥ अस्वेदहर्षौ
जठरेऽग्निमान्द्यंशैत्यंकफोदानगदेचतत्र॥स्वेदःप्रकार्योद्रुत
प्रातप्रस्तदेशेषुसर्वेषुविजानताच॥१७८॥सिद्धार्थमिश्रैर्मर्दने
नप्रत्नैस्ततोपिशान्तिंनव्रजेत्कदाचित्॥ तदामृदुस्नेहविधान-
योगैःसंशोधयेत्तांश्चवदामिचाग्रे॥१७९॥ एरंडतैलंपयसा
थवापिघृतन्तथातिल्वकसिद्धमाशु॥यद्वाघृतंशातलिकादि
सिद्धंपिबेदलन्दोषविनाशनाय॥१८०॥ अथसपित्तव्यानः
व्यानेपित्तसमन्वितेदवथुरुक्गात्रस्यविक्षेपणंतद्वच्चात्रश्रमो
भवेदथयथावक्ष्येचिकित्सांस्फुटम्॥श्रीमद्रामफलाविडंगहृ
हतीकाश्मीररात्रिद्वयैर्मुस्तादाडिमसारिवात्रुटियुगैःपर्णद्वये
र्नागरैः॥१८०॥सैलावालुककुष्ठदेवतरुभिर्मञ्जिष्ठयामाल
तीपुष्पैर्वैबृहतीकसेरुसहितैःपिष्टैर्विशालान्वितैःदंतीपंक-
जपद्मकैर्नतकरीपुष्पैःसपाटीरकैःकर्षैकप्रमितैःपृथक्पृथग

थोऽहृव्यं द्विनिशासल्कम् ॥ १८१ ॥ तोयैश्चापि चतुर्गुणैरथ पचे-त्कल्याणसंज्ञं घृतम् भुक्तं पीतमलं प्रमर्दितमिदं यश्चार्धसे-दानिलान् ॥ शूलोन्मादमपस्मृतीश्वसकलैकैकांगवातानपि तद्वत्कुंडलवातमाशु शमयेद्व्यानं सपित्तं ततः ॥ १८२ ॥ अथ सकफव्यानः ॥ व्याने श्लेष्मासंयुते शूलशोथौ स्तंभस्तद्वद् डकस्तच्चिकित्सा ॥ हृव्यं प्रस्थं चेदप्रस्थैः पयोभिः क्वाथैस्तद्व-च्छीवरीजैस्तु सिद्धम् ॥ १८३ ॥ वृष्यमाशु पलवर्धनमेतद्वातजा-तबहुरोगविनाशि । सेव्यमेव सकफेऽखिलदेहे व्याननाम्नि विषमे बहुधैव ॥ १८४ ॥ अथ रसगवातः ॥ त्वग्रूक्षा स्फुटिता कृशा तु कृष्णा सुप्ता सकृत्तु घते रागेनापि समन्विता च सरु-जा वा ऽऽतन्यते त्वग्गते मर्द्यः स्नेहमथोत्र च तथा स्वेदान्प्रकु-र्यात्स्फुरं स्तानये प्रवदामि वैद्यधरणीपालैरलं वर्णितान् ॥ १८५ ॥ प्रतीकारः ॥ रास्नैरंडमूलामलकतिलयुतैरष्टवर्गेणाशुं-ठ्या मांसैरानूपसंज्ञैर्मिसिपटुरसैरम्लकैः स्नेहजातैः ॥ गोधूमै-रुककैरथ च वरभिषक्त्या चितैर्माषबीजैः गोकंदैस्तथोमासे ममारिवलवरैश्शाल्वणः कीर्तितायम् ॥ १८६ ॥ इति शाल्वण पोटलीस्वेदः ॥ रसस्य त्वगाधारत्वात्त्वक्शब्देन रसो गृह्य-ते ॥ अथ रक्तगवातः ॥ तीव्रा रुजश्च कृशता रुचिरत्र गात्रे चारुः पिचाथ भुक्तस्य न संभवन्ति ॥ स्तंभस्तु वैवर्ण्यमसृग्ग-तेऽहि वाते विशेषाद्बहुशीतलेपान् ॥ १८७ ॥ प्र० ॥ असृग्ग-ते सदा गतो विरेकमाशु कारयेत् तनाश्शिराविमोक्षणं च का-रयेदसंशयम् ॥ १८८ ॥ अन्यच्च ॥ हरनयनफलासुशांखि

नीत्रिफलाक्काथविडंगदंतिनीक्कथित घृतमलंसुधातृवृद्धिली-
धैःपरिपाचितंनरः॥ अपनयतिपिबन्विरेचनान्निश्रितंवासृग
दंत्वरक्तगम्॥१८९॥ अथमांसगवातः॥ दंडसुषितिनिहतंप
थातथातुघ्नतेगंमखिलनाथागुरुस्तब्धमाशुगगदेचमांसगे-
आयतेस्तिमितसेवयाथा॥१९०॥ प्रतीकारः अर्धाढ
कंमाषमथोदशांघ्रितुलार्धमस्यार्द्धमलंबलायाः॥मूलंबलार्द्धं
किलकेतकीनांदक्षस्यमांसंन्यधिकंचत्रिंशात्॥१९१॥पलन्त
थारिंरिकयाचपंचाविंशत्पलंलुलितयाचजलद्विद्रोणे सं-
पाच्यपादरहितेनचतेनतैलप्रस्थंचतुर्गुणपयोऽखिलजीव-
नीयैः॥१९२॥ अष्टौषधीभीरुरुणालसुसारुबूकराष्णाम
गधाशटीभिः॥ शतावरीमुस्तककुष्टरात्रिद्वयैस्तथाकटफल
नागराभ्याम्॥१९३॥ उग्रायवानीमगधांघ्रिमाषव्योषाश्व
गंधालवणात्रयैश्च॥ सिंहीयुगेनापिपुनर्नवायामूलेमतद्वन्म
धुकेनसम्यक्॥१९४॥ सपुष्करैश्वाक्षमितैःसमस्तैर्विगान्वये
द्वैधवरस्त्वयुक्त्या॥ हनुग्रहेमन्दश्रुतौचकफेगात्रस्यसर्वस्य
चपक्षघाते॥१९५॥ कलापखंजैरवलुकर्णनादेवाधिर्य्यकु
ब्जाख्यगदेःपवाहौ॥ दंडापतानेऽङगवृद्धिरोगेविश्वाचि
कायांमपिवातरक्ते॥१९६॥ अंत्रप्रवृद्धौचप्रसूतिकानांरो
गेषुमांसादिषुसंगतेषु॥सेव्यंसदामांसबलाग्निवृद्धौखच्यं
चवीर्य्यप्रदमाशतैलम्॥१९७॥ अथमेदोगतवातः॥
ग्रंथीन्प्रकुर्यात्खलुमन्दपीडाव्रणांश्चमेदोविगतश्चवायुः॥
मेदोगतेरक्तगतेपथैवविरेचनंवाथनिरूहणंवा॥१९८॥ ॥

प्रतीकारः॥ प्रसारिणीपीवरिकादशांघ्रितुलातुलांचोपिपचे च्छिद्रोणे॥ नीरेवशिष्टेखलुतत्रपादेतैलाढकंचापिचतुर्गुणेन ॥१९९॥ दुग्धेनतुल्यंनचतत्रदध्नस्त्वर्द्धभागेनचकांजिकेन ॥ ग्रंथ्यक्षसिंधूश्चप्रसारिणीचपलद्वयोन्मानमितंश्चतद्वत्॥ २००॥ क्षारंसमंगापलिकाद्वयांघ्रिपलंतथाजीवकवर्गजातम्॥ शुंठ्यास्तथापंचपलानित्रिंशद्वल्लातकानांचप्रसारिणी नाम्॥२०१॥ रसैःपलानांचशतत्रयेणसुवर्चलेनापिपलेनतद्वत्॥ त्वचाचसंपाच्यतमाशुवैद्येर्भेदोगतंवातगदंनिहंति॥ २०२॥ अथोऽस्थिगतवातः॥ भेदोंगपर्वसुतथाखलुसन्धिमूलेमांसक्षयोबलविनाशनिरन्तरंरुक्॥ अस्वप्नएवखलुचाऽस्थिगतेहिवातेमज्जागतेचवहिरन्तरतश्चतैलम्॥२०३॥ यत्केतकीनागबलाबलानांरसेनतद्वच्चतुषोदकेन॥ तैलंसुसिद्धंखलुचास्थियातवातंनिहन्याद्बहिरन्तराच्च॥२०४॥ इतिकेतकीतैलम्॥ अथमज्जगवातः पीडानशाम्यतिकदाचिच्चमज्जगेहिवायौप्रसेव्यमथगुग्गुलुमेवनित्यम्॥ व्योषाग्निग्रंथिकशिवाजरणद्वयंचव्याजवानिवचवल्गुजछागगन्ध्या॥२०५॥ क्षारोपटूनिसकलंचसमंहिताहितुल्यःपुरोऽम्लवखेतसमर्द्दयावम्॥ सर्वंगुटीकृतमिदंत्तुविधानपूर्वंश्रीकालपाशहरपूजितयोगनिष्ठम्॥ २०६॥ संध्यऽस्थिमज्जाविगतेचवातेसाम्रगुटीवन्हिविवर्द्धनीयम्॥ भग्नस्यदार्ढ्यंप्रकरोतिनित्यंस्वायंभुवोगुग्गुलुरेषनाम्ना॥२०७॥ ॥ इतिस्वायंभुवोगुग्गुलुः॥ अथवीर्यगवातः॥

क्षिप्रमुज्झति वीर्यमेव च भ्रान्तहृज्जनहैकृतिं कुर्याद्धर्षयुतोन्न पानमसकृच्छुक्रस्य वायुर्ध्रुवम्॥ गर्भस्यापि च वैकृतिं च जनयेत्तन्नाशनं ब्रूमहे क्षीरस्यादकमात्रमत्र विहितं वर्याहिप्रस्थं रसम्॥ २०८॥ आर्द्रोद्धृतमथो हि प्रस्थकमितं तैलस्य प्रस्थे पचेत् मांसीचन्दनदारुपाटलिकनतैरेरंडशैलेयकैः॥ मूर्वासैन्धवनागरांशुमतिकागन्धर्वहस्तोषणैरास्नाघोटकगन्धिकाशटजटाकर्षैर्वर्गेलादिभिः॥ २०९॥ सिद्धं सर्षपतैलमेतदुदितं पीतं हि मासं ध्रुवम्॥ धातुस्थं गलनिग्रहं हृद्गतं मन्याग्रहं नाशयेत्॥ कुब्जत्वं गलगंडकंव्रणगरान् पंगुत्वकुष्ठान्ज्वरान्पामादद्रुविचर्चिकाश्ममहामेहाः पचीगुल्मकान्॥ २१०॥ शूलानि सर्प्यादिविषाणि मूर्छावातास्त्रवृध्यंडसमूढगर्भान्॥ वन्ध्यात्वरोगानखिलानवश्यं विनाशयेद्योनिगदान्समस्तान्॥ २११॥ कामलामयहरं खलु नेत्ररोगदारि सकलामयहारि॥ व्याधिकेपि च सुपौरुषकारि शक्रबुद्धिबलसंस्मृतिसारि॥ २१२॥ खनननोत्पादनग्रहणेष्वथ वै पाने पितस्य ये मंत्राः॥ हरिहरहरिभिरुदितास्तान्वक्ष्ये त्रगुणा यथा॥ ॐ नारायणाय स्वाहा इत्युत्तराभिमुखः खदिरशंकुना निखनेत् ॐ शतावरी ओषधी स्वाहा ॐ सर्वाशासाधनीये स्वाहा॥ इत्युत्पाटनमंत्रः॥ ॐ कुमारीजीवनीये स्वाहा इति पानमंत्रः॥ इति सिद्धार्थतैलम्॥ अथ कोष्ठगतवातः॥ ॥

कोष्ठाश्रिते दुष्टसदागतौ च विनिग्रहस्यान्मलमूत्रयोश्च॥ गुल्मार्शसां ब्रध्नगदस्य पार्श्वशूलस्य हृद्रोगसमुद्भवश्च २१३

स्थानानिचाग्नेर्विपाचितानिमूत्रास्त्रयोर्याणिचतानिवैद्यैः॥ उदंककः फुप्फुसकोष्ठसंज्ञाउक्तास्तथापोदलिकेनिलोके२१४ पाचनीयरसयुक्तैरन्यैःपाचयेदिहमलानिसुयोगैः॥गव्यदुग्धमथपेयंयुक्त्याकोष्ठगेषुखलुवातगजेषु॥२१५॥ अथामाशयगतवातः॥ हृत्पार्श्वोदरनाभीरुक्तृष्णोद्गारविषूचिकाः॥ आमाशयगतवायोःकाशश्श्वासास्यशोषास्युः॥२१६॥ प्रतीकारः॥ प्रागलंघनंपाचनदीपनानिप्रच्छर्दनन्तीक्ष्णविरेचनानि॥मुद्गाजवाश्शालियुताःपुराणाश्चामाशयस्थेत्वनिलेहितानि॥२१७॥ अन्ययोगः॥ भूनीकंपुष्करशठीचेतकीभिःप्रपाचितम्॥दारुबिल्वामृताशुंठ्यःपाचितास्तुतथैवहि॥२१८॥उग्रामृतामागधिकाविशालाक्काथत्रयंयुग्मविवर्णितश्च॥विशेषतस्सामसमीरणघ्नेपीतन्तुसद्योमगदापहारि॥२१९॥ अथपक्वाशयगतवायुः॥ पक्वाशयस्थेत्वनिलेऽत्रकूजमाटोपशूलत्रिकवेदनास्स्युः॥ विण्मूत्रकृच्छ्रंत्वमथोत्रनित्यमानाहरोगोऽपिचतच्चिकित्सा॥२२०॥ अग्निसंदीपनंयद्यत्यवुदावर्तरोगहृत्॥स्वेदस्नेहविरेकादीन्कुर्यात्पक्वाशयेगतो॥२२१॥ अथास्यप्रतीकारः॥ क्षारंचूर्णादिकंवेहदीपनंवन्हिलोककैः॥ कोष्ठ्योःकुटजबीजैश्चपक्वाशयगतंहरेत्॥२२२॥ अथगुदागतवातः॥ विण्मूत्रवातग्रहणासशूलमाध्मानमश्माद्रिसशर्करास्स्युः॥ जंघोरुपार्श्वत्रिकपृष्ठकासरोगाश्चपायौविगतेऽनिलेहि॥२२३॥ अथप्रतीकारः॥ वातेपायुगतेहिवैद्यधरणीपा

लेनकार्य्यंतथोदावर्त्तोक्तविधानमेवत्रिकटुवन्हित्रिवृद्दन्तिभिः ॥ पांचालीजटयागुडेनचसमोदयश्चपायौगतेवायौयोगवरःप्रभातसमयेप्रोक्तंहितस्सर्वदा॥ २२४॥ बलाग्निवन्हिवर्धनोगुडाष्टकस्मृतोहिसः सगुल्मशोषपांडुरुग्गुदागतेऽनिलेहितः॥ २२५॥ अथश्रोत्रादिगतवातः॥ श्रोत्रादिकेन्द्रियगतोविदधातिकुष्टौयस्तुस्तदिन्द्रियवर्धनंहिचित्रमत्र॥ स्नेहावगाहपरिमर्द्दनलेपनानिकुर्यादतन्द्रितमनोविविधौषधानि॥ २२६॥ मन्याभ्रूशंखनासाश्रवणमुखरदब्रह्मरन्ध्रान्ततालुमूर्धानेत्रोत्थरोगानपिचगलगदान्नाशयेच्चापिपीता॥ दिग्मूलक्वाथयुक्ताहरनयनफलाक्वाथयुक्ताथतद्वत्याञ्चालीशलद्याच्चूर्णासमयतिसहसावायुरोगाननेकान्॥ २२७॥ अथशिरागतवातः॥ शिरागतश्शूलकरोहिवातःकुर्याच्छिराकुंचनपूरणानि॥ कुब्जत्वखल्लीबहिरन्तरायामनेवात्रशिराविमुच्येत्॥ २२८॥ प्रतीकारः॥ स्नेहाभ्यंगोपनाहाः लेपसंमर्द्दनानिक्वाथैःकल्कैर्बलायास्तैलमेवात्रसेव्यम्॥ कुर्याद्रक्तस्यमोक्षंश्चापितद्भोक्तनाड्यासेव्यंनाडीगतेवैचान्यवातापहारि॥ २२९॥ अस्थस्नायुगः॥ शूलकंपस्तंभआक्षेपकश्चस्नायौवायौजायमानोभवन्ति॥ स्वेदश्चाभ्यङ्गन्हिकर्मप्रकुर्य्यान्नित्यंतद्वद्बंधनोन्मर्द्दनानि॥ २३०॥ अथास्यप्रतीकारः॥ कपिकच्छुशतावरीबलासितवर्षाभवमूलसैन्धवैः॥ अपिरिंगिणिकातरूद्भवैसवरसैर्माषकषायकैरथ॥ २३१॥ कटुतैलमिदंहिमाषजंश्शननीरैर्हिगुणैश्चसाधितम्॥ अपिनस्यविधानलेपनैर्बहुधावातगदान्विनाशयेत्॥ २३२॥ अथ

संधिगवातः॥ सनतगतोयदिसन्धिगतश्चेच्छूमथुकरोबहुरु-
गुसमेतः॥अपितुनिहन्त्यथसन्धिगणान्सोनिलवरदाहहतोवि
नियाति॥२३२॥ प्रतीकारः॥ स्नेहोपनाहनमथोहिविशा
लिकायामूलंकणाशुद्रसुनंखलुकर्षमेकम्॥निर्गुंडिकावरजटा-
चतथैवतैलैर्भुक्ताकटीशिरगसंधिगवातहन्त्र्यः॥२३३॥ अथोयो
गाः॥ अथझिंझिणीवातः॥ शीतेनेवाकस्मिकोरोमहर्षश्चांत
र्यास्तसञ्चरेद्धापिपील्याः॥तुल्यश्शैत्योद्भूतनैर्बल्यजातोवायुश्चो
क्तोझिंझिणीनामकोयम्॥२३४॥ अथास्यप्रतीकारः॥ निर्यू
हो दशमूलजः प्रशमयेद्धिंग्वान्वितःपुष्करैर्वातंझिंझिणिसंज्ञकं
चबहुधापीतंविशेषेणच॥२३५. अथकुक्षिगवातः॥ वायुःकु
क्षिगतःकरोतिबहुधापीडांसशब्दांस्तपसञ्चूर्ण्याग्निगजादिकांच
मगधांसेवेन्मधुक्तांनरः॥२३६॥ अथास्यप्रतीकारः॥ श्यामा
त्रिवन्मधुनिपेवणतोथचूर्णंकोष्णांबुभाकुटजबीजजमेवभुक्त्वा
॥विश्वाकृशानुघनजंचतथैवमर्त्योमुच्येच्चकुक्षिगतवातविका
रदुःखात्॥२३७॥ अथोयोगाः॥ अथवृषणवातः॥ वृषण-
गेवृषणोश्वयथुर्व्यथाभवतिलम्बरसंहितथार्द्रजम्॥परिपिबेच्चरु
चूकजतैलकर्जयतिवातगदंवृषणोत्थितम्॥२३७॥ अथोर्द्ध्वा
तः॥ आरोहणात्पर्वतकादिकस्ययस्योर्द्ध्वमुच्चैःश्वसनंभवेच्च
॥भोज्यादिनाऽन्येनश्रमादिकेनसचोर्ध्ववातःकथितोमुनीन्द्रैः
॥२३८॥ अथप्रतीकारः॥ वासापत्रैर्जयामूलंपिबेद्दुग्धेननि
त्यशः॥ऊर्द्ध्ववातविनाशायचैवमृपेनिवेदितम्॥२३९॥ अथ-
सुप्तवातः॥ त्वचःस्पर्शनंनैवजानातिमर्त्योभवेत्सुप्तवातस्तु
* रजोबाचरजादनाश्शरीवाचीशिथेत्समथेकेत्ताददन्तोत्रशिरंगइति.

यन्त्रेवनित्यम्॥ प्रतीकारः॥ शिरामोक्षणंचाग्निहोत्रैश्चधूमैः यद्वन्तैलयुक्तंपिबेत्तस्यशांत्यै॥२४०॥ अथांगसंकोचः॥ संकोचयत्यंगमथोशिरागतोवातस्तुतत्रैवचमाषसैन्धवैः॥ तैलंसुसिद्धंपरिमर्द्यवैद्य राजस्तुसंकोचगदंनिहंतिच॥२४१॥ अथगर्भशोषः॥ गर्भेशुष्केबालकानांचशोषेसिद्धंदुग्धंकाश्मरीसत्फलानाम्॥ वातव्याधौ क्लीतकैःपिप्पलीभिःपेयंनित्यंसात्सिताभिःसमेतम्॥१४२॥ अथग्रीवास्तंभः॥ ग्रीवास्तंभेवायुजातेनराणांतैलंमर्द्यसार्षपंतत्रराज्याः॥ कल्कंलिम्पाशूलसुच्चैर्हृदिस्यमायासंवासंहरेन्नात्रचित्रम्॥२४३॥ अथशीतवातः॥ त्वगाश्रितेप्रभञ्जनेचशीतलातनोसदा॥ नचातपोष्ण्यमाशुतस्यशीतवातउच्यते॥२४४॥ प्रतीकारः॥ रसस्यैकभागेनगन्धंद्विभागंप्रमृत्वाथपौनर्नवैरग्निनीरैः॥रवेश्चापिदुग्धैर्विमर्द्यां ऽष्टभागेविपाच्याथचित्रस्यनीरैःक्षणान्तत्॥२४५॥ भवेच्छीतशत्रुस्तुवल्लोस्यनीरैःपिबेदार्द्रजेरर्द्दमेवाथवापि॥ घृतेरूषणैर्मांसहव्यैश्चपथ्यंमहाशीतवातार्त्तिहारीरसोयम्॥२४६॥ अथस्पर्शवातः॥ अंगेषुतोदनंयत्रदाहस्पर्शंनविन्दति॥ मंडलानिचदेहेवैस्पर्शवातस्सउच्यते॥२४७॥ अथप्रतीकारः॥ रसस्यकर्षंनभसःपलंचलोहस्यतद्द्व्यमनस्यभानोः॥पलंपलंनिंबुरसेश्चसमवाराश्चसमर्द्यविभाव्यपश्चात्॥२४८॥ हेमार्कनीरैश्चपयोभिरेवस्नुक्सिंहवक्त्रादिहयारिनीरैः॥ पिंडीकृतंचापिविषस्यमुष्ट्या सस्थाप्ययंत्रेचसु वालुकायाः॥ संस्वेदयेद्युग्मदिनंकणायाःकर्षंप्रानिष्केणविषस्यचापि॥ संचूर्ण्यगुंजाप्रमितंददीतस-

स्पर्शवायोश्च शमायनित्यम्॥ ३५०॥ सर्वेश्वररसश्चायं स्पर्शवातविनाशनः॥ अथान्यारसवरीख्यानावक्ष्यतेसामयाधुना॥ ३५१॥ रसैकभागाद्दशभागतालैर्जयागुडाभ्यांवटिकांविधाय॥ द्विमासमात्रंचप्रभातकालेनिषेव्यतांस्पर्शगदापहत्यै॥ ३५२॥ ॥ अथमंडलवातः॥ वराटीदंशतुल्यानिमंडलानिशरीरके॥ जायन्तेतोदयुक्तानिमंडलाख्येसमीरणे॥ ३५३॥ प्रतीकारः॥ मूलंराजतरोःपिबेच्चनियतंमासद्वयंतेनवालेप्यंचापिसुचक्रमर्दकसर्षपबीजैश्चगोमूत्रकैः॥ अर्कक्षीरनिशाद्वयस्नुकपयोयुक्तैःअसंमर्दयेत्तद्वन्मंडलवातनाशनमिदंयोगत्रयंतत्रनो॥ ३५४ ॥ अथाऽस्पर्शवातः॥ अस्पर्शवातेनजनोपिवातस्पर्शनवेत्यत्रचिकित्सितञ्च॥ गन्धत्रयंतुल्यकमश्वगन्धाद्वयारिहस्तीश्रुतिवायसीनाम्॥ ३५५॥ मूलानिपिष्ट्वाचकटाहमध्येतैलेनपक्त्वाद्विचतुर्गुणेन॥ पक्वार्कपत्रोत्थरसैश्चपश्चाद्विपाचयेदष्टगुणैश्चविद्वान्॥ ३५६॥ अस्पर्शवातप्रशमायतैलंप्रमर्दयेत्तत्रचतत्रयुक्त्या॥ अथोपलाशस्यचबीजजातैरसैश्चसूतंत्रिदिनंविमर्द्य॥ ३५७॥ श्लक्ष्णीकृतेऽस्मिन्विषमुष्टिबीजंसंमर्दयेत्षोडशभागिकंच॥ मासत्रयंनिष्कमितंप्रसेव्यमस्पर्शवातप्रशमायपथ्यम्॥ ३५८॥ अथैकांगवातः॥ बलाल्पताव्यथाहिमेःसमोगमेकदेशके॥ शरीरकेसकार्श्यमेकजांगवातईरितः॥ ३५९॥ प्रतीकारः॥ भजेत्सर्पदीगुग्गुलुंवक्ष्यमाणंसुमाषैकमानांचकर्षाद्वयानम्॥ घृतैस्त्वेकांगवातापहत्त्यैरुबूकामृतावह्निविश्वान्कषायैः॥ ३६०॥ गुग्गुलुः॥ शतावरीसुधालतारुणाऽजयाधिका

स्समाःशतावृथाश्चगंधिकासरास्तथाशशिप्रभाः॥ पुरस्समोहि ताभिरत्रमाहिषाख्यसंज्ञकोघृतेनमेल्यनेमकर्षसंमितासपर्पटी-कस्तक्षितायथानुपानसंमितात्रिमसप्तभिर्दिनैर्ध्रुवंविनाशयेत्स्व-भंजनम्॥२६१॥ अन्यच्चतैलम्॥ सर्ज्जरसनालिकावरर्ग्यं ग्रातैलमल्पपरिमर्द्दविशेषात्॥ निर्गतमाशुतथैकसमाश्रित मं गजवायुगदंविनिहन्ति॥२६२॥ अथोर्ध्वगवातः॥ नाभेरूर्द्धं नैकतश्चाप्यधस्ताद्वातस्तिष्ठेद्यत्रवैद्यैःसउक्तः॥ अर्धांगाख्यश्चो द्भजातोहिवायुस्तत्रप्रायस्ताम्रपूर्पीनिषेव्या॥२६३॥ सूतंपञ्च पलंचपञ्चपलकंदैत्यंपलंताम्रजंचूर्णंखल्वविमर्द्दितंनदखिलं जंबीरनीरैर्दिनम्॥ ताम्बूलीदलजैरसैरपिदिनंसंमर्द्यरुध्वापुटे द्यन्त्रेभूधरकेलयोदहनगंपञ्चैवयामान्पचेत्॥२६४॥ तच्चूर्णंक डुकत्रयेणाचसमंवल्लैकमानंभजेदर्धांगंपवनंसकंपमखिलंतू र्णंविनाशंनयेत्॥ ख्यातस्ताम्रजपिष्टिकावरसोवैद्यैःपुराणेर पिलोकेवातहरःपरोनिगदितःश्रीशंभुनादौपुरा।२६५॥ ॥ अथभग्नवातः॥ काष्ठादेरभिघातकस्यचयदास्थानंमरुत्पी डयेद्व्यानाख्योरुधिरान्वितोनिगदितोभग्नादिवातस्तदा॥ सेव्यरक्तरुबूकमूलमसकृत्तैलेनकर्षंबुधैश्चान्यद्वातहरंचसेव्य मथवाभग्नप्रवातापहम्॥२६६॥ अथकंपवातः॥ सर्वां गकंपेखलुकंपवातस्तत्राशुसूतंचमृतंचतीक्ष्णम्॥ तिक्ताद्र वैर्मर्द्यचणप्रमाणांवटींचखादेत्खलुतत्प्रशान्त्यै॥२६७॥ अथहूकवातः॥ यदावायुपीडाधिकास्वेदनाद्येप्रवद्धूकवा तस्तदावैद्यभूपैः॥ अलंपादजातेनपादेनपुंसाप्रचाल्यस्खलेत्

यानिशान्तिंविशेषात्॥२६७॥ अथास्योत्तारणमंत्रश्चयथा॥कुङ्कुम·कुसुप·सिंयाढाडः नीयेडसवेणेचेभाच·चत्वारेदादोः खेलखेलो·एकफालाहाथी·एकफालाघोडा·साएजाग्रनवे सला·गुरुनीकोणअवधूत·पीसेभूत·गुमन्चेमंत्रेकाहोइःवाय वेणजाइयौसवेणजायडोलवेणजाय·पोटवेणजाय·उसवेण जाय·ग्रहणेजपः ४४ मंत्रसिद्धिः॥ अनेनवातस्थानमभिमं-त्र्यचालयेत्॥ हूकवानश्चलति॥ अथवातव्याधीनामुपद्रवाः॥ भवेच्चांगनाशूलशोथोत्वचश्चतथाभेदउक्तस्तुपैशाच्य मृत्युः॥ तथावृद्धतोनोदर्वीर्य्यपिहारादिकोपद्रवाश्चेन्द्रियस्यापिनाशः॥२६८॥ अथासाध्यलक्षणम्॥ क्षीणस्यचैवा-निषाक्तजन्तोप्रसक्तकाव्यक्तवचस्त्रिवर्षम्॥ प्रवेपमानस्यन सिद्धतीहगादार्दितंवैद्यनृपावदन्ति॥२६९॥ कस्थूरुवक्षस्थ लभञ्जनोयंबाह्यादिरा भगधस्त्वसाध्यः॥ विवर्णसूती बहुदृद्धबालक्षीणोषरक्तेषरुजश्चपक्षः॥२७०॥ रक्ताश्रितो मूर्धधराशिराश्चकुर्य्यास्सरूक्षास्सरुजःकरोति॥ यत्राशु घातुश्चशिरोग्रहोवाऽसाध्यस्तुवैद्येस्समुदाहृतश्च॥२७१॥ अथोवातव्याधिनिवृत्तेर्लक्षणम्॥ यथोचिताहारगतिर्ब-लाढ्योभवेत्क्रियायाःकरणेसमर्थः॥ नदेवबोध्योमनुजश्चवा तरोगैर्विमुक्तोभिषजोवदन्ति॥२७२॥ इत्यद्रुरूणाञ्चकृपाक-टाक्षविजृंभिताशेषसरित्समुद्रान्॥ विलोक्यमन्यान्विविधा न्विचित्रान्तत्साधुभिःसाधुनयविलोक्यम्॥२७३॥ ॥
इतिश्रीगुरुचरणाब्जचञ्चरीकश्रीचतुर्वेद्युपनामकाशीनाथ

कृतायांचिकित्साक्रमकल्पवल्यामशीतिवातव्याधिलक्षण
निदानचिकित्सादिनानामोदमुदितस्तबकः १७॥ ॥
श्रीगणेशायनमः॥ ॥नत्वागुरुंगणपतिंशशिशेखरंचवा
णींश्रियंचकमलांचनिजंचतातम्॥ आलोक्यग्रन्थनिचयांश्च
मुनिप्रणीतान्कुर्वेह्मिपित्तप्रदकारणलक्षणादीन्॥ १॥
तत्रताबत्पित्तनिदानम्॥ यत्पित्तकोपिचयदाहिविरुद्धदुष्ट
म्लान्नानिपानानि चपित्तमुग्रम्॥पूर्वंस्वहेतुनिचितंतुवि
दग्धमम्लपित्तत्वमाशुजनयन्तिनिदानमेतत्॥२॥ अथपू
र्वरूपम्॥ अन्नपाकसमयेनिशिपूर्वकंठधूमयुतकंठवि-
दाहः॥जायतेम्लपरपित्तगदस्यपूर्वरूपमथरूपमिदंहि॥३
॥ भ्रमोत्क्लेशतिक्ताम्लकोद्गारकंठसदाहारुचिर्गौरवाऽपाक
नाभिः॥स हृद्दाहयुक्तोऽम्लपित्तः प्रसिद्धोगदश्चास्यपथ्या-
दिकंचापिवक्ष्ये॥ ४॥ पुराणगोधूमयवान्नलाजासक्तूनि-
शाल्यन्नसितामधूनि॥सुतीक्ष्णसंस्कारविवर्जितानिपथ्या
निद्राक्षादिचशीतलानि॥ ५ अथप्रतीकारः॥ कूष्मांडकस्य-
स्वरसोपलानांशतंगवीनांचपयस्तथैव॥ धात्रीफलानांसुर
जःपलाष्टमितंसितायाश्चपलाष्टकंच॥ ६॥ पलद्वयंचापिघृ
तंगवांहिसदानापाच्यसुपिंडितंच॥ पलार्धकंवापिपलैकमा
नमम्लादिपित्तंविनिहन्तिभुक्तम्॥७॥ अथघृतम्॥ पटो
लविश्वामगधाधनानांसजीरकाणांश्लतनीरकल्कैः॥गवां-
घृतंसाधितमम्लपित्तारुचीहरेन्माक्षिकसंयुतंच॥ ८॥इति
पटोलाद्यंघृतम्॥ ॥अथलेहः॥ धान्यचन्दनयवांबु

दलहो माक्षिकेणाच निहन्ति विशेषात्॥ अम्लपित्तमरुचिंज्वरस्तु ग्रंगांगनीरमिव पातकजालम्॥ ९॥ अन्यच्च॥ धात्रीक्षौद्रशतावरीसम मलं खंडं लिहेन्मात्रया प्रातश्शीतपयः पिबेदनुतथा दुग्धं घृतंवा क्वचित्॥ चक्षुष्यं पलितापहं निगदितं चायुष्यमम्लादिकं पित्तं न्नित्यनिषेवणाद्विजयते योगश्चतुस्तुल्यकः॥१०॥ इतिचतुःस्समः॥ अथनालकेरादिपाकः॥ नालकेरकुडवं परिपेष्य तावदेव सितखंडमथोत्र॥ नालकेरयुग४भागपयोभिगो भवेन पयसा तदभावे॥ ११॥ धान्यधान्यमगधाद्वि चतुर्भिष्टंकटंकप्रमितैरपि जातैः॥ अम्लपित्तगदनाशकयोग सेवितःपलमितोपि पलार्द्धः॥ १२॥ योरुपं च सबलं किलनिद्रायं च्छति क्षयहरः प्रथितोयम्॥ रक्तशूलमथवा परिणामशूलमाशु जयतीह नचित्रम्॥ १३॥ अथरसामृतोरसः॥ त्रिकटुत्रिफलाविडंगकैर्घनचित्रैश्च पलैःपलैस्तथा॥ अपिशुद्धबलेः शिवस्य च पलमर्धं तु तदर्धकं पुनः॥ १४॥ परिपेष्य समं च माक्षिकैर्हविषा चापि विडालपादकम्॥ अपिशीतजलेन वा गवां पयसा चापि निषेव्यमानकः॥ १५॥ विनिहन्ति तथाम्लपित्तमुग्रमथ मान्द्यं जठरानलस्य च॥ परिणामभवं च शूलमुच्चैरपि शूलं च सपांडुकामलाम्॥ १६॥ रसामृतोरसमृतः॥ तथाम्लपित्तनाशनः॥ १७॥ अथलीलाविलासोरसः॥ लोहचूर्णमसमं माक्षिकफलाभिः शर्करामधुयुतं खलु लीढम्॥ अम्लपित्तग्रहणीजठराग्निरोगजातमखिलं विनिहंति॥ १८॥ इतित्रिफलादिलोहम्॥ ली॰ शुद्धसूतं लोहमभ्रं मृतं च ना

भृंगं धत्तुल्यभागं समस्तम् ॥ आमं पिष्टा पाचनीयं लघौ तद्युक्त्या चैवोः संपुटे संपिबेच्च ॥१९॥ अक्षैर्धात्रीसच्छिवाभिः क्रमेण वृद्धानी तैस्तैस्तैस्तत्पयोभिः ॥ पिष्टापिष्टापञ्चविंशच्चवारां स्तद्वदारान् भृंगराजद्रवैश्च ॥२०॥ माध्यं शक्तं चैव दग्धं जोन्मितं च लीढं न्हंति नूनं माक्षिकैरम्लपित्तम् ॥ हन्यान्नूनं चाथ लीलाविलासः ख्यातो लोके नाम तुल्यो भिषग्भिः ॥२१॥ इति लीलाविलासः ॥ पलमितमथ शुद्धं चापि नेपालशुल्वं तनु तनु वरपत्राण्याशु कुर्याच्च तस्य ॥ तदनु खलु विशुद्धं सूतकर्षन्तु तस्माद्द्विगुणितवरगन्धं कन्यकाद्रावपिष्टम् ॥२२॥ तदखिलमखिलमेतत्पङ्किलं पत्रलिप्तं भवति च बहुशः खं घर्ममध्ये निधाय ॥ तदनु लवणमध्ये हंडिकान्तर्निधाय गजपुटपुटितं तत्ताम्रपाकाभिधोयम् ॥२३॥ वमनमथ विरेकं कारयित्वा च पश्चात्समधुकमधुयुक्तं रक्तिकैकप्रमाणं ॥ सघृतमथ च तक्रं वाथ धान्याम्लकं चाभिषगिदमनुपानं जीर्णधान्यस्य पथ्यम् ॥२४॥ यदि कथमपि दद्यादम्लपित्तं च कासं श्वसनमपि च शोषं कामलां पाण्डुरोगान् ॥ अपहरति च कुष्ठान्रक्तपित्तं तथार्शो गदमथ रुधिरं वा वातपूर्वं निहन्यात् ॥२५॥ रवादित्यमेहतिमिरांश्च विजित्य वृद्धदेहोपि ताम्रतनुराशु भवेन्मनुष्यः ॥ योताम्रपाकरसमत्ति समस्तरोगैर्मुक्तः स मा शरच्छतमलं परिजीवतीह ॥२६॥

॥ अथ संप्राप्तिः ॥ ॥ तत्र तावद्रूपं ॥ पीतं नीलं रक्तमारक्तकाभमच्छं कृष्णं पिच्छिलं चेद्रुचिश्च ॥ श्लेष्मायुक्तं चाथ मांसोदकाभं मूर्छा ग्लानिर्दाहोऽम्लपित्ते च सिञ्च ॥ वान्तं कुर्यात्तत्र वासापटोलपत्रैस्तद्वन्निंबपत्रप्रयुक्तैः ॥ यष्ट्याक्षौद्रैः सिन्धुकामोत्थफेणैः पी

तैरेतैश्चाशुवान्तम्प्रकुर्यात् ॥ २८ ॥ प्रतीकारः ॥ यववृषामलकीभि सुगन्धिभिः क्वथितमाशुजलन्तुपिबेज्जनः ॥ मधुयुतंखलुसुन्दसमुद्भवंपरिपिबेद्यदिघूषमलंतदा ॥ २९ ॥ अथाधोगम् ॥ तृषांदाहंमोहंभ्रममपिचमूर्छांचजनयन्नधोयात्युच्चैर्वाविविधगदहृल्लासमहितैः ॥ सकोष्ठाग्नेस्सादप्रसुरवगदपीतत्वमपिचभवेदंगेस्वेदोयदिशवतिचाम्लादिलगः ॥ ३० ॥ प्रतीकारः ॥ तृष्णतामधुनामलद्रुमे हिकुर्यादपिरेचनंबुधः ॥ अमृतात्रिफलापटोलकैर्धरणीनिम्बसनिंबभृंगकैः ॥ ३१ ॥ क्वथितं कवचैः सवासकैः प्रपिबेदम्लगदंसपित्तकम् ॥ अपिहंतिसमाक्षिकन्ध्रुवमिहयोगद्वयमप्यधोगतम् ॥ ३२ ॥ इतियोगद्वयम् ॥ अथरसगम् ॥ भुक्तेःभुक्तेचापिचान्नेविदग्धेकुर्याद्ग्लानिन्त्यक्तकाम्लंकदापि ॥ उद्गारश्चेदवमेवाथकण्ठकुक्षेर्दाहोमूर्द्धिपीडाहृदश्च ॥ ३३ ॥ पाठाधात्रीचन्दनन्धान्यवासाश्यामाप्रोक्तायाद्विपाद्यापटोलैः ॥ पत्रैः क्षौद्रैर्वैशिवाभिर्वराभिः कृत्वालेहंसेव्ययुक्तंसिताभिः ॥ ३४ ॥ भुक्तंहन्यादम्लपित्तंविशेषाद्ग्लानिन्तद्वन्मोहदाहारुचींश्च ॥ यद्वाद्राक्षांभक्षयेद्वैशिवाभिः क्षौद्रैर्युक्तांसङ्गुडेनान्वितांच ॥ ३५ ॥ अथान्ययोगः ॥ धात्रीचूर्णंशनपरिमितान्वासरांस्तद्रसेनसिक्तं क्षौद्रैःससितमथवाहृव्ययुक्तंभुनक्ति ॥ खंडोवृद्धोरमयतिशतंकामिनीनांपुरस्ताद्दुग्धंपीत्वानदनुजयतिप्रायशःपित्तमेहान् ॥ ३६ ॥ अथत्वगम्लपित्तम् ॥ अरुचिज्वरताकफपीत्तभवादवथुःप्रचुरः ॥ करचरणगतः ॥ पिटिकांकितकंडुगदार्ततनुः सकलोप्ययमलं त्वचिवाम्लगदे ॥ ३७ ॥ प्रतीकारः ॥ सिंहास्यभंटक्यमृतप्र

मूत्रंक्काथंविबेन्माक्षिकसंप्रयुक्तम् ॥ श्वासंचकासंचवमिंज्वरंचहृ
न्यादलंचाम्लपरंचपित्तम् ॥ ३८ ॥ अथान्ययोगः ॥ शतावं
रीमूलजकल्कसिद्धं प्रस्थंघृतंप्रस्थपयस्समेतम् ॥ गव्येनदुग्धे
नचतुर्गुणेनपक्वाम्लपित्तंविनिहन्तिभुक्तम् ॥ ३९ ॥ अथव्य
म्लाम्लपित्तम् ॥ नूनंव्यम्लाम्लपित्तेज्वलितमिववपुर्मूर्द्धिपीडा
पिपासास्वेदोमूर्च्छाकफसहितवमिः कंठहृत्कोष्ठदाहैः ॥ वर्णा–
भावश्चतस्मिन्जरणमुपगतेचाम्लतिक्तंवमेद्वाति क्काम्लोद्गार
कंडूबहुविधपिडकाश्चाद्यशेषेरसस्य ॥ ४० ॥ प्रतीकारः ॥ क
णाचूर्णंसूक्ष्मंकुडवतुलितंषट्पलमितंघृतंप्रस्थोन्मानंपयश्च
थगवांखंडमपिच ॥ तथावर्य्यानीरंवसुपलमितंपाच्यसकलं
त्रिजातंधान्याकंघनमरिचधात्रीद्विजरणैः ॥ ४१ ॥ शिवाशुंठीवं
शीखदिरसहितैः कर्षतुलितैः समेतैःसंसिद्धंत्रिपलमधुनासेवि
तमलं ॥ तृषांच्छर्दिंशूलंदहनकृशिमामम्लमपिचसपित्तंवा हन्या–
द्वृदितमगदंकाण्डुभि ॥ ४२ ॥ इतिखंडपिप्पली ॥ शुंठीचूर्णंकु
डवतुलितंगोघृतंतद्विभागंप्रस्थंखंडस्यचपयश्चथोराम ३ प्रस्थप्रमा
णम् ॥ पक्कासर्वंतदनुजरणांमागधीधान्यमुस्तैर्धात्रीवांसीत्रितय
मथवागन्धद्रव्यांशिवाभिः ॥ ४३ ॥ नागन्तद्वन्मरिचमपिवामाषषट्कं
त्रिसाणमन्यत्सर्वंसहत्रिफलयाकारवीसंयुतंच ॥ तस्मिन्शीतेत्रिप
लमधुनासेवितोविश्वखंडः शूलंहृद्रोगवांतीअपहरतितथाचाम्लपि
त्तंविशेषात् ॥ ४४ ॥ इतिशुंठीखंडः ॥ अथवातान्म्लपित्तम् ॥
कंप प्रलापतनुसादतमःप्रवेशमूर्च्छाभ्रमप्रबलमोहसहर्षशूलाः
॥ जायन्तएवचिमिरत्रपुनःशरीरेवायुप्रपुष्टनरमम्लपरञ्चपि

नम्॥४५॥ प्रतीकारः॥ हिंगुस्वर्णफलानिद्व्यमपिवा-विंचात्वचासंपुटेत् तद्दग्धंशमयेच्चवायुजनितंसाम्लंसपित्तंगदं॥शुक्तंतच्चयथोत्तरंद्विगुणितंसाम्लंचपथ्यंभजेद्वासायाश्चघृतंसतिक्तकघृतंश्यामातथामाक्षिकैः॥४६॥ अथसकफाम्लपित्तम्॥ कफस्यनिष्ठीवनगौरवाभ्यांजाड्यारुचीशीतवमिःसलेपैः॥कंड्वग्निमान्द्यबलसादयुतैश्चनिद्राश्लेष्माम्लपित्तगदलक्षणमेतदुक्तम्॥४७॥ प्रतीकारः॥ क्वाथेनकल्केनचमागधीनांसिद्धंघृतंचात्रमधुप्लुतंच॥ वासापटोलत्रिफलाशनाभिःसनिंबसिद्धोपिपुरःप्रशस्तः॥ योगद्वयम्॥ अथो-भययुगम्लपित्तम्॥ उभयतःखलुचिन्हमिदंभवेत्सकफमारुतजातगदेऽम्लके॥उभयतोपिगतिस्त्विहजायतेभवतिकुत्रसंचमपित्तकम्॥४९॥ प्रतीकारः॥ छिन्नापटोलदलनिम्बकृतःकषायःक्षौद्रान्वितश्चशमयेत्खलुभिन्नरूपम्॥छिन्नौषधाब्दकिरातकृतस्तथैवक्वाथोम्लपित्तगदनाशकरश्चपेयः॥५१॥ अथश्लेष्मपित्तम्॥ तमश्छर्दिमूर्छाशिरोरुक्प्रसेकोभवेद्वक्त्रमाधुर्य्यमालस्यनिद्रे॥ तथावारुचिश्श्लेष्मपित्तेनराणांपटोलैर्यवैर्धान्यपाठ्यालिकाभिः॥ससधात्रीफलैःक्षौद्रयुतःकषायःप्रपीतस्तुसश्लेष्मपित्तान्निहन्यात्॥तथापिप्पलीखंडपथ्याकृतोमोदकस्तुद्गुणाश्चाप्ययथोक्तोमुनीन्द्रैः॥५३॥ अथज्वरार्त्तमिवाम्लपित्तम्॥ ज्वरार्त्तमात्मानमिहात्रमन्येद्यश्चाम्लपित्तेखलुशोधयेत्तम्॥नवेऽनवेवावमनंप्रकुर्यात्कणागुडक्षीरघृतंपिबेच्च॥५४॥ अथविदग्

धाम्लपित्तम्॥ अन्नेऽजीर्णे यत्नकोपोऽम्लपित्तमाहुर्वैद्यास्तद्वि दग्धविशेषात्॥ भुक्तान्त्रप्रायशोवान्तिमेव पीत्वाकोष्णंनीर माशुप्रकुर्य्यात्॥ ५५॥ अथामान्नाम्लपित्तम्॥ संमूर्छि तान्नस्य सुखेनहीयनेसघ्राणकंठस्यचलेपनेनहि॥ वैस्य दन्तालिनिपातनानिचस्थामान्नजाम्लेऽगदेकृतिश्चवै॥ ५६॥ प्रतीकारः॥ रुक्षवस्तुकवलान्मुखपद्मेधारयेत्खलु नरोबहुधात्र॥ षष्टिकावरमसूरजसूपोपथ्यमन्नगदितं च कुलत्थैः॥ ५७॥ अथकंठगपित्तम्॥ पटुंचंडमार्त्तंडदु ग्धेनप्राव्यमखंडंसखंडंतथावापिभुक्तम्॥ हरेत्कंठगंपित्तमु ग्रंयथैवश्रीरामचन्द्रस्यरक्षोगणौघम्॥ ५८॥ अथको ष्ठदाहकृत्॥ यवासकेरंडजटाभिजन्मतःक्वाथोयवैस्त्रनि पीतएव॥सकोष्ठदाहंसरुजंतथाम्लपित्तंनिहन्त्याशुनकापि शंका॥ ५९॥ अथकंठदाहकृत्॥ हरीतकीगोस्तनिका यवासाःकणामधुभ्यांसितयासमेताः॥ निघ्नंतिकण्ठस्यच दाहमेताःपित्तन्तथाश्लेष्मयुतंनचिन्ता॥ ६०॥ अथवमि कृत्॥ गुडूचिकारिष्टपटोलपत्रैःफलत्रयेणापिकृतःकषा यः॥ क्षौद्रान्वितश्छर्दिगदंनिहन्यादत्यम्लपित्तप्रभवंविशेषा त्॥ ६१॥ अथशीतपित्तम्॥ स्पर्शाच्चशीतस्यप्रभञ्जन स्यदुष्टांबुपौश्लेष्मसदागतीच॥ विसर्पतश्चान्तरतोबहिश्च पित्तेनशोथोवरटीवदंशात्॥ ६२॥ तोदेनकंडूज्वरदाहछर्दि युक्तःसदायानप्रभवविशेषात्॥ तंशीतपित्तंचगुडामलाभ्यां सितामधुभ्यांचजयेन्मनुष्यः॥ ६३॥ योगद्वयम्॥ अथा

न्ययोगः॥ पिबेद्वायवानीत्वसक्षारकौवेतयांव्योषयुक्तांहि तद्वन्मनुष्यः॥ ससिद्धार्थरात्रिप्रपुन्नाटबीजैरयोद्वर्त्तनं सार्षपैः सिद्धतैलैः॥६४॥ अथोदर्दः॥ सोत्संगयुक्तैश्च सरागकंडूयुतैस्तथा मंडलकैरनेकैः॥ सशैशिरश्चाधिकतो बलाशादुदर्दरोगः कथितो मुनीन्द्रैः॥६५॥ प्रतीकारः॥ सदीप्यगुडमस्तुना यस्तु खादेत्तथोष्णान्नभुक्सस्तभिर्वासरैश्च॥ प्रमुक्तो भवेच्चाशु दर्दाख्यरोगान्न चित्रं महावैद्यभूपप्रयुक्तम्॥६६॥ रास्नाश्वगन्धात्रिफलाशताव्हायवानिकाहिंगुदिवौककाष्ठैः॥ उदर्दरोगप्रशमाय पेयः क्वाथस्तु सर्वे मुनयो वदन्ति॥६७ अथ कोठः॥ असम्यग्वमैर्वानरोदीर्णपित्तबलाशोन्नजातस्य वा निग्रहैश्च॥ तथा चारनालैश्च सूक्तैः पटूनामथोत्त्वासुरीसेवनैर्वर्षकाले॥६८॥ भवेत्कोठरोगो व्रवै मंडलानि सकंडूनि रागान्वितान्याशुजानि॥ क्षणोत्सन्निनाशानि निंबस्य पत्रैर्निहन्याद्वृतेनात्र धात्रीफलाढ्यैः॥६९॥ विस्फोटकोठक्रिमिरोगसशीतपित्तकंडूत्वपित्तसहिताश्च कफं निहन्यात्॥ निम्बच्छदामलकगोघृतपानतश्च प्रायश्च वैद्यधरणीपतयो वदन्ति॥७०॥ अथोत्कोठः॥ कोठश्चिरस्थश्च भवेन्नितान्तमुत्कोठरोगः कथितो मुनीन्द्रैः॥ तत्रार्द्रकप्रस्थघृतं गवीनां प्रस्थं त्वनडुत्कुडवद्वयं हि॥७१॥ गोदुग्धप्रस्थद्वितयं च खंडमस्यार्द्धभागं मगधानलौ च॥ शुंठीविडंगाभ्रकणाजलाभिस्त्वक्पत्रकर्चूरसनागपुष्पैः॥७२॥ मारीचचूर्णैश्च पलैः पलैश्च विधाय पाकं हि गुरूक्तयुक्त्या॥ प्रातर्भजेत्कोठगदं सशीतपित्तं तथो

स्फोटगदं निहन्ति ॥ ७३ ॥ यक्ष्मागदं श्वासगदं सकासं शोथं कृमीन् वातजगुल्ममुग्रम् ॥ तथाप्युदावर्त्तगदं सरक्तपित्तं च कंडूनपहन्ति शीघ्रम् ॥ ७४ ॥ इत्यार्द्रकखंडः ॥ कुष्ठं निम्बाश्वगन्धामरतरुरसनाशिग्रुधान्यं सचव्यं चंडादूर्वा पटोलैरपि रजनियुगेनान्वितैः सर्षपैश्च ॥ अल्लाभिस्तुंबुरैर्वा मथितयुततमैः पेष्यमुद्वर्तितव्यं पूर्वं तैलाक्तदेहे शमयति सहसा कोठमुत्कोठशोथान् ॥ ७५ ॥ अथपित्तप्रकोपः ॥ कटुमरिचादिकान्वितं यदिभवेद्यन्नं तथाभोजनाद्यत्येनविलम्बेकेन सहसा पित्तप्रकोपो भवेत् ॥ तन्नाशाय शिवाफलं समसितं धात्रीफलं वा — शितं लेपो गैरिकतैलजश्च कथितः प्रायो मुनीनां गणैः ॥ ७६ ॥ अथपित्ताधिक्यम् ॥ तृष्णाधिक्यं स्यात् विनिद्राधिकत्वं पीताक्षित्वं स्याच्च रक्ताक्षिकत्वम् ॥ क्रोधाधिक्यं स्यात् तु क्रमश्शीतलेच्छा पित्ताधिक्याल्लक्षणं बोध्यमेतत् ॥ ७७ ॥ प्रतीकारः ॥ तिक्तैः कषायैरजनीशशांकिशीतानिलैर्भूगृहयन्त्रनीरैः ॥ स्त्रीगात्रसंस्पर्शपयोघृतैश्च छायाविरेकैर्व्यजनानिलैश्च ॥ ७८ ॥ सुस्वादुभिर्भोजनसेकसेघैः पानैर्विचित्रैरपि रक्तमोक्षैः ॥ नानालतावृक्षप्रसूनगन्धैः पित्तप्रकोपश्च वहन्नेसदेहे ॥ ७९ ॥ युग्मम् ॥ अन्ययोगः ॥ सूताभ्रमुंडार्कसुतीक्ष्णतालैर्माक्षीकतुल्यैरखिलैर्मृतैश्च ॥ तुल्येनगन्धेन समं विमर्द्य यष्टीजद्राक्षामृतजातनीरैः ॥ ८० ॥ वासारसैर्गोपयसा विदारीद्रावैर्दिनैकं च सितामधुभ्याम् ॥ निष्कप्र-

माणा वटिकाप्रयुक्ता पित्तज्व पित्तज्वरदाहशोषान्॥८१
॥ क्षयं भ्रमंचापिनिहन्तिपित्तजातान्विकारानखिलानज
स्रम्॥ पित्तान्तकोनामरसः प्रसिद्धस्सर्वैर्निरुक्तोवरवै
द्यभूपैः॥८२॥ विशेषकम्॥ अथोपद्रवाः॥ क्रोधः
स्तमोदर्शनवान्तिशोषदाहाल्पनिद्रापलितभ्रमाश्च॥
सधूमकोद्गारसलोहगन्धाह्युपद्रवादिकुप्रमितास्तुपि
त्ते॥८३॥ अथासाध्यलक्षणम्॥ नवाम्लपित्तंख
लुयत्नसाध्यंजीर्णंचयाप्यंखलुसूर्य्य१२वर्षात्॥ परंच
मृत्युप्रदमम्लपित्तमिदंहिसर्वेभिषजोवदन्ति॥८४॥
अथनिवृत्तिः॥ तृप्तिःपिपासालघुतासुनिद्रासुखोद
यस्सत्वसमुद्भवश्च॥ शांतस्यपित्तस्यचलक्षणानिश्री-
सुश्रुताद्यासुनयोवदन्ति॥८५॥ आयुर्वेददुग्धसिन्धुंप्र
मथ्यकाशीनाथोयच्चिकित्सामृतञ्च॥ तत्तत्सेव्यंपित्त
रोगप्रशान्त्यैविद्वद्वन्द्यैर्वैद्यभूपैर्विलोक्यम्॥८६॥
इतिश्रीगुरुचरणाब्जचञ्चरीकचतुर्वेदिकपनामककाशी-
नाथकृतायांचिकित्साक्रमकल्पवल्ल्यांपित्तरोगप्रतीकारोना
मअष्टादशस्तबकः॥१८॥ ॥ अथकफनि
दानम्॥ चन्द्रार्धशेखरसमहीनविभूषणाढ्यमम्बार्द्धदेहमिभ
वक्त्रषडाननाङ्कम्॥ साकल्यमालमनिशंहिप्रणम्यसम्यक्कुर्वे
कफोत्थगदकारणसच्चिकित्साम्॥१॥ निश्चेष्टताभिरुदराग्निक
शस्यजन्तोः स्निग्धैरसैश्चगुरुभिर्मधुरैश्चदुग्धैः॥ द्रावैर्दिनस्य-
शयनोर्दधिभोजनैश्चश्लेष्माप्रकुप्यतिसधौतुदिनादियानैः॥२

अथपूर्वरूपम्॥ प्रसेकोभवेद्रुक्कमाधुर्यमाशुतथागौरवाल स्यनिश्चेष्टिताश्च॥ बलाशेभविष्यत्यमीसर्वरोगाःपुरस्तात्प्रकृष्टा द्यथोरूपमस्य॥३॥ अंगेषुगौरवमपाटवमन्तराग्नेस्तोदस्ततोथ शिरसश्चशैत्यकाश्च॥स्वेदोद्गमःकफगदस्यचरूपमेतद्धानिर्भवे दपिचकंडुगदस्तथैव॥४॥ अथोपशयः॥ रूक्षैःक्षारैःकषा यैरनशनवमनैर्नस्यधूमोपसेवाव्यायामैर्मैथुनैर्वादिनकरकिरणैः स्वेदयुद्धांबुकेलीः॥ तृड्घातोजागरंवासकलदिनमलंछागमांसा शनैर्वापानाहारैर्विहारे.कफगदद्लनेर्वैद्यभूपप्रयुक्ताः॥५॥ अथप्र तीकारः॥ उग्राहिंगुगुडंजगच्छिखिशिवामूलंसकुष्ठंतथापि प्लाचाथवरंक्रमोत्तरगुणंचूर्णंतुतक्रैःपिबेत्॥ रोगायेबहुशोबला शजनिताःप्रायस्तुतेविंशतिस्तेषांनाशनमत्रवैद्यधरणीपालो दितन्नत्क्षणात्॥६॥ अथापवानीयोगः॥ ब्रह्मदर्भसिं धुजीरत्र्यूषणंसमंसमम् पिबेच्चतक्रयोगतःकफोत्थरोगनाश नम्॥७॥ अन्यः॥ रसंकाकमाचीभवंचापिशुंठ्यागुडैःपी तमाशुकफंवाथहन्यात्॥८॥ अन्यः॥ रास्नाचूर्णंकर्षमेकंघृ तेनपीतंहन्याच्छ्वासरोगंकफेन॥ यद्वाजीर्णमद्यमेवाशुपीतंत द्वत्कुर्याज्जाठराग्नेश्चदीप्तिम्॥९॥ योगद्वयम्॥ अन्यः॥ जन्तुजिल्लोकबाल्हीकपिप्पलीपटुसञ्जिकाः॥रास्नयासघृताः पीताःकफघ्न्यश्चाग्निदीपनाः॥१०॥ अन्यः॥ चिरकालभवाम दिराप्रथिताकफरोगहरीप्रवरागदिता॥सकलाशनपाचनिका- विदिताजठरानलवृद्धिकरीकथिता॥११॥ अन्यः॥ बलिशुद्धि मेकंचकर्षप्रमाणंघृतेचोष्णनीरैःपिबेद्यस्तुविद्वान्॥ कफव्याधि

नाशं लभंदाशु नित्यं तथाक्षौद्रयुक्तारसःपंचवक्त्रः ॥१४॥ योग द्वयम्॥ अन्यः॥ दहनशूतंवापुटविधिजंवा वृषदलनीरं कफ हृग्धीरम्॥ १३॥ वरपधुनुकसयुक्तंरपीनम् उषसिकफोत्थंबहु गदयूथम्॥१४॥ अन्यः॥ मुक्तानुनीरभावितंपडुंचसमयारकं सुवर्णपक्वसत्फलेपुटेपुटेच्चमाषकं॥ भजेच्चषर्णमध्यगंहरिप्रिया समंतथाविचिन्नयोगईरितोबलाशकाशनाशनः॥१५॥ अथसं धानभैरवोरसः॥ मृतसूतंताम्रंबलिकटुकबाल्हीकसहितंप टुंनालंतद्वदमरवरदारीनवनवैः॥ सुनिर्गुंडीकेशालकिधनरवेस्नि ग्धरसनैर्दिनैकंसंमर्द्यदढतरमलंभैरवरसः॥१६॥ लिहेन्माषमा त्रंमधूक्तंनितांतसमंधानकंभैरवंविविचीरैः॥ शनैर्विंशतिर्येकफो त्थागदास्तेविनश्यंतिसर्वेपिनित्यंनिषेव्य॥१७॥ अथसंप्रा प्तिः॥ नत्रतावत्श्लेष्मा॥ ध्यानेनचेच्छिरसियत्रकफोएनीत स्तिष्ठत्यलंतुभिषजोगदमामनंति॥ श्लेष्माणमत्रजडताच्चशि रोगुरुत्वंतैलेनकट्फलरजोबहुधात्रमर्द्यम्॥१८॥ अन्ययो गः॥ विश्वोन्मत्तजटानांजलपिष्टोहि शिरसिचलेपोगदितोद हनघितसोहि॥१९॥ अथपीनसः॥ यदाघ्राणतोनिर्गतो गाढतांचापिजातःकफःपीनसोसौनिशान्चूर्णपत्रस्यसंनालि का धूमपानेनजेयस्तुघ्राणस्यनित्यम्॥२०॥ अथान्यः॥ अतस्यास्तैलनस्ये तपीनसोयात्यसंशयम्॥ सर्ववैद्यमतेनेदं वर्णितंसेव्यमन्वहम्॥२१॥ अथास्योपद्रवाः॥ कंठेघुर्घुर ताकृशात्तुकृशतालस्यंमुखालिसतादेहेवास्तिमितापसेकवि रुचिःस्निग्धत्वनिद्रेतथा॥ र्धामांद्यंनितरांभवंतिचकफव्याधेर्द

शोपद्रवास्तेषांयत्राचिकित्सितंनिगदितंतत्तुसेव्यंतथा॥२२॥
अथनिवृत्तिः॥ ॥भवेत्कंठवैशद्यमेवाशुनित्यंकफव्याधिना
शेतुलक्ष्यंप्रसिद्धं॥ परंविंशतिःश्वासकासादयोन्येयथोक्ता
स्तुतेव्याधयःश्लेष्मजाताः॥२३॥ गुरुपदकंजानिजहृदिधृत्वा
कफगदशांत्यैगदितमलंते॥२४॥ ॥इतिश्रीगुरुचर-
णाब्जमधुपचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पव
ल्यांकफरोगप्रतीकारोनामैकोनविंशः स्तबकः॥१९॥ ॥
॥ ॥अर्धेंदुमौलिविलसद्वरपंचवक्त्रगंगासमुल्लसितपिं
गलजूटशोभम्॥ भस्मांगरागगिरिजाद्रीनप्रणम्यवातास्रनाश
नचिकित्सितमत्रवक्ष्ये॥१॥ तत्रतावत्तन्निदानम्॥ लवणा
म्लसुराकटूष्णाकैर्बहुशाकैःपललैस्तुभिस्तथा॥जलजातवि
शुष्कमांसकैरथवानूपजजंतुजैरपि॥२॥ दधिमूलकुलत्थशा
ककैरथसौवीरसुतक्रकैरपि॥ बहुभिश्चविरुद्धभोजनैश्शयनै
श्चात्रदिनस्यभोजनैः॥३॥ विपरीततरैरथासवैर्बहुधक्रोधज
वेगधारणैः॥सुखिनामपिप्रायशस्तथाबहुधास्थूलशरीरि-
णामपि॥४॥ सुकुमारतरांगयष्टिनांहयनागोष्ट्रसुपृष्ठयायि
नाम्॥ सुविदाहिसमश्नतांपुनर्ह्यथवाहारविहारिणांमृषा॥
५॥ प्रतिकुप्यतिवातशोणितमथनिष्पावजशाकसेवनैः॥ वि
विधैरपिमत्स्यदुग्धकादिभिरन्यैरपिचिक्कणाशनैः॥६॥क्षा
रारनालैःशाटितैश्चमांसैःपिण्याकभोज्यैरथवाविदग्धैः॥ भो
ज्यैरजीर्णैरपिवातरक्तमायातिकोपंभिषजोवदंति॥७॥ अ
थपूर्वरूपम्॥ स्वेदोत्यर्थंनैवकार्श्यंकदाचित्स्पर्शाज्ञत्वंचाति

पीडाक्षतेपि॥ कट्यांशोरूजानुजंघाशयाधिसांगायायास्संध घस्तासुतोदः॥८॥ स्यन्दस्तद्वत्तत्रमेदोगुरुत्वंसुप्तिःकंडूदाहरु क्चासकृद्वा॥जायंतेनेतेपिनश्यंतिवातरक्तेपूर्वंमंडलंवर्णभेदः ॥९॥ पिडकोद्गमभालस्यसदनेच भवन्त्यमी॥ वातास्रपूर्वरूपेतु प्रवदन्तिभिषग्वराः॥१०॥ अथरूपम्॥ पदेपदेवेश्रवयथुःप्र तापोरक्तस्यछायासकलांगयष्टौ॥ प्रभंजनास्त्रेप्रभवंतिपूर्णेरू पेचतस्योपशयोयथाग्रे॥११॥ अथोपशयः॥ दिवाशयी न्नोनबहुप्रकुप्येत्स्त्रियंनगच्छेन्नश्रमंनकुर्यात्॥ कटून्यभिष्यं दिपटून्नरवादेदम्लांस्तथापथ्यतमंचवक्ष्ये॥१२॥ गोधूमशाली यवषष्टिकाभिर्जीर्णैश्चधान्यैर्विदधीतभोज्यम्॥ मुद्गाढकीभि श्चणकैर्मसूरैस्सकुलत्थकैर्वाविदधीतयूषान्॥१३॥ वेत्राग्रकाक माचीप्यथशतजटावास्तुकोपोदकीचशाकार्थेवेदपत्राप्यथबहु लदलोहृव्यमांसोदसिद्धाः॥मांसैर्वाविष्किराणांप्रतुदभवपलै र्वारसंसंविदध्यात्सात्म्यायाश्चवत्रविद्वान्सघृतमथततोवातर क्तेप्रकुर्यात्॥१४॥ प्रतीकारस्तत्रतावत्प्रलेपः॥ गोधूम पिष्टैर्घृतछागिदुग्धैर्मष्टैस्तिलैर्वापयसातसीभिः॥ म्रष्टाभिरे रंडबलुवर्धमानफलैश्चलेपोगदितोस्रवाते॥१५॥ चत्वारो लेपाः॥ स्निग्धस्यवातास्रगदातुरस्यरक्तंशिरामोक्षणशृं गिकाद्यैः॥तुंबीजलौकादिभिरप्यशंकमल्पाल्पदोषंपरिरक्ष्यहा र्यम्॥१६॥उग्रांगदाहेप्यथतोदयुक्तेजलौकिकाभिस्त्वथवेदना यांस्त्रप्रसेकेत्वचिवर्षिकंडूयगदेहरेद्रक्तमलंचशृंगैः शिराविमो क्षैःसकलांगदोषेवायुर्नबंधेच्चयथाल्पमल्पम्॥ रूक्षस्यवाम्ला

न्तरांगयष्टेर्घातोन्नरंरक्तमलंनहार्यम् ॥१८॥ गंभीरंश्वयथुंशि
राभवगदान्ग्लानिंचकंपंतथाकुर्याद्वायुररक्षितोपरगदानन्यां
श्चतस्माद्भिषक् ॥ अल्पाल्पंपरिरक्ष्यवायुमसकृद्रक्तंहरेदन्यथा
मृत्युस्स्याच्चयतोविचार्य्यभिषजाकार्य्यशिरामोक्षणम् ॥ १९॥
पित्ताधिक्येरेचनंचाशुकुर्यात्स्नेहैर्वेघोरेचकैर्योगमुख्यैः ॥बाल्या
भ्यंगालेपनास्थापनैर्वापानैस्नेहस्यापिवाचोपनाहैः ॥ २०॥ परिषे
कैश्चयोगैश्चरेचनैरपिवैद्यराट्॥ गंभीरमान्तरेत्प्राज्ञोयोगानन्यां
श्चब्रूमहे ॥२१॥ अथगुडूचीयोगः॥ सुधालतायाःस्वर
संतथावाचूर्णंतुकल्कंशृतमंबुचास्याः॥ यःस्सेवतेगुग्गुलुनाविमि
श्रंनित्यंहिवातास्रगदात्प्रमुच्येत् ॥२२॥ अथमंजिष्ठादिक्वाथः
॥ मंजिष्ठात्रिफलावचामरलतातिक्तानिशादारुभिर्निंबेनापिकृ
तःकषायविधिनापीतस्तुवातास्रहाः॥ क्वाथोयंनवकार्षिकःप्र
शमयेत्कुष्ठंचपामांतथाविस्फोटंचविसर्प्पकंचशमयेद्रक्तोद्भवंमं
डलं॥२३॥ अन्यः॥ वृषामृतेरंडकृतःकषायःपीतस्तथैरंडज
तैलयुक्तः॥ निहंतिवातास्रगदंविशेषात्सर्वांगजैकांगजमप्यजन्
स्रम्॥२४॥ अथतालकेश्वरः॥ तालस्यपत्राण्यतिसूक्ष्म
काणिपुनर्नवायास्वरसैर्दिनैकं॥ विमर्द्यतावच्चघनत्वमेवमा
यातिकार्यास्यचचक्रिकातु॥ २५॥ संशोष्यघर्मेचपुनर्नवायाः
पंचांगजक्षारचयैःप्रपूर्य्य॥ स्थालीमथाकंठमलंनतस्तुलदंतरा
लेचनिधायतांच॥२६॥ स्थाल्यास्युखंचापिदृढंविमुच्यमृत्खर्प
रैश्चापिविशोष्यपूर्वम्॥ चुल्ल्यांनिधायाग्निमनल्पमेवदिवानिशं
पंचदिनानियावत् ॥ २७॥ संज्वाल्यपश्चादवगृह्यशीतमलंस्व-

भावेनतुसिद्धतालम्॥ तालैःश्वरारथरत्तु गुडूचिकादिक्काथेनगुं
जैकमितो ऽशितोयम्॥ २८॥ अष्टादशान्याशुचकुष्ठरोगान्वाता
स्रविस्फोटविसर्परोगान्॥ कंडूंचपामामथमंडलानिफिरंग
देशोत्थगदंनिहंति॥ २९॥ कट्वम्ललवणास्त्यक्त्वाभेषजंपरि
शीलयेत्॥ आतापंवन्हिमप्यत्रलवणंवैसैंधवंभजेत्॥ ३०॥
अथसंप्राप्तिः॥ तत्रतावद्वाताधिकं॥ वाताधिक्येशूलशो
थौज्वरौक्ष्यंतोदस्पन्दौवेपथुःसुप्तयश्च॥ शीतद्वेषस्तुंभुरुक्चां
गुलीनांस्यात्संकोचश्चांगसंधिग्रहोपि॥ ३१॥ ततोश्यावताक्रू
ष्यावर्णत्वचूर्द्धीभवेत्कापिहानिस्सदायातवृद्धौ॥ शताव्हाद्वयं
वैप्रियालुंकसेरुंघृतंसत्सितामिष्टयष्टी ३२ विदारीचसंयोज्य
कुर्यात्प्रदेहंप्रसक्तेचवायोतथाचान्ययोगः॥ सरास्नागुडूचीब
लेद्वेचयष्टीसुमिष्टासजीवर्षभादुग्धसिद्धः॥ ३३॥ प्रदेहोमधू
क्तोपिनित्योस्त्रहारीप्रसिद्धस्तुरास्नादिपूर्वोक्तद्रव्यैः॥ प्रयुक्तंत
थौगद्वयंरासपद्यैःप्रयोज्यंसुवैद्यैर्विचार्याशुनित्यम्॥ ३४॥
अथपित्ताधिक्यम्॥ दाहोमोहःस्वेदमूर्छेमदश्चतृष्णा॥दाह-
स्त्वग्गतःपाकशोथौ॥ पित्ताधिक्येगात्रसंस्पर्शनेरुक्तद्वन्नि-
त्यंचोष्णतासर्वदेहे॥ ३५॥ अथप्रतीकारः॥ काश्मर्य
द्राक्षामधुकेक्षुदुग्धकाकोलिकाचन्दनशर्कराभिः॥ सपित्तवा
तास्रगदस्यशान्त्यैशृतंपिबेच्छीतजलंमधूकैः॥ ३६॥ अ-
न्यः॥ कुलकभीरुफलत्रयरोहिणीकथितमाशुगुडूचिकयाद्रु
तम्॥ समधुखंडयुतंप्रपिबेदलंप्रबलपित्तप्रभञ्जनरक्तके॥
३७॥ अथकफाधिकम्॥ स्तैमित्यशीतत्वगुरुत्वसुप्त

येऽस्निग्धत्वमेवात्र कफेन युक्ते ॥ कल्कोश्वगन्धानिलजः प्रलेप्यो वातास्त्ररोगस्य कफस्य हत्यै ॥ ३८ ॥ अन्यः सिद्धार्थहिस्रा पिचुमन्दपत्रैर्लेपस्तिलक्षारयुतस्तथैव ॥ तैलैश्वसूक्तैश्वसुराभिरत्र मूत्रैश्वतद्वत्परिषेकउक्तः ॥ ३९ ॥ गोरसर्षपजः कल्कप्रदेहो वा कफाधिके ॥ वातरक्ते प्रकुर्वीतप्रवदन्ति भिषग्वराः ॥ ४० अथ रक्ताधिकम् ॥ शोथोऽतिरुक्तोदनतुश्वताम्रदेहैश्व रक्तेप्यधिके भवन्ति ॥ स्निग्धैर्नरूक्षैश्वसमं प्रयाति स्वेदेन कंडूतिचिमिट्टपैश्व ॥ ४१ ॥ प्रतीकारः ॥ नलदवारिघृतैः पयसा समैर्मधुकशाल्मलिकल्कसमन्वितैः ॥ रुधिरवातगदास्त्रविलेपनं निगदितं बुध जन्ययोग्युतम् ॥ ४२ ॥ अर्कदुग्धपरिसेचनं मुहुश्चानुवेलमवलेपनन्ततः ॥ सर्ज्जजातरसमिश्रितैर्घृतैश्वांबुधीतुहविषामुहुर्मुहुः ॥ ४३ ॥ अथ वातपित्ताधिकम् ॥ शोथैरोस्यंपाकदाहोचनीलकालं रक्तं विस्रवेत्स्यन्दयुक्तम् ॥ स्पर्शेप्रायश्चाधिकत्वंचवातपित्ताधिक्येवातरक्तेभवन्ति ॥ ४४ ॥ प्रतीकारः ॥ पीयूषपीयूषमलंरुबूकतैलैरनेलैरमृतैर्निषेव्य ॥ वातेन पित्ताधिकरक्तपित्तं विसर्प्पकंडूतिगदं निहन्यात् ॥ ४५ ॥ अन्यः ॥ त्रिवृद्विदारीक्षुरकैः कषायः कृतः प्रपीतस्तु तथैव नित्यम् ॥ सवातपित्ताधिकवातरक्तं हनिहन्तिवैद्यक्षितिपावदंति ॥ ४६ ॥ अथ वातकफाधिकम् ॥ तोदश्शैत्यंगौरवंस्यन्दमुच्चैर्विश्रास्त्रत्वंचांगुलीपर्वजातः ॥ वातश्लेष्मासंयुते वातरक्ते-स्यात्संकोचः कापि वा कुत्रचिद्वा ॥ ४७ ॥ अन्यः ॥ शिग्रुबीजधनिकासमसूरापोषितान्लजरसेन च लिप्ता ॥ वातरक्तमपि

वातकफेनहन्तिचाम्लजरसे र्बहुसिक्ता॥४८॥ अन्यः गृहधूमवचानिशाद्वयैःशतपथ्यागदपेषितैरलम्॥ परिलेपितमाशुनाशयेत्प्रबलंवातकफोत्थरंगदम्॥४९॥ अथवातरक्ताधिकम्॥ स्यन्दःशोथोमंदकण्डूतियुक्तोदेहेतद्वच्चिमारक्तस्रावः॥स्वल्पाधिक्यात्लक्ष्यतेवातरक्ताधिक्येलक्षणंवातरक्ते॥ ५०॥ प्रतीकारः॥ पीयूषविश्वधनिकात्रिनयंत्रिकर्षसंकाथपीतमसकृत्सकलामयघ्नम्॥ वातास्रमाशुविनिहन्तिचवातरक्तदोषाधिकंसकलकुष्ठगणप्रणाशि॥५१॥ अथभल्लातकावलेहः॥ भल्लातकीप्रस्थमलंविसुद्रंगुडूकाक्षुरंद्विप्रस्थमेकत्रपात्रेतुजलेष्टभागप्रपूरितेपाच्यन्चपादशेषे॥५२॥ सहस्रपूतेपिचवक्ष्यमाणान्याचूर्णितान्याशुचतानिवक्ष्ये॥ विश्वामृतावाकुचिकायवानीधात्रीनिशाचन्दनचक्रमर्द्दान्॥५३॥निम्बारुणामागधिकाशिवाभिःकटुत्रयंनिंबधनामृताभिः॥ धात्रीनिशापर्प्पटगोक्षुराणिगन्धत्रयंसैन्धववालचन्द्रान्॥५४॥उशीरमारक्तकचंन्दनंचपृथक्पृथक्सर्वमिदंपलार्द्धम्॥संचूर्णितंपूर्वजलेनविद्वान्तत्तत्समस्तंसघृतंविपाच्य॥५५॥ मधुप्रयुक्तंचमृदस्सुपात्रेनवेषसंरक्ष्ययथाबलंहि॥ भुक्त्वानरोयस्तुजलेनवातरक्तंजयेदत्रनकापिशंका॥५६॥ यस्यप्रकृत्यासहतेनभल्लातकंसततंत्यज्यन्चभक्षणार्थे॥योगेषुरक्तंरवलुचंदनंयत्तत्तद्गुणोप्राहुरलंपुराणाः॥५७॥कुष्ठार्शोवातरक्तादयरुधिरभवावायुजान्येसमस्ताःकंडूदद्रूविसर्प्पादयविविधगदामंडलाद्यास्समस्ताः॥नाशंगच्छन्तिसर्वेत्वमृतयुतवरेकीलकास्यावलेहेप्रातर्भुक्तेपले

केर्विविधबुधगणैर्गर्यितेमज्जलेन॥५८॥ व्यायाममातपकशा-
नुदधीनिवाम्लस्वादुस्त्रियंचपयसास्नपनंचतैलैः॥ अभ्यंगमाशु
बहुधापरिवर्ज्जनीयमेतत्समस्तमपिभल्लियुतप्रयोगे॥५९॥
अथपित्तकफरक्ताधिकंस्पर्शासहत्वंचरुजोविदाहःस्निग्धत्वस्फ
मोत्यतिशीततांच॥स्निग्धैर्नरूक्षैःशमतामुपैतिचेन्कुष्ठपित्ता
धिकवातरक्ते॥६०॥　अथप्रतीकारः॥　मञ्जिष्ठादारुरात्रिर्हर
नयनफलानिंबपीयूषतिक्ताग्राभिःक्षीरंशृतंयत्तदनुगदितंचा
क्रकर्षचनाम्ना॥पीतंवातेनरक्तंजयतिबहुविधंकुष्ठरोगंचपामां
कंडूविस्फोटरक्तोद्भवविविधविधान्मण्डलान्हंतिचान्यान्॥६१॥
॥ अन्यः॥　सुधालताकल्ककषायसिद्धंघृतंनिहन्त्याशुचवा
तरक्तम्॥कुष्ठान्समस्तान्प्रहन्तितद्वन्निषेवितंचेच्चिरंनरेण
॥६२॥　अथकफरक्तवाताधिकम्॥　स्निग्धत्वंमालिना-
स्त्वंतोदश्चेच्चिमिचिमायनम्॥शोथश्चगुरुतासुप्तिर्वातरक्तक
फाधिके॥६३॥　अथप्रतीकारः॥　अमृतव्रततीकुटिलानल
दक्षुरकावरुणारुणचन्दनकैः॥ द्विबलामधुकैर्निशयामलकैःपि
चुमन्दपटोलशिवावरिभिः॥६४॥ अपिसिंहसुरवीसहितैरवि
लैरपिचक्रविमर्द्दकमूलशृतः॥ अमृतादिरयंहरतेसकलंबहुवा
तगदंप्रबलास्त्रयुतम्॥६५॥　अथगुडूच्यादितैलम्॥　चे
दद्रोणजलेपचेदथतुलांछिन्नोद्भवायाभिषक्तत्पादेनपयोगवा
मथपचेद्द्रोणप्रमाणंततः॥तैलस्याढकमत्रवैद्यनिपुणोसंचक्ष्य
माणौषधैःमंजिष्ठागदजीवनीयकगणैर्मांसीनखीपद्मकैः॥६६
॥ एलाव्याघ्रनखामलैःशतजटाशृंगीहरेण्वादिभिः॥ वालोमाक

दुकत्रयैःसशिशिरैः पद्मोत्पलैर्भेदलैः ॥६७॥ मृद्वीकागुरुनाग पुष्पसहितैःपण्यांद्दरिकान्तयास्त्राविण्यापयसाच्चकल्कितनतमैर्वै द्याधिराजःस्वयम् ॥ निर्मायस्वविधानविच्चनियतंतैलंगुडूच्यादि कम् पानाभ्यंगनिषेवणार्थमुदितंप्रायोनुवासार्थकम् ॥ ६८॥ध न्यंपुंसवनंपरंनिगदितंस्त्रीणान्तथागर्भदंवातास्त्रंशमयेत्तु रात नमलं स्वेदंच कंडून्तथा ॥ पित्तंवातयुतंशिरोगनमथोकंपंतथाना र्दितंपामानंसहसाविनाशमनयेत्तैलंगुडूच्यादिकम् ॥ ६९॥ ॥ इतिगुडूच्यादितैलं ॥ अथरक्तवातपित्ताधिकम् ॥ रुजोधि कंस्यन्दयुतश्चशोथस्तोदोऽस्त्रमालिन्यमथाऽसह्त्वम् ॥ स्पर्शस्य संमोहअलंसपित्तवातास्त्ररोगेप्रभवंतिचैते ॥७०॥ प्रतीकारः ॥ धारोष्णदुग्धेनगवांचमूत्रैर्युक्तेनचूर्णंचतुरङ्ग वंपः ॥ पित्तेनरक्ते नयुतंचवातगदंनिहन्यात्तुशुनक्तिनित्यम् ॥ ७१॥ अन्यः पिबे त्कोकिलाक्षामृताकाथमेकंकवोष्णंबलेनानुकूलंप्रमान्यः ॥ त्रि सप्ताह मेकं चवातास्त्ररोगात्प्रमुंचेच्चपित्ताधिकात्पथ्यमश्नन् ॥७२॥ अथसर्वजम् ॥ सर्वजंचरुधिरेणसंयुतंचेद्भवेच्चबहु वेदनान्वितम् ॥ अंगसंधपरिदारणंयदावास्गिांगमपिशीलयेत्त दा ॥७३॥ अथोत्तानम् ॥ मन्दंरक्तंपत्रपीडान्वमन्दास्पर्शा ज्ञानंनातिकंडूतियुक्तम् ॥ त्वङ्मांसस्थंवातपित्तप्रकोपादुत्ता नाख्यंरोगमाहुःपुराणाः ॥ ७४ ॥ मधुकाद्विगुणंवरंतैलमलंपय साजिप्रवेन्नतत्तोद्विगुणेन ॥ परिपीतमलंचबलेनसमंविनिहंति सदागतिरक्तगदम् ॥ ७५॥ अथशतावरीघृतम् ॥ शताव रीकल्कितनीरभागे पयस्समथोहिघृतंविपक्कम् ॥ उत्तान

संज्ञंचनिहन्तिवातपित्तप्रभूतंपक्कुवातरक्तम् ॥७६॥ अथगाद
म्॥ शरीरांतःप्रभेदेनदुर्गन्धःश्वित्तविभ्रमः॥सोयंधात्वंतरगतो
गांढसुत्तानसंज्ञकम् ॥७७॥ प्रतीकारः॥ जवाग्रजोदेवनरूस
सैन्धवंमुस्तायवानीत्रुटिदीप्यचित्रकाः॥निशाविडंगंजरणाद्वयं
चफलत्रिकंव्योषवरासकेशरा॥७८॥ कर्षैकमानंत्वसमंसमंत्व
पुरस्तथापंचपलप्रमाणाम्॥सर्वैःसमानासितशर्करात्रसताथिते
सर्पिषिसर्वमेव॥७९॥पिंडीकृतंभुक्तमलंनरेणनिहंतिवानास्त्र
गवृक्षणेन॥यक्ष्मोदरप्लीहगुदांकराद्याःकृशानुमांद्यव्रणकोष्ठरो
गान् ॥८०॥पित्तविभ्रममदानपहन्तिचित्रकुष्ठमपिगृध्रसिकांच॥
अन्नपानपरिहारवर्जितंसेव्यमानगुटिकारसायनम् ॥८१॥अ
श्विनिर्मितमिदंसमरवंडंवायुजातमखिलार्तिमरवंडम् ॥वज्रमि-
न्द्रसुकरादिवमुक्तंशैलजातमिवदुर्जरभुक्तम् ॥८२॥उदरंप्रदरप्र
दरंबहुधाखिलवायुगदानपिहन्तिसदा॥परिसेवितमाशुगरक्तग
दान्कृशिमानमलंदहनस्यपदा॥८३॥ इतिशर्करासमगुग्गुलुः
॥ अथशशिप्रभावटी॥ भूनिंबसैंधववचासुरदारुयष्टीकृष्णा
भयाक्षदहनत्रिफलात्रिभांडीक्षीरद्वयांबुदघनारजनीद्वयैश्चज
न्तुघ्नसैन्धवविषाग्निकटुप्रयुक्तैः॥८४॥ कर्षांशकैरपिपृथक्पृथग
भ्रंथ्याचव्येनचैककुडवेनपुरेणशाकम् ॥मुष्टिद्वयेनचवियाच्य-
सुलोहकेनप्रस्थार्द्धकेनचशिलाह्रितयेनसर्वं ॥८५॥ मत्स्यंडि-
काकुडवमेकतमंदलैलाभृंगेनकेशरलवंगसवंशजाताः॥शुक्ति
द्वयोन्मिततमैश्चसमैःसमैस्तैर्द्व्येनसिद्धगुटिकाचशशिप्रभेयम्॥
८६॥ प्राश्नाप्रसाद्यगिरिशंशशिनाक्षयार्शःकुष्ठाग्निसादगलक

र्गशिरोऽक्षिरोगान् हन्याशुमेहजठरानपिमूत्रघातप्लीहज्वरव्रण
भगन्दरच्छर्दिपांडून्॥८७॥ दद्रूहलीमकसमस्तविशिष्टकुष्ठाना
नाढ्यजन्तुजगदान्सकलामघातान्॥उन्मादपीनससदागतिरक्तमू
द्रासेपार्दितोश्मरिगदानपिधातुसंस्थान्॥८८॥वातान्स्थूला
रान्कुशान्कुशतरान्स्थूलानलंकुर्वतोदाहंशोथमथाम्लपित्तध
मनीस्त्रस्तारतीन्नाशयेत्॥८९॥ इतीचन्द्रप्रभावटी॥ अ
थनलोद्भवम्॥ स्थित्वामूलंपादयोर्हस्तयोर्वासर्पत्युच्चैश्चारुद
ष्टस्ययद्वत् मन्दंमन्दंतद्विसर्पत्स्यवातरक्तंहन्यान्नोचिकित्से
द्यदीत्थम्॥९०॥ प्रतीकारः॥ शतावरीकल्कितगर्भमध्ये
रसेचतस्यापिचतुर्गुणेच॥क्षीरेणतुल्येनघृतंप्रसाध्यनलो-
त्थवातास्त्रगदेप्रभंजीत्॥९१॥ अथधत्तूरतैलं॥ कनकेन
शिखीससुड्वैरपिवाक्षारजलैश्चपुष्पकैः॥ पटुसर्ज्जरसैस्तिलै
रपितिलकल्कैश्चतिलोत्थशुद्धतैलम्॥९२॥ विनिहंतिसुसिद्ध
मेतदेवपरिलिप्तशिरसीन्द्रलुप्तवातम्॥बहुधारुधिरेणसंयुतं
भिषजश्चाथवदंतिनिश्चयात्॥९३॥ अथोपद्रवाः॥ अनि
द्रारुचिश्वासमांसप्रपाकस्तृषामर्मपीडाज्वरःकंपताङ्गे॥भवेद्
क्त्नाद्यंगुलीयाद्यनेकेबलंस्फोटकोपद्रवादिर्भ्रितात्र॥९४॥वा
तास्रमेभिःप्रवदन्त्यसाध्यमुपद्रवैर्युक्तमथात्रयाप्यम्॥कियद्भि
रेतैरथसाध्यमाहरेतैर्विहीनंचनथैकदोषम्॥९५॥नवंविशेषा-
च्चतथाद्विदोषंयाप्यंत्रिदोषोत्थमथोप्यसाध्यम्॥सोपद्रवंवा
स्फुटितंप्रभिन्नंस्रुतंत्वसाध्यंसुनयोवदन्ति॥९६॥ अथनिदा
नः॥ त्रिवर्णशोथांकुसमंडलादिगाहित्यमंघ्रिद्वयजंभवेच्चेत्॥

ततोदभेदौभवतोनलोहगन्धोपिवातास्रगदेगतेहि॥ १७॥ एकदि त्रियुतंत्वसाध्यमुदितंमोहेनमांसक्षयैःप्राणानामपिसंक्षयेणसहि तंवातास्ररोगंबुधैः॥ याप्यंचेच्चिरकालतोपिजनयेत्कुष्ठंमहादारुणं तस्मादाशुचिकित्सयाचशमयेद्दानैःसदेवार्चनैः॥ १८॥ आयुर्वेद निगदितंयत्तुयथैव॥ श्रीगुरुकृपयालिखितंतत्तुतथैव॥ १९ ॥ इतिश्रीगुरुचरणाब्जचञ्चरीकश्रीगर्गवंशोद्भवचतुर्वेदिकाशीनाथ कृतायांचिकित्साक्रमकल्पवल्ल्यांवातरक्तचिकित्सावर्णनंनामविं शतितमस्तबकः॥२०॥ ॥ नत्वागुरुपदकंजंवातगदस्य कु र्वेविशदचिकित्सांसामतमस्य॥१॥ निदानम्॥ विरुद्धाशनंचे ष्टितंयद्विरुद्धंकरोत्यग्निमान्द्येपिसुस्निग्धभोज्यम्॥ कदाचिच्छ्रमाद्वा युनाप्रेरितामःप्रधावत्यथोनिश्चलस्यापिपूर्वो॥२॥ कफस्थस्थलेषा शुतेनैवचामःसमंनाडिकाभिस्ततःपद्यतेसः॥ पुनर्वातपित्तैःकफैः दूषितोन्नरसश्चापिस्रोतांस्यभिष्यन्दयेद्दै॥३॥ सनानाविधोवर्णभे देननित्यंतदापिच्छिलाचवन्हिमांद्यंकरोति॥ सरोगाश्रयोद्यामसं ज्ञोनराणांहृदोगौरवंसविधत्तेविशेषात्॥४॥ अजीर्णाद्रसस्सञ्चि तोयःक्रमेणशिरागात्रपीडाकरोत्यन्नजातः॥ प्रसिद्धोलभेदामसं ज्ञांसएवरुजामाश्रयोवैद्यभूपैर्निरुक्तः॥५॥ अथपूर्वरूपम्॥ त्रिकसन्धिगताविमौसमंकुरुतस्तब्धतनुंयदातदा वरवैद्यविवर्णि तस्तुसोगदितस्सामसदागतिर्गदः॥६॥ अथरूपम्॥ भवे दंगमर्दोरुचिस्तर्षयुक्तोज्वरश्शूनतांगेष्वलंगौरवंच॥ अपाकस्त थालस्यमेतेभवन्तिगदेह्यामवातेतुपूर्णाविशेषात्॥७॥ अथो पशयः॥ वास्तूकवृन्ताकपटोलकारवल्लीभवंशाकमलंप्रभुंजीत्

यस्मात्प्रमेतेषु तदेव नित्यं शक्रस्य मूलस्य तथैव यूषम् ॥ ८ ॥ यवैः कोरदूषै स्थोषष्ठिकाभिः पुराणैश्चलाचेस्सतकैश्च भोज्यम् ॥ अन्धोपञ्चकोलेन कोलस्थयूषं तथावाशु वागूं पिपासार्दितोयः ॥ ९ ॥ पिबेत्कांजिकं चापि शुंडीरजोभिः सुतिक्तान्यलं सत्फलान्यन्नतद्वत् ॥ कटून्यप्यथोस्विन्नवार्ताकमेव तथा लंघयेद्वेचयेत्स्नेहपानैः ॥ १० ॥ दीपनानि कटूनि रेचनलंघनानि समाचरेत्स्वेदनानि च रूक्षकाणि च वालुकापुटकैरलम् ॥ बस्तयोप्युपनाहकर्मणि रूक्षमेव निषेवयेत्स्नेहनानि विधाय प्रायो भोजनानि समाचरेत् ॥ ११ ॥
॥ प्रतीकारः ॥ चित्रकैः कटुकाशिवामरवल्लिकाजगतामलं चूर्णमाशु विषाश्रुतं वरकोष्णनीरनिषेवितम् ॥ आमवातगदात्तु रं परिमोचयेदथ सत्वरं स्नेह एव रुबूकजः परिपीयते यदि नित्यशः ॥ १२ ॥ योगद्वयम् ॥ अन्यः ॥ शस्तुनगंधातिविषाशिवाभिः शुंठीलताभिश्च दिवौकसानाम् ॥ काथेन चूर्णञ्च विधाय रूक्षमश्नन्कवोष्णेन जलेन तद्वत् ॥ १३ ॥ अन्यः ॥ एरंडतैलेन हरीतकीं यः खादेद्विधानेन विमुच्यते सः ॥ आमानिलार्त्तेरपि गृध्रसीतो वृद्धेस्तथा नात्र विचारणीयम् ॥ १४ ॥ अन्यः ॥ कटुतैलभृष्टानि पत्राणि नित्यं सभक्तानि चारग्वधस्यापि खादेत् ॥ जनो मुच्यते ह्यामवाताख्यरोगादलं शुंठिकागोक्षुराक्वाथपानात् ॥ १५ ॥ योगद्वयम् ॥ अथ रास्नादिक्वाथः ॥ रास्नाशटीनागरदेवदारुमुस्ताभयावत्सकधान्यकानाम् ॥ कृष्णामृतोग्राच विकाशनाख्या वातारिविश्वा बृहतीद्वयानाम् ॥ १६ ॥ पुनर्नवापीवरिकाश्वदंष्ट्रादुरालभाव्याधिविघातकानाम् ॥ बला

मिसीनामपिद्विरुद्दारोःकिरातकस्यापिसमान्यमूनि॥१७॥ भागानिरास्नाप्रभवाणित्रीणिसंकुट्यकाथ्यंततोष्ट शेषम्॥पिबेत्कणानागरचूर्णयुक्तमामादिवातेषखिलेषुनित्यम्॥१८॥पक्षाघातेप्यर्दितेकुब्जवायौकंपेतहृज्जानुजंघास्थिरोगे॥संधिप्रासेचापिवातास्त्ररोगेपेयंतद्वत्क्रोष्टुशीर्षेविशेषात्॥१९॥विश्वाच्याम पबाहुकेभगगदेस्त्रीणांचवन्ध्यामयेपुंसांलिंगगदेषुशुक्रजगदेष्वन्येषु कंपादिषु ॥येचान्येपिरुहदामयाश्चकथितास्ते प्यलंपाययेत्सुंसांपुंसवनंपरंनिगदितंस्त्रीणांपरंगर्भदम्॥२०॥ अथाजमोदादिचूर्णगुटीच॥ पलंचाजमोदामरीचंविडंगंकृशानुंतथादेवदारुंशताह्वाम्॥पलंपिप्पलीनांचतन्मूलकानांपलैकंतथासैंधवःसर्वमन्यत्॥२१॥ पलानांचदिक्संमितानांचशुंठ्यास्तथावृद्धदारोश्चभागोप्रकल्प्य॥तथाभापलंपञ्चकंचूर्णयित्वागुडैःसर्वतुल्यैर्वटीवाविधेया॥२२॥गदान्वातजान्दारुणान्तूणिकादिमतूणीकटीपृष्ठयस्यन्दकादीन्॥कवोष्णेननीरेणपीतंतुचूर्णंवटीकापिवातानाहगुल्मान्निहन्ति ॥२३॥जंघास्थिस्फुटनंचशूलमपिवाशोथंतथासंधिषुयेचान्येपिगदास्तुवातजनिताःप्रायस्तथामान्विताः॥तेसर्वेमलयंप्रयांतिसहसाचेगृध्रसीकादयोयेनेदंशतवारियासमशितंचूर्णंगुटीवाशिता॥-२४॥ अन्यः॥ विश्वौषधंवसुपलंकुडवंघृतस्यक्षीराढकेणचशताद्र्धपलैःसुखंडैः॥व्योषस्त्रिजातकपलंचपलंच हारूरायपलंचविधिनाकृतविश्वखंडं॥२५॥ आमान्वितंचबहुवातगदंनिहंतिभुक्तंयथाग्निबलमाशुकरोतिपुष्टिम्॥ धातोश्चबल्यमसकृत्परि

संवितोयमायुष्यमेवचवलीपलितघ्नमेव ॥२५॥ इतिशुंठीखंडः॥ अथसंग्रामिः॥ तत्रवाताधिकः॥ न्यासात्मकंपत्थवांगकाकिशूले ऽधिकेचाधिकवातजाते॥ बाल्हीकचव्यास विडास्सलोककृष्णासजीराःखलुपुष्करान्ताः॥२६॥ भागोत्तराः पेष्यसुवस्त्रपूताःपीताःकवोष्णाम्बुयुतास्सवातम्॥ निहंतिवा सामसदागतिंचविशेषतःपथ्यभुजोनरस्य॥२७॥ युग्मम्॥ अन्यः॥ कणामूलंतस्याःपटुदहनतालीसचविकास्तथाजीरंकृष्णांद्विपवरमसूनंद्विपलिकान्॥समान्भागानेषामथहरसुखां श्वापिपलिकान्॥सुवर्चाःशुंठ्याथोमरिचजरणेवाद्विपलके॥२८॥तथावैदाडिम्याःकुडवमिहवावेतसमलंयदम्लंतत्प्रोक्तंयुगुलंपलिकंकुद्दिततमम्॥ कृमीन्कंडूंगुल्मानुदरमरुचिंचाथग्रहणीं समीरंसमंवाहरतिशृतनीरेणनितराम्॥२९॥ भगंदरार्शोगदसंघहारीकणादिचूर्णंचसुनसवारि॥ समीरणंसामतमंनिहन्ति सुरानुपानेनचयेपिबंति॥३०॥ इतिपिप्पल्यादिचूर्णम्॥
अथपित्ताधिकम्॥ तृड्दाहरागाधिकताचपित्ताधिक्येचविश्वामृतचेतकीनाम्॥ क्वाथंपिबेत्कौशिकयुक्तमेकंसद्य एजंघोरुरुजाघ्नमेवं॥३१॥ अथशुंठ्यादिकाथः॥ अथविश्वशटीप्रभूतकल्कैःशृतनीरंचपिबेत्पुनर्नवायाः॥ अपिसमदिनानिपित्तयुक्तमिदमामादिसदागतिंनिहन्यात्॥३२॥ अथकफाधिकम्॥ स्तिमितत्वगुरुत्वशोथयुक्तोयदिचश्लेष्मयुतोऽमवातरोगः॥ लशुनौषधिसंशृतंपयोवैसहसेफालिकयापिबेन्नदाशु॥३३॥ इतिरसोनादिः॥ अथप्रतीकारः॥ पथ्यावि

श्वजवानिकाभवमलंचूर्णञ्चतक्रैः पिबेत् मद्येनोष्णजलेनवा
थचतथासत्कांजिकेनापिवा ॥ सामंवातमलंच पित्तसहितंवाता
नुगंसंहरेच्छोथंपीनसवन्हिमान्द्यकसनान्हृद्रोगमन्नारुचिम्
॥३५॥ अथवातकफाधिकम् ॥ शूलेनकाठिन्यमथोन्नकं
इङ्क्रमेनवाताधिकतोभवेच्चेत् ॥ रास्नागुडूच्यौश्वसदेवदारुरु
वूकशुंठिक्वथितंपिबेत्सः ॥३॥ अन्ययोगः ॥ कणाकणामू
लकचव्यचित्रैर्विश्वाकषायःसमधुर्निपीतः ॥ सश्लेष्मवाताधि
कमामवातंगदंनिहन्यान्नहिविभ्रमत्र ॥३६॥ अथपित्तक
फाधिकः ॥ भवेत्स्तब्धताशोथदाहोज्वरागोबलासाधिकोऽपि
त्तकादिप्रसिद्धः ॥ गदोत्वामवातस्तुवैद्यैर्विजेयोयथावातथात
त्प्रतीकारमाहुः ॥३७॥ प्रतीकारः ॥ कृशानुपाठाकटुका-
कलिंगमुस्ताभयाभंगुरिकामृतानाम् ॥ विश्वाविषाभ्यांचसदेव-
दारुचूर्णंनिषेवेदिहचोष्णनीरैः ॥३८॥ अन्यः शत्पुग्रगन्धा
तिविषाभयाभिर्विश्वामृताभ्यांचसदेवकाष्ठैः ॥ पीतःकषायस्तुकृ
तोमवातनाशायरूक्षाशनमभ्नतस्तु ॥ ३९॥ अथसन्निपातजः
॥ हस्तांघ्रिशीर्षेषु चगुल्फयोश्चत्रिकेपिजानूरुकसन्धिसंघे ॥
शोथेनदोषास्सकलाःप्रकुर्युर्दंशेनतुल्यंखलुवृश्चिकस्य ॥ ४०॥
उत्साहहानिर्बहुमूत्रताचकुक्षौचकाठिन्यमथापिशूलम् ॥ वैरस्य
दाहांत्रविकूजनानिमन्दाग्निरानाहप्रसेकमूर्छाः ॥ तद्वृद्धिविड्बन्ध
सजाड्यनिद्राविपर्य्ययेश्चापिभवन्तिदोषैः ॥ त्रिभिर्यदासामस
दागतिर्वैजायेत्तदोपद्रवसंघएषः ॥ ४१॥ अथप्रतीकारः ॥
मेथीपलाष्टकमिदंचपलाष्टकंचचूर्णीकृतंचजगतस्तुगवापयोभिः

॥ द्रोणोन्मितेश्वपरियाच्यकृशाग्निनैवयावद्घनत्वमुपगच्छतितावन्नाशः ॥ ४३॥ संपाच्यचेदथसिताढकसंप्रयुक्तंहव्येनचाष्टपलकेनविधायपाकम् ॥ शुंठीकणामरिचचित्रकपत्रमुस्तादीप्याशटीजरणधान्यककारवीणाम् ॥ ४४॥ जातीफलस्यमगधाग्निभवंहिचूर्णंसंमिश्र्यपाकविधिनाच्चपलंपलंच ॥ त्वक्चूर्णयुक्तमथवैद्यविनिर्मितन्ततूरवादेत्पलोन्मितमथापियथाबलंवा ॥४५॥ सर्वामवातान्निखिलान्समीरान्तुन्मादवातास्त्रप्रमेहपांडून् ॥ वैषम्यमासान्निखिलान्ज्वरांश्च हन्यादपस्माराशिरोरुजादीन् ॥ ४६॥ दृगामयंसूतिगदंदरंच हन्याद्वपुःपुष्टिकरंपरंच ॥ वीर्यप्रदंबल्यतरंविशेषान्मेथीभवंपाकमुशन्तिवैद्याः ॥ ४७॥ अथतैलम् ॥ सुसैंधवंश्रेयसिकासरास्नामिवानिकोग्रामिसिविश्वजीरैः ॥ कणोषणोस्वर्जिविडंचकुष्ठंसौवर्चलंपौष्करकाजमोदाः ॥४८॥ पलार्द्धकांशान्मधुकेनसर्वान्नैरंडतैलंविपचेच्चप्रस्थम् ॥ द्विप्रस्थमस्तुप्रयुतंद्विप्रस्थयुक्तांजिकेनापिचसिद्धमेतत् ॥ ४९॥ पानाभ्यंजनवस्तयोपिकथितावानेनसामेतथावानेशूलगदेकटिग्रहगदेजानूरुसंध्यस्थिगे ॥ हृत्पार्श्वप्रभवेषुवंक्षणभवेश्लेष्मामयेषुक्रवंतैलंचाग्निबलानुकूलमशितंकायाग्निवृद्धिंदिशेत् ॥ ५०॥ अथकट्यव्यथायाम् ॥ कटीशूलमेरंडतैलंनिहन्ति सुधाविश्वनीरंकणाभिश्चपीतम् ॥ ५१॥ अथोरुस्तंभः ॥ यद्वानशंकिभिरभिज्ञ नयाकृतेनस्नेहादिनाग्निसदनंचभवेत्तसुप्तिः ॥ कच्छाङ्गवेसदसमुद्दरणांस्थितिश्चपीडासदैवगमनेप्यदिचोरुसंस्थः ॥५२॥ स्तंभोभवेदिहनवांतिविरेकवस्तिसंस्नेहनानिरुधिरस्रुतिं

नकुर्यात्॥ यत्नत्कृतैस्समुपयातिसदागतिस्तुकोपंततोमनिक रंप्रजयेच्चरूक्षैः॥५३॥ अत्रामवातकफशंकरताविशेषात्तस्मात्क फंप्रथमतोथविजित्यपश्चात्॥ वातंजयेदपिभिषक्बहुधात्ररू क्षभोज्यैश्चपथ्यमखिलंविधिनाविदध्यात्॥ ५४॥ यवैःपुराणै श्चणकैर्मकुष्ठैर्मुद्गैस्तथाकोद्रवशालिभिश्च॥ गोधूमकैर्जांगलमांस शाकैर्वास्तूकमुख्यैःपटुहव्यहीनैः॥ ५५॥ पथ्यंविदध्याद्यदिरू क्षपथ्यात्सदागतिःकोपमुपेत्यकुर्यात्॥ निद्राविनाशादितदाप्र कुर्यात्स्नेहक्रमस्वेदविधिंविशेषात्॥ ५६॥ कफेप्रशुष्केप्यथशी तनीरस्रोतस्तथासत्सरितोविशेषात्॥ प्रचारयेत्तंजलपत्रकेण पुनःपुनश्शीतजलंसरश्च॥ ५७॥ ततोविशुष्केचकफेतथोरुग्र हस्तुनाशंसमुपैतिशीघ्रम्॥ अथाश्वगन्धाग्निभिरर्कमूलैर्निंब स्यमूलैरथदेवकाष्ठैः॥ ५८॥ सिद्धार्थयुक्तैर्मधुनाविमिश्रैर्वल्मीक- मृत्स्नाचतथैवगाढम्॥ उत्सादनंचैद्यवरःप्रकुर्यादूरुग्रहेवेदनयान्वि तेच॥ ५९॥ प्रतीकारः॥ फलत्रिकंकटुत्रिकंसग्रंथिकायसमन्वि तम् पिबेच्चमूत्रसंयुतंविनाशयेदुरुग्रहम्॥ ६०॥ अन्यः॥ शुंठीशिलाजतुकणास्सपुरानिपीतामूत्रेणवाथदशमूलकषाय केण॥ ऊरुग्रहंगदमलंविनिहंतिशीघ्रसामंकफान्वितसदागति पित्तजातम्॥ ६१॥ अथैतस्योपद्रवाः॥ तोदोथशोथोऽनि लसाद्यमत्रकार्श्यप्रसेकारुचिगौरवाणि॥ उत्साहहानिर्बहुमूत्रता चविड्बन्धवैरस्यमुखामवाते॥ ६२॥ उपद्रवाघोरतरास्तथैतेगदेम वातेप्रभवंतियेनैः॥ विनैकदोषस्तुसुखेनसाध्योद्विदोषजोयाप्य

१ जलपत्रंवाहनंनौकातया.

तरोमवातः॥६३॥ सकलदेहचरोबहुशोथवान्दवथुकृष्टयुतोर्त्ति समन्वितः॥ब्रजतितोदयुतोयमसन्निधाऽनवचेपनयुक्तमुरुग्रहे ॥६४॥ अथनिवृत्तिः॥ सम्यक्क्षुधामलसृतिस्सकलांगपीडानाशोभवेद्रुचिनकालभवाचनिद्रा॥ जायन्तएवविगतामसमीरणेतुलक्ष्यंयदन्तिभिषजोस्यानिवृत्तिरेषा॥६५॥नतोगुरुर्विजयतेस्वसुखानुभूतिर्मात्रासदाकमलयापरयायुतस्सः॥यस्याज्ञयाकृतमयासकलामवातरोगप्रसारसमनौषधिसिद्धलक्ष्यम् ॥६६॥ इतिश्रीगुरुपादाब्जमधुपचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्ल्यामामवातप्रतीकारपरागगंधिनैकविंशतितमस्तबकः॥२१॥ ॥ ॥

नत्वागिरीशतनयाधवमिन्दुमौलिंवज्राग्निशूलवरदाभयहस्तमीशम्॥ नानाज्ञयाचक्रियतेयुगवेदिकाशीनाथेनशूलगदलक्षणसच्चिकित्सा॥१॥ श्रमाच्छीतनीराभिपानाद्व्यवायात्तथाजागराच्छुष्कमांसाशनाच्च॥ कलायाढकीकोरदूषादिमुद्गादिभिर्वान्यरूक्षैःप्रभुक्तैरनेकैः॥ कषायैश्चतिक्तैर्विरुद्धाशनैश्चतथामूत्रविट्शुक्रवायुप्ररोधात्॥तथाशोकतोलंघनाद्वातिहास्यात्तथाजल्पनाच्छुष्कशाकाशनाच्च॥ भवेत्पृष्ठपार्श्वत्रिकैकैकदेशेतथाबस्तिदेशेपिशूलप्रवृत्तिः॥३॥ प्रवृद्धेनवावायुनापूर्वरूपमथोवैविलोमत्वमुक्तंचवायोः ॥ततोगौरवाटोपकार्श्यानिशूलेभविष्यत्यमीसर्वएतेभवन्ति॥४ ॥ अथरूपम्॥ अविच्छिन्नापीडाभवतिजठरेतीवकठिनायदांभंनत्र्यंबहिरिवसमाकृष्यकुरुते॥ तदाशूलंवायुर्विविधवरवैद्यप्रगदितंनतत्राम्लंमद्यंनचदिवसनिद्रांचबहुधा॥५॥ द्विदल-

नचपिच्छिलंदधिनचदुग्धंनहिशीतलंभजेत्॥ अथषष्टिकशा
लिसैंधवैरपिसौवीरसुरागुडैरपि॥६॥ विदधीतसुपथ्यमत्रशू
लीशतपुष्पाजगदोषधैश्चनित्यम्॥ अथसारसहिंगुक्रौंचकैश्च
शशकानांपललैश्चतित्तिरैश्च॥७॥ अथप्रतीकारः॥ स्वेद
नैश्चवमनैश्चलंघनैःपाचनैश्चफलवर्त्तिभिस्तथा॥ क्षारचूर्णगु
टिकादिभिस्सदाशूलमूलमवशातयेद्भिषक्॥८॥ तत्रतावं
न्मृत्तिकास्वेदः॥ सजलाग्निघनीकृतंमृदंसुपटेपोटलीकृतंत
था॥ शिवशस्त्रगदातुरंभिषगुच्चैलंचतमुष्णमाचरेत्॥९॥
अन्यः॥ तिलवदीज ठो परिभ्रामिताहरनिशूलमलंवङ्कुधेरि
ता॥मदनकांजिकनाभिविलेपनादविरतंविरतंजठरेरितम्॥१०
॥ योगद्वयम्॥ अन्यः॥ विश्वौषधैरंडकृतःकषायोबाल्ही
कसौवर्चलसंप्रयुक्तः॥ कालेनिपीतोरिवलशूलहर्त्तापथ्याशि
नोवन्हिविवृद्धिकर्त्ता॥११॥ अथान्यस्वेदः॥ कार्पासबी
जास्थिकुलत्थकैश्चतिलैर्जवैरंडजटातसीभिः॥ वर्षाप्रभूताश
णबीजकैश्चपटस्थितैःकांजिकसिक्तपिष्टैः॥१२॥ स्फिग्जानुपा
दांगुलिकूर्परेषुगुल्फद्वयेमूर्द्धिकटौचशूलम्॥ स्कन्धोदरोरस्सु
चवेनिहन्तिप्रस्वेदनाद्वैद्यनृपावदन्ति॥१३॥ युग्मम्॥ अथशू
लांतकोरसः॥ रसभस्मपलंपलंचरवस्याद्विपलंताम्रजभस्मगं
धकंच॥ द्विपलंहरतालमेककर्षंविमलाहाटकमाक्षिकंपलार्द्धम्॥
१४॥ भुजगस्यपलार्द्धमेववंगंसममेतस्यतथाजटाहलिन्याः॥तु
लदर्णवसंमितंसमस्तंपरिपेष्याशुविभाव्यभूमिधात्र्याः॥१५॥
स्वरसेर्मुनिशाश्वदंतिकायाःप्रविपेष्यैवहढंतुरवल्वमध्ये॥ इतिशू

स्त्रगदान्तकोरसोवैपरिसेव्यंरवलुवल्लमस्यचाद्रैः॥१६॥ समस्त शूलकान्तकोनिरन्तरंनिषेविनःसुशृंगवेरजद्रवैरलंसुवल्लसंमि-तः॥१७॥ दधिभक्तमसुंपरिसेव्यनरःविदधीदशनंवरबुद्धिवरः॥ १८॥ अथशूलगजकेशरी॥ पलैकसूतेनबलिद्वयेनतालत्रये-णापिविशुद्धकेन॥ विधायपिष्टींत्रिदिनानिरवल्वेसंमर्द्यपूर्वंतुत तोविशुद्धे॥१९॥ पलैकताम्रस्यचसंपुटेहितांपिष्टिकामन्तरतो निधाय॥ विमुद्यतत्संपुटकंचपात्रेपटुप्रपूर्णान्तर्गर्भमध्ये॥२० निधायसद्यद्रसरावकेनमृदादृढंलेप्यविशोष्यघर्मे॥पुटेगजा रव्येपुटयेद्विधिज्ञोरसोभवेच्छूलगजेन्द्रसिंहः॥२१॥ वल्लोस्यभु-क्तोदधिशृंगवेरनीरेणशूलान्निखिलान्निहन्यात्॥ नैरुज्यलाभं-निलरांप्रकुर्यात्कायाग्निसंदीपनमाशुकुर्यात्॥२२॥ इतिशूल गजकेशरीरसः॥तालताप्यकुनदीगगनार्कसूतगन्धकसमैःसम मेतैः॥दीप्यकंत दखिलेनसमस्ततुल्यभागकटुकत्रयभुक्तैः॥ २३॥कज्जलींचबहुपेष्यविधायभीमराक्षससुतद्रवनीरैः॥सप्तधा-चपरिभाव्यदिनानिसप्तचाथनियतन्तुजयंत्याः॥२४॥काकमा चिकरसेर्मुनिवारान्सिन्दुकस्यचरसेरपितद्वत्॥ आर्द्रकस्यचरसै रपिसप्तवासराणिपरिमर्दविशेषात्॥ २५॥ लघ्वटीचमरिचेन-समैकाशोषितारवलुनिदाघविहीना॥ हन्तिशूलनिकरन्तभाखु स्सेविताहिवडवानलसंज्ञा॥२६॥ मूत्रांडुशंवपथुंकमीनपितथा गुल्मार्शसीनाशयेत् कांशंश्वासमतीवजावररुजंकार्श्यंकृशा-नोरलम्॥वातश्लेष्मगदंज्वरंग्रहणिकांवैषम्यवह्निंसुधाम् पी नातसजल्नेनचाशुवडवापूर्वानलांतावटी॥२७॥ अथाग्निकुमा

रः॥ रसगंधकयोः समांशयोर्वैबहुधामर्दसुकज्जलीं विधाय॥ अमृतांशकपादमेकमेवग्रहराज्ञस्तुसमानमंशमत्र॥ २८॥ त्रिदिनानिचहंसपादिकाय स्स्वरसैः पेष्यसुगोलकं विधाय॥ परिशोष्यचतीव्रघर्ममध्ये सिकतायंत्रवरे क्रमाग्निवृद्ध्या॥ २९॥ परिपाच्यदिवानिशंततस्तुपरिपेष्यापिचशीतलंतदेव॥ अमृतेनपुनः समांशकेनपरिमर्द्यार्थतथार्द्रकस्यनीरैः॥ ३०॥ परिलेप्यमृदस्सुभांडगर्भेपुनरन्यत्सलकाष्टकांशकेन॥ अमृतेनखलंसुपात्रमेकमपिसंयोज्यसुखंसुखेनिरुध्य॥ ३१॥ परिलेप्यदृढंमृदापिचुल्ल्यां परिपाच्याशुदृढंतथैकयामम्॥ अनलेनततः करंडकेन्येनियतंस्थाप्यअसौकृशानुबालः॥ ३२॥ शूलं सर्वज्वरमपिगरानग्निमांद्यंचपांडुम् यक्ष्मार्शोगुल्मकाशान्कफजबहुगदान्नक्तगुल्मंवधूनाम्॥ शोफंखंडत्वमथगुदजान्वातजानन्यरोगान्हन्याद्रोगानपिबहुविधानग्निबालोविशेषात्॥ ३३॥ इत्यग्निकुमारः॥ अथसंप्राप्तिः॥ तत्रवातप्रधानशूलः॥ ॥ जीर्णदोषनिकरेषुयनर्तौशीतकालमपिप्राप्यविशेषात्॥ कोपमेत्यबहुधामलमूत्रस्तंभतोदबहुखेदयुतोपि॥ ३४॥ स्वेदनाद्जनिशांतिमलंवा वातजातशिवशस्त्रगदोयम्॥ तैलमर्दनविमर्दनकैर्वास्निग्धसुष्णमशनंतोपिजनस्य॥ ३५॥ अस्यप्रतीकारः॥ तुंबुरिण्यभयापिहिंगुकपौष्करंलवणत्रयम्॥ जावषारिसमन्वितंपरिपीतमाशुविनाशयेत्॥ वातशूलसदागतिंखलुसापतिंत्रसगुल्मकम्॥ गांगवारिकयाशनंचयथाघसंघसमुच्चयात्॥ ३६॥ अथवातशूलहरः॥ पारदेनचविलि

प्यदलानिताम्रकस्य बलिमाहिगुणेन॥ क्षारकभितयमध्यगता निवरूभरखंड निबिडानिचपङ्कैः॥३७॥ लेपितानिविधिनागुटिला निमर्दितानिकनकानलतोयैः॥ आर्द्रकस्यनकटुत्रययुक्ताषोडशांशकसुशुद्धविषेण॥३८॥ पेषितानिखलुवल्लमलंवाशातशूलरुजिचास्यददीत॥ वातशूलहर एष रसोयंसेवनान्नयति शूलविनाशम्॥३९॥ अथपित्तशूलः॥ क्षारतीक्ष्णकटुकाम्लरसानितैलमद्यरवितापविदग्धैः॥ भोजनैरपिचतैलकुलत्थैर्यहिदाहितिलपिष्टविकारकैः॥४०॥ क्रोधानिलायासनिदाघदाहैस्सौवीरनिष्पावमहोष्णभोज्यैः॥ ग्राम्यातियोगादपिकोपमेत्यपित्तंप्रकुर्यादथशूलमुग्रम्॥४१॥ तृट्स्वेदमूर्च्छाभ्रमतोददाहैर्मध्येदिनेकुप्यतिवार्द्धरात्रे॥ दिनात्ययामेचघनात्ययेपिशीतेषुशीतेरपयातिशान्तिम्॥४२॥ अस्य प्रतीकारः॥ शतावरीरससंमाक्षिकैश्वाशुप्रातःपिबेद्दाहशूलोपशांत्यैविशेषात्॥४३॥ सुस्वादुशीतैरपिभोजनैश्चपित्तंचितं शांतिमुपैतिशीघ्रम्॥ सदाहशूलोपशमायचान्ययोगोमयाऽयस्समुदीर्यतेथ॥४४॥ बृहत्योःसगोकंटकाशेक्षुपालीकुशैरंडनीरंपिबेत्पित्तशूली॥ भ्रमस्वेदमूर्छानिदाघप्रशांतिलभेदाशुनेरुज्यलक्ष्मींविशेषात्॥४५॥ अथकफशूलः॥ आनूपांबुकिलाटदुग्धपललैःपिष्टेक्षुभिर्वातिलैरन्यैश्शाष्कुलिकादिभिश्चकृशरासुरव्यैःकफोत्पादकैः॥ श्लेष्माकोपमुपेत्यचापिकुरुतेशूलंसहृल्लासकंकाशारोचकगौरवामसदनैःश्वासःप्रसेकान्वितम्॥४६॥ भुक्तेनातिरुजंकरोतिबहुधास्तेमित्य

मामाशयकोष्ठेबाथाशिरोगुरुत्वमथवास्यर्योद्गेकुर्य्यातिमायश्चात्रव सन्नकेपिशिशिरेतन्नाशनंब्रूमहे॥४७॥ ॥अस्यप्रतीकारः॥ पंच कोलल्वणत्रयहिंगुचूर्णमाशफपरितप्तजलेन॥पीतमात्रमपिशूलवि नाशमाप्सवैद्यकथितंकिलकुर्यात्॥४८॥ अन्यः॥ फलंत्र्याधिर्मिं हीमवंसाश्वगंधाशिलाभीरूबूकांध्रिभागद्वयंच॥यवक्षारयुक्तंत्रि- कटैःकषायंपिबेत्कुक्षिहृत्पार्श्वशूलीकफेन॥४९॥ अथवातपित्त जः॥ दवथुज्वरकारकोतिघोरोगदितोवातयुतस्तुपित्तशूलः॥बृह तीद्वयकालिकेक्षुकाशकुशपांचाखिरबूकमूलनीरैः॥५०॥श्वदंष्ट्रेन चपूर्वपाचितैर्वामधुनाखंडवरेणसंयुतैश्च॥अपिजेयतमस्तवातपि त्तभवःशूलगदस्तुपीतमात्रेः॥५१॥ युग्मं॥ कुलकनिम्बदलानिफ लत्रयैरपिशृतानिजलेनसमाक्षिकम्॥नदूदकंपरिपीतमुपाहरेत्पव नपित्तभवंचशिवारूजकं॥५२॥ अथवातकफजः॥ वस्तौकंठेहृ दित्तनहृत्पार्श्वयोर्वातजातःश्लेष्मायुक्तोभवतिहिगदश्शंभुशस्त्राभि धानः॥मांसद्राववंयदिचमद्यैःपाययेत्तंजयेत्सःप्रातर्वैद्योनिभृतमा णाच्चार्ष्यसंज्ञांलभेत्॥५३॥ प्रती०॥ क्षारोदकमपिपीतंहंतिगु डेन॥सकर्णवातकफोत्थंशूलमनेन॥५४॥ अथपित्तकफजः॥ कुक्षौसरद्ग नाभिकटीषुपित्तकफोद्भवश्शूलगदस्तुतस्मिन्॥पटोल शम्बक्षिफलागदानांक्वाथंपिबेन्माक्षिकसंयुतंतु॥५५॥ अन्ययोगः ॥दिनैकंपल्लोहंत्रिफलजजलैःसंभृततमेसृतंपक्वातद्धुग्धुनमरलं- सेव्यबहुधा॥सपित्तंसश्लेष्मंज्वरदवथुछर्दिभ्रमतियुतम्॥नरश्शूलं- तीव्रंजयतिसहसावैद्यभणितम्॥५६॥ अथसन्निपातः॥ चेत्सर्व देशेषुचसर्वलिंगःशूलोभवेत्सर्वजएववैद्याः॥स्फुकष्टमेनंविषवज्ज-

तुर्य्यन्हृत्पार्श्वपृष्ठत्रिकबस्तिनाभ्याम् ॥५७॥ अथास्यप्रतीकारः ॥ त्रिकटुभिः पटुनादरचूर्णकंयदिकवोष्णजलैःपरिसेवितम् ॥ सकलदोषजशूलगदानुरैःसुखमनातुरतारखलुतन्यते ॥५८॥ अन्यः ॥ विदारिकादाडिमसंभवस्तोरसस्तुपीतःकटुभिस्त्रिभिश्च ॥ संसेन्धवंक्षौद्रयुतंनिहन्तित्रिदोषजंशूलमुदग्रवेगम् ॥५९॥ अथहृच्छूलः॥ यदामारुतंश्लेष्मपित्तावरुद्धोरसावर्द्धितोवैहृदिस्थःप्रकुर्यात् ॥महाशूलमुच्छ्वासकस्यावरोधाद्वदन्त्यत्र हृच्छूलरोगंविदग्धाः॥६०॥ अस्यप्रतीकारः॥ शठीरुचकाग्निदशांघ्रिहिंगुपटुत्रयाणांचसपुष्कराणाम्॥ चूर्णंपिबेज्जावजलेनयुग्मक्षारेणवाहृद्भवशूलदः प्रशूलैः॥६१॥ शश्वद्धृदश्वकटिपृष्ठयुदरग्रहेषु पक्वाशयामजरुजस्सुचगुल्मशूले ॥ चूर्णंचजीरकमहौषधिहिंगुजातंतद्वत्पिबेज्जवजपनविमूर्च्छिकासु ॥६२॥ अथपार्श्वशूलः॥ वायुःकफंचविनिगृह्य तुदन्विशेषात्सूचीसमंमनुकुरुतेखलुपार्श्वयोश्च ॥ आध्मानमत्रनिवसन्बहुशूलवेगमुच्छ्वासकारुचिविनिद्रकरंचपार्श्वे ॥६३॥ अथास्यप्रतीकारः॥गम्भातुलुंगजरसंमधुनापिक्षारयुक्तमथवाशरतशिग्रोः॥ नीरम्पाशुखलुपार्श्वभवंहिवस्तिदुःखरुजांविनिहन्ति ॥६४॥ ॥ अथबस्तिशूलः॥ संरोधात्कुपितोऽस्थिसंस्थितसदायातःप्रकुर्य्यादलंशूलंवंक्षणनाभिसंयुतशिरासंधेषुविण्मूत्रयोः ॥ वायोश्चपिनिरोधनाद्धृतिनदावस्तिप्रभूतप्रसत त्र्यायित्रिफलाकटुत्रिकघनैश्यामाग्निवैष्णवौषधैः ॥६५॥ शुद्धंमन्धकपारदंचमर्दितंभागार्द्धमात्रंतथालोहाभ्रंचविडंगमत्रगादितंभागेश्चयुग्मैरलम् ॥ तत्सर्वंपरिश्येष्यमर्दितमंबुनाथेनयात्रैफलेकुर्य्यात्तस्यवटीचबस्तिजमलंभुक्त्वा

तुशूलंहरेत् ॥६६॥ एकांवटींप्रातरलंमनुष्योभक्तोम्बुनासेव्यचपं क्तिशूलं॥ सर्वाम्लपित्तंचवमिंज्वरंचहृन्दूलकाशश्वसनान्निहृ न्यात् ॥६७॥ यकृत्प्लीहायक्ष्मोदरगुदगदान्पार्श्वबस्तिप्रभूतंशू लंवारुधिरविकृतिंचापिग्रहणीम् ॥ ज्वरास्तइइक्ताशमयतिवटीपू र्वगदिताऽनुपानैर्भक्तस्यशृतवरजलैर्नित्यमुचितैः ॥६८॥ इतिभ क्तवारिवटी० अथामजः ॥ आटोपगौरवचमीसकफप्रसेकैरा नाहनिश्चलतनुत्वग्रणास्यलिंगैः॥ आमोद्भवंचशिवशस्त्रगदंवदं तिहृल्लासयुक्तमथतत्रचमद्यमद्यात् ॥६९॥ अथान्यप्र० ॥ आमशूलशमनक्रियांचरेत्तांचयातुकफशूलहारिणी ॥सेव्यमा महरसर्वमाशुवैवन्हिवर्द्धनमिरासर्गारपि ॥७०॥ अथषड्रास्य रसः॥ सूतंभागंगंधतुल्यभागंचशुद्धंनद्दन्नाभ्रस्यैकभागंमृत स्य॥ सूतोन्मानंचाथसौवर्चलाख्यमेतन्मर्द्यंपक्वजंबीरनीरैः॥७१ ॥तीव्रेघर्मेतद्दिनैकंसमस्तंरुध्वापात्रेकर्परैर्मृत्तिकाभिः॥वैद्यैःपा च्यंरामसंख्यैःपुटैश्चख्यातोलोकेषण्मुखाख्योरसोयम् ॥७२॥ हिंगवार्द्रकयोःलवणेनत्रिगुंजोहन्त्याशितोऽमजशूलमशेषम्॥ अन्य समस्तशिवास्त्रगदानांनाशकरस्तुषडास्यरसोयम् ॥७३॥ षड्भाग मेरंडजतैलमेकंरसोनकंनिस्तुषमत्रयोज्यम् ॥ द्विभागमष्टौशृत टंकणस्यसिन्धूत्थहिंग्वोस्तुत्रयस्त्रयस्युः ॥७४॥ संमर्द्यसर्वंतुत्रि निष्कमेतत्तथामशूलेनुपिबेद्विशेषात् ॥ षडास्यनाम्नस्तुपरानुपा नंसर्वेषुशूलेषुत्रिनिष्कमेवम् ॥७५॥ अथसामवातशूलः॥ वा ताधिकत्वात्मसदागतिस्तुबस्तिंप्रयातोभवतीतितत्र॥ कृष्णा भ्रमलोहभवंचचूर्णंसर्पिर्मधुभ्यांचजलेनचाद्यात् ॥७६॥ ॥

अस्य प्रतीकारः॥ बिल्वैरण्डतिलाम्लपिष्टवटिकामुष्णाम्बतद्वन्मृजेत्॥ वाताधिक्ययुतामवातजमलं शूलं निहन्ति ध्रुवम्॥७७॥ अथ सामपित्तजः॥ नाभौ शूलः सामपित्तोद्भवो यस्तस्मिन्पेयं स्नेहमैरण्डजातम्॥ क्षौद्रैः क्षीरैर्वा रसैर्मांसजातैस्तद्वत्क्वाथैस्त्रिफलैर्गोपयोभिः॥७८॥ सामपित्तोद्भवे शूले नाभावेव विशेषतः॥ क्षौद्रैः क्षीरैर्गवां मूत्रैः पृथक्तैलं द्विभागिकम्॥७९॥ अथ तैलं॥ ससैन्धवं हिंगुयुतं तु तैलं गोमूत्रयुक्तं परिपाच्य विद्वान्॥ नाभौ प्रदद्याद्धि सामपित्तशूलं भवेद्वेदनयान्वितं चेत्॥८०॥ अथ सामकफजः॥ ॥हृत्पार्श्वकुक्षौ गुरुपक्वफेनसामस्सशूलः प्रथितस्तु तत्र॥ वाह्लीकपथ्याविडतुंबुरूणां सौवर्चलेनापि च पौष्करेण॥८१॥ ससैंधवं चूर्णमलं दशांघ्रि यवांभसा पीततमं विशेषात्॥ हृत्पार्श्वशूलं सकटीप्रशूलं पृष्ठस्य तन्द्रामपतानकं च॥८२॥ श्लेष्मप्रसेकं च गलामयं च सद्यो निहन्त्यत्र न चित्रमस्ति॥ हिंग्वादि चूर्णं जठराग्निमुग्रं करोति पाकं च सदाशितस्य॥८३॥ अथ सामकफपित्तजः॥ यस्सामलक्षणयुतो भवतीह शूलः प्रायो द्विजान अपि युग्मतनुप्रदेशे॥ नानाप्रदेशज शिवास्त्वगदस्त्रिदोषजातः क्रमेण च चिकित्सितमत्र वक्ष्ये॥८४॥ अथ प्रतीकारः॥ दुरालभापटोलनिम्बतिनिडीघनौषधैः सवर्म्यभिस्सशार्करस्तु कल्क एव सेवितः॥ ससामवातपित्तजस्तु शूल एव सत्वरम् विनंक्ष्यति ध्रुवं यदा निरन्तरं निषेवितः॥८५॥ अथ सामवातकफजः॥ शुण्ठीशटीमुंडतिकाकषायसौवर्चलेनाशु पिबेन्मितां तम्॥ सामस्सदा यातकफप्रसूतशूलः प्रशान्तिं खलु तस्य याति॥८६॥ अन्यः॥ देवदारुवचनागरनी

रंनिंबुनाशफलवणैरसितैश्च ॥ पीतमेवरवलुपित्तकफेनसामशूलजग
दंविनिहंति॥ ८७॥ अथसामपित्तकफजःप्र०॥ गुडामृतैर्हरीत
कीबलाशपित्तसंभवम् ॥ रुजंशिवाख्यसंज्ञकंचसाममाशुनाश-
येत्॥ ८८॥ अथसामसन्निपातजाः ब्रह्मद्रुवारणमृगेंद्रमयूरवि
श्वाश्वाड्ह्याद्दिभिश्शृतमंचगवाम्जलेन॥ पीतन्तथापारशूतास
हिताभिणाशुहिंग्वान्वितंत्रिभवशूलरुजंनिहंति॥ ८९॥ विड्बन्ध-
गुल्मजठराणिसकामलानिपांडूनिकार्श्यमनलस्यतथैवजन्तोः॥
एरंडबिल्वबृहतीद्वयमातुलुंगपांचालिकांघ्रिकटुकत्रयजःकषायः
॥९०॥ पाषाणभेदसहितोलवणैरुबूकतैलेनहिंगुभ्रितवासयुत
स्तुपेयः॥ क्षारेणमेढ्रहृदयस्तनरुक्षुतद्वच्छ्रेणीरुजःप्रशमन
स्त्रिभवेपिशूले॥ ९२॥ विशेषकेनयोगमत्रबोध्यम्॥ अथमू
त्रशूलः॥ नाभौवंक्षणपार्श्वयोश्चसततंकुक्षौचमेढ्रानुगंबंधं
यःप्रकरोतिमूत्रमभितश्चावृत्यगृह्णातिच॥ शूलोयंचसवायुमूत्र
जनितस्विन्नोम्लवेगैरलंशान्तिंयातिचतत्प्रकारमधुनासद्यःप्र-
कार्य्यंब्रुवे॥ ९३॥ दारुह्यटकवतीगदहिंगुसैन्धवैश्चसतपादिस
मैतैः॥ आरनालपरिसिक्तसमस्तैःपोटलीकृतसुवस्त्रनिबद्धैः
॥९४॥ मूत्रशूलशमनायविशेषात्स्वेदयेद्भिषगलंबहुधाम्लैः॥
तत्रतत्रचरुबूकदलैर्वाऽऽच्छाद्यवन्हिजविकारविचारैः॥९५॥
अथविट्शूलः॥ रूक्षाशिनःकोपमुपेत्यवायुर्वानंरुणाद्ध्या
शुचकोष्ठसंस्थः॥ वन्हिंकृशीकृत्यचशूलमुच्चैस्स्रोतस्तथावृत्य
चदक्षिणंवा॥ ९६॥ वामंचकुक्षावपिवर्धमानंक्रमंश्चसर्वत्रस-
शब्दएव॥ मूर्छाभ्रमंस्तर्षयुतस्तुसोयमुत्पादयेच्चाशुविडःप्रसि-

द्रूम्॥९७॥ उच्चारितोमूर्च्छितएवचापिनशान्तिमायानिकदापिच
आतन्दारुणंचापिभिषग्वरास्तेविट्शूलमाहुश्चरकादिभोये॥
९८॥ इतिविशेषकेणविट्शूललक्षणंनिदानपूर्वं बोध्यम्॥
अथास्यप्रतीकारः॥ मातुलुंगपयसासघृतेनतुंबुरूणिकटु
कत्रयचित्रैः॥ हिंगुनाचशिवयासहदीप्यक्षारसैंधवयुतंवरचूर्णं
॥उष्णनीरपरिसेवितमाशुमूत्रविड्बशिवास्त्रगदस्य॥वातज
स्यकुरुतेकिलनाशंदीपनंचबहुपाचनमेतत्॥९९॥ १०युग्मम्
॥अथसाटोपशूलः॥ एरंडतैलेनदशाङ्घ्रिवारिणोवर्चलेनापि
चहिंगुयुक्तम्॥ साटोपशूलंविनिहन्तिपीतंसद्यःप्रभातेभिष-
जोवदंति॥१०१॥ अन्यः कंबलावृततनोश्चनरस्यप्राणा-
माशुचविहायनथैव॥सूर्य्यपुत्रनगरींप्रतियान्तमाशुसक्तुक
टुतैलविधूपैः॥१०२॥ धूपवैद्यधरणीशुतनेत्रैःपोष्यएवपरि
रक्ष्यहठेन॥ शास्त्रमर्मगसुबुद्धिविचारैस्सम्यगाशुचपरीक्ष्य
रुजंवै॥१०३॥ युग्मेनविधियोगः॥ अथप्लीहशूलः॥ प्लीहा
भिवृद्ध्यापरिवर्द्धितेयःप्लीहाभवश्शूलउदाहृतोसौ॥बाल्हीक
मग्निंपटुमातुलुंगनीरेणकंकुष्ठकयावशूकैः॥१०४॥भुक्तंतथै
रंडकबीजपूरगोकंदरास्नासुबलापलानि॥ पञ्चैवप्रस्थंच
ततोजवानांद्रोणेननीरेणशृतंश्रुतानि॥१०५॥पादावशेषेण
जलेनतासांप्रस्थंघृतस्यापिसतुम्बुरूणां सौवर्चल स्यापिच
हिंगुनश्चविडःपटुव्योषहरीतकीनाम्॥१०६॥सस्वर्जिका-
नांचसयावशूकैःकल्केनचैवाक्षमितेनतासाम्॥ अम्लस्यत
द्वत्खलुवेतसस्यप्रस्थद्वयेनापिचमस्तुनाच॥१०७॥सिद्धंय

कुर्य्याद्दहरुजंनिहन्तिशूलंत्रिदोषोत्थमथोपिवायोः॥श्रीयाज्ञवल्क्येयनमुनीन्द्रकेणसंभाषितंदीपनपाचनार्थम्॥१०८॥ इतिबीजपूराद्यंघृतम्॥ अथावर्त्तशूलः॥ मरोडाइतिप्रसिद्धः॥ निदानैस्वैःपूर्वंप्रदिकुपितवायुश्चजठरेप्रकुर्य्यादावर्त्तंक्रमयुतमलंशूलमसकृत्॥ वसंस्तेनावर्तप्रथितशिवशस्त्राभिधगदःप्रगीतस्सद्वैद्यैःश्चरकमुनिभेदादिनिकरैः॥१०९॥ अस्यप्रतीकारः॥ अबर्णाशिम्बीजगदोषधाभ्यांत्वचातथादाडिमिकाफलस्य॥जीरेपट्टशाणामितंपृथक्चमाषैकभृष्टेनतुहिंगुनाच॥११०॥ संपेषितंदधिपलेननरोवलिह्यसावर्त्तशूलमपहन्तिचराजिकापि॥ कर्षोन्मिताघृतपलेनगवांगिलेद्वायामेनशूलशमनायभिषक्प्रदिष्टा॥१११॥ युग्मम्॥ योगद्वयं॥ अथरक्तशू०॥ चिन्हानिपित्तजनितानिभवंतिरक्तवांतिश्चदाहअपियत्रभवेच्चमूर्छा॥ श्वासव्यथेचरवलुयत्रतथाभवेताशूलंश्चरक्तजनितस्तुसकाशउक्तः॥११२॥ अथास्यप्रतीकारः॥ कुलकनिम्बजबीजरसंगुडेर्हरतिशूलमलंरुधिरोद्भवम्॥ अपिचशोषगदप्रणामप्रणांप्रकुरुतेकुरुतेऽस्यचपानकम्॥११३॥ अन्यप्र०॥ सितशालिसमुद्भवाश्चलाजास्सितयाक्षौद्रपयोन्विताःप्रपीताः॥ अपिदाहरुजंसरक्तछर्दिशमयंत्याश्वरभजोत्थशूलमुच्चैः॥११४॥ अथपरिणामशूलः॥ स्वनिदानप्रकोपितस्तुवायुःकफपित्तेनिहितःकरोतिशूलम्॥ अशनेपरिजीर्यतीहनित्यंपरिणामादिरसोचशूलउक्तः॥११५॥ प्र० प्रथमप्रत्रचलंघनमाचरेद्वमनरेचनबस्तिविधिंक्रमात्॥ तदनुमशवचवाक-

थिनेनवाप्यथरसेनमलम्बुनकस्यवा॥११६॥ कृशरयापिचषष्टि
कमुद्गयोरथतथाऽऽगलमाशुपयःपिबन्॥मदनसंशृतनी श्यु
तंनथाचमनमाशुचरेच्चविधानतः॥११७॥ अ० यौंद्रस्यकांतारक
कोशकाररसस्यपानैर्वमनंप्रकुर्यात्॥विशेषतःपक्तिजशूलह
त्यैःशम्बूकभस्मोष्णजलैःपिबेद्वा॥११८॥ योगद्वयम्॥ अन्यः॥
रुचूकशंबूककुशानुवर्षाभ्वूशमकंठानपिसंविदग्धान्॥मिथस्त
थात्वन्तरतोविधूमान्यक्तिप्रशूल्युष्णजलेनभुंजीत्॥११९॥ ॥
अथपरिणामशूलः॥ विण्मूत्रबन्धारतिवेपनानिचाध्मानमा
टोभयुतन्तुयत्र॥स्निग्धोष्णवाशमितोपिशाक्तिशूलःसवातप्रभः
वोनिरुक्तः॥१२०॥ प्र०॥ कणागुडक्षारघृतानिदभागवांचमूत्रेण
चगांपयोभिः॥चतुर्गुणैःसाकमलंप्रपाच्ययाव द्वनंचूर्णसमंस
मस्तम्॥१२१॥ शंबूकचूर्णेनचतुर्गुणेनपूर्वैकभागादथशर्कराभिः
॥समाभिराभिर्मधुनापितद्वत्तुल्येनकुर्यादथमोदकानि॥१२२॥
तान्भक्षयेच्छूलगदेचगुल्मेत्हृदामयेपक्तिभवेपिशूले॥शोथे
चपांडावुदरेक्षयेपिदुर्नाम्निकाशेपिचमूत्रकृच्छ्रे॥१२३॥मेहा
श्मरीवृद्धिषुवन्हिमाद्येक्षंशेस्मृते पीनसकेर्द्धशीर्षे॥ शंबूकव
ट्यास्सदृशोन्ययोगःख्यातोनशूलादिगदप्रहर्त्ता॥१२४॥ ॥
अथपित्तपरिणामशूलः॥ ॥तृष्णारतिक्लेशविदाहपीनसेभ्रशी
र्षार्द्धभेदेनसपित्तकस्तुसः॥स्वेदाम्लकैश्चाशुपटूत्तरैरपिप्रायःश
मंयातिकटुप्रभुज्यच॥१२५॥ प्रतीकारः॥ दन्तीश्यामान्दृढदपि
तथानागरंकर्णिकाचतिक्तावालासममथतथाद्राप्रजश्चापिलासा
म्॥ पीतंतैलैईरतिबहुधानित्यमेरंडजातैर्विष्णुक्रांताभववरजब

कल्वदुग्धंसखंडं॥१२६॥ हृष्येत्तहृद्रुशनिनितरांपित्तजंपक्तिशु
लंयोगद्वंद्वंनिगदितमलंवैद्यभूपैर्निनांतं॥भुक्तंनित्यंयदिवदहृत्वः
शूलरोगादयोयेतेनेनश्यंतिशीघ्रंनिखिलरुखमलनस्यदेहेनदा
हि॥१२७॥ अथकफपरिणामशूलः॥ यदास्वल्परुक्छर्दिहृल्ला
समोहैर्युतश्शान्तिमायातिनित्केश्वशीतैः॥ पलाशात्मकःपक्तिशू
लोनराणांकटुप्रायशश्चाश्नतामाशुनश्येत्॥१२८॥ प्रतीकारः॥
नागरगुडतिलगुडकल्कंशृतपयसाहि॥ पीनंपरिणतिशूलंहरानरा
दाहि॥१२९॥ अन्ययोगः॥ शंबूकपंचलवणत्रिकटुप्रभूताभुक्ता
कलंबकरसेनकृतावटीसा॥ सद्यःप्रभातसमयेप्यथभोजनेवा-
भुक्ताविहन्तिकफजंखलुपक्तिशूलम्॥१३०॥ अथवातपित्तप-
रिणामशूलः॥ आध्मानछर्दितृष्णाभिर्वातपित्तसमुद्भवः॥पं
क्तिशूलस्समाख्यातस्तच्चिकित्सांचब्रूमहे॥१३१॥ यथाच वि
डंगदन्त्यग्निकटुत्रयाणांत्वद्गुडाभ्यांचवटींविधाय॥ तामुष्णनी
रेणनरःप्रभातेभुंजीतयूषेणकलायसक्तून्॥१३२॥ अथवा
तकफजः॥ विड्मूत्रबन्धेल्परुजाचशूलःप्रायस्सवातेनक
फेनयुक्तः॥ पक्तिप्रभूतःखलुतत्रसेव्यचिकित्सितंतत्कथयामि
चाग्रे॥१३३॥प्र०॥ कर्कन्धुकग्रन्थिकशृंगबेरक्षारद्वयेश्चापि
कणासमेतैः॥गोमूत्रभागाष्टशृतःकषायोमंडूरयुक्तोत्रचप-
यउक्तः॥१३४॥ अन्यः॥ वचालोहचूर्णंघृतैर्माक्षिकेणप्र
भुक्तंहरेत्पक्तिशूलंक्षणेन॥१३५॥ अथकफपित्तजः॥ ॥
हृल्लासमोहदवथुभ्रमवारिभिश्चशूलस्सपित्तकफजःपरि-
णामकाले॥ तस्मिन्सनीरवरशीर्षफलान्तरालदग्धंपटुप्रश

मयेच्चयदिप्रमुक्तम्॥१३६॥ अन्यः॥ लोहजकीटपलाष्टकमु
क्तंगोमयमूत्रपलाष्टकसिद्धम्॥ गोपयसाद्विगुणेनचपक्वंहन्तिचपि
नबलाशयशूलम्॥१३७॥ ॥अथसन्निपातजः॥ त्रिदोषजस्त्रिदो
षजैश्चलक्षणैःप्रलक्षितान्हरीतकीजगद्रजःस्फलोहचूर्णसंयुतम्॥
प्लुतंघृतेनमाक्षिकेणचाशुसन्निपातजंनिषेवितन्तुपक्तिशूलनाश-
नंभिषक्कृतम्॥१३८॥ रसंलोहंताम्रंपलपलमितंसर्वमपिचघृतैर्दु
ग्धैर्मार्त्तण्डपलपरिमितैश्चैकपलकम्॥ गवांदुग्धंतद्वत्त्रिकटुघनचू
र्णंत्रिफलयाविडंगाग्नीसर्वेशूलमलमिदंसिद्धमसकृत्॥१३९॥गुरुं
नत्वानद्धंद्विमपिचभुंजीतपयसातथाविश्वामित्राग्रभवफलपानी
यनिकरैः॥ सकजीर्णेशाल्यन्नंसिततरसखंडेनसहितंसमांसंसुक्ता
न्नंसमशितमलंशूलशमनम्॥१४०॥ यकृत्प्लीहाशूलंश्वसनकसनं
चाश्मरिगदंक्षयंकुष्ठंपार्श्वप्रभवमपिहृच्छूलमपिच॥ तथासूत्रे क
च्छ्रंजठरदहनस्यापिकृशिमांचतुस्तुल्यंलोहंहरतिवसुमाषांतम
शितम्॥१४१॥ इतिचतुस्समोलोहः॥ अथान्नद्रवजः॥ ॥
जीर्णेऽजीर्णेजीर्यतिप्रायशोयःपथ्येपथ्येभोजनेभोजनेवा॥ नो
याशांतिंयातिसोन्नद्रवाख्यःशूलःप्रोक्तश्शान्तिमायातिवान्तेः॥
१४२॥ प्र० तावत्पीत्वाकटुकमसकृद्यावदम्लंवमेद्वाकुर्यात्तस्मिन्न
पिचबहुधादुग्धपित्तोक्तकर्म॥ पित्तान्तंवावमनमथवारेचनंवाक-
फान्तेस्थिरंचामाशयगतमलंपाच्यपक्वाशयेहि॥१४३॥ अन्यः
धात्रीचूर्णंलोहचूर्णेनयुक्तंक्षौद्रेस्तद्वद्यष्टिकाचूर्णयुक्तम्॥ श्यामा
सिद्धंपायसंकोद्रवैर्वासिद्धंपथ्यंवाप्रियंगोश्चभोज्यम्॥१४४॥ अ-
न्यः॥ गोडिकंचबरसौरणकन्दंछागजातससितानपिसक्तून्॥ प्र

क्षयेक्षसगुडान्यवसक्तूंस्तद्वदेवचणकेस्सकलायान्॥१४५॥ अन्यः॥ कोद्रवौदनमथाश्मितामिस्साधितान्नपिचमंडविशिष्टा न्नं॥ सर्षिषासस्तिलशीनपयोभिः पथ्यमत्रकथितंवरवैद्यैः॥१४६॥ अन्यः॥ कुलत्थसक्तून्दन्धाश्वभुंजीतादाधिकंभक्तमिहाशभोज्यम्॥ कुर्यात्जरस्येिनिविनाशनायपानान्नमात्रात्स्पतरायथास्यात्॥१४७॥ अन्यः॥ पथ्यागुडामलकचूर्णमलंतथैवप्रत्येकशः पलमितंत्रिपलंत्वकिट्टम्॥ लोहस्यमाक्षिकघृतैरनुवेल्मद्यादाद्यन्तमध्यमशनेषुयथाक्षमान्नम्॥१४८॥ अन्नद्रवंचाशजरत्मपित्तमम्लादिपित्तंपरिणामशूलम्॥ संवत्सरोत्थंचनिहन्तिभुक्तंगुडादिमंडूरमलंसपथ्यैः॥१४९॥ इतिगुडादिमंडूरम्॥ अथशूलोपद्रवाः॥ तृषामूर्च्छानाहभ्रमविरुचिकार्श्याणिगुरुताज्वरोद्रेकस्तद्वद्हृतिरुजोद्विग्नितनमाः॥ समाख्यातात्रघोरानिखिलशिवशस्त्राभिधरुजांमहोत्पातास्तेषामपिबहुचिकित्सात्रविदिता॥१५०॥ अथोसाध्यादिलक्षणम्॥ एकदोषइहसाध्यतेसदाद्वन्द्वजश्चखलुयाप्यउच्यते॥ यस्त्रिदोषजनितोबहुवेदोश्वाप्यसाध्यमणितोबहुदोषैः॥१५१॥ अथोस्यनिवृत्तिः॥ उद्गारशुद्धिश्चमलप्रवृत्तिःकोष्ठेषुवातस्यपरिभ्रमोपि॥ उपद्रवाणांचनिवृत्तिपूर्वंनिवृत्तिरस्याशभिषग्भिरुक्ता॥१५२॥ श्रीमद्गुरुर्विजयतेजननीद्वयेनतातोनिजश्चवरवैद्यधुरीणवर्य्यः॥ यस्याज्ञयाचयुगवेदविदस्तुकाशीनाथोत्रकारशिवशस्त्ररुजांचिकित्साम्॥१५३॥ ॥

इतिश्रीगुरुचरणाब्जचञ्चरीकचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्यांशूलाधिकारेत्रिविंशतितमस्तबकः॥२३॥ ॥

नत्वागणेशाम्बशिवंसनातंश्रीमद्गुरोःपादसरोजभृंगः ॥ श्रीकाशि
नाथःप्रकरोतिसोदावर्त्तस्यकल्याणकरींचिकित्साम् ॥ १ ॥
अथतन्निदानम् ॥ विण्मूत्रजृंभाश्रुसमीरणानांतद्वत्क्षवोद्गा
रवमीन्द्रियेभ्यः ॥ क्षुत्तर्षनिद्रोच्छ्वसनादिकानांधृत्यास्युःक्षवर्त्तग
दप्रवृत्तिः ॥ २ ॥ अथोस्यपूर्वरूपम् ॥ आध्मानंहृदयोपयो-
धनशिरःपीडाप्रतिश्यायकाः शूलःकाशगलग्रहौश्वसनकंहि
क्कान्वपूर्वंसदा ॥ यत्रैतेप्रभवन्तिरोगनिचयायस्मिंश्च विद्यात्त्व-
यिसोदावर्त्तगदस्यपूर्वमुदितंरूपंभिषग्भिःसदा ॥ ३ ॥ अथो
स्यरूपम् ॥ यदावर्त्तऊर्ध्वंसमीरस्यगच्छेत्तउदावर्त्तरोगःप्र-
भुस्तत्रवायुः ॥ ४ ॥ अथोपशयः ॥ गोधूममुद्गयष्टीनांपथ्यं
वातापहंचयत् ॥ उदावर्तेप्रयोक्तव्यमायुर्वेदविशारदैः ॥ ५ ॥
अथास्यप्रतीकारः ॥ चूर्णंशिवापीलुनिकात्रिवृद्भिस्संयाव
श्रूकंसघृतेनपीतम् ॥ निहंन्त्युदावर्त्तगदंयवेनश्लक्ष्णीकृतंप-
थ्यभुजोनरस्य ॥ ६ ॥ अन्यः ॥ हिंगुवचागदसर्जिबिडानां-
भागयुगोत्तमप्राशकृचपिष्टम् ॥ चूर्णमिदंवरमद्यनिपीतमूर्ध्वगवा
युविवर्त्तहरंस्यात् ॥ ७ ॥ अन्यः ॥ श्यामादन्तीसत्वलाशंखि
नीनांहेमक्षीरीतिल्वकंपिल्लुकानाम् ॥ श्वेताश्यामाराजवृक्षद्र
वंतीयक्षेश्चैषांहृव्यतैलेर्गणोयम् ॥ ८ ॥ क्वाथैःकल्कैःमांसनीरै
रनेकैर्योगैरन्यैःसेवितश्चेत्तदाशु ॥ आनाहोदावर्त्तगुल्मोद-
राद्यानश्यन्त्येवंप्येविषोत्थाश्चरोगाः ॥ अन्यः ॥ सिद्धार्थयष्टी
क्षिफलत्वचस्तुमूत्रेर्गवांपेष्यविपाच्यलिप्ताः ॥ निहन्त्युदावर्त्तगदं
यवेनचाद्याश्चयूषेणकणांग्रिभुक्तम् ॥ १० ॥ अन्यः ॥ खंडपलेन

घृतासुपक्कुल्यांकर्षमितांत्रिवृतापितथैव॥ ग्रामशनस्यन्चमासिकयु
क्तामोतुपदेनमितापिन्चभुक्ता॥११॥ गाठपुरीषयुतेपिचपित्तश्लेष्मज
वासुविवर्त्तजरोगे॥ चूर्णमिदंतुमराचविसंजंस्वादुघृतंचरभूपनिषेव्य
म्॥१२॥ अन्यः॥ व्योषमागधिजटात्रिवृताभिर्वन्हिनापिसमभागयु
ताभिः॥ अष्टभागमितशर्करयागुडेनभक्ष्यमष्टगुडचूर्णमथोत्र॥१३॥
इतिगुडाष्टकंचूर्णम्॥ शक्कमूलकयुतंरवलुक्षजातमूलवरपंचक
मार्द्रम्॥ अश्मरयान्यघृतमाशत्तथावारयतस्थतुफलेनचपेयम्॥१४
इतिमूलकादिघृतम् उदावर्तगदंयथामूलकादिघृतन्तथा॥ निराकर्त्तु
मलंसदासेव्यतामःनवोयदा॥१५॥ अन्यः॥ सपर्णिकादिग्जटापु
नर्नवाकरंजकेस्सहिंगुभिःपृथक्पृथक्पलद्वयैश्शनैर्जलैः॥घृतंचप्र
स्थमाशवैद्यपाचितंनरस्सदा पिबेच्चबद्धवाततःप्रमुच्यतेप्रशान्त
दा॥१६॥ अथसंप्राप्तिस्तत्रतावदपाननिरोधजः॥ पिण्मूत्रयो
श्चापिसमीरणस्यसंगस्तथाध्मानशिरोरुजश्च॥स्युर्जाठरान्येषुबह
वस्तुरोगात्वपानवायोःप्रतिरोधनाच्च॥१७॥ अधोवायोरुद्धेप्रभव
तितथोर्द्धगतिरिहसदायानावर्त्तःपिबपिबनदास्नेहममत्कृत्॥ससि
न्धूत्थंहिंगुंमधुघृतयुतंवर्तितमंगुदेदद्याःपक्कामपहरतिवातंसहत
या॥१८॥ अन्यः॥ स्वेचदनमत्रविशेषविदापिबस्तिमथाप्यनुलो
मनमाश॥येनभवेत्तवस्तुनत्तुविधेयंवैद्यवरेणचिकित्सितमुग्रम्॥
१९॥ अथविड्विनरोधजः॥ आटोपशूलयुक्तःप्रभवतिवदनाद्धा
पुरीषंनिरेतिसंगंवायोःपुरीषस्यचभवतितथापाशुभाकर्त्तिकाच॥ऊर्ध्वं
गच्छत्यधोनोनिरवधिगतिकोयम्भवातद्विवर्त्तोवेगेरुद्धेमलस्यप्रगदि
तअथवैविण्निरोधप्रसूतः॥२०॥ अथास्यप्रतीकारः॥ वर्त्यभ्यं

गाधगाहैरथनबहुविधैर्मर्दनैर्वामलस्यमारैश्यामागदानांजयभासि
नभवैःसर्षपैरुपयाच॥ वर्तिःकार्याविशेषाद्गुडजमधुयुतैर्लैप्यपा
यौप्रदेयाशीघ्रंवर्त्यैवशाकंप्रजतिमलमधोयाफलाद्यास्मरस्य॥२१
॥ इतिफलवर्तिः॥ अथमूत्रनिरोधजः॥ शूलंभवेन्मेहनयोश्च
बस्तौमूत्रेतिकृच्छ्रंचशिरोरुजश्च॥ सवंक्षणानाहविनामयुक्तामू
त्रस्यवेगेऽभिहतेभवंति॥२२॥ अस्यप्रतीकारः॥ मूत्रावरोधाज्ज
नितेविशेषाद्द्राक्षांपिबेद्दुग्धजलैर्मनुष्यः॥ दुस्पर्शजातंस्वरसंपिबेद्वा
तथाकषायंककुभस्यतत्र॥२३॥ त्रयोयोगाः॥ अन्यः॥ एर्वारुबी
जंलवणीकृतेनतीरेणवाप्युक्षुरससिताभिः॥ द्राक्षारसंवासितया-
समेतंपिबन्नयत्नाश्मरिमूत्रकृच्छ्रे॥२४॥ अनेकयोगाः॥ अथजृं
भानिरोधजः॥ मन्यागलस्तंभशिरोरुजःस्युर्वातात्मकान्येबहवस्तु
रोगाः॥ तथाक्षिनसाश्रुतिवक्त्रकेषुजृंभाभिघातप्रभवेनराणां॥२५
॥प्रतीकारः॥ स्नेहंस्वेदंयोजयेत्तत्रविद्वान्यद्वावातव्याधिसंहारयो-
गान्॥ पायोयद्वासिंधुतैलाम्लगेहधूमंदद्यात्क्षुण्णमूलद्रवैश्च॥२६॥
अन्यः॥ स्त्रस्विन्नगुदेनिर्गुंडिजपत्रंस्कणमेलंवावर्तिसमानम्॥ दे
यमधस्ताद्वातविवर्तकर्षतिचैवंनोबहुचित्रम्॥२७॥ अथाश्रुनिरो
धजः॥ हर्षविषादजनेत्रजवारिप्रास्तमसुंचतियस्तुनरोहि॥ तस्यशि
रोगुरुताक्षिरुजस्स्युःपीनसमाहरनेत्रजलानि॥२८॥ प्रतीकारः
अश्रुनिरोधेऽश्रुजलानिविमुंचेत्स्वापमसौवाप्यसुखेनविदध्यात्॥
याश्चकथास्सुखदास्खलुयस्यताःकथनीयाःस्कृतिगाश्चविशेषा
त्॥२९॥प्र॰ त्रिकटुसैन्धवसर्षपमन्मथैस्सदनधूमगुडैर्मधुनाथ-
वा॥ गदस्तुतैरञ्चितांगुलिवर्तिकांजयतिपायुगतांजठरामयान्॥३०॥

दृषफलेयंवर्तिर्यदिगुदगाहि॥उदरानगुल्मानाहानजयतिनदाहि॥३१॥ इतित्रिकटुवर्तिः॥ अथछिक्कानिरोधजः॥ मन्यास्तंभशिरोर्तिशूलमुखशीर्षार्द्धभेदार्दितौस्युःस्यात्तांचतथैवयत्रक्वशिमासर्वेंद्रियाणांपृथक्॥छिक्कावेगविधारणादपितदाभायःक्षुतंकारयेन्नश्येस्तीव्रतरैश्चसूक्ष्मदृग्भिर्वास्नेहनंसंचरेत्॥३२॥ प्रतीकारः॥ हिंगूग्रगंन्धागदजन्तुशत्रुसकवर्णिकानांद्विगुणोग्निहंत्राम्॥चूर्णसमधेनजलेनपीतंगुल्मोदरानाहगदान्निहन्ति॥३३॥
॥अथेषांनिरोधजः॥ पूर्णत्वमास्यगलयोश्चतथातितोदःकूजन्त्सदागतिप्रवृत्तिरथोपियत्र॥उद्गारवेगबहुधारणतोनृणांस्युर्वातप्रभूतबहुरोगगणाःप्रकामम्॥३४॥ प्रतीकारः॥ ऊर्ध्वगवायुनिरोधेस्नेहयुतेन॥धूपनमत्रप्रशस्तंयोगतमेन॥३५॥ अथवांतिनिरोधजः॥ कंडूकोठाव्यंगवीसर्प्यकुष्ठाःशोथःपांडुर्वेपथुर्येज्वराद्याः॥वान्तौरुद्धेस्संभवन्तिप्रकामंवान्तंकुर्यात्तप्रभैर्रेचनंच॥३६॥ प्रतीकारः॥ पयःपयोभिश्चचतुर्गुणैश्चत्याग्नारिनाशंकथितंविशेषात्॥वान्तप्ररोधाज्जनितांश्चरोगानाकंठपीतंवमितंनिहन्यात्॥३७॥ प्रतीकारः॥ वान्तिनिरोधजरोगेलंघनमेहि॥कुर्यात्तद्विपरीतंतच्चविधेहि॥३८॥ अथशक्रनिरोधजः॥ ॥गुदेमुष्कयोश्चापिमूत्राशयेथरुजश्शोथशक्राश्मरीलब्धत्राणि॥भवेन्मूत्ररोधेपिवीर्यस्यवेगेहतेशक्रजोर्द्धप्रसन्नोभवन्ति॥३९॥प्रतीकारः॥ द्विजराजमुखीद्विपकुंभकुचास्तनयुग्मयुतोहरिमध्यकटी॥रमितावनितान्हरतिप्रसभंबहुधाद्भुगवीर्यविवर्त्तगतिम्॥४०॥ अन्यः॥ अभ्यंगमैथुनमधूनिपयोनिरूहास्ने

हावगाहनरणायुषशालिपथ्याः॥ सेव्याश्चशक्रकजविवर्त्तगताबधो हूँमायोभिर्वाभ्रमर्दसादृयोगसंघाः॥४१॥ अथक्षुधाविघातजः॥ भवेदंगमर्दोऽरुचिर्वातनन्द्राभ्रमःक्षुद्विघातमभूतंतथैव॥ उदावर्त्तरोगेतुसस्निग्धमुष्णंलघूरुच्यभोज्यंसुपुष्यंसगान्धि॥४२॥ अथतृषानिरोधजः॥ भवेत्कंठदेशेमुखेचापिशोषश्रुतेश्चावरोधव्यथाचेद्धृदश्च॥तदातृड्विघातमभूतेऽतिशीतोविधिश्चन्द्रयुक्तानिवारीणिसेवेत्॥४३॥ अथश्वासनिरोधजः॥ भवेच्छ्रांतदेहस्यचश्वासरोधेमहामोहहृद्रोगगुल्मानितान्तम्॥ विशेषेणविश्रामसेोहितायपलोस्थैस्सैरक्तन्दुलान्याशुसेवेत्॥४४॥ अथनिद्राविघातजः॥ भवेज्जृंभणंचांगमर्दोऽसितन्द्राशिरोनेत्रजाड्यंचनिद्राविघाते॥उदावर्त्तरोगेतुपर्य्यंकनिद्रासितादुग्धपानानिसेव्याश्चगाथाः॥४५॥ अथरूक्षाशनादिजः॥ यदाकोष्ठवायुश्चरूक्षैःकषायैःकटुस्वादुयुक्तैश्चतिक्तैरनेकैः॥ प्रभुक्तैःप्रकोपंसमागम्यकुर्य्यादुदावर्त्तरोगंभवेद्वानदाशु॥४६॥ पुरीषस्यवायोश्चमूत्रस्यतद्वत्कफस्याश्रुणामेदसःश्रोतसांच॥उदावर्त्तनंसंप्रकुर्याद्विशेषादुदावर्त्तयेद्वामलंमूत्रमुच्चैस्ससद्दृस्तिशूलेनहृल्लासयुक्तः॥४७॥ तथावारतिर्मूत्रविड्वायुवेगानकृच्छ्रेणयायात्तथाश्वासकासैः॥प्रतिश्यायदाहः श्रुतेर्विभ्रमैर्वाशिरोरोगहिक्कामनोविभ्रमैर्वा॥ वमीवातकोपप्रभूतैरनेकैश्चवातप्रकोपोत्थरोगैस्तथाचात्रनित्यं गुदेक्षेपणीयाःफलाद्याश्चयावर्त्तयःपूर्वमुक्तास्तथैव॥४९॥ नाराचचूर्णंचगुडाष्टकंवारूक्षान्नसंजातगदापहारि॥ तथाचसुस्निग्धरुपथ्यभोज्यमिष्टन्तुयद्यस्यतदेवभोज्यम्॥५१॥ अथाना

हः॥ सकृदामचितंक्रमेणभूयोयदिबद्धंविगुणानिलेनवैद्याः॥ प्रवदन्तियथास्वमेनमानाहगदंतस्यप्रवर्त्तनंभवेत्॥५२॥ ॥ अस्यप्रतीकारः॥ त्रिवृच्छिवास्याःप्रयुताःस्नुहीनांपयोभिराप्रर्थवटीकृतास्तु॥गोमूत्रपीताःखलुताश्चवैद्योस्थानाहनाशायभिषक्प्रदिष्टाः॥५३॥ अन्यः॥ मदनमागधिकागदसर्षपैरथिवगौरतरैश्चयवाग्रजैः॥गुडयुतैरचितागुगवर्त्तिकागुदगताहरतिप्रसभंमलम्॥५४॥ अथामजानाहः॥ आनाहेचामजातेप्रभवतितृष्णाशूलमामाशयेच हृज्जृंभंचात्रनित्यंप्रभवतिगुरुताच प्यथोद्गारहृतः॥भक्तेःसंसर्गसिद्धैःक्रमतअथतथापाचनीयैर्विशेषाद्योगैरन्यैर्विसूचीगदहरणपरैरेचनैश्चापिजेयः॥५५॥ अथसकृत्संचयजानाहः॥ कटीपृष्ठमूत्रेशकृन्निचयदास्तंभअथचभवेन्मूर्छाश्वासावपिचशकृतोवाग्निरसकृत्॥ स्रवन्त्येतेदक्काशचगतरुचिप्रालसगदस्यथोचिन्हंकृष्णाहरतिशिवयासद्गुडयुता॥ ५६॥ अथोस्योपद्रवाः॥ शूलाध्मानशिरोरुजोगलग्रहश्वासश्चकासस्तथातन्द्रामूर्छनमाशुवैद्यभणिताहृद्रोगकाद्यास्त्वमी॥ घोरोपद्रवसंघभूतगदिताःप्राद्यःप्रतिश्यायकंयस्त्वेतैरखिलैश्चकैश्चरहितःसाध्यस्तदासौगदः॥५७॥ अथासाध्यलक्षणम्॥ ॥ तृष्णार्दितंक्षीणतरंचशूलैरुपद्रुतंक्षिप्तमलंसुवैद्यः॥शकृद्वमन्तंप्रतिमान्विशेषाद्दूरंत्यजेत्संयमनींप्रगन्तुम्॥५८॥ अथनिवृत्तिः॥ आध्मानशूलापगमःप्रवृत्तिरपानवायोश्चमलस्यसम्यक्॥ गतिस्तदावैद्यजना वदन्तिप्रायोरुजानाहनिवृत्तिचिन्हम्॥ ५९॥श्रीवैद्यभूमीन्द्रगुरुर्हिमात्रा सोयंजयत्याशुक्रमप्रवृत्तिः॥येनो

यदिष्टागममर्म्यवेत्रोदावर्त्तरोगस्यचिकित्सितेःभूत्॥६०॥ ॥इति श्रीमद्गुरुचरणाब्जचञ्चरीकचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्ल्यांसप्तदशविधोदावर्त्तप्रतीकारकथनंनाम चतुर्विंश स्तबकः॥२४ ॥ नत्वाश्रीनिजतातंगुल्मगदस्य॥कुर्वेविशदांचिकित्सांधोरतरस्य॥१॥ अथास्यनिदानं॥ दुष्टास्तुवातादयएवनित्यंमिथ्याशनाहारविहारतोपि॥कुर्वन्तिकोष्ठान्तर्ग्रंथितुल्यंस्थानेबलंपञ्चसुगुल्मरोगम्॥२॥ हृन्नाभिपार्श्वद्वयबस्तयस्तुस्थानानिगुल्मस्यचवैद्यभूपैः॥पंचैवचोक्तानिचलस्यपूर्वरूपंतथोदाह्रियतेमयात्र॥३॥ बहून्नारविङ्‌न्थलर्षासहत्वैरथोंत्रस्यसंकूजनैश्चाथपक्तेः॥ अशक्तिस्तथायेयआध्मानमुच्चैर्भविष्यत्यमीगुल्मरोगेभवन्ति॥४॥ ॥ अथोपशयः॥ ॥द्विदलंचविवर्ज्जयेदलंशयनंचापिदिवाचमैथुनम्॥ मदिरामतिपिच्छिलंदधिघृतदुग्धेचतथात्वपिच्छिलैः॥५॥ मधुरदुग्धघृतानिदधीनिचाप्यशितुमत्रचलोहितशालयः॥अथचषष्ठिकतंदुलमेववापरमहावरधान्यजतंदुलम्॥६॥ समुचितास्तुशिनाग्रशतपुष्पिकान्यदपियत्रजशाकमलंभजेत्॥ अपिबलोद्भवतैलमलंपिबेदविरतंविरतंपरिमर्द्दयेत्॥७॥ वृन्ताकवास्तूकसुतन्तुलीयशाकानिमुद्गादिकयूषकानि॥स्वल्पंघृतंभोज्यमलंतथापिचिकित्सितंगुल्मगदस्यवक्ष्ये॥८॥ प्रतीकारः॥ वंगंपलैकंचपलैकसूतंभस्मीकृतंताम्रमथोबलिश्च॥ प्रत्येकमेतच्चपलप्रमाणमर्कस्यदुग्धेनदिनंविमर्द्य॥९॥ तद्गोलकीकृत्यपुटैकपाकाद्रंगेश्वरोवल्लमितोघृतेन॥गुल्मोदरप्लीहगदाग्निहान्तिपीतोगवांमूत्रपुनर्नवाभिः॥१०॥सितवर्षाभवमूलंधेनुजलेन॥ निष्कंरजोनिशा

थाःपूर्वजलेन॥११॥ वंगेश्वरानुपानंशुक्रमनेनगुल्मगदातुरदेहेस्मे
ममनेन॥१२॥ इतिवंगेश्वरेनुपानद्वयम्॥ अथशंखद्रावः॥
क्षारत्रयंपञ्चपटूनिकुद्रनीरंबसावेल्लवणास्फरस्य॥फेणस्तथाब्र
ह्मगरंसमुद्रपटुंतथाक्षारमथोशिखीनाम्॥१३॥ क्षारंचवज्री-
प्रभवंचमुष्कपटुःपलाशार्कभवंचतद्वत्॥ सौराष्ट्रिकायापिसमंस
मस्तंगर्भाग्निनाभाव्यविशोध्यसर्वम्॥१४॥ तत्काचलिप्तेघटितेथ
पात्रेनलोष्टुनेवारुणियत्रमध्ये॥निधायसम्मुन्ध्यदृढाग्नियोगाद्द्र
द्रवाख्यंचरसायनंहि॥१५॥ जिह्वाग्रेहविषाविलोड्यमतिमान्बलं
चदद्यादलम्दन्तस्पर्शविवर्जितंशक्रभदिनेलोहाश्मशंखादिकान्॥
सर्वान्द्रावयतेथगुल्मप्रमुखान्रोगांश्चप्लीहोदरान्त्व्यशोजीर्णविषू
चिकादिशमनंचाग्राणनश्शूलकृत्॥१६॥ कुष्ठानित्वाष्टादशवाष्ट
शूलान्प्लीहानजीर्णान्ग्रहणीन्तथैव॥गुल्मार्शरोगानखिलांश्चशं
खद्रावंनिहन्यात्कलहृद्गदांश्च॥१७॥ इतिशंखद्रावम्॥ अथत्रि
लवणाद्यंचूर्णम्॥ त्रिलवणत्रिकटुकत्रिफलाचव्यायवनिकुंभध-
नाभिसिन्धिभकेः॥ रुचकपुष्करदाडिमतिन्तिडीदहनजातिजवाम्र
जटंकणैः॥१८॥ गजकणाखरशाकयनिकात्रिदशदारुविडंगघ
नाम्लकैः॥मगधजांघ्रिवरीहपुषाविषाजरणसर्ज्जिशटीविपुष्क
समैः॥१९॥ अपिगवाक्षिजटाचरदीप्यकैरपिसर्वत्तमच्छागलगन्धि
भिः॥इहसुतुवुरहिंगुकपाठिकाभुजगभुग्भिरलंपरिचूर्णितम्॥२०
॥असकृदार्द्ररसेरपिलुंगुनेःपुनमिदंपरिभाव्यविशोध्यच॥अशि
शिरणजलेनचमस्तुनामदिरयाजरयापिपिबेदलम्॥२१॥ काला
म्भसाचोष्णपयोभिरेनंकौलत्थयूषेणचदाडिमानाम्॥नीरेणसे

येदथवाघृतंचसंपाचितञ्चेभिरलंतथास्यात्॥२२॥ यकृत्प्लीह गुल्माश्रितशूलसुत्वैस्तथागुल्मविषंमदुर्नामकृच्छ्रान्॥तथाजा ठरांश्चाससकासान्निहन्तिमभुक्तंसमस्तंचजीर्णीकरोति॥२३॥ अरुचिंध्यतिदीपयेदलंजठराग्निंदृषतोपिपाचनम्॥कुरुतेपल- स्यकाकथात्रिकटूनांचरजोनिषेवणात्॥२४॥ इतित्रिलवणादि चूर्णम्॥ वचाशिवाहिंगुजवाग्रजानांयवानिकासैन्धवसंयुता नाम्॥सेवेतसाम्लंपरितप्ततोयैर्भिनत्तिगुल्मानपिचूर्णमेतत्॥ २५॥ सप्तदिनानिनिपीतंतप्तजलेन॥गुल्मगदान्तुपहरतेमद्यमदेन ॥२६॥ इतिवचादिचूर्णम्॥ द्वयस्नुहीक्षीरयनापलांशैःपलैकक पिप्पलुपलार्द्धसिन्धुं॥चतुःपलंगोघृतमप्रसिद्धंपलार्द्धमात्रंखलु बिन्दुसञ्ज्ञम्॥२७॥विस्रंसनंगुल्मगदोपहारिनिषेवितंसोष्णगु णंचपानम्॥तस्यानुपीतातुघृतस्ययावद्विन्दून्विरिच्येन्नचत त्रचित्रम्॥२८॥ इतिबिंदुघृतम्॥ युग्मं॥ रसंभागमेकंतथा गन्धकस्यद्विभागंतुसिंधोस्तथाटंकणस्य॥चतुर्भागतुल्यंवरा टस्यपंचकुम्भास्यभागान्मितशंखमत्र॥२९॥तथासर्वतुल्यंचमा रीचचूर्णंसमस्तंचतद्धन्तिजातैःकषायैः॥त्रिधाभावयेद्यद्धरा जाक्षिनीरैस्तथार्द्रस्यनीरैस्त्रिधासंविभाव्य॥३०॥प्रभुक्तश्चशा याद्धमानंविशेषान्निहन्त्याशुपंचैवगुल्मानशंकम्॥क्षयश्वा सरोगांश्चमन्दाग्निमुच्चैरयंगुल्मशत्रुःप्रसिद्धस्तुलोके॥३१॥ इतिगुल्मांतकः॥ त्रिवृतायाश्चपलंत्रिकर्षहिंगुपलमेकंलव णत्रजस्यचाधः॥यावजक्षारपलंपलद्वयंचशठिकापुष्करमूल चित्रकाणाम्॥३२॥जगदम्लठादिकवेतसेनतथाद्विपलंसर्वमिदं

चदन्तिनीभिः॥गिरिकर्णिमरिचैश्चमागधीभिरुचकाह्लानलदीप्यदीप्यकाभिः॥३३॥ अपिकर्षद्वयसम्मिताभिराभिर्द्विपलेचापिविडंगदाडिमेन॥द्विपलञ्चापिहरीतकीम्नमस्तंससमेकत्रचमातुलुंगनीरैः॥३४॥ परिभाव्यवटीश्चकारयेद्गुटिकैकाहितयंतथैवभुक्ता॥ भितयंवाप्यथगुल्मभेदनंहिमुनिकांकायनवर्णिताश्चवेद्यः॥३५॥ कफगुल्महरागवांजलैःपयसापिनजगुल्महारिणी॥कफवातभवंचमद्यकैस्त्रिफलामूत्रयुतात्रिभिर्युतम्॥३६॥ हरतेरुधिरोद्भवंचवैयुवतीनांकरभीस्रुदुग्धकैः॥गुदरोगहराश्चसेविताग्रहणीहृत्कृमिरोगनाशिकाः॥३७॥ इतिकांकायनवटी॥ विडाग्निसौवर्चलसिंधुचुक्रैरम्लादिकैर्वेतसबीजपूरैः॥रसैश्चतुर्भागमितैश्चतद्वद्घृतंचतुर्भागदधिप्रयुक्तम्॥३८॥ सदाडिमंहिंगुकटुत्रयैश्चसजीरकंदाधिकसिद्धहव्यम्॥ त्वष्ठीहगुल्मानपिहन्तिसद्योभुक्तंप्रभुक्तंजरयत्यवश्यम्॥३९॥ इतियुग्मेनदाधिकघृतम्॥ वचायवक्षारधनाजमोदाहिंग्वग्निपथ्याविडसैन्धवानाम्॥अजाजिकापुष्करमूलतित्तिडीकाजगन्धाहपुष्पाशटीनाम्॥४०॥पाठाकणामूलस्रुवर्चिकानांसौवर्चलस्यापिकटुत्रयाणाम्॥ अम्लादिकस्यापिचवेतसस्यचूर्णंहिजंबीररसेनसार्द्धम्॥४१॥ पुनःपुनर्मर्दितथाक्षमात्रावस्त्रे विधायास्यचताश्चभुक्ताः॥ प्रातश्चगुल्मानपिपांडुकासांश्वासांश्चतूणीप्रतितूणिकादीन्॥४२॥ पार्श्वस्यवस्तेरपिशूलमाशुह्याध्मानमेवंरवलुमूत्रकृच्छ्रम्॥ आनाहृधायुभवांश्चरोगान्प्लीहामयांश्चापिनिराकरोति॥४३॥ इतिवचाद्यागुटिका॥ अथसंप्राप्ति

स्तत्रादो वातजः॥ रूक्षान्नं चातिपानं विषमपि तथा भोजनं वेगरोधश्शोकश्चेष्टाप्रहारो विलयमथ भवेच्चेन्मलस्य प्रकामम्॥ हेतुर्गुल्मस्य नित्यं भवति बहुधा चापि निद्राविनाशो वातोत्थस्यात्र वैद्यैर्निगदित अलं तद्विशेषं च वक्ष्ये॥ ४४॥ यस्यानं नाद्धि कल्याद्रुज अपि तदा वायुविट्संगशोषो वक्रस्याप्यत्र तद्वत्त्वग्वदनयोः श्यावता वारुणत्वम्॥ हृत्कुक्षौ पार्श्वयोर्वा शिरसि च रुजश्चांशयोस्संभवन्ति यो जीर्णे चापि कुप्यत्यथ च बहुधा भोजने शान्तिमेति॥ ४५॥ तद्वच्छीतज्वरत्वं प्रभवति नितरां वातगुल्मे नराणां रूक्षं तिक्तं कषायं कटु च बहुधा नोपसेवेत्तु तत्र॥ लोकाश्शीतोष्णादुग्धे स्तिलगुडसहिते पाययेद्वातगुल्मे गुल्मोदावर्त्तरोगानथ भगभवं शूलमुच्चैर्निहन्यात्॥ ४६॥ पलार्द्धकं पलद्वयं पलं पलं चतुःपलं सविश्वमत्र चित्रकं तिलं गुडं पयस्मृतम्॥ स वातगुल्मनाशनं तु योनिशूलहारकम्॥ ४७॥ अन्यः स्वर्जिकागदसमं च केतकीक्षारमत्र तिलतैलसंयुतम्॥ वातगुल्मशमनाय पाययेद्वैद्य भूपतिसमाज्ञया ध्रुवम्॥ ४८॥ अथ पित्तगुल्मः॥ कटुदन्तशठाभितीक्ष्णरूक्षैर्मधुभिर्दाहकरैश्च क्रोधमार्गैः॥ अथ चामविधानतोऽथ दुष्टरुधिरैः पित्तजगुल्मसंभवोऽत्र॥ ॥ ४९॥ ज्वरस्वेदस्तृष्णा सदनमपि रागो रविलननो भवेच्छूलं जीर्य्यत्यपि समशितस्वेद अपि च॥ व्रणस्पर्शे यद्वत्स भवति महारुक् च दवथुस्तदा गुल्मे पैत्ते त्रिफलजजलैश्चापि द्युतः॥ ५०॥ स चूर्णं कंपिल्लं समशितमलं माक्षिकयुतं विरेकायाथो वा मधुकशिशिरे गोस्तनिकया॥ पयोभिश्श्रं पीतं मधुकमथवा तन्दुलज-

लैर्मधूक्तंपित्तोत्थंहरतिनिग्रुतंगुल्मनिचयम्॥५१॥ अथकफगु
ल्मः॥ गुरुस्निग्धंशीतंदिवसशयनंस्थैर्यमथवाभवेत्पूर्णंसर्वं
कफकरमलंयच्चनितराम्॥ कफोद्भूतेहेतुस्तनुसदनहृल्लासकस
नैर्गुरुत्वंस्निग्धत्वंज्वरशिशिरताचान्नविरुचिः॥५२॥ प्रतीकारः
तिलैरंडसिद्धार्थकोमाजबीजैःप्रलिप्याथगुल्मोपरिष्टाद्विशेषात्॥
रूक्षवोष्णैश्चसंस्वेदयेल्लोहपात्रैर्भिषक्कुशलेषुगुल्मप्रणाशायनिय
म्॥५३॥ प्रतीकारः॥ जलंपंचमूलीशृतंपाययेद्वापुराणंचमाध्वी
कमेवम्॥ यवानींससक्षारगुडेनान्वितांवाभजेद्वातवर्तोनुलोमायय
द्यत्॥५४॥ अन्यः॥ भल्लातकानांद्विपलंचपंचमूलीपलैकंचवि
दारिगन्धैः॥ नीराढकेपाच्यचपादशेषेकणांवचांनागरकंविडंगम्
॥५५॥ यवाग्रजंसैन्धवचित्ररास्नाबाल्हीककर्चूरविडांस्तथैव॥क
र्षोन्मितान्येष्वपृथक्पृथक्चदुग्धैकप्रस्थेनघृतस्यप्रस्थम्॥५६॥
संपाचयेद्वैमधुकेनसार्धंश्लेष्मोद्भवंगुल्मरुजंचपांडुम्॥ प्लीहामयं
श्वासरुजन्तथैवपीतंनिहन्याद्ग्रहणीविकारम्॥५७॥ इतिभल्ला
तकाद्यंघृतम्॥ अथवातपित्तजः॥ जीर्ण्येत्यन्नेशूलएवाशुजी
र्णेन्नेचांचल्यंचापिपीडाविशेषात्॥ भुक्तेदाहोन्यथाशैत्यमत्र
गुल्मेप्रायोवातपित्तप्रभूते॥५८॥ प्रतीकारः॥ द्राक्षायवक्षार
शिलाजतूनांभागेनतुल्येनतथाशिवायाः॥ चूर्णंचपञ्चांबुजज-
लैर्निपीतंगुल्मंनिहन्त्याशुचवातपैत्तम्॥५९॥ अन्यः॥ त्राय-
माणाप्रसृतिंदशभागनीरसिद्धमिहपंचमभागम्॥ वस्त्रपूतमथ
कार्षिककल्कैरोहिणीत्रिकटुधान्यघनानां॥६०॥ चंदनोत्पलवि
डंगकृशानुत्रायमाणत्रिफलानलदानाम्॥ गोस्तनस्यचविका

कटुकानां रक्तधास्तुकस्य यासशुतानाम्॥६१॥ धात्रिकाफलरसा
ष्टपलेनतद्वदेवपयसात्तु घृतंद्राक्॥ साधितंसमशितंखलुवातपि
त्तगुल्मशमनायचपेयम्॥६२॥ अथवातकफजः॥ मन्दंवि
सर्प्पतियदाजठरेचमंन्दपीडश्चगौरवयुतश्शिशिरश्चगुल्मः॥
हृल्लासकृच्चखलुवातकफप्रभूतस्तस्योपचारमधुनात्रविचार्य
वक्ष्ये॥६३॥ प्रतीकारः॥ दहनसिन्धुधनाहृपुषाधरात्रिकटुक
त्रिफलादशमूलकैः॥ मगधतांघ्रिविडङ्गरलंनथाचरयवानिकया
खलुदन्तिनी॥६४॥ अपिचदाडिमचव्यसजातिकाः पलमिता
श्चपलैश्चपलैःपृथक्॥ पयसिवेदगुणेनशृतास्ससमंशततमेच
जलेपदशेषिते॥६५॥ घृतरुबूकजतैलपयांसिवैचरभिषक्परिपा
च्यचमिश्रकम्॥ समधुवातकफोद्भवगुल्मिनेपरिददीततथैवचकुक्षि
ने॥६६॥ योनिशूलजठराग्निनाशयेत्कुष्ठगुल्मगुदशूलकानलम्॥प्ली
हरोगमथमिश्रकस्सदा स्नेहएषपरिपीयतेयदा॥६७॥ अन्यः॥ हिं
गूग्रगन्धाहृपुषाभयानांपाठाजमोदाग्निधनाशटीनाम्॥ हिंसारचव्य
हिपटुत्रयाणांकटुव्रजानामजगन्धिकायाः॥६८॥ तिन्तीडिकादाडिम
पौष्कराणामजाजिकाम्लादिकवेतसानाम्॥ चूर्णंचमद्येनतथोष्ण
नीरैस्सश्लेष्मवातप्रभवेतुगुल्मे॥६९॥ हृद्बस्तिपार्श्वप्रभवेपिशूलेपा
श्रुप्रभूतेपिचयोनिशूले॥ पांड्वामयेप्लीहगुदेरुचौचहिक्कागदेश्वास
गलग्रहेयं॥७०॥ अर्शोविकारेग्रहणीगदेचाप्युरोविबन्धेविधिवत्प्र
देयम्॥ वाबाजपूरद्रवभावितस्ययथेष्टभागेनचतस्यचक्रः॥७१
॥ हिक्कासुदेयाश्चभिषग्भिरत्रहिंग्वादिचूर्णंनतथावटीवा॥ भुक्ताग्नि
मान्द्यप्रभवाननेकान्व्याधींश्चसद्योहिनिराकरोति॥७२॥ अथपि

त्तकफजः॥ ॥ज्वरः सपीडोव्रणवच्चदाहःशोस्थ्येयदावं क्षणयोर्भवेत्ताम्॥ तथाशनेजीर्यतिवातपित्तश्लेष्मोद्भवे स्वेदमलंचगुल्मे॥७३॥ प्रतीकारः ॥विदारीश तीर्क्षीरकाकोलिकाभिर्धनादेवदारुत्रयैस्त्रषणैश्च॥स मध्वाज्ययष्टीकषायंसचव्यंसासिन्धुसखंडंचमध्वान्वितं तु॥७४॥सपित्तंबलाशप्रभूतंचगुल्मंनिहंत्याशुपीतं कृतंवैद्यधुर्य्यैः॥तथान्यन्मलादिप्रभूतंकषायंसपित्तेब लाशान्तरंगुल्मरोगे॥७५॥ अन्यः ॥नलवंजुलका शकुशेक्षुजटाश्वतमंबुलधूलमकंबुयुतम्॥सजवाग्रज माशुचगुल्ममलंबहुपित्तबलाशभवंहरेत्॥७६॥उप दूर्वैर्यः सकुलैः समेतोगुल्मस्त्रिदोषप्रभवाखिलैश्च॥दो षेस्त्रिभिस्त्वाशुत्रिभीरुपायैःसाध्यः समाप्योभवतीन्य थातु॥७७॥ प्रतीकारः ॥पलाशवज्रीतिलनाल चिंचार्कवर्षायवखर्जिकटंकणानाम्॥क्षारानथोर्कस्य च कन्यकाया मांसेनगोहन्ययुतंचचूर्णम्॥७८॥व्योषा भयासिंधुभवैर्विशेषाद्दुडूलिनंयस्तुगिलेन्मनुष्यः॥त्रि जातगुल्मंचशिवास्त्ररोगंभर्जीर्णमाशवष्टकमेवहंति॥ ७९॥ ॥इतिक्षाराष्टकम्॥ ॥अथवज्रक्षारः ॥ ॥सामुद्रसैंधवसुवर्चलटंकणानांस्वर्जिकास मजवाग्रजसंयुतानाम्॥चूर्णंसवज्रिरविदुग्धविभावि

भावितं पाग्(?)त्रेधार्कपत्रपरिलिप्तविदग्धमंतः॥ ८०॥ क्षारं फलत्रयकटुत्रयवह्निजीरदीप्यासमंसमसितं खलु टंकयुग्मम्॥ गुल्मोदरेषु शिवशल्यगदेष्वजीर्णमंदाग्निरोगनिकरेषु तथोर्ध्वघाते॥ ८१॥ वातेधिकेको जलैर्घृतेनपित्ते कफे चापि गवां च नीरैः॥ सकांजिके नापि च सन्निपातदोषेस्वयंभूगदितं विशेषात्॥ ८२॥ प्लीहोदरं क्षारमिदं च वज्रशब्दादिकं सेव्यमलं मनुष्यैः॥ यथानुपानं वरवैद्यभूपसमाज्ञया नित्यरक्तपथ्यमन्नम्॥ ८३॥ ॥अथार्तवजगुल्मः॥ ॥यदा नवप्रसूतिका कुपथ्यपानशालिनी तथामगर्भमोक्षिणी भजेदृतौ विशेषतः॥ पतिं मनोगतं यथा नदार्तवं प्रगुल्मयेत् करोति गर्भलक्षणं सदा गनस्तु गुल्मकम्॥ ८४॥ नदास्य दंते पिंडितएवपैत्तसमं लिंगमेतस्य शूलेन युक्तम्॥ सगुल्मो भवेद्रौधिरो मासदिग्भिः परं संपरीक्ष्य प्रतीकार्य एव॥ ८५॥ यथा वायथाजीर्णता चास्य साध्यस्तथा सोन्यथा संचिकित्स्यस्तु वैद्यैः॥ नदाक्षारतोयैःपलाशस्य हृद्यं भिषक्पाययेन्मधदुग्धाकृतिम्भवेत्॥ ८६॥ स्तनेगर्भवत्यासमानं प्रलक्ष्य विशेषेण फेनोद्गमं संपरीक्ष्य॥ तिलव्योषभार्ङ्गीगुडक्काथनस्यै घृतैर्वैद्यभूपोपि भूपाज्ञयेव॥ ८७॥ ददीत प्रकर्षेण मूढश्च गर्भोपतत्याशकेशास्थिहीनोपि सद्यः॥ तयानष्टपु

प्यापि व्योषास्यपानाल्लभेन्नष्टपुष्यंविशेषेणनष्टम् ॥ ८९॥ ॥अथगुल्मोपद्रवाः॥ ॥शिरोरुग्ज्वरः पार्श्वपीडाच्चदाहस्तृषाशीतलानिश्चलत्वंचकासः ॥तथागौरवाण्यमत्त्हल्लासएतेदशोपद्रवागुल्मरोगस्यनित्यम् ॥९०॥ ॥अथासाध्यलक्षणम्॥ ॥ अतिदवथुपरीतमश्मतुल्यंबहुरुजमुन्नतशीघ्रदाहिनीव्रम् ॥ त्रिभवमथेतथैवगुल्मरोगंबलजठरानलहारिकंत्वसाध्यम्॥ ९१॥ क्रमशः कृतवास्तुपरिग्रहणांशिवशास्त्रयुतंवमितर्षकरम् ॥ ज्वरवेपथुछर्दिविरेकरुजंश्वसनश्वयथुप्रयुतंचखरम्॥ ९२॥ अपिकूर्मसमोन्नतमेवशिरापरिनद्धमलंयदिगुल्मगदम्॥ शयनाभिपदेषुहृदिश्वयथुर्यदिगुल्मगदेन्नरुचेर्विकृतिः॥ ९३ ॥ यदिकार्श्यमलंचतनोभवतिप्रसभंजठरस्यचग्रंथिगतम् ॥ अतिमूढनमत्वमसौव्रजतिध्रुवमेवयमस्यनिकेतमठम् ॥ ९४ ॥ ॥अथनिवृत्तिः॥ ॥ अनुपल्बिरलंलघुनानथाक्रमतएवतुकोष्ठयन्हासता॥ अधिकभोजनपानयथेच्छताविगतगुल्मगदस्यविश्रब्धता ॥९५॥ श्रीमद्गुरोःपादसरोजभृंगश्रीकाशिनाथाख्यचिकित्सकेन॥ श्रीतातवैद्याधिपवर्णितंयत्कृतंतुगुल्मस्यचिकित्सितंतत्॥ ९६॥ ॥इतिश्रीगुरुचरणाब्ज

चरीके चतुर्वेदिकाशिनाथकृतायां चिकित्साक्रमकल्प
वल्यां गुल्मरोगचिकित्सापरागंधिनस्तबकः श्चतुर्विंशः
॥२४॥ ॥ श्रीगोपालकृष्णोजयति ॥ ॥
॥ ॥ ॥ अथहृद्रोगाधिकारः ॥ ॥
तातंनिजंमातृयुगंगुरुंस्वंनत्वाविलोक्यापिचरकमुखा
दीन्॥ कुर्वंश्चिकित्सानुहृदामयस्यश्रीवैद्यभूपानुम-
तेनसम्यक्॥१॥ ॥तत्रतावत्तन्निदानम्॥ ॥
अत्युष्णांचकषायमम्लकटुकानिक्तेभजेन्मानवश्चिंताबे
गविधारणश्रममहाघातानिभोज्यैरलम्॥ हृद्रोगःखलु
वैमनस्यजनितःपुंसःसमुज्जृंभतेपूर्वरूपमथस्वरू
पमपिवापथ्यंचतस्यब्रुवे॥२॥ ॥अथपूर्वरूपम्
॥ ॥ भवेत्कंठदाहस्तुभुक्तेन्नपाकोभवेन्नैवसम्य
क्प्रसेकस्तथाच॥ भवेज्जृंभणंक्लमहृद्रोगएतेभवि-
ष्यत्यलंसर्वएते भवति॥ ॥३॥ ॥त्रिगुणदोष
चयाहृदयंगताःरसमलंपरिदूष्यन्हृदित्वरा॥किमपि
बाधमहोयदिकुर्वतेहृदयरोगअसोपरिकीर्तितः॥४
॥ ॥अथोपशयः॥ ॥मधुरपाचकरोचकवा
तहृन्मनसिचेद्धृतमरवलुयस्ययत्॥हृदयरोगअलंपरि
कीर्तितंबहुपरीक्ष्यतयाभिषजातम्॥५॥ ॥अ
थप्रतीकारः॥ ॥ घृतदुग्धगुडांबुवभिःक्रमात्क

कुभत्वक्परिचूर्णितंभजेत् ॥ हृदयस्यरुचित्वजीर्णके बहुधालोहितपित्तनाशनम् ॥ ६॥ ॥अन्यः॥ ॥
हरीतकीमागधिकावचानांरास्नाशठीनागरपुष्कराणाम् ॥ चूर्णंचहृद्रोग हरंविशेषात्सेव्यंतथावैद्यनृपावदंति ॥ ७॥ अन्यः ॥चूर्णंचपुष्करजटाप्रभवं मधूकंतद्वच्चवल्कलभवंककुभस्यचूर्णम् ॥ हृच्छूलकासशमनायचसेव्यमाशश्वासभ्रमेनदुदिनंवरयोगयुग्मम् ॥ ८॥ अन्यः ॥पुरेणदग्धंचकुरंगशृंगं पिष्टंचगव्येनघृतेनपीतम् ॥ हृत्पृष्ठशूलंविनिहंतिसद्यः श्रीवैद्यभूमीपतयोवदन्ति ॥ ९॥ अन्यः ॥हिंगुग्राविडविश्वकुष्ठमगधाचूर्णंशिवाचित्रकैर्युक्तंचापिजवाग्रजेनतुतथासौवर्चलेनान्वितम् ॥ पीतंपुष्करमूलसंयुतमलंनित्यंजवानांजलैर्हृद्रोगंशिवशास्त्रसंयुतनतमंसयोर्निहंतिध्रुवम् ॥ १०॥ ॥अथघृतम्॥ ॥
मवलाहिबलार्जुनकल्कशृतंघृतमाशुचतत्क्वथितेऽवसमम् ॥ हृदयोत्थरुजंहरतिप्रसभंकिलसंचरसोहितरोगहरम् ॥ ११॥ अन्यः ॥दशांघ्रिनीरंलवणांकृतंचक्षारेणयुक्तंतुपिबेन्मनुष्यः ॥ श्वासंचकासंचहृद्रोगदंचगुल्मानिहंत्याशुनचित्रमत्र ॥ १२॥ अन्यः ॥गोधूमपार्थतरुचूर्णमलंगुडाज्यतैलैर्विपक्वमशितंचगवांपयो

भिः॥ सद्योनिहन्तिहृत्कंठरुजंयवेन पुंसःप्रभातसम
येपिभिषग्मतेन॥१३॥ ॥अथसंप्राप्तिस्तत्रवात-
ह्वातजः॥ ॥ आयम्यतेतुद्यतएवयत्रविपाच्यतेरक्षो
क्ष्यलएवनित्यम्॥ तद्वातजेपर्पटिकैकमाषासमाक्षि-
केश्चापिघृतैश्चसेव्या॥१४॥ सनागरंदाडिममम्लवेत
सवर्चलेनापिचहिंगुयुक्तम्॥ कर्षार्द्धमानंभिषजोव-
दंतितस्यानुपानंकथितंमुनींद्रैः॥१५॥ अन्यः ॥
कणावचासैंधवहिंगुशुंठीसौवर्चलैलाजवजाग्रजाना
म्॥ धान्याजमोदाम्लकसंयुतानांचूर्णंचमद्येनपिबे-
च्चतैलैः॥१६॥ ॥अथपित्तजः॥ ॥तृष्णोष्ण
दाहमुखशोषसचोषमूर्छाधूमायनंगलगतंहृदय-
रुमश्च॥ क्लेदोमुखस्यचभवंतियदैवसर्वेपित्तप्रभू
तहृदयस्यरुजंवदंति॥१७॥ प्रतीकारः ॥श्री
पर्णिकागुडसितामधुकाक्तनीरैः क्षौद्रान्वितैर्वमन
माशुवरःप्रकुर्यात्॥ पित्तोपसृष्टहृदयेमधुरैःशृतंच
भोज्यंचपथ्यमसकृद्बहुशीतमिष्टम्॥१८॥ ॥
अथरसः॥ ॥शुद्धपारदसमंपरिशुद्धगंधकंचप-
रिभाव्यदिनैकम्॥ धात्रिकाफलरसेनचद्राक्षासंस्रुते
नचजलेनदिनैकम्॥१९॥ यष्टिकाशृतजलेनचखर्जू
रोत्थसंशृतजलेनदिनैकम्॥पंचसाररसमाषमितोय

धात्रिकाफलसिताभिरन्वयः॥ २०॥ भुंजतेचखलुपित्तभं वहिरोगमाशुजयतेहृदयस्य॥ २१॥ ॥ अथकफजः ॥ ॥ गौरवारुचिकफस्रवयुक्ता वह्निमांद्यमधुरास्य कतांद्याः॥ स्तंभमार्दवयुताःखलुयत्रतद्रुजंचहृदयस्य कफोत्थम्॥ २२॥ ॥ अथहृदयार्णवरसः॥ ॥ शिवाशिवौतुल्यतमौप्रसिद्धौतयोसमौशुद्धदिवाकरंच॥ फलत्रयद्रावयुतंदिनैकंसकाकमाचीस्वरसैर्विमर्द्य॥ २३ ॥ वटींचगुंजाभांचविधायतस्यसकाकमाचीत्रिफलाकषायैः ॥प्रस्थद्वयोन्मानजलाष्टशेषैःपिबेत्कफोद्भूतहृदामयेहि ॥२४॥ युग्मम् ॥ वातवचानिंबकषायपानैः कुर्यात्कफोत्थंहृदयस्यसंगे॥ वातात्तसंजातहृदामयोक्त चूर्णंनिसेवेन्मगधादिकंयत्॥ २५॥ ॥ अथवातपित्तजः॥ ॥ सतोददाहोहृदयेचवातपित्तप्रभूतेहृदयस्यरोगे॥ द्राक्षापरूषौषधिसंसृतंचजलंपिबेन्माक्षिकखंडयुक्तम्॥ २६॥ अन्यः ॥ लुंगांघ्रिकट्वीमधुयष्टिकानांहरीतकीनागरपुष्कराणाम्॥ क्षारस्लशुंठीलवणान्वितंच काथंपिबेद्वातसमेतपित्ते॥२७ ॥ ॥अथवातकफजः॥ ॥ अरुचिश्वसमीरकफप्रभवेहृदयस्फुटनंहृदयस्यरुजि॥ त्रुटिमागधिकांघ्रिपिबेद्वपुषासहितंखलुतत्रगदेसहसा॥२८॥ ॥

॥ अथतैलम् ॥ ॥ कुंभीशटीपुष्करमूलरास्नाशठीशिवापंचजटाजवानाम् ॥ कुलित्थरास्नाबदरामराणांपुनर्नवाबिल्वफलान्वितानाम् ॥ २९ ॥ क्वाथेनतैलंखलुसिद्धमेतत्समीरजंश्लेष्मयुतंनिहंति ॥ हृद्रोगमाशुप्रवदंतिगुल्मरोगंचवैद्याश्वरकोदयाये ॥ ३० ॥ ॥ अथपित्तकफजः ॥ ॥ दुर्गंधिगौरवबलाशविदाहयुक्तोहृद्रोगपित्तकफजःखलुतन्नपेयम् ॥ दुग्धंसनागबलयाककुभत्वचस्त्वसद्यःसपित्तकफजेहृदयस्यरोगे ॥ ३१ ॥ ॥ अन्यः ॥ हरीतकीनांचशतार्द्धकेनसौवर्चलस्थापिपलद्वयेन ॥ पक्वंघृतंगुल्महृदामयेषुहृच्छासकेजावरवातरोगे ॥ ३२ ॥ ॥ अथसन्निपातजः ॥ ॥ त्रिधात्रिदोषजनितेपिहृदामयेहिसर्वाणिलिंगानिचलक्षविद्वान् ॥ पार्थस्यवल्कलजकल्करसेनसिद्धंसेवेद्घृतंत्रिभवहृद्रुजिनित्यमेव ॥ ३३ ॥ अन्यः ॥ गजबलासबलार्जुनसंभवनैरपिजलैररुणामधुकस्यवै ॥ बहुलपेषितकल्कयुतंभिषग्घृतमिदंम्यारिसाध्यचपाययेत् ॥ ३४ ॥ हृदयरुक्क्षयशूलगदेतथारुधिरपित्तगदेक्षतजेपिवा ॥ अपिसमीरणरक्तगदेथवाकसनकेपिभिजातउरोगदे ॥ ३५ ॥ ॥ अथकृमिजः ॥ ॥ त्रिदोषजेयोहृदयस्यरोगेमूत्रंवसिलद्वीरगुडांश्चभुंजी

न्॥ ममैकदेशे खलु तस्य ग्रंथिः संजायते क्लेदरस
स्रवतत्र॥३६॥ संगच्छते ऽस्मिंश्च रसे कृमीणां समु
द्भवस्तत्र भवंति चैते॥ उत्क्लेदनिष्ठीवनतोदशूला
स्तमोरुचिर्वेपथुशोषरोगाः॥३७॥ श्यावाक्षिता
चापि भवंति तत्र मूत्रं विडंगामय संयुतंच॥ स्निग्धं
कृमिघ्नं पिशिताशनंच सुगंधिभिर्वालवणैश्च भो
ज्यम्॥३८॥ सपटुजीरकशर्करयोगकैरपि विडंग
धनाम्लघृतैस्तथा॥ समशिलैर्हृदयस्य कृमोग-
णाः परिपतंति विचित्रविरूपिणः॥३९॥ अपिज
यान्न भवंत विडंगकं कृमिरुजि प्रथितं लिखितंचय
त्॥ तदखिलं खलु पथ्यमसौ भजेत् कृमिकुलै-
र्विकलः सबलो भवेत्॥४०॥ ॥अथोरोग्रहः
॥ ॥अभिष्यंदिक्षुधन्नरूक्षातिपूतिपलाद्याश-
नान्मासमम्लं यदेव॥ यकृत्प्लीहयर्द्धित्व दासंगत
म्वाप्युरोभस्तमित्थंच कुक्षौ यदा तदा॥४१॥ कफो
मारुतेनापि युक्तः करोति ततस्तंभपीडाश्च जंघोरु
मध्ये॥ तयारौक्ष्यमुच्चैश्च संस्पर्शरुग्वा भवेच्चापि
हृत्कुक्षिशोथस्तदा वा॥४२॥ तथाध्मानतंद्रारु
चिः शूलरोगा निरोधो विशः स्याच्च मूत्रस्य तद्वत्॥
प्रकुर्याच्च संस्वेदनं तत्र युक्त्या शिरोमोक्षणं पाचु-

र्यातिप्रदानम् ॥ ४३ ॥ क्रमाल्लंघनं पुत्रजीवस्यशि-ग्रोस्तथास्तूर्यकावर्तकस्यापिनित्यम् ॥ बलावार सन्धैकमेतेषुचोष्णांनृदृत्यंचकेनापितद्ध्नपतूनाम् ॥ ४४ ॥ पिवेद्धिंगुनासद्गुडैः कल्कितंवैयथालाभमन्त्र प्रकामंमनुष्यः ॥ त्रिवृत्संयुतंवाप्युरोभ्रस्तसुत्रैः पृथक्संप्रकुर्याद्गुदंदूरमाशु ॥ ४५ ॥ ॥ योगद्वयम् ॥ ॥ अन्यः ॥ ॥ चव्याम्लवेतसजवाग्रजरामठानांचूर्णंसचित्रमथतैलकरासवेर्वा ॥ पीतंनिहंतिहृदयग्रहमाशुनित्यमत्रारनालसहितंचसदामनुष्यः ॥ ४६ ॥ ॥ अस्योपद्रवाः ॥ ॥ ॥ चक्रोअःसादः शोषद्दहलासमूर्छावक्त्राश्वांरोचकभ्रांतिकासाः ॥ वन्हेर्मांद्यंश्वासरोधोपियोरख्यातास्त्वैतेद्दद्रुजोविघ्नभूताः ॥ ४७ ॥ ॥ अथसाध्यलक्षणम् ॥ ॥ उपद्रवाणांयुगेप प्रवृत्तिः कुर्यादधोवायुनिरोधमुच्चैः ॥ तदैवहृद्रोगमुशंतिवैद्यास्त्वसाध्यमेवंत्रिभवंविशेषात् ॥ ४८ ॥ ॥ अथनिवृत्तिः ॥ ॥ आटोपकोद्गारनिवृत्तिपूर्वमपानवायोश्चप्रवर्तनंचेत् ॥ विकीटवांतिस्तुहृदामयस्यनिवृत्तिरेषाकथितामुनींद्रैः ॥ ४९ जयंतितेवैगुरवोमदीयायदंघ्रिरक्तांबुजषट्पदेन

॥ श्रीकाशिनाथाख्यभिषग्वरेण कृतं च हृद्रोगचिकित्सितं द्राक् ॥ ५०॥ ॥ इति श्रीगुरुचरणारविंदचंचरीकचतुर्वेदिकाशीनाथकृतायां चिकित्साक्रमकल्पवल्ल्यां हृद्रोगाधिकारेण नवविधहृद्रोगचिकित्सापरागंधिलस्तबकः पंचविंशतिः॥ २५॥ ॥ ॥ ॥ श्रीसीतारामचंद्रो जयते॥ ॥ श्रीगोपालकृष्णो जयते॥ ॥ ७॥ ॥ ७॥ ॥

अथ मूत्रकृच्छ्राधिकारः॥ ॥ तातं निजं मातृयुगं गुरुं स्वं धन्वंतरिं चापि प्रणम्य कुर्वे॥ सम्यक् चिकित्सां खलु मूत्रकृच्छ्रगदस्य वैद्यो द्विजकाशिनाथः ॥ १॥ ॥

तत्रतावन्निदानम्॥ ॥रूक्षाद्भोज्यान्मद्यपाना-
द्ध्यवायात्सद्यस्तद्वत्पृष्ठयानानिनिरोधात्॥ तीक्ष्णाद्यो
गान्मत्स्यभोज्यादजीर्णाद्व्यायामाद्वाजायते मूत्र
कृच्छ्रम्॥२॥ ॥अथपूर्वरूपम्॥ ॥दाहोभ
वेच्चिमिचिमायनमप्यसत्वंजायेन्मणेरधरतोपिच
मेहनान्ते॥ अस्मिन्भविष्यतिचकोष्णतरश्चरेत्तः पा-
लंव्रजेद्ध्वलिशोफयुतंचजाड्यम्॥३॥ यदिपृथ
कुसकलेतिमलान्यलंप्रकुपितानिनिदानमुपेत्यवै॥भ
वतिबस्तिगतानिनिपीडयन्त्यपितदाखलुमूत्रगकृ
च्छ्रता॥४॥ अथोपशयः ॥मर्दनंचखलुधाव
नंतथास्वेदनंचबहुधाप्ररोपणम्॥ मूत्रकृच्छ्रशमनंवि
फलाभिः काशगोक्षुरकुशेक्षुपयोभिः॥५॥ अथ
प्रतीकारः॥ ॥एलाकुंकुममागधीसुलवणैर्मेर्वारुबी
जैःसमंचूर्णंतंदुलवारिणाविलुलितंपाषाणभेदस्यवै॥
पीत्वातज्जनुमिश्रितंस्फमानिमान्मूत्रस्यकृच्छ्रंजयेत्प्र
स्पद्धांखलुमक्षुपुनापिविजितोमृत्युंजयेद्दुस्तरम्॥६
॥ अन्ययोगः ॥त्रिकंटकाश्मभेददर्भका-
सयासधात्रिभिः कृतंकषायमुत्तमंसराजवृक्षचास
कैः॥ समाक्षिकंनिपीतमाशुनाशयेद्ध्रुवंतथाप्रकृ
तमूत्रकृच्छ्रकंमहाश्मरींचशर्करम्॥७॥ अन्यः॥

अयोरजः सूक्ष्मतरंच माक्षिकैर्निहंति पीतं खलु मूत्रकृच्छ्रक म् ॥ अपानिमृत्योरपि येन तस्य चेगुडान्वितं चाथ पयः कदूष्णकं कम् ॥ ८ ॥ योगद्वयम् ॥ गुडान्वितं क्षीरमलस्त्वकामतः पिबेत्सखंडं च नरः प्रभातके ॥ समूत्रकृच्छ्राण्यखिलानि हंति च श्रीकृष्णतात्पाभिषजो वदंति चे ॥ ९ ॥ अन्यः ॥ गुडामलं तृष्णमश्रमघ्नं संतर्पणं लोहितपित्तदाहान् ॥ निहंति शूलानपि मूत्रकृच्छ्राण्याशु प्रभुक्तं मुनयो वदंति ॥ १० ॥ अन्यः ॥ सपादशाणमात्रया सितान्वितोऽथवाश्मज प्रभक्षितः सदा जनैर्निहंति मूत्रकृच्छ्रकम् ॥ ११ ॥ पलैकमस्तु संयुतः सितोपलासमन्वितः हरेच्च मूत्रकृच्छ्रकं स कल्कितं तु द्राक्षया ॥ १२ ॥ अन्यः ॥ गोकंटकं सकलपुष्पदलांघ्रिपक्वं पीतं च माक्षिकसितासहितं त्वरेण ॥ कृच्छ्राणि यानि खलु मूत्रभवानि तानि सद्यो निहंति च तथोष्णसमीरणं च ॥ १३ ॥ अन्यः ॥ त्रिफलाकल्कितकोलं लवणजलेन ॥ पीतं हंति च मूत्रात् कृच्छ्रमनेन ॥ १४ ॥ ॥ अथ संभामिस्त्वावत्तभवा तजः ॥ ॥ वातानीत्ररुजा भवंति नितरां मेढ्रे पिबस्तौ तथा प्रायो वंक्षणगाश्च मूत्रयति चाशल्येन युक्तस्तदा ॥ ॥ त्रिकंटकंटक ॥ पीयूषामलरामकंदकजगत्काथोश्वगंधाकृतः पीतो हंति च माक्षिकेण सकलान्पूर्वोक्तरोगानलम् ॥ १५ ॥ अन्यः ॥ पुनर्नवाशतावरीकुरंडवृश्चिकाश्मभिद्विपंचमूलकाद्दलायवैः कुलित्थकैस्तथा ॥ शृतं वराहभल्लुजावसाघृतैः सतैलकं स कल्कितं तु तेन दारुसैंधवादिकं भजेत् ॥ १६ ॥ सवातमूत्रकृच्छ्रकं निहंति चापि सत्वरं सशूलकं च मात्रया पुनर्घृ-

नादिभिः सदा ॥१७॥ ॥अथपित्तमूत्रकृच्छ्रम् ॥ ॥
पीतंरक्तसमन्वितंचसरुजंदाहेनमुक्तंमुहुः कृच्छ्रान्मूत्रय
तीहपित्तजनितेप्रायः पुमान्सेवयेत् ॥ द्राक्षाकाशकुशोत्क-
दर्भशर जान् मूलांश्चसंक्वाथ्यवैतन्नीरंचासितान्वितंप्रशम
येन्मूत्रेतिकृच्छ्रंतदा ॥१८॥ अस्यप्रतीकारः ॥सेकाव
गाहशिशिरास्तनथाप्रदेहाग्रैष्मोविधिर्बहुलबस्तिपयोवि
काराः ॥ इक्षूरसाघनविदारियुताश्चहारहनादयः खलुह
रंतिचपित्तकृच्छ्रम् ॥१९॥ ॥अथकफकृच्छ्रम्॥ ॥
बस्तौलिंगेगौरवंशोथमेवंपिच्छंमूत्रंश्लेष्मणामूत्रकृच्छ्रे॥
क्षारैश्चोष्णतीव्रयोगान्नपानंस्वेदंवांतंवानिरूहंप्रकुर्यात्॥
२०॥ प्रतीकारः ॥यवान्नभोज्यंमथितंपिबेद्वातिक्तौष-
धीमिश्रितनैलमत्रा॥ अभ्यंजयेद्वोजलमिश्रितंवा पिबेच्चमोचा
स्वरसंक्रमद्येः॥२१॥ अन्यः ॥त्रुटिंसूक्ष्मपिष्टांचमोचारसे
नपिबेन्मूत्रकृच्छ्रेकफोत्थेविशेषात्॥ हरेद्गौरवंशोथकृच्छ्रा
णिसद्योभिषग्भूपधुर्यावदंतीप्रकामम्॥२२॥ ॥अथवात
पित्तकृच्छ्रम्॥ ॥सशूलंसदाहंचपीताल्पमल्पंत्यजेद्वातपि
त्तोत्थकृच्छ्रेचमूत्रम्॥ स्वदंष्ट्रातदापाणितांगोपयोभिःपिबे
त्त्रापुसीबीजमुक्तांतथैव॥२३॥ प्रतीकारः ॥ ऐर्वारुबीजैर्म
धुकेनदार्व्यादिङ्मूलिकाभिः क्वथितः कषायः॥ पेयस्तथातंडु
लवारिणैवसवातपित्तोद्भवमूत्रकृच्छ्रे॥२४॥ ॥अथवात
कफाधिकम्॥ ॥यदामूत्रयेत्सिच्छिलंस्वल्पमल्पंतदावात-
युक्तंभवेच्छ्लेष्मकृच्छ्रम्॥ शतावृापुनर्भूस्तगंधर्वहस्तप्रवाला-

न्पिबेत्तंदुलांबुप्रयुक्तान्॥ २५॥ प्रतीकारः ॥त्रिकटुफ लत्रयगुग्गुलुमुस्तागोक्षुरनीरसमाक्षिकपिष्ठा॥ हरतिमे हमलबद्धकृच्छ्रंवातकफप्रभवंप्रदरंवा॥२६॥ ॥अथपित्त कफकृच्छ्रम्॥ ॥प्रायःपित्तकफोद्भवेतुदवथुस्वेदोगुरुत्वंतथा शोथश्चात्रचराजवृक्षधनिकापाषाणभेदेरपि॥ क्वाथश्चाशुदुरा लभाशतजटापथ्यादिभिःसाधितःपीनस्तूर्णमपाकरोतिनि तरांमूत्रेतिकृच्छ्रंतथा॥२७॥ ॥अथमूत्रकृच्छ्रांतकोरसः॥ मृतसूततान्त्रसमशिखिसतुत्थंचसकलंदिनेकंसंमर्द्यशतव रजटानीरनिकरेः॥दृढंगोलंकृत्वाकटुकवरतेलेतुविपच्येद्भिष ग्यामगुंजायुगमितमिदंमाक्षिकयुतम्॥२८॥ बिल्वमूलतुल सीदलनीरेः कर्षमानतुलितैःतिलपिष्टैः॥ जीर्णमद्यनिकैरर थवास्यैसेवनाद्व्रजतिपित्तकफोत्थम्॥२९॥रसोमूत्रकृच्छ्रांत कोयंविशेषाद्धरेत्पित्तयुक्तंकफोत्थंचकृच्छ्रम्॥ तथात्वानुपानं विशेषेणमद्यैरथोवापिपिण्याकबिल्वादिनीरेः॥३०॥ ॥अ थसन्निपातजम्॥ ॥सर्वरूपयुतसन्निपातजंमूत्रकृच्छ्रमति दारुणंतदा॥ धावनीमधुकरक्तयष्टिकाःपाचनायचकलिंगय ष्टिकाः॥३१॥ अन्यः ॥कूष्मांडनीरसहशर्कराभिःपीतंप्रभा तेचनरेणशीघ्रम्॥त्रिदोषजंकृच्छ्रगमंतुमूत्रकृच्छ्रंजयेदत्र नकापिचिंता॥३२॥ ॥अथघातजम्॥ ॥शल्येनस्रोतस्य पिमूत्रवाहिष्वलंतुतेनाभिहतेषुतेषु॥ वातस्यकृच्छ्रेणसमान लिंगमाघातजंकृच्छ्रमुशंतिवेद्याः॥३३॥ प्रतीकारः॥ इरामि रांवासितयाचसर्पिर्धात्रीरसंचेक्षुरसंसिताभिः॥पिबेत्सरक्ते

खलुमाक्षिकेणकृच्छ्रंतथावातभवेविशेषात्॥३४॥ इतिच त्वारोयोगाः॥ अन्यः॥ बृहद्दलत्रुटियक्षगडूचिकादरनृपद्रु मनिंबकषायके॥ कटुजवल्कलसंधुनसाधितंविजयतेमधुना शुजवद्रवम्॥३५॥ ॥अथपुरीषजाः॥ ॥सकृत्प्रतीघात वशाच्चवायुर्यदातिवैगुण्यमलंप्रयाति॥साध्मानवातप्रभवंच शूलंमूत्रस्यकृच्छ्रेकुरुतेविशेषात्॥३६॥ प्रतीकारः॥पुरी षजेस्वेदनबस्तयःस्युर्विमर्दनंगोक्षुरबीजगजस्य॥ शृतस्यनीर स्यजवाग्रजेनचशकृद्भवंकृच्छ्रतमंहरेच्चवै॥३७॥ ॥अथशु क्रजम्॥ ॥शुक्रेचदोषापहतेचमूत्रमार्गेविशेषेणविधारितापि॥कृच्छ्रेणशुक्रपरिमूत्रयेत्सोबस्तौचलिंगेखलुशूलयुक्तः॥ ३८॥ प्रतीकारः॥लेल्यांशिलाजतुसमाक्षिकमत्रसेलाबल्ली कटुग्धयुलहव्यमलंपिबेद्वा॥मूत्रस्यदोषपरिशोधनमेवशुक्रदो षापहंप्रमदयारमणंचवृष्ये॥३९॥ ॥अथशुक्राश्मरीजम्॥ यदाश्मरीहेतुभवंतिमूत्रकृच्छ्रंतदाशर्करयावगाढम्॥भवेत्तथै वारुजबीजकल्कंधान्याम्लयुक्तंलवणेनसेवेत्॥४०॥ अन्यः॥ विगोध्याश्वदंष्ट्राभिसिंकांजिकेनफलाद्यास्त्रपुष्पोतथैवारुबी जैः॥प्रलिप्याशुबस्तौचमूत्रस्यकुर्याद्दनिष्पंदमत्रक्रियाशस्त्र जाता॥४१॥ ॥अथशर्कराजम्॥ ॥यदापच्यमानाश्मरी पित्तकोपात्तथावायुनाशोष्यमाणोक्षरंती॥चिकित्स्योविशेषे णसामान्ययोगैर्विमुक्ताचसाशर्कराश्लेष्मसंघात्॥४२॥ अन्यः ॥निर्दग्धिकायाःस्वरसंमधूकैःफलत्रयाणामपिकोलयुक्तम्॥ कल्कंपिबेद्वालवणीकृतेननीरेणवाशार्करमूत्रकृच्छ्रे॥४३॥

अथ मूत्रनिरोधजम्॥ ॥विषमपदतलादिन्यासतो मूत्रधारा धमनिततिनिरोधाद्वैकृतं याति जंतोः॥ यदि भवति विशेषान्मूत्रकृच्छ्रं च तत्र शशितिलजस्तैलैश्चापि निर्गुंडिनीरैः॥ ५४॥ अथ च बहुविलेपात्सिञ्चिलांतां शलाकां प्रथितगुणगणश्रीवैद्यभूणाज्ञयैव॥ इह च किल विदध्यान्मेद्रकारध्ये विशेषाद्धरमथ च नाभेः पीडयेन्मूत्ररोधे॥ ५५॥ अन्यः॥ अथ शीतजलेन चंदनं वा कतकं वा कटुकारसं पिबेद्वा॥ खलु मूत्रनिरोधकृच्छ्रं शान्त्यै वरवैद्याः प्रवदंति सत्वरं सः॥ ५६॥ ॥अथ सरक्तकृच्छ्रम्॥ ॥ कटुपट्वम्लरसैश्च पित्तकोपजनकैर्गौरलशवलाप्रसंगैः॥ रुधिरकृच्छ्रतमेन मूत्रगन्धेन्मदिरा श्रुष्णजलेन सेवयेत्सः॥ ५७॥ ॥ अथ श्रमजम्॥ ॥श्रमाद्व्यायामतश्चापि पित्तं पक्वाशये गतम्॥ सरक्तं मूत्रकृच्छ्रं च धारोष्णं तेन जायते॥ ५८। अरुणचंदनचंदनयष्टिकामधुकगोस्तनिकाससिताशिना॥ अरुणतंदुलवारिपरिप्लुता रुधिरकृच्छ्रमलं हरते सदा॥ ५९॥ अन्यः ॥ बालककुष्ठधान्याकयष्टिकोशीरपाचितम्॥ पयस्तु मधुरं शीतं हंति कृच्छ्रं च रक्तजम्॥ ६०॥ ॥अथ मूत्राघात॥ ॥मूत्राघातसमुद्भवादिविविधैर्दोषैर्नृणां जायते मूत्राघातगदस्त्रयोदशविधस्तावच्च वातादिका॥ ख्याता कुंडलिका च रुक्षमशितां वार्योविघातादपि वायुर्बस्तिगतः सरुक् निविशते मूत्रे यदा वेगुणः॥ ६१॥ यावत्कुंडलिकाकृतिः खलु भवेन्मूत्राल्पमल्पं सरुक् तावच्चापि प्रवर्तते शतमिह क्वाथश्च वेसांप्रतम्॥ अश्लाघाः परिपाययेदपि ध्रुवं वै काकजंघायुतं मूत्रारोधहरं च तद्वदुदितं तक्रेश्च रुद्राग्निकम्॥ ६२॥

योगद्वयम्॥ ॥अथमूत्रकृच्छ्रमूत्राघातविशेषः॥ ॥यंत्रकृच्छ्रमधिकंतन्मूत्रकृच्छ्रमेवखलुतच्चनयत्र॥ मूत्रघातरुजमातुरलंतन्मूत्रबंधमधिकेयदितत्र॥ ५३॥ प्रतीकारः ॥वरुणस्यवर्षिणसारलिताशनैःशनैर्मंद्रमुखांतरस्था॥ मूत्रस्यचाघातरुजंनिहंतिमूत्रप्रवृत्तिंकुरुतेयथावत्॥ ५४॥ आध्मानपूर्वंगुदबस्तिरोधंविधायवायुश्चचलोन्नतानाम्॥ विण्मूत्रमार्गस्यचरोधनीयामष्ठीलिकांवैकुरुतेचतत्र॥ ५५॥ प्रतीकारः ॥पाषाणभेदस्यरसोगुडेनसकांजिकोवैनिशयासमेनः॥ पीतोश्मरीमूत्ररुजंनिहंतिवापाटलाभस्मशृतांम्लधान्यम्॥ ५६॥ योगद्वयम् ॥अथबस्तिपालवेगः॥ ॥मूत्रस्यवेगंखलुबस्तिमध्येविधारयेन्मूढतरोमनुष्यः॥ रुणद्धितद्वस्तिगतस्तुवायुर्बस्तेर्मुखंकुक्षिनिपीडितंच॥ ५७॥ भवेन्मूत्रवायोश्चसंगस्तुयेनसवैवायुबस्तिस्तुकृच्छ्रेणसाध्यः॥ पिबेद्वार्हिचूडाजटांदुग्धभुक्सलदातंडुलानांजलैर्निरूपमेव॥ ५८॥ अन्यः ॥ बलेकुंकुमंकल्कितंक्षौद्रयुक्तंनिशाशूषितंवैप्रभातेषुपीनम्॥ यदाकर्षमेकंतदावायुबस्तिप्रकामंप्रणश्येन्नतत्रास्तिचित्रम्॥ ५९॥ ॥अथमूत्रातीतः॥ ॥ व्यथितमूत्रमलंयदिधार्यतेनचलथात्वरयानुप्रवर्तते॥ अपिचमेहनतोल्पतरंक्वचिद्व्रजतिनोव्रजतीत्यप्रभुजगुः॥ ६०॥ मूत्रातीतरुजंचतत्रमतिमान्बोधाययातांधिकंहव्यस्नेहगवांरसैश्चितमप्रायःपिबेन्नित्यशः॥ तन्मूत्रंचभिनत्तिसंचिलतमेद्राक्सर्वदासेवितमायुर्वेदविदोवदंतिचपुनर्योगांतरंब्रूमहे॥ ६१॥ त्रिकंटकंशतावरीपयःस्तृणाग्निमूलकैः शृतं

गुडेनसंयुतंघृतान्वितंपयः समम्॥ रुबूकमूलसम्भृतंच मूत्र-कृच्छ्रकादिषुप्रयोजयेच्चपानमस्य मूत्ररोधशांतये॥ ६२॥

॥ ॥अथमूत्रजठरम्॥ ॥कदाप्युदावर्तजहेतुमूत्ररोधेत्व पानः कुपितोदरस्थ॥ प्रपूरयेन्मूत्रचयेननाभेरधस्ततोबस्तिनिरोधरुग्भ्याम्॥ ६३॥ मूत्रोदरंतत्खलु पूर्वयोगयोगेनवैद्योनिपुणोजयेच्च॥ तथाश्मककर्कधुपयोनुपानैर्विरेचयेद्वाश्रिफलाकषायैः॥ ६४॥ अथमूत्रोत्सर्गः॥ ॥बस्तौनालेवामणौयस्यमूत्रं प्रायः सज्जेन्मूत्रितः शक्तिमिस्थः॥ अल्पंचाल्पंनिःसरेन्मूत्रकोशाद्वारंवारंसार्यमाणंचयत्नात्॥ ६५॥ सरुजंनिरुजंवापिमुहुरल्पंप्रवर्तते॥ मूत्रंविगुणवायोस्तन्मूत्रोत्संगउदाहृतः॥ ६६॥ प्रतीकारः ॥शिलाभेदगंधर्वदर्भास्थिराभिः पुनर्ध्वस्तनीरेणसिद्धंचतैलम्॥ घृतंवापयोमूत्रकृच्छ्रादिरोगेनुपानंप्रदिष्टंभिषग्भूपधुर्यैः॥ ६७॥ ॥अथमूत्रक्षयः॥ ॥रुक्षस्यचश्रांततनोर्हिवस्तिस्थिताबुभौपित्तसमीरणौच॥ मूत्रक्षयंवैकुरुतःप्रकामंरुग्दाहयुक्तंकिलतन्निलयम्॥ ६८॥ प्रतीकारः॥ वाराहिकाशालिशिरीषकानांजम्ब्वाष्टिकापाटलिकाविदारु॥ गोकंटकारुष्करदर्भकासपाषाणभेदादिकमोरटानाम्॥ ६९॥ समानिमूलानिनिगृह्यतेषांसंक्वाथ्यतस्मिन्खलुपादहीने॥ दत्वाघृतंभस्थमितंप्रपाचेत्कल्कान्प्रदायाव्यथवक्ष्यमाणान्॥ ७०॥ नीलोत्पलस्यापिशिलाजतोश्चकूष्मांडबीजस्यचत्रापुसस्य॥ ऐर्वारुबीजस्यचतद्वदेवकाकोलिकायाअपिकल्कयुक्तम्॥ ७१॥ भद्रावहंसिद्धघृतंचनाम्नाभुक्तंक्षयंमूत्रजमाशुहंति॥ तयो

ष्णवातंविनिहंतिशीघ्रंयथोक्तकालेधुचपीतमात्रम्॥७२॥
॥ अथमूत्रग्रंथिः॥ ॥अंतर्बस्तिमुखेस्यवृत्तसरुजोग्रंथि
स्थिरोजायतेश्मर्येवःग्रथित स्त्वयैवसहसामूत्रस्यग्रंथिस्तुसः
॥अश्मर्यास्तुकमेणचिह्नितरुदितातस्यत्वराकीर्तितापेयंतत्रशि
लाप्रभेदमसकृद्दुग्धेनधृष्टासितान्॥७३॥ ॥अथमूत्रशु
क्रम्॥ ॥जायायातोमूत्रितस्याशुशुक्रंवायुःकृत्वाचोद्धृतंते
ननञ्च॥प्राक्पश्चाद्वामूत्रितस्यापिभस्मनीरंयद्वापतेन्मूत्रशु
क्रे॥७४॥ प्रतीकारः॥एलाशिलापत्तुकणाप्रभवंचचूर्णंपाषा
णभेदंसलिलयासहतंदुलानाम्॥नीरेणपीतमपहंतिचमूत्रशुक्रं
सद्योवदंतिभिषजोनहितत्रचित्रम्॥७५॥ ॥अथोष्णवातः
॥ ॥व्यायामधर्माद्विभिरध्ववश्यंपित्तंचबस्तावनिलावृतंचेत्॥
पेदूगुदंबस्तिमलंदहत्वाविस्रावयेन्मूत्रसमंसरक्तम्॥७६॥हारि
द्रमूत्रंरुधिरंतथावकृच्छ्रान्मुहुर्वाप्यथमस्यजंतोः॥तमुष्णवा
तंप्रवदंतिवैद्यादद्यबुनातत्रगुडंपिबेच्च॥७७॥ ॥अथमूत्र
सारः॥ ॥पित्तंकफोवापिसमीरणेनसार्द्धंभवेत्तांचनतोतिकृ
च्छ्रात्॥पीतंघनंश्वेतमतीवरक्तंचूर्णेनशंखस्यसमंचमूत्रम्॥
७८॥शुक्रंचनानाविधवर्णयुक्तंसेवेत्सदाहंसतुमूत्रसारः॥एरंड
गोकंटकसिंहवक्रकणात्रुटीनामधुकेनसार्द्धम्॥ ७९॥ क्वाथंपि
बेच्छैलजतुप्रगाढंपाषाणभेदेनसमेनसिद्धम्॥समूत्रकृच्छ्रंख
लुमूत्रसारंपीतंव्यपोहतिनतत्रचित्रम्॥८०॥ ॥विशेषकम्
॥ ॥अथविड्विघातः॥ ॥रूक्षस्यदुर्बलतनोर्यदिवोर्ध्वनीतं
स्रोतोनुपद्येतजनस्ययस्य॥ मूत्रस्यविट्तंवरवैद्यधुर्याविड्घात

कृच्छ्रं तु नमादिशन्ति ॥८३॥ प्रतीकारः ॥ निरूहणं चात्र कषायपानमुक्तं चयन्मूत्रनिरोधहारी ॥ नत्स्थानसंमर्द्दनस्वेदनानि कुर्याद्भिषक्चंक्रमणावधिप्राक् ॥८४॥ तथाश्वकारोहणधावनानि हितानि तद्वच्छकटावरोहैः॥ फलत्रिककाथमलंगुडेन क्षीरेण पेयं च विशोविघाते॥८५॥ अथ बस्तिकुंडलम् ॥ स लंघनायासहृताध्वयानैस्तथाभिधानाच्च प्रपीडनाद्वा ॥ उद्वृत्तबस्तिस्तु निजाशयाच्चेद्गर्भेण तुल्यो भवति स्थविष्ठः ॥८६॥ स्पंदनशूलेन च दाहयुक्तो बिंदूश्च बिंदूश्च स्रवेत्सरुक्सः॥ संपीडनाद्वाथ प्रवाहणाद्वा धारांस्मजेत्स्तभयुतो मनुष्यः॥८७॥ उद्वेष्टनार्तिः किल बस्तिपूर्वरोगोस्ति तस्यैव च कुंडलाख्यः॥ सशस्त्रकाकोलसमस्तु तत्र वायुः प्रभुः पित्तयुतोत्र दाहः॥८८॥ विवर्णतावापि भवेच्च मूत्रे कफाद्धनस्निग्धसितानि मूत्रे॥ वर्णानि शोथोप्यति गौरवं च दुर्बोधमाहुः खलु मूढवैद्यैः ॥८९॥ प्रतीकारः ॥ स्नेहेन सस्वेद्य पुनश्च तैलविरेचनं चात्र गदे विशेषात् ॥ दद्यात्तथा चोत्तरबस्तिमाशु यद्वा पुरस्तीति विचार्य सम्यक् ॥९०॥ अन्यः ॥ सपाटलादिंडुकनिंबरात्रित्रिकंटकैलात्वकुपत्रकाणाम्॥ क्वाथः फलानां त्रितयैर्गुडेन पीतो निहन्यात्किल कुंडलाख्यम्॥९१॥ अथ रक्तबिंदुः ॥ स्त्रीणां प्रसंगाधिकतो नरस्य सासिच्यते शोणितमेव यस्य ॥ चेन्मैथुनस्यापरमे च रक्तबिंदुः प्रवृद्धैर्गदितस्तु वैद्यैः ॥९२॥ प्रतीकारः ॥ कुशातुपर्णीद्वयगोस्तनीनां कणाविशालात्रिफलावलानाम्॥ कटंकटेरीमधुकामलानां क्वाथैश्च कल्कैश्च घृतादिकं च॥ ९३॥ द्रोणे

नदुग्धेनजलेनतद्वदिक्षुप्रभूतेनरसेनसिद्धम् ॥ प्रस्थेनखंडेनच वंशजेनसंमिश्र्यभुंजीतयथावलञ्च ॥ ९४ ॥ सरक्तबिंदुश्चसग्रंथि रेता सश्लेष्मरेताश्चसवातरेताः ॥ यावापिवन्ध्यात्यवलापिसापि रूःलाकृतानांप्रभवायसेवेत् ॥ ९५ ॥ येयोनिलिंगप्रभवाश्चरोगा इसग्भवाकृच्छ्रपुरःसराश्चेह ॥ चित्रादिकंतत्रगदेष्ववश्यं मूत्रा दिकृच्छ्रेषुचिनविशेषात् ॥ ९६ ॥ अथास्योपद्रवाः ॥ स्तंभी इनवेपथुशूलमूर्च्छादाहाग्निकार्श्यरुधिरस्रुतिश्च ॥ अवंतुदा वर्तगुरुत्वयुक्तात्कपद्रवाध्मानपुरःसरादिक् ॥ ९७ ॥ अथा साध्यलक्षणम् ॥ कफनिबद्धविलोभवतीह्यवेद्यदितुवस्तिर लंबकुमायुना ॥ समसुदीर्णतरोनहिसिद्ध्यति नचतथाखलु कुंडलिकीकृतः ॥ ९८ ॥ अविश्रांतबिलःपरिसाध्यतेनविश्रांतवि लःपरिसाध्यते ॥ अविश्रांतमलंयदिमूत्र्यतेत्वविश्रांतमलंयु वनिष्यते ॥ ९९ ॥ इतिमूत्रगदस्यनिवेदिताविगतिरस्यतनोः खलुदूरतः ॥ यदिशोथनिवृत्तिरलंतथास्थापिचकुक्षिमृदुत्वम लंयथा ॥ १०० ॥ आयुर्वेदविदोजयंतुसततंश्रीतातपादांबुजः म्प्रादुर्भूतकृपाछटापरिचितस्नेहोत्करःशास्त्रजाःयज्ज्ञात्वा खलुकाशिनाथभिषजायस्यौरसेनध्रुवम् कृतामूत्रगदस्यकृच्छ्र सहितस्यालं चिकित्सास्फुटम् ॥ १०१ ॥ ॥ इतिश्रीमद्गु रुपादाब्जचंचरिकेणचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रम कल्पवल्ल्यांमूत्रकृच्छ्राधिकारस्तबकः ॥ ॥ ॥ ॥

अथाश्मर्यधिकारः ॥ ॥ नत्वानाथपदारविंदयुगुलंनंद स्वाचलेद्यागमं काशीनाथभिषग्वरः प्रकुरुतेप्रायोश्मरीलक्ष

णाम् ॥ उक्तंयच्चचिकित्सितंस्कविदितंरूपंनिदानादिकंप्राग्ररू
पोपशमादिकंसमतिभिः सद्योविलोक्यस्फुटम् ॥ १ ॥ अथ
निदानम् ॥ पित्तंवायुः कफोवायदित्वबहुधावस्तिगंशक्रमाशु
मूत्रंतहत्वखलुनिखिलमदश्शोषयेद्यत्रनित्यम् ॥ तंरोगंवैद्यधुर्या
रुजदलनपराश्चाश्मरीप्राहुराख्यास्तस्याः पूर्वंतुरूपंनिखिलमपि
तथातत्स्वरूपादिवक्ष्ये ॥ २ ॥ अथपूर्वरूपम् ॥ वस्त्याध्मा
नंतदास्यादपिचखलुयदातस्यचासन्नदेशेव्यापीडावस्तगंधप्रस
रतिंचतथामूत्रकृच्छ्रंचमूत्रे ॥ यत्रस्यात्पूर्वरूपंनिगदितममलंचा
श्मरीशर्कराणांवेगस्तज्ज्वरस्यप्रभवतिसहसाचारुचिश्चात्रनि
त्यम् ॥ ३ ॥ अथरूपम् ॥ रुग्नाभिवस्तेश्शिरसीहलिंगदेशे
विशीर्णयदिमूत्रधारम् ॥ अच्छंचगोमेदनिभंक्षतास्त्रसमंस-
मायासरुजःस्रवेच्चेत् ॥ ४ ॥ मार्गावरोधंकुरुतेश्मरीसागोरो
चनावारिधिफेणतुल्या ॥ गोमेदकाभाचभवेच्चपित्तात्कफाच्च
वाताच्चत्रिभिर्विचित्रा ॥ ५ ॥ अथोपशमः ॥ श्यामाकको-
द्रवयवावरषष्ठिकानांगोधूमजीर्णसिततंदुलकादकीनाम् ॥
कौलम्यकौंचपललैरपिपथ्यमन्नकुर्याच्चवातहरद्रव्यविशेषस
घैः ॥ ६ ॥ अथप्रतीकारः ॥ त्रिकंटबीजसंभवंरजःसमंतुमा
क्षिकैः ॥ अजापयोन्वितंपिबेच्चसप्तधाश्मरीप्रणुत् ॥ ७ ॥ अ-
न्यः ॥ वरुणवल्कलकल्ककषायकैर्गुडयुतैरपिपीततरैरलम्
॥ पततिचाश्मरिकाशकलीकृताद्रुतमलंविद्रुताऽविद्रुताथवा
॥ ८ ॥ अन्यः ॥ शृंगबेरकालीयकपथ्यासारकैर्यवभवेंदधि
मंडम् ॥ पीतमात्रमपिहंतिविशेषादश्मरींहढनमाप्रपिशीघ्रम्

॥९॥ अन्यः ॥पलद्वयं कुलत्थके शृतं च बाणपुंखजम्॥ षट्
ह्रिमाषसंमितं च पीतमश्मरीं प्रणुत् ॥१०॥ अथरसः ॥अजा
क्षीरैः पाच्यमृतमपि च ताम्रगतरसं समं सूतगंधसममपि च से
फालिकरसैः॥ दिनमर्धं गालीकृतमपि च पाच्यं तु सकलयया
र्धयामं निखिलसिकतांतर्गतमलम्॥११॥ त्रिविक्रमोरसो
ध्रुवं द्विगुंजसंमितोशितः ॥ निघृष्यमातुलिंगजैर्जटाजलैश्च
नित्यशः ॥१२॥ निपातयेत्तथाश्मरीं च मासमात्रपानतः ॥त्रिवि
क्रमानुपानमेवसर्वथा प्रयोजितम्॥१३॥ अन्यः ॥तिलाना
मपामार्गजं कारवेल्ल्या यवस्यापि काण्डं पलाशस्य दारु ॥ सम
सर्वमेतत्तु दग्ध्वापि दग्धं मजामूत्र पीतं तु निष्कं तथैव॥१४॥अ
न्यः ॥ तथा वंध्यकर्कोटिकामूलकर्षं सिताक्षौद्रयुक्तं च सप्ताहपी
तम्॥ भिनत्त्यश्मरीं शंभुना भाषितोयं जया वा जयंती तथा धान्य
नीरैः॥१५॥ अत्रयोगद्वयम् ॥रसपर्पटिकं द्रवारुणीजट
योगात्पयसा प्लुतेन नित्यम्॥ अपि सप्तदिनानि सेवितेयं शकली
कृत्य भिनत्ति चाश्मरीं द्राक्॥१६॥ अथ संप्राप्तिस्तत्र तावद्वा
तजा ॥ वाताद्दन्तान्खादति पीडयार्तो नाभिं प्रायः पीडयेल्लिं
गदेशम् ॥गृह्णन्मूत्रं त्यज्यते किंचिदेव वायोर्वेगान्सकणं त
द्दृशश्च॥१७॥ किंचित्किंचिद्वामलं यत्र रोगे श्यावारक्ता चाश्मरी
कंटकाक्ता॥ तस्याः पूर्वैरूप एवात्र वैद्यैः स्नेहाद्याश्चैव प्रायशो योज
नीयाः॥१८॥ प्रतीकारः ॥ शुंठ्यग्निमथाश्मभिभेदपथ्यागो
क्षुरकारग्वधचीरणानाम्॥ शिग्रुश्च तोहिंगु यवाग्रजाभ्यां वा
ताश्मरीं कृच्छ्रनमां भिनत्ति॥१९॥ अन्यः ॥ चक्रणवल्कलगो

ष्करविश्वकैर्गुडयवाग्रश्च नैरशितैर्ध्रुवम् ॥ प्रबलवायुभवा-
श्मरिकाहृदाचिरभवा कणशाः कणशः पतेत् ॥ २० ॥ अथपित्त
जा ॥ ददत्यनेपित्तभवास्रुवस्तिभल्लातकास्थिप्रभयापिपीता
॥रक्तासिताचाश्मरिकाविशेषात्सापच्यमानेव नदाश्रकुर्यात् ॥
२१ ॥ प्रतीकारः ॥ कुशकाशशरत्कटाश्मभिः स्त्रपुसैर्वा
रुकबीजकादिबीजैः ॥ सविदारिवराहमूलिकाभिः कमलाक्षैर
पिमोरटेनगुच्छैः ॥ २२ ॥ अथदर्भकुरुंटिकाशिरीषैरमृतगव्यम
लंतुपाटलाभिः ॥ मधुरैर्मधुकेनपाटलाभिरनुवेलप्रनवाप्रसा-
धितंतु ॥ २३ ॥ गदितंदिननाथसूनुना स्वगदंकारवरेण भल्लके-
स्तु ॥ अशितंखलुपित्तजाश्मरीणामपिपत्त्रूरिकसंयुतंतुसंघः
॥ २४ ॥ शकलंशकलीकरोत्यलवाजतुनाश्मप्रभवेनसंयुतंचेत्
॥ कुशकादिघृतंतथैवनित्यबहुपित्तप्रभवाश्मरीषुसेव्यम् ॥
२५ ॥ इतिकुशादिघृतम् ॥ अथरसः ॥ सूतंशुद्धंगंधक
तद्विभागं भूयोभूयस्तेन त्वक्षीररसेन ॥ पिष्ट्वागोलंभूधरेतद्दिनैकं
पक्वाप्रोक्तःचाश्मरीदेतिसंज्ञः ॥ २६ ॥ पाषाणभेदजरजःसम
माषयुग्ममश्नन्तांचबहुधाश्मरिभेदनंस्यात् ॥ गोपालकर्क
टिकजालजटाकुलित्थक्वाथंपिबेच्छिशिचगोक्षुरमूलजातम् ॥
२७ ॥ अथकफजाश्मरी ॥ कफेनशीतत्वगुरुत्वयुक्तो व-
स्तिस्तुनिस्तुद्यतएवतत्र ॥ स्वल्पासितावामधुवर्णयुक्ता प्रा-
योभवेत्साखलुबालकानाम् ॥ २८ ॥ महाश्मरीसाश्मिपकास्यकल्या
हस्तेस्तुबालस्यगृहीतुमेषा ॥ शक्यानचास्योपचयान्निताननु
त्पादनंशस्त्रवरेणकुर्यात् ॥ २९ ॥ भवेच्चसावापिजनस्यनहृन्

मणींद्रो नानाकाव्यारविन्दप्रथितदिनकरो गर्गवंशावतंसः॥
यत्पुत्रः काशिनाथो निखिलवरभिषक्शास्त्रमालोक्य तस्माद
श्मर्यादेरखिलगदहरां सच्चिकित्साचकार॥ ५१॥ ॥ इतिश्री
मद्गुरुपादाब्जचञ्चरीकचतुर्वेदी काशिनाथकृतायां चिकित्साक्रम
कल्पवल्ल्यामश्मर्यादिनानारोगच्चिकित्साधिकारस्तबकः॥ ॥
॥ ॥ अथप्रमेहः॥ आयुर्वेदगुरुत्वतानविबुध
मातृद्वयांतरस्थितनानाशास्त्रकलाकलापनिरतं स्वार्थादिवेदात्म
जम्॥ नत्वा तत्तनयः करोतिच भिषक्प्रीत्यै प्रमेहस्य वै कार्यं
कारणलक्ष्यलक्षणविधिं यद्यच्चिकित्सादिकम्॥ १॥ अथ
प्रमेहनिदानम्॥ ॥ दिवानिद्रास्पेयो दधि निखिलदुग्धानि भ
जते जलं वा ग्रामीणं पलमपि तथानूपमसकृत्॥ नवान्नं पानीयं
गुडसहितमन्यच्च कफकृत् प्रमेहस्तस्याशु प्रभवति च वा विंशति
विधः॥ २॥ तदा मेदो मांसं तनुजमखिलं क्लेदमपि च कफो वस्ति
प्राप्तं सकलमपि संदुष्य कुरुते॥ उदीर्णैस्तानुष्णैरथ च बहुपित्त
तुं सकलान् प्रमेहान्वाकृष्य निखिलतनुधातुंश्च पवनः॥ ३॥ शु
क्रांबु मज्जा सवसालसीका मांसं रसौजांसि तथा प्रदूष्य॥ श्ले
ष्मा च पित्तेन तथा च वायुः कुर्युः प्रमेहानखिलान्यथास्वम्॥
४॥ दोषो यदा वस्तिगमूत्रसंस्थः संदुष्य मूत्रं कुरुते प्रमेहान्॥
तेषां शु साध्या दश ये कफोत्थाः पित्तोद्भवान्ये खलु कृच्छ्रकाः षट्
॥ ५॥ तथास्त्वसाध्याश्चतुरोपि वातप्रभूतमेहा भिषजो वदंति
॥ समक्रियत्वं विषमक्रियत्वं महत्यय त्वं हि यतोत्र नित्यम्॥ ६॥
श्वेतं पीतं रक्तकं वा हरिद्रा कृष्णावर्णं पंचमं पंचभूतान्॥ जाते देहे

दोषसंघोपि न हच्छ्वेतपीतकर्बुराद्याश्ववर्णाः ॥७॥ नानाव-
र्णाविवर्णप्रयोगाश्चहंति तस्मान्मेहा विंशतिर्नामरूपैः॥ अथपूर्व
रूपम् ॥ दंतादिकायत्र मलेनयुक्ता दाहो भवेत्पाणि पदोस्तु
तद्वत् ॥ चेत्स्निग्धता यत्र तनौसतर्षः श्वासःश्रमे हस्यचपूर्वरू
पम् ॥८॥ अथरूपम् ॥ वीर्यस्रावः शोषकार्श्यैर्ङ्कु केषु मू
त्रेतद्वद्वाप्रभूताविलत्वम् ॥ नोवास्वास्थ्यंसर्वगात्रेषुयत्रतत्सं
प्रोक्तंमेहरोगस्यरूपम् ॥९॥ अथोपशमः ॥ श्यामाढकी
कोद्रवकाः कुलित्थागोधूमकोद्दालचणाः पुराणाः ॥ सर्वान्नमु
द्गावरधान्यषष्ठ्यः प्रमेहिनांपथ्यमलंप्रदिष्टाः ॥१०॥ तिक्ता
निशाकानिचजांगलायेपतत्रिणोयेचमृगास्तथैव ॥ पथ्याश्च
मेहेपरिवर्जनीयादुग्धाज्यमंथादधिमद्यकाम्लाः ॥११॥ गुडा
नूपमांसेक्षुपिष्टान्नतक्रानचैवात्ररोग्याविशेषेण मेहे ॥ गुडूच्या
रसश्चात्रसर्वत्रपेयप्रमेहापहस्तोवितं माक्षिकेण ॥१२॥ त-
थाग्न्यारजोवाशिवायास्तथैव शिलाजत्वलं लोहजं पंचयोगाः
॥ इतिसार्द्धश्लोकेनयोगपंचकम् ॥ अथचंद्रप्रभा ॥
चंद्रप्रभोग्राघनभूमिनिंबनिशाविषादारुनिशाग्निकृष्णाः ॥
अल्लामरंद्रुत्रिफलाविडंगहूपादिकृष्णावकस्वर्णमाक्षिकं
॥१३॥ हिक्षारकंत्रिलवणानिचटंकमात्राण्येतानि सर्वाणिपृ
थक्पृथक्स्युः॥ कर्षद्वयंचापि मृतंचलोहमलंसिताया श्चपले
नवैद्यः ॥ १४ ॥ पलद्वयंचापिशिलाजतूनांकर्षाष्टकंगुग्गुलुम
त्रवैद्यः॥ कणांघ्रिनीरैरपिसैंधवेनटंकोन्मितैश्चापि वटींविधाय
॥ चंद्रप्रभेषाखिलमेहहंत्री रोगानशेषानशितानिहन्ति ॥१५

॥१५॥ वातप्रभूतानखिलांस्तथैववीर्यस्यदोषान्रुधिरप्रभूतान् ॥ मेहांश्चविंशतिविधानपिचाश्मकृच्छ्रान्वेदाश्मरीश्चिदशमूत्रगदांश्चनहन्त्॥ स्त्रीणांरजोश्रितसमस्तभगादिरोगान् हन्यान्वटीसकलवैद्यनृपावदन्ति ॥ १६॥ पांडुंचकासरुधिरप्रभवान्विकारान् छ्वासास्तथावृषणवृद्धिभवान्विकारान्॥ हलीमकंकामलिकाग्निमांद्येस्थरोचकंवातजरोगसंघान्॥ १७॥ पित्तोद्भवान्वाकफजांश्चिहंतिसंराध्यशंभुंशशिनाप्रलब्धाम्॥ नथैवदक्षप्रतिशापितोपिचंद्रःक्षयादीम्नूर्णकलोबभूव॥१८॥ इतिचंद्रप्रभावटी ॥ अथरसः ॥ रसभस्मसमंचवंगभस्ममधुनालेहविधानतोपिलीढम्॥ प्रबलानपिविंशतिप्रमेहान्नियतंहन्तियवेननित्यमेव॥ १९॥ अपिमूलकमुद्गयोश्चयूषमथितेनापिसमंचपथ्यमत्र॥ रसएषधरातलप्रसिद्धोवरवंगेश्वरनामसमसंप्रतीयम्॥२०॥ इतिवंगेश्वररसः ॥ अथक्काथ ॥ त्रिफलारजनीविशालिकाघनजःक्काथअलंनिशांशकः॥मधुनाखिलमेहसंभवेपरिपीतःशमयेच्चतास्तदा॥२१॥ अन्ययोगः ॥ त्रिकटुकत्रिफलासहितंसमंपुरमलंखलुगोक्षुरसंश्रृतैः॥ अथजलैरशितोगुटिकीकृतःसकलमेहहरस्तुयथाबलम्॥ २२॥ त्रिकटुकादिपुरःखलुसेवितोत्थपरिहारमलंचयथारुचि ॥ भजनभोजनभोगयुजाप्यलंविजयतेखिलधातुगदानपि॥ २३॥ रुधिरशोणितमूत्रगदानलंप्रदरवृंदमथोभगलिंगजान्॥ अखिलसंयमपथ्यदिवर्जितोवितनुतेचवनोमकरध्वजम्॥२४॥ अथरसः ॥खल्वेसमादायविशुद्धसू

त कर्षञ्चरक्तस्य घटोद्भवस्य ॥ प्रसूननीरेणचसप्तवारान् वासा
रसेनापिचतावदेव ॥ २५ ॥ दूर्वारसेनापिचतद्वदेव वारान्विमर्द्यो
प्यथटंकणंच ॥ द्विनिष्कमात्रंखदिरस्यसारकर्षप्रमाणाश्वशिवे
नचंद्रः ॥ २६ ॥ तुल्यः पुनश्चंदनवारिणापिसमर्धकुर्याच्चहरेण
तुल्याम् ॥ छायाविशुष्कावटीप्रभुज्यमेहान्जयेदार्द्रकनीरखं
डैः ॥ २७ ॥ सरक्तपित्तपिटिकंश्वहन्यात्प्रमेहजांश्चांतरलम-
नुष्यः ॥ २८ ॥ अथकामिनीमदविधूलनोरसः ॥ शिवाशि
वास्वर्णविशुद्धबीजान्यादायतुल्यानिशिवाशिवाभ्याम् ॥ विम
र्द्यचाष्टापदबीजतैलेरसोभवेद्वारवधूविलासः ॥ २९ ॥ ससितो
प्यसितःखलुवल्लयुगोहरतेखिलमेहगणंबहुधा ॥ शतधास्फुर
तंप्रबलास्कसमंकुरुतेविरतंचनरेणयदा ॥ ३० ॥ अथवंगेश्व
रः ॥ रसवंगखहेतिभिस्समानंजतुनाश्मप्रभवंमधुप्रयुक्तम् ॥
सितयाखिलमेहनाशनायखलुमाषद्वयसंमितंनिषेवेत् ॥ ॥
अथसंप्राप्तिः ॥ तत्रतावज्जलमेह ॥ अच्छांसितंसीतल
मंबुवच्चनिर्गंधकंपिच्छिलमाविलंचेत् ॥ मेहत्सकटफललो
ध्रपथ्या क्वाथंपिबेद्धेजलमेहवन्यः ॥ ३२ ॥ अत्रक्वाथः ॥ यदि
पारिजातजटाशृतंधवचंदनार्जुनशालजम् ॥ जलमेहिनापरिसे
वितंजलमेहनाशकरंजलम् ॥ ३३ ॥ अथेक्षुमेहः ॥ यदि
क्षुतुल्यंमधुररसेनतस्यैवमेहत्यपिचेक्षुमेही ॥ जवासवीरा
गविडंगपाठाक्वाथंगुडेनापिपिबेज्जयाया ॥ ३४ ॥ अथसां
द्रीमेहः ॥ सांद्राभवेत्पर्युषितंचसांद्रमेहेनुसंमूत्रितमाशुतत्र
निशाद्वयंजंतुहरेनतेन संक्वाथ्यनीरेमधुनानिषेवेत् ॥ ३५ ॥ ॥

अन्ययोगः ॥ शाद्वलसंशृतनीरकर्षगुडेन सान्द्रकंनतिमेह पीतमनेन ॥ ३६ ॥ अथसुरामेहः ॥ उपर्यच्छमधोघनंसुरामेहअलंतथासमंबीजतरुत्वचासमोदीच्यजलंतथा ॥ शक्रकुष्ठविशालयाशृतक्षौद्रयुतंनरःपिबेदाशुतथात्वरा तथानिंबजलंशृतम् गुडैरत्रयुतंपिबेत् ॥ ३७ ॥ अष्टपदमेतत् ॥ अथपिष्टमेहः ॥ संहृष्टरोमाखलुपिष्टमेही मेहत्यलंपिष्टसमंसितंच ॥ दार्वीविडंगैर्धवखादिरत्वक्शृतंपिबेन्मासिकसंप्रयुक्तम् ॥ ३८ ॥ अन्यः ॥ पथ्याक्काथःपीतःकर्षगुडेन शमयतिपिष्टप्रमेहप्रबलमनेन ॥ ३९ ॥ अथशुक्रमेहः ॥ शुक्रोपमंशुक्रयुतंतुशुक्रमेहीप्रमेहत्यथवापिबेत्सः ॥ क्काथंरुजाचंदनदेवदारुशृतंतथावागुरुणामधूकैः ॥ ४० ॥ अन्यः ॥ दूर्वामूर्वासमङ्गाकुशवरजटाकाशजादंतिनीभिःपीतःक्कथोनितांतप्रबलगदहरःशाल्मलीवल्कलेन ॥ निर्यूहःशुक्रमेहेगददलनपरैर्वैद्यभूपैर्निरुक्तोहंतिप्रायस्त्रिभिर्वैस्त्रिदशरिपुगुरोर्नामतुल्यंप्रमेहम् ॥ ४१ ॥ अथसिकतामेहः ॥ मूत्रेणमेहीसिकतानुरूपमलाश्मभेदःप्रभृतिश्चतत्र ॥ मेहत्यलंदारुनिशाग्निमंथपाठाशिवाक्षिप्रमितं फलानाम् ॥ ४२ ॥ क्काथप्रमेहसिकताख्यमुग्रनाशंनयेत्तत्रनकापिशंका ॥ यद्वाग्निनीरंसगुडंशृतंच तथागुणंवैद्यनृपावदंति ॥ ४३ ॥ अथशीतमेहः ॥ यःशीतमेहीबहुशीतवीर्यं मेहत्यलंवैमधुरंविशेषात् ॥ सचव्यमूर्वायुतकंटकारीक्काथंपिबेत्क्षौद्रयुतंप्रभाते ॥ ४४ ॥ रसोभैरवानंदसंज्ञोहिगुंजोगुडेनाशुपीतोविशेषेणनित्यम् ॥ द्रुतंशीतमेहापकर्ष

प्रकुर्यात् प्रकामंतुपथ्याशिनामानवेन ॥४५॥ पाठाविडंगा-र्जुनवल्कलानांक्काथानुपानंमधुनाप्रकुर्यात् ॥ भुक्त्वाथवानं दूरसंवि न्नैरूज्यमाप्नोतिचशीतमेही ॥ ४६॥ अथलाल मेहः ॥ लालातंतुयुतंतुमेहतिमुहुर्मूत्रंतथापिच्छिलंलाला मेहगदातुरोनरखशिवासमन्छदाग्निश्टतम् ॥ सक्षौद्रंपरिसे-व्य पाचनमलंप्रायःपरंदीपनंलालामेहहरंचसौख्यमतुलंनैरु-ज्यलक्ष्मीभजेत् ॥ ४७॥ अथरसः ॥ मृताभ्रसूतवंगकैःस मैःसमैस्त्रिभिस्तुतैः महादिनिंबबीजजंरजःसमंच पिकम्॥ ४८॥ समाक्षिकंचमाषमात्रमक्षतंचभक्षितम् विनाशयेच्चतं तुमेहमुन्द्धतंभिपङ्कलम् ॥ ४९॥ अन्ययोगः ॥ मधुनारजनी सेव्यातंतुयुतेन मेहेनाधिकपीडायस्यचतेन ॥ ५०॥ अथ-क्षारमेहः ॥ गंधरागरसनीरस्पर्शैःक्षारकस्यचसमैर्यदिमेही ॥ क्षारमेहमपिमेहतितत्र अत्युशिरसिशिरावपिलोद्भवीरव ल्कलश्रतैर्मधुनासः ॥ ५१॥ अथोन्ययोगः ॥ आमलकुलक निंबैः संस्तृतंक्काथमेकपिबतिखलुनरोयोलोहभस्मावगाढम् ॥मधुयुतमपिसद्यःक्षारमेहीविशेषाद्यदिभवतिविरोगःसर्व सौख्यानुकूलम् ॥ ५२॥ अन्यः ॥ नलदचंदनलोध्रसमंभि षग्विजयवल्कलसंश्टतमत्रवै ॥ समधुनित्यमलंपरिपाययो दहुलदुस्तरभस्मकमेहिने ॥५३॥ अथनीलमेहः ॥ नी-लाभूमूत्रंयदिनीलमेहेविमूत्रयेन्मूत्रमलंमनुष्यः ॥ धात्रीफ-लार्केणविभाव्यधात्रीचूर्णंयुतंतुल्यमृताभ्रसूतौ ॥ ५४ ॥ सं भाव्यसतैवदिनानिखल्वे माषोन्मितंतन्हरिशंकराख्यम् ॥ भुं

जीर्णनित्यंखलुनीलमेहमरणानयेपथ्यरतोविशेषात् ॥ ५५
॥ अन्यः ॥ महानिंबबीजानिवापूर्ववच्चसधान्याम्लद्रव्येन
नित्यंपिबेत्सः ॥ भवेन्नीलमेहेनयुक्तोनितान्तंप्रभुक्तोभवेत्स
श्चशालीमनुष्यः ॥ ५६ ॥ अथकालमेहः ॥ कालाभमूत्रं
खलुकालमेहीसम्मूत्रयेत्तत्रपिबेत्कषायम् ॥ लोध्रार्जुनोशीर
कुचंदनानांसक्षौद्रकंहेमवनीघनवा ॥ ५७ ॥ योगद्वयम् ॥
उशीरामलक्योः कषायस्तथैवसमंमाक्षिकेणाथकालप्रमेहे ॥
५८ ॥ अथहारिद्रमेहः ॥ हारिद्रमेहीकटुकंहरिद्रानिभंद
हन्मूत्रयतेनितातम् ॥ लोध्रेणवाधातकिचंदनानांसबालका
नांमधुनाश्टतंसः ॥ ५९ ॥ प्रतीकारः ॥ पटोलनिंबामलका
मृतानांकषायकंक्षौद्रयुतंमनुष्यः ॥ हारिद्रमेहीखलुपथ्यभो
जीपिबेत्प्रभातेरजनीप्रमेहे ॥ ६० ॥ अथमांजिष्टमेहः ॥
मांजिष्ठनीरेणचविस्त्रवीर्य्यंमांजिष्ठिकेमेहतितत्रमेही ॥ मु
स्ताभयामुष्ककवृक्षनीरंमधुप्रयुक्तंचश्टतंपिबेत्सः ॥ ६१ ॥
प्रतीकारः ॥ धातकिपुष्पनृपद्रुफलानांलोध्रयुतंयदिसंस्त्टत
मम्बु ॥ माक्षिकसाक्षिकमाशुनिपीतंमारुणमेहहरंप्रथितं
च ॥ ६२ ॥ अथरक्तमेहः ॥ विश्रमुष्णमथवापटुरक्तसंनिभं
भंवयदिमेहतिमेही ॥ बालवहुरसमाश्रभजेद्वावीजकाथश्रु
तमम्बुपिबेद्वा ॥ ६३ ॥ योगद्वयम् ॥ अथवसामेहः ॥ व
सामेहयुक्तोवसामिश्रमेवंवसाभंप्रमेहत्यथोतत्रनित्यम् ॥ पि
बेदग्निमंथाकषायंसथावानथापाटलायाश्टतंमाक्षिकेण ॥
६४ १७ अथमज्जामेहः ॥ मज्जानिभंमज्जसमेतमत्रमज्जा

प्रमेहे यदि मेहतीत्थम्॥ काश्मर्यखार्जूरकतिंदुछिन्नाहरीतकीक्वाथमधून्पिबेत्सः॥ ६५॥ प्रतीकारः ॥ छिन्नाग्निनीरेणतथैवपाठातिक्तामयैः कौटजहिंगुचूर्णम्॥ मज्जाप्रमेहीनितरांनिषेवेत्कालेयथोक्तेतुयथोक्तभोजी॥ ६६॥ १८ अथक्षौद्रमेहः ॥ रूक्षंकषायंमधुरंतथापिक्षौद्रप्रमेहेयदिमेहतीह॥ सूतंमृतंनागमथोमृतंचत्वगर्जुनस्याथसमंसमस्तम्॥ ६७ संमर्दयेच्छाल्मलिकांघ्रितोयैर्दिनंवटींमाषमितांचतस्य॥ क्वाथेनवैशाल्मलिमूलकानांसमाक्षिकंमाक्षिकमेहरोगे॥ ६८॥ १९ क्षौद्रमेहांतकृच्चायंत्रिफलावासमाक्षिका॥ क्षौद्रमेहहरावेतौयोगौसेव्यौविशेषतः॥ ६९॥ अथहस्तिमेहः ॥ मूत्रवेगविवर्जितंत्यजतियोहस्तीवमत्तोयदिबद्धंवासलसीकमभ्रबहुधाहस्तिप्रमेहीजनः॥ पाठाशैलजतूचकिंशुकमथोमूर्वातथातिंदुकंदुःस्पर्शंचकपित्थकंचसकलंत्वैकस्यनीरंपिबेत्॥ ७० ॥ इतिषड्योगाः ॥ अथमधुमेहः ॥ उपेक्षिताविंशतिरेवमेहामधुप्रमेहत्वमलंप्रयांति॥ असाध्यतांयातिपिपिलिकाभिर्जग्धुर्यदिस्यान्मधुवत्सकामम्॥ ७१ ॥ २० ॥ तन्मोहिनामंत्यदशामधुत्वमासन्नमृत्युर्विजयायतस्य। गोकंटकंपंचसमस्तकागसंकुट्टितंचापिपचेज्जलेनतत्॥ ७२॥ तत्तोयशेषेणचतुर्थकेनभागेनदध्यादथवासितायाः॥ पलानिपंचाशदथोपलानितद्वन्हिसंपाचितसाध्यकाले॥ ७३॥ शुंठीकणानागदलोषणानामेलात्वचात्रापुसबीजमज्जा॥ कोशेनजात्याश्चककुभवैश्चबीजैश्चतुभीरतिलांश्चपिष्टान्॥ ७४॥ पलाष्टकंतश

जरोचनायाः संमिश्र्य भुंजीत यथाप्रमाणम् ॥ प्रायः पलं वामृ तकल्पमाशु मूत्रेति दाहं च विबन्धमेहान् ॥ ७५ ॥ शर्कराश्मरीमेहगणांश्च सर्वान्वीर्यस्य दोषान्मधुलोहिलादीन् ॥ गुंजाघ्रिदुग्धेन तथैव केपि पीतेन हन्युर्मधुमेहमुग्रम् ॥ ७६ ॥ इति गोक्षुरपंचांगामृतावलेहः ॥ अथ प्रमेहपीटिका ॥ अंत्रोन्नता चापि शरावका भा शराविका निम्नविशेषमध्या ॥ साशोथवत्पक्कनमांव्रणोन चिकित्सकैस्तुल्यमलाचिकित्स्या ॥ ७७ वमस्य तेक्काथमलं च वस्तौ तीक्ष्णं च मूत्रं परिशोधनाय ॥ अथ कच्छपिका ॥ याकूर्मतुल्या खलु कच्छपी सा दाहान्विता वीरवन्वाकदर्वैः ॥ ७८ ॥ क्काथीकृतैः पीततमैर्विशेषाद्धावयेभिंबसुशिंशपाद्भिः ॥ कर्केंधुनीरेण भिषग्विशेषाद्विनाशनाया शु च कुंभिकायाः ॥ ७९ ॥ अथ जालिनी ॥ शिराजालजा जालिनी तीव्रदाहा भवेत्सा कमायाति चेत्तत्र वैद्यः ॥ विशेषेण बाधावयेद्दृश्यमाणे: कदंबार्जुनत्वक्युतैस्तिंदुकीनाम् ॥ ८० ॥ कषायैः प्रपाके नु वेलं प्रसिच्य ततो धावयेच्चेन तेनैव भूयः ॥ विपूर्णा विशुष्यत्यलं जालिनी सा प्रभूता तु मेहान्तनाडीकया वा ॥ ८१ ॥ अथ विनता ॥ अवगाढरुजार्द्रभावयुक्ता यदि पृष्ठेप्युदरेपि बाक विच ॥ पिडका महती भवेत्समाला विनता सा खलु कथ्यते मुनीन्द्रैः ॥ ८२ ॥ प्रतीकारः ॥ पटोलनिंबाग्निभवैश्च पत्रैर्निषेचयेत्कांजिकभंगनीरैः ॥ योगद्वयम् ॥ अथ ज्वलजी ॥ रक्ताश्रिता स्फोटयुता नितांतं आख्याता तथोन्या ज्वलजी च तस्याः ॥ ८३ ॥ प्रतीकारः ॥ षष्ठी चंदनयुग्म कुष्ठ मधुके

दुग्धेनलेपोचिनैर्लिप्तोयातिविनाशमाशुच ततश्चाज्यांमसूरी बुवे ॥ संस्थानायद्विचेन्मसूरसदृशीनरस्यामुशीरंतथाघृष्टगो पयसा मृणालेमथवावैगैरिकंकनृणम् ॥ ८४ ॥ अथसर्षपि की ॥ यागौरसर्षपनिभाकिलसार्षपीसा हैमंगवीनपरिलेपि त एवसद्यः ॥ शीतांबुनाव्रजतिनाशमलंचसेकात् ॥ ८५ ॥ ॥ प्रतीकारः ॥ निंबुलार्ज्जुनपत्रलेपनाद्वाप्रतिहन्याच्च तथैवसार्षपींद्राम् ॥ अथवापरिपाचिनापिसेधंस्स्वयमेवाशुविनश्यतिध्रुवंसा ॥ ८६ ॥ अथपुत्रिणी ॥ महत्यल्पितावाचिता पुत्रिणीसाचिकित्स्योष्णनीरेणमेधाम्लिपत्रैः ॥ प्रपिष्टैः प्रलिप्तैःस्तथाधात्रिपत्रैस्तथैवाशुगायत्रिकापत्रलेपैः ॥ ८७ ॥ अथविदारिका ॥ विदारिकाकंदनिभाविदारी भवेच्चसाप्रस्फुटनाच्चतस्याः ॥ संस्वेदनंवैमहिषीमलेनकुर्य्याच्चयावत्परिपच्यते सा ॥ ८८ ॥ ततस्तुतस्यांत्रिफलाविचूर्ण्य संपूरयेत्कांजिकवारिणैव ॥ प्रक्षालयेन्नाशमुपैतिशीघ्रंपुनः पुनः क्षालनतः प्रकामम् ॥ ८९ ॥ अथविद्रधिः ॥ लक्षणैर्विद्रधेस्संप्रयुक्तातः किंचपाकाधिकानात्रभेदः ॥ जलाधीशवृक्षीभवैः श्वेतमूलैः कषायंनिपीतंविनाशायतस्याः ॥ ९० ॥ अथप्रमेहोपद्रवाः ॥ अपाकोऽरुचिश्छर्दिर्निद्रातिकासास्तथापीनसः श्लेष्ममेहेभवंति ॥ भवेन्मेहनेचापिवस्तौचतोदोज्वरोदारणामुष्कयोस्तर्षमूर्च्छाः ॥ ९१ ॥ भ्रमोविड्विभेदश्चपित्तोत्तरेपिप्रमेहेथवातोद्भवेकंठहृज्जः ॥ उदावर्तरोगोग्रहोलोलतास्युस्तथाशोषशूलानिकासोविनिद्राः ॥ ९२ ॥ अमीश्वासपूर्वाप्र-

मेहे भवंति यथोपद्रवा वा यथास्रवंतेषाम् ॥ नथानर्षमोहोमदो मर्मरोधाः ज्वरश्वाथहिक्काविसर्पश्चतेषाम् ॥ ९३॥ पिंडकास्क भवंत्युपद्रवास्नैरपि युक्तोन्यतमैर्विशेषतश्च ॥ अपिगाढनिपीडितःस्तुनोपि यमराजस्य गृहं यियासुरेव ॥ ९४ ॥ मूर्छाविसर्पज्वरछर्दिकासश्वासैः प्रमेहीयदुपद्रुतोन्यैः ॥ सदुश्चिकित्स्यो मधुमेहतांयोयानाश्चसर्वे पिडिकासमेताः ॥ ९५॥ येवीर्यदोषाः कुलजाश्चयेतैर्यमालयं गंतुमलंप्रवृत्ताः ॥ तेवैद्यभूपैरखिलाश्चहेया यशोर्थिभिः कर्मजमेहभाजः॥ ९६॥ पिडिकाःकिलमूर्ध्निपायुगायदिपृष्ठेपिच मर्मसंभवाः ॥ कृशचन्हितनोरुपद्रुताः परितस्त्याज्यतमा थैवसर्वाः ॥ ९७॥ स्त्रीणां कुतः प्रमेहोन भवतीत्यपेक्षायामाह ॥ यतोमासिमासि रजोयोषितानां श्रवत्यत्रशुद्धास्तुतास्तेननित्यम् ॥ अतोनो प्रमेहंति रामाः कदापि पुराणाजगुर्वैद्यभूपेन्द्रमुख्याः॥ ९८॥ अविलमाविलळोहितपीनकान् शबलकर्बुरकल्मषनीलकान् ॥ विविधरागयुतान् परिमूत्रितान्यखिलमेहपरीक्षणमक्षणाम् ॥ ९९ ॥ अथनिवृत्तिः ॥ प्रमेहिनोमूत्रमनाविलंचेद पिच्छिलंवाविशदकटुश्च ॥ तिक्तंभवेद्वाबलवर्णवृद्धिर्गतप्रमेहस्यच लक्षणानि ॥१००॥ आयुर्वेदविदांसद स्यानिसभादीक्षाच्चतुर्वेदवित् श्रीमच्चातपदारविंदयुगलध्यानैकतानात्मना॥ काशीनाथभिषग्वरेण रचितायासाचिकित्सापरास्थानायोक्रमकल्पवल्लिफलितं तस्यां प्रमेहौषधम्॥ १०१ ॥ ॥ इतिश्रीमद्गुरुचरणचंचरीकचतुर्वेदीकाशिनाथकृतायांचिकि

त्साक्रमकल्पवल्ल्यां प्रमेहचिकित्साधिकारस्तबकः ॥२८॥
॥ ॥ नत्वा श्रीगुरुतातमातृयुगुलं ध्यानांघ्रिपद्मद्वन्द्वस्मृत्वा
युः श्रुतिमाप्तवाक्यमसकृद्धृत्वास्फुरच्चेतसि ॥ काशीनाथभि-
षग्वरः प्रकुरुते मेदोगदानामलं सम्यक्कारणलक्ष्यलक्षणयुतां
मायश्चिकित्सांपराम् ॥१॥ अथनिदानम् ॥ अन्यायामर
तादिवान्वशयने सश्लेष्मलाहारिणः प्रायोयेमधुरान्नपीननिरताः
स्निग्धाशिनो मानवाः ॥ तेमे दोनिचया वृतारिवलगवामन्तः स
धातूनलं मुष्णात्येवयतोत्रमेदलतनौ मेदोनकर्मक्षमः ॥२॥
अथपूर्वरूपम् ॥ क्षुद्रश्वासस्वभमोहास्सतर्षास्कन्द्रौ द्वौर्गं
श्वेदमुच्छ्वासरोधाः ॥ अल्पप्राणो मैथुनात्योमनुष्यो मेदोगधा
ज्जंतवोल्पाश्च पूर्वम् ॥३॥ सर्वभूतजठरे किलमेदस्तिष्ठतेत्र कि
लव्हि्रतोस्य ॥ मेदसावृतरूनिर्गमपार्गः कोष्ठवायुरनलेनच
सर्वम् ॥४॥ शोषयत्यसिलसर्वरसौघं भोजनानिजरयत्यपिस
द्यः ॥ पित्तवातकृतमत्रविशेषाच्छोषणं भवतिदैत्यगुरोश्च ॥
५॥ अथरूपम् ॥ चलस्फिगुदरस्तनो भवति मेदसा मांसलो
नरोबलपराक्रमोजठरतुंदिलोवाक्षमः ॥ पुराणयवशालयो
व्यथकुलत्थमुद्गाहिता हिताश्चखलु कोद्रवा विविधमेदसोनाः
शनाः ॥६॥ ॥ लवणानिखलुवस्तपयेव श्यामका-
सन मथश्रमचिंते ॥ मैथुनंचपलभोजनमुच्चैस्सर्पणंचनच
जागरमत्र ॥७॥ अथप्रतीकारः ॥ निरंतरागतरिपोस्फ
पत्रक्षारसहिंगुखलु भक्तमंडैः ॥ मेदः प्रवृद्धौ मनुजैर्निषेव्य
मादुः पुराणाश्चरकादयोन्ये ॥८॥ अथयोगः ॥ क्षौद्रेणपेयं

त्रिफलाकषायं क्षौद्रेण वापर्युषितांबु पेयम्॥ व्योषाग्निमुस्तात्रिफलाविडंगैः समः प्रसेव्यो प्ययगुग्गुलुर्वा॥९॥ त्र्योयोगाः॥ अन्यः॥ चव्यजीरककटुत्रयहिंगुवर्चिकानलयुतार्घदिभुक्ताः॥ मस्तुनाचकिलसक्तव एव दीपनाश्च बहुमासलताघ्नाः॥१०॥ अन्यः॥ त्रिकटुकत्रिफलालवणान्वितं भजति तैलमलं यदि वत्सरान्॥ समुपयाति दिनैश्च शनैरलं बहुलमेदलमांसतनुस्तनुः॥११॥ अन्यः॥ जंतुघ्ननागरयवामलकः प्रयोगः क्षारेण लोहरजसा मधुना समेतः॥ मेदस्विनामखिलरोगदशापहारी बिल्वादिपंचजनयश्टतमबुन हृत्॥१२॥ अन्यः॥ त्रिकटुवन्हिवचाघननेलुकैरसितमाहिषमेवघृतं सदा॥ अथनिहंति बलाशप्रभंजनप्रभवमेदलरोगगणानलम्॥१३॥ अन्यः॥ पुरोलंबुषानालमूल्यग्निशंठीसनिर्गुंडिमंडीफलानां त्रयं च॥ वृषखादिरत्वक्पलानां दशो वप्रपाच्यं जले चाढके सर्वमेव॥१४॥ ततो पादशेषे पलद्वादशांशःकचूर्णीकृतं कालोहं च सर्पिः॥ पुराणं च प्रस्थैकमानं च खंडपलाष्टकं ताम्रस्य पात्रे विपाच्यम्॥१५॥ ततः शीतलेस्मिन् पलाष्टमधोवापलं द्वे पलं वे शिलाधाजतोश्च॥ पलार्द्धपलार्द्धं त्वथैलात्वचोश्च विडंगोषणापिप्पलीनां द्वयं च॥१६॥ पलानां द्विकं द्वे फलत्रैफलानां सकाशीशकं चांजनं नागकृष्णाः॥ पृथक्सर्वमेकत्र संमिश्य तस्मिन् घृताढ्ये सुपात्रे विमथ्याशकरस्य॥१७॥ ततः शकृद्दे ह्योऽक्षमात्रं मनुष्यो विभुंजीत दुग्धानुपानेन नित्यम्॥ तथा जांगलानां रसेनापि मेदो हरत्श्लेष्मवातो

द्रवानुजाठरान्वा ॥१८॥ कामलोदरभगंदरपांडुस्थौल्यकुष्ठवि षमूर्छनमोहान् ॥ शोथजंगमविषानपिहंति कुक्षिमाशुकुरु तेत्वगभीराम् ॥१९॥ वल्यंश्रीकरमुत्तमंचबहुधावाजीकरंसर्व दापुत्राणांजननंरसायनमिदंलोहस्यसंकीर्तितं कूष्मांडंकदली करीरमखिलंयद्यत्ककारादिकंतत्सर्वंपरिहृत्यमत्रविबुधैर्यात्व त्वतत्सेव्यते॥२०॥ अथसंप्राप्तिस्तावत्तत्रवातजः ॥ वातेन मेदःकिलतुंदिलोदरंकुर्याच्चबीजद्रुममध्यमेववा ॥ लीढंयथा चित्रकमेकमेवहिक्षौद्रेश्चमेदोऽनिलजंनिहंतिवा॥२१॥ अ न्यः ॥रुबूकमूलंमधुनाद्विदुग्धेनवांनिशायांस्थितमंबुतज्जम् पीत्वानरस्तुंदिलजाठरत्वंसमीरमेदःप्रभवंविहंति ॥२२॥ ॥ अथपित्तमेदः ॥ गात्रेतिदौर्गंध्यकरंचपित्तमेदस्तुवासादल शंखचूर्णैः ॥प्रलेपनाद्बिल्वदलद्रवस्यदौर्गंध्यनाशोत्वथवापि तद्वत्॥२३॥ अन्यः ॥चंदनागुरुवरवामलचंद्रपद्मपद्मक कुरुष्कनखानाम्॥सप्रियंगुसरलामरदारुकुष्ठचोरकलवंग नतानाम् ॥२४॥ शैलवालुकशिलाभवजातीपौंडरीकमदन कबोलैः॥सप्तपर्णकहरेणुकजातीपत्रकेशरकधातकिपुष्पैः ॥२५॥ सूक्ष्मयानलिकयात्रुटिभिर्वाशाणशाणतुलितैःस्तुलि तानाम्॥ प्रस्थतैलविधिनाविधिविज्ञैःपाचितंचशशिनाभि मर्देन॥२६॥स्थौणेयकंकोलकपूगयोगलामज्जकस्यापिमहा सुगंधिः॥ पक्वंतदभ्यंगवशाच्चवृद्धोयुवेवकांताभिरतःप्रसं गैः॥२७॥प्रस्वेददौर्गंध्यहरंविशेषात्कंडूंश्चकुष्ठानपिहंतित द्वत्॥ युवाशतस्त्रीगमनोत्सुकःस्यात्स्त्रियश्चवंध्याःशतपुत्रि

कास्युः ॥२८॥ अथसकफमेदः ॥ कक्षावक्षणसंधिषुप्र
कुरुतेदौर्गंध्यमेवस्फुटम् मेदःश्लेष्मयुतंकरोतिचतथामुष्का
दिषुप्रायसः ॥२९॥ श्यामाबिल्वविलेपनादथतथापूतीकरं
जोद्भवोलेपःपक्वफचिंचिणीफलभवश्चिंचादलोत्थोहरेत् ॥
२९॥ इतिचत्वारोलेपाः ॥ अथसरसमेदः ॥ स्वेदंमहत्स
कुरुतेसरसंचमेदोबंबूरपत्रजलपिष्टविलेपनेन ॥ पश्चाच्छिवाभि
रुहत्र्यविपेषिताभिस्नायाज्जलेश्चबहुघर्मजदोषशांत्यै ॥३०
॥ सोशीरलामज्जशिरीषलोध्रैस्त्वग्दोषघर्मोत्थहरःप्रघर्षः ॥
सोशीरचंडांशुतिलैःसलोध्रैःशिरीषकाश्मर्ययुतस्तथैव ॥३१
॥ योगद्वयम् ॥ अथसास्रमेदः ॥ स्वास्रेचमेदसिजनोऽखि
लगौरगात्रःकुष्ठीवदृश्यतअलंखलुतत्रकुर्यात् ॥ गोमूत्रपिष्टकु
ष्ठपयसाप्रलेपंवर्णोज्वलत्वहरणायनिशायुगस्य ॥३२॥ अ
न्यः ॥ शिवानिशायुग्ममरिष्टपत्रमाम्रत्वचोदाडिमवल्कला
नि ॥ एषांगरागोऽखिलदेहकक्षादौर्गंध्यनाशायचकामिनीना
म् ॥३३॥ जम्बाःकषायेणविलेपितंद्राक्कुराधिपानांतनुगंध
हारी ॥ मेदोस्रशुभ्रत्वहरःप्रलेपोवैद्याधिभूपाःप्रवदंतिसर्वे ॥
३४॥ अथसमासमेदः ॥ समलमेदसिनेत्रमलादिभिर्भ
वतिदुष्टविगंधयुतोनरः ॥ सफलपूरकबिल्वकपित्थजैर्दलफ
लैरपिजंबुफलैर्दलैः ॥३५॥ सजलपिष्टतमैरखिलैरलंतनु
विलेपनतोपिशृतैरथ ॥ सपरिषेकनिमज्जनतोपिवासजल
योगयुतैरपिशोधितैः ॥३६॥ अथधूपः ॥ पथ्याचंदनकु
ष्ठसर्जनखिभिःसिद्धार्थकृष्णागरुमेदोगंधहरौचधूपिततः

मौन्नृणान्तथायोषितां विख्यातो मलयानिलो रिवलद्दो हारी घृताक्तोध्रुवम् धूपोमांसलमेदसां स्करवकराः श्रीराजराजोचितः ॥३७॥ इतिमलयधूपः ॥ अथकार्श्यम् ॥ वाताद्रूक्षान्नपानादनशनशुचो लंघनाद्वेगरोधान्नित्यंरागाद्रतेभोर्धननिचयजात्क्षातिचिंताप्रसंगात् ॥ निद्राघातात्ल्पभोज्याद्‌तिश्रमयुषः क्वापिपुंसः प्रकामं कार्श्येदेहेभवेच्चेदमृतजलधिंसेवयन्तं च ब्रूमः ॥३८॥ त्रैभागिकं पारदशुद्धभस्म हेम्नस्तुभस्मैकमितं गुडूच्याः॥ सत्वंचसर्पिर्मधुशर्कराभ्यां संमर्दयेत्खल्वगतं दिनैकम्॥३९॥ तन्माषमात्रंतुगवांपयोभिः पलार्द्धमात्रंतुरजोनुपेयम्॥ प्रायोश्वगंधाप्रभवंविशेषात् कृशांगयष्टिं सबलां विदध्यात्॥४०॥ अन्यः ॥ सच्चूर्णमश्वगंधिकाभवं तथार्द्धमासकं घृतेनतैलसंयुतं पयोन्वितं पयोयुतम्॥ निषेवयेत्कृशांगयष्टिमानवोनिरंतरं लभेच्चबालगृष्टिवत्सुसेचनाद्बलाधिकम् ॥४१॥ इत्यमृतार्णवः ॥ अथसबलकृशः ॥ आधानकालेयदियस्यशुक्रभागाधिकोल्पोप्यथमेदसःस्यात् ॥ कृशांगयष्टिः सबलाधिकं स्यात्तस्यांगपुष्ट्यर्थमथोब्रवीमि ॥४२॥ दशांघ्रिनीरेणतथाश्वगंधाक्काथेनकल्केनगवांपयोभिः॥ सिद्धंतुतैलंहिकृशस्यजंतोरभ्यंगतोवज्रतनुं करोति ॥४३॥ अन्यः ॥ अमृतहाटकभस्मदशानलं द्विगुणितान् क्रमशश्चसभास्करान्॥ समकटुत्रयसंयुतखल्वगान्सुरसयार्द्रतमान्परिमर्दयेत्॥४४॥ अथचभृंगनृपार्कयुतान्तथोपरिविमर्द्यचनिंबुरसार्द्रजैः॥ दरयुगांशपटुस्वकुचिंचिका

भवमथोरखलुबाकुचिकारजः ॥ ४५ ॥ समविमर्दितगुंजमिताक्टीसमसितारविलगुल्मशिवास्त्रकान् ॥ कृशकृशानुमलग्रहणीरुजोगुदजरोगमरोचकमाहरेत् ॥ ४६ ॥ आध्मानमाधूनयतिप्रकामंकृशांगयष्टेरनलंप्रदीप्य ॥ क्षारादिकेयंवटिकाप्रसिद्धा तनोस्तनुत्वेपिबलप्रदासा ॥ ४७ ॥ अथनिर्बलस्थूलः ॥ यस्याधिकत्वंखलुमेदसस्याद्भिजाल्पकत्वंचशरीरमध्ये ॥ सस्निग्धपुष्टांगसमांसलश्चहीनोबलेनैवभवेन्मनुष्यः ॥ ४८ ॥ प्रतीकारः ॥ सूताभ्रलोहांश्चमृतान्पगृत्थ सताप्यजंतुघ्नशिलाजतूंश्च ॥ क्षौद्रान्द्विभागेनघृतद्वयेनसंपूर्णचंद्रोप्यसितोबलाय ॥ ४९ ॥ माषान्मिनोशाल्मलिपुष्पचूर्णक्षौद्रानुपानेनसमांसलेन ॥ नरेणयद्वत्परिपूर्णचंद्रोबलेनपूर्णोभवतीहमासात् ॥ ५० ॥ अथकाश्यपीपोटलीरसः ॥ भस्मपारदयुतंबलियुग्मंगोजलेनपरिपेष्यवराटीः ॥ पूरयेच्चखलुपीततमायाःपिष्टटंकणविमुद्रितवक्त्राः ॥ ५१ ॥ भांडमध्यमवरुध्यविमुच्यशोष्यपाच्यगजसंपुटमध्यात् ॥ स्वांगसीतममुमाशकमरीचैस्त्रिद्विभागतुलितैःपरिपेष्य ॥ ५२ ॥ काश्यपेनमुनिनाभणितेयंनिष्कमात्रमशितान्वघृतेन ॥ अश्वगंधिकरजःपयसानुपानमत्रगदितंबलवृद्ध्यै ॥ ५३ ॥ पोटलीकाश्यपीनामादुर्बलेबलकारिणी ॥ वह्निस्थूलेतरेसत्वहीनानांचप्रशस्यते ॥ ५४ ॥ अथमल्लपुष्टिः ॥ पिष्ट्वातुभूतावरजस्यमूलंकृष्णागवीमूत्रयुतंविमर्द्य ॥ अंगेष्वनड्कीकरणेपराणांयुद्धेष्वनेकान्जयतेसमल्लान् ॥ ५५ ॥ अन्यः ॥ हस्त-

भानुदिवसेकरुनीयमूलमात्रकलिनीकलितंयत् ॥मूलमंत्र अभिमंत्रितमंगेमल्लमर्दनमदःखलुचूर्णम् ॥५७॥ मंत्रस्तु ॥ ॐनमोमहाबलपराक्रमसमस्तविद्याविशारदअमुकस्यभुजबलंभंजय२ दृष्टिंस्तंभय२ अंगान्विधूनय२ पातय२ महीतलेहुं ॥ अथकामयुद्धबलदम् ॥ हरिकांतामूलदिनकरदिनेपुष्यसहितेशयोन्मीतंकृष्णाखिलतनुगवीदुग्धमिलितम् ॥ नरःपीत्वाशम्बरजातिवनिताकोटिमसकृद्धयवायेव्यायामेभटशतककोटीविजयते॥५८॥ अन्यः ॥गुरौब्रह्मदंडीभवंमूलमेवसपुष्येसमुद्धृत्यशृक्लागवीया॥पयोभिश्वतस्याःप्रपीताविशेषात्करोत्याशुलिंगंचदडोपमानम् ॥५९॥ अथस्थौल्योपद्रवाः ॥ज्वरविसर्पभगंदरकापचीनिखिलमेहगुदांकुरपादजाः॥रुजअलंचसमांसलमाश्रयन्त्यथततस्तनुमध्यगतःसुखी॥६०॥ अथकार्श्योपद्रवाः ॥ कृशोप्लीहकाशोक्षयश्वासगुल्मास्त्वथार्शोरुजश्चोदराण्याशुनित्यम् ॥ प्रधावंत्यतोनैवकार्श्येनयुक्तोसुखीयोजनोमध्यमांसांगदेहः ॥६१॥ सर्वोपद्रवसंयुक्तःपित्तोद्रक्तःकृशःसरुक् ॥ जान्हवीसेवनंकुर्यात्रनौमानिकीर्तयेत् ॥६२॥ श्रीमत्तातोजयतिविविधानंकपकाकमग्नान्समुद्धर्तुंयोहरिरिवमहावैद्यचूडामणीद्रः॥काशीनाथस्तनयइतितथातस्यवाक्येनसम्यक्मेदोरोगाद्युपहरिसमांसश्चिकित्सांचकार॥६३॥ ॥इतिश्रीमद्दुल्लभराजात्मजधुपचतुर्वेदीकृतायांचिकित्साक्रमकल्पवल्ल्यांमेदोरोगाद्यधिकारेतच्चिकित्साप्रयोगाधिनस्तवकः॥२९॥ ॥ ॥ ॥

नत्वाश्रीगुरुतातपादकमलंस्मृत्वाच वैद्यागमं काशीनाथभिषग्वरः प्रकुरुतेसर्वोदराणांपृथक्॥ कार्य्यं कारणपूर्वरूपसहितं पथ्यंचरूपादिकं यद्यद्यत्रचिकित्सितं तदखिलं वैद्यैर्विलोक्यंस्फुटम्॥१॥ तत्रतावत्तन्निदानम्॥ मंदानलेसर्वरुजोभवंति तथोदराण्यत्रविशेषतःस्युः॥ अजीर्णयोगान्मलिनैरथान्नै र्मलस्यवैसंचयतोनराणाम्॥२॥ स्वेदांबुवाहीनिचयानितानिस्रोतांसिरुध्वाखिलदोषसंघः॥ प्राणाग्न्यपानान्प्रदुष्य सद्यः प्राक्संचितःश्वाप्युदराणिकुर्यात्॥३॥ अथपूर्वरूपम्॥ बलस्यवर्णस्यतथैवकांते र्बल्याविनाशोजठरेतिराज्यः॥ जीर्णापरिज्ञानविदाहयुक्तास्तद्वस्तिरुक्पादगतोत्रशोथः॥४॥ अथरूपम्॥ आध्मानदौर्बल्यकृशातुमांद्यशोथाभवेयुर्ममनेप्यशक्तिः॥ पुरीषवायोरपिसंगमत्रदाहांगसदोत्रविजृंभणंस्यात्॥५॥ अथोपशमः॥ गोधूमशालियवषष्टिकपथ्यमत्र नीवारजंचबहुरेकनिरूहणानि॥ सर्वोदरेषुचहितान्यथवर्जितानि त्वानूपमोदकपलंशयनंतिलानि॥६॥ व्यायामपिष्टाशनयानपानपटुन्यथोष्णानिगुरूणिचाम्लं॥ सीतांबुपानानिविदाहिभक्ष्यमेतानिवर्ज्यान्युदरेषुपुंभिः॥७॥ लायनाःसर्वेप्युदरनिचयाःसंतिबहुधाततस्तत्रप्रायःपुनरपिपुनःशोधनमलम्॥ पिबेत्क्षीरैःपंचांगुलभवमुतैलंचविधिवत्तगवांमूत्रैरप्यसकृदिहतथाजाठरगदी॥८॥ प्रतीकारः॥ स्नुग्दुग्धमूलत्रिफलाग्निवन्हीःसिंहीविडंगानलदंतिनीभिः॥ पक्वघृततत्कुडवप्रमाणं कल्कीकृताभिःसजलाभिरेव

॥९॥ कर्षंपिबेदुष्णजलैर्मनुष्योरेकेचपेयामथवारसंच ॥ नारा
चमेतद्घृतमाशुकर्षमुष्णांबुनापेयमथोदरेषु ॥१०॥ इतिना
राचघृतम्॥ वज्रांडीकल्ककर्षंदधिलिमंहि॥ सर्वोदरेषुनिगि
लेदंबुधुतंहि ॥११॥ ॥अथकाथः॥ ॥ पुनर्नवानिशाशि
वापटोलनिंबदारुभिः स्वधालताजगज्जलंशृंगवांजलान्वितं
॥पुराान्वितंप्रगेसितंचसर्वशोथनाशनं सशूलपांडुसोदरार्ति
वायुरोधनाशनम् ॥१२॥ ॥अन्ययोगः॥ ॥ज्योतिष्मतीतैल
मलंपयोभिर्दिनेदिनेयोप्रपिबेन्मनुष्यः॥ सर्वोदराणांचविनाश
नायसर्वोदरव्याधिविनाशमिच्छन् ॥१३॥ ॥अथपिप्पली
योगः॥ ॥स्नुहीपयोभावितपिप्पलीनांपयोयथावत्परिवर्धि
तानाम्॥ दिग्रामवाणादिसहस्रकांतमाश्वश्मनांवाजठराणि
नस्युः॥१४॥ श्वासकासजठराणिगुदार्शोवातरक्तमथवाज्व
रवेगम्॥ पिप्पलीक्षयगदानुपहंतिस्नुक्पयोभिरपिगोप
यसेयम्॥१५॥ अन्यः ॥ त्रिवृद्दंतीपारदानलगजकणाव्यू
षणफलत्रिकैरंडामज्जोसमबृहतिकायुग्मसहितम् ॥ स्नु
हिक्षीररोहीण्यपिपलमितासर्वमपिच घृतार्द्धप्रस्थेनत्सक
लमपिसंपाच्यविधिवत्॥१६॥ पिबेद्यावद्विंदूनघृतमखि
लजाठरगदान् निर्हंति द्राकृतावान्मितमलजवेगैश्चगुल्मान्॥
उदावर्तंशोथंनिखिलमलसंरोधजगदान्शिराकर्तुसद्यःप्रभव
नितथाध्यक्तमपिच॥१७॥ इतिबिंदुघृतं ॥ ॥अथरसः॥
॥ ॥ दंतीबीजरसेनटंकणवलीत्समर्घचेद्योगुडक्षीरैश्चोद
ररोगसंघहरणेभस्यान्नवीर्येस्थितौ॥ दद्याच्छूलगुदांकुरादि

पुसदा सम्यग्विरेके सति तक्रं बर्बुरनीरमेवमथवा विद्याद्विनो दं पिबेत् ॥ १८ ॥ अतिरेकविधौ च मुद्गयूषं बर्कुरे केरवलु तक्रमेकमेव ॥ अथ बर्बुरवल्कलस्य नीरं क्वथितं पेयमथोत्र सर्वदैव ॥ १९ ॥ ॥ अथ वज्रक्षारः ॥ ॥ सामुद्रकं टंकणकाचसिंधुयवाग्रजैः स्वर्जिकया शवर्च्या ॥ अर्कस्नुहीक्षीरविपेषितं प्राक् दिनत्रयं तेन रवेर्दलानि ॥ २० ॥ संलिप्य समुद्धृततो विशेषात् संशोष्य तीव्राग्निपुटे पचेत्तत् ॥ तस्यार्द्धभागं त्रिफलोषणाजीराग्निराजिप्रभवं रजश्च ॥ २१ ॥ संमिश्र्य सर्वं किल निष्कयुग्मं वाताधिके कोष्णजलैः पिबेच्च ॥ पित्ताधिके चाथ घृतैर्गवाम्वा मूत्रैः कफाधिक्ययुते तु सेवेत् ॥ २२ ॥ तथा रत्नाकरेस्त्रिभवे तु दोषे सर्वोदरे चैकपलं गुडाढ्यम् ॥ शुंठीभवं चूर्णमलं निषेवेत् कपर्दिना प्रोक्तमिदं विशेषात् ॥ २३ ॥ शोथगुल्मजठराणि च शूलान्याशु पीलमपि हंति विशेषात् ॥ शंभुना च भणितं खलु वज्रक्षारमत्र जनिताकृपया लम् ॥ २४ ॥ इति वज्रक्षारः ॥ ॥

अथ संप्राप्तिस्तत्र तावद्वातोदरः ॥ ॥ वातोदरे पाणिपदोरुकुक्षेर्नाभेश्च शोथप्रभवेन्नितांतम् ॥ कुक्षिपार्श्वोदरमध्यपृष्ठी रुक् पर्वसंभेदनशष्ककाशौ ॥ २५ ॥ स्यादंगमर्दो गुरुता मलस्य ग्रहस्त्वगादेस्त्वरुणत्वमन्यत् ॥ चेच्छावताकस्मिकवृद्धिमत्तः सतोदभेदं जठरं हतेस्तु ॥ २६ ॥ तुल्यं च शब्दं कुरुते हतं चेदाध्मातमत्र प्रचलः सशब्दः ॥ सरुक् च सर्वत्र गतिः प्रकामं शिरातनक्ष्मातनुत्वयुक्तः ॥ २७ ॥ प्रतीकारः ॥ दशमूलकषायमिश्रितं त्वोत्थुवमेरंडभवं च तैलमेकम् ॥ त्रिफलाक्वथितं गवां जलैर्वा पयसी

नरं खलु वातजाठरघ्नम् ॥२८॥ अन्यः ॥ धेनुमूत्रदशमूलजवा रिकुष्ठदंतिनिचयवाम्रजपामा ॥ उभयान्चलवणत्रयशुंठी भक्षितो ऽप्ययपसापि च नहृत् ॥२९॥ ॥अथपित्तोदरम्॥ ॥पित्तो दरे भ्रमविदाहसमांसतापक्षिप्रप्रपाककटुतांगविमूर्छनानि ॥ धूमाप्ये तज्जठरमत्र हरिच्छिराभिरानद्धमेव खलु पीतविलोहिताभिः॥३०॥ चेद्धा मृदुः स्पर्शमलं सपीडं पूर्वं बलाढ्यं किल रेचयेत्तम्॥ तं दुर्बलत्वे त्वनुवास्य पूर्वं संयोजयेत्क्षीरजवस्तिनैनम्॥ ३१॥ संजातकायाग्निबलं पुनस्तं स्निग्धं विशेषेणाविरेचयेच्च॥ रुबूकतैलेन पयोन्वितेन त्रिवृत्समेतेन घृतेन चापि ॥३२॥ प्रतीकारः ॥ सत्रायमाणशृतशातलांबुवाऽरग्वधांबु प्रपिबेच्च पश्चात् ॥ हिंगुजकां पर्पटिकां प्रभुज्य पूर्वेच पित्तोदरगुल्मकेषु॥ ३३॥ ॥ ॥अथश्लेष्मोदरम्॥ ॥ श्लेष्मोदरे गसदनश्वयथुर्गुरुत्वकासारुचिश्वसनशुक्लतनुत्वचः स्युः॥ स्निग्धं भवेच्च जठरं खलु शक्लराजीयुक्तं भवेत्स्तिमितशीतलमत्र तत्र॥ ३४ ॥ चिराभिवृद्धि स्थिरता गुरुत्वं शीतत्सनाशाय च शक्रदस्तूलः॥ तन्तुल्यगंधो मृतसूर्यतुल्य शिलापतुल्यं बककंठगेन॥३५॥ भागद्वयेनापि च लोहकेन भागैकमानेन कटुत्रयेण॥ चित्रेण कुष्ठेन कटुत्रयेण निगुंडिकातारजटारजोभिः ॥३६॥ तथाजमोदाभिरलं विषेपातुल्याभिरेवं खलु निंबजेन॥ पंचागनीरेण विभाव्य सर्वा नेकाधिकं विंशतिरेवं बारान् ॥३७॥ ससे त्रभृंगद्रवभावनाभिः संभाव्य कुर्याद्गुटिकास्तु तस्य॥ संलोडयेन्माक्षिकयुक्तपात्रे वदान्वक के धुसमाप्य यैका॥३८॥ भुक्तानिहत्याशक फोदरं सा वैश्वानरी

मासदिनानिनित्यम्॥ चेत्सेवितागुल्मशिवास्त्रशोथवातामयान्वासकलान्निहंति॥३९॥सदेवदारुवन्हिमूलकल्कदुग्धमथवा॥ कटुत्रिककुलत्थकैः शृतंपयोनुपाययेत्॥४०॥ ॥अथवडवामुखक्षारः॥ ॥ हिंगूपकुल्यात्रिफलानिशाभिर्भल्लातशुंठीगदशिग्रुमूलैः॥ तिक्तामृताबिल्वदधिप्रयुक्तमंतर्विदग्धोवडवामुखः स्यात्॥४१॥ क्षारोयथाशक्तिमलंप्रभुक्तो मद्येनचोष्णेनचकांजिकेन॥ कफोदरंचापिचवन्हिमांद्यं शोथं तथागुल्मरुजंनिहंति॥४२॥ ॥अथदूष्योदरम्॥ ॥ स्त्रियोदूषितान्नंजलंवानखानितथालोममूत्रेन्यथोविद्विगर्तेः॥गरंशत्रुनीचैःप्रयुक्तंपयश्चतथादुष्टनीरान्नमन्यच्चयद्वा॥४३॥ तेनाशुरक्तंस्वदोषाः प्रकोपमुपेत्याशुकुर्युस्त्रिलिंगाविशेषात्॥ विदूष्योदरेशीतवातोघनानांविशेषेणसंदृश्यतेकोपमेत्य॥४४॥ सतेनातुरोमूर्छतिप्रायसोत्रसपांडुःकृशःशुष्यतिप्रातर्षैः॥ सरोहीतकायाभयायास्तुकल्कःफलानांत्रयःक्वाथसंभावितोयम्॥४५॥ प्रतीकारः ॥प्रदूष्योदरेसमलाशांखिनीभिर्घृतंशुद्धमाशुप्रसिद्धंपिबेच्च॥ तथादंतिकायाद्रवंत्याःफलानांसुतैलंचदूष्योदरेशोधनंद्राक्॥४६॥ ॥अथतैलम्॥ ॥ ॥तैलाढकंप्रस्थयुतेनशुंठ्याःपलत्रिकैर्मागधिकसाधितंच॥सर्वोदरंश्लेष्मसदागनिभ्यांसंजातगुल्मंसहसानिहंति॥४७॥ ॥अथप्लीहोदरम्॥ ॥लहद्यामनोधःखलुशोणिताद्यप्लीहाभृणांशोणितवाहिनीनाम्॥मूलंशिराणांचविदाहिभोज्यमारब्धमतादुष्टमसृक्कफश्च॥४८॥ अभिष्यं

द्विभोज्याच्च वृद्धिंप्रयाति गदप्लीहसंज्ञंप्रकुर्यात्प्रकामम्॥ स-
वामेचपार्श्वेप्रवृद्धिंसमेति विशेषादूदीचात्रसीदत्यथैव॥४९
समंदज्वराग्निः कफेनापिपित्तभवेर्लक्षणैर्लक्षितोपद्रुतश्च॥
भवेन्निर्बलः क्षीणदेहोतिपांडुः पिबेच्छुक्तिनः सिंधुशक्तिप्रभूतं
॥५०॥ कणादुग्धयुक्तायवा भातुपत्रैः पुटेदग्धमेकं पटुमस्तुना
वा॥ प्रपीतंतथाप्लीहरोगं भिनत्ति यथाचेन्द्रवज्रंनुपक्षंगिरीणा
म्॥५१॥ ॥अथवातप्लीहोदरम्॥ ॥भवेन्नित्यमानद्धको
ष्ठोविशेषात्परीतस्तथावेक्षाभिसुवातात्॥उदावर्तसंपीडितः
स्म्यूषणेनगदंहिंगुसिंधून्यवक्षारलुंगान्॥५२॥ भजेद्व्रह्मज-
क्षारतोयेननित्यं कणाभाविताया शितामाक्षिकेण॥ गदंप्लीह
संज्ञंसदायातजातंनिहंत्याशुगुल्मार्तिवह्निप्रमान्द्ये॥५३॥ ॥
अथसपित्तप्लीहोदरम्॥ ॥तृणमोहदाहज्वरपीतवर्णो प्लीहो
दरेपित्तभवेमनुष्यः॥ प्रायःसपक्वाम्बरसः प्रसेव्यसमाक्षिकःसौ
ख्यमुपैतिसद्यः॥५४॥ प्रतीकारः ॥स्विन्नंशाल्मलिपुष्पंनि
शायांवेहि ॥राजीचर्चितमशितं प्लीहगदंहि॥५५॥ ॥अ
थसकफप्लीहोदरम्॥ ॥काठिन्यगौरवयुतोपिचमंदपीडः-
स्थूलत्वरोचकगदेनकफप्रभूतः॥ प्लीहातुशरवभवनाभिरुजः
प्रपीतंताहंतिजंवीररसेनशाणम्॥५६॥ प्रतीकारः॥ चेद्ब्रा
णपुरवा भवमूलकल्कतक्रेणचालोड्यप्रगेप्रपीतम्॥ प्लीहोदरं
हंतिकफप्रभूतंशैलप्रमाणंपूवत्तेजलेपि॥५७॥ ॥अथस
रक्तप्लीहोदरः॥ ॥वैवर्ण्यश्रमगात्रगौरवभ्रमादाहःसरक्तो
दरत्वतत्राम्यस्रगोदरंगदमलं प्लीहाभवंवैद्यराट्॥ वध्यातद्भुज

सव्यमेवच गुरुध्यात्वाचसंभोज्यतम्॥ विध्येद्वामभुजांतरालजशिरां मध्यांयकृत्वाशुवावामेप्लिह्निच दक्षिणेयकृतिवाश्रीवैद्यविद्यागुरुः॥५८॥प्लीहानपरिपीड्येतूहदलरहुष्टास्तजोमुक्तयेः वामांगुष्टशिराशरेणचतथा वासंदहेत् पूर्वतः॥उन्नम्यापिचरानवंधमथवादीप्याग्निषट्वृंथिकादंतीमाथिकायवाग्रजरजोमस्त्वंबुमद्योष्णकैः॥५९॥ ॥अथयकृदुदरः॥ ॥अथोन्हदोदक्षिणतास्थितिश्च प्रायस्तथावैयकृतस्तुवैधैः॥स्थानंहितद्रंजकमेवपित्तधातोस्तुरक्तस्यमुनिप्रगीतम्॥६० सव्यापसव्यास्थितिरेवभेदो द्वयोर्निरुक्तस्कचिकित्सितंत्रैः॥तथैवरक्तस्तुतिभेदमत्र सव्यापसव्येतुभिषग्निरुक्तम्॥६१॥ प्रतीकारः ॥ कृष्णायवक्षारविडाग्निचूर्णयं पूतीकनीरेणशृतेनसेवेत्॥ विडंगासिंध्वग्निवचायवाग्रसक्तून्पिबेद्वापियथाभिरत्र॥६२॥ ॥अथवन्हगुदोदरम्॥ ॥अथबद्धगुदोदरेत्र मन्त्रैरुपलिप्तयदिवोपलेपिभिर्वा॥ अपिशंकरवद्दृषद्भिरेवपिहितंवापिचचीयतेसदोषः॥६३॥ इहचापिमलः शनैः शनैर्यदिनाद्यामवरुध्यतेनिरेति॥ अतिकृच्छ्रतमात्तथाल्पमस्यंहृदयंनाभिमथोपिमध्यमाशु॥६४॥ परिदाहिमुपैतितत्रवैद्यः प्रथमस्वेद्यनतोगवांचमूत्रैः॥ पटुतैलयुतैर्निरूहणावैपरीकुर्यादनुवासनं तथावा॥६५॥स्निग्धभोजनमिहाशुरेचनंस्निग्धतीक्ष्णमपिसर्वदाहितम्॥ यच्चवायुशमनखलुवायोरुद्गतिप्रहरणंचविशेषात्॥६६॥ ॥अथपरिस्राव्युदरः॥ ॥शल्यंपदन्नोपहितंयदन्न भुक्तंतदाप्रागशितं

भिन्नाणि॥ तस्मात्स्नुतातात्सजलेनतुल्यः स्रावः स्रवेत्पायुमुखाच्च भूयः॥ ६७॥ नाभेरधस्ताज्जठरस्यवृद्धिः संतुद्यते दाल्पतिचातिमात्रम्॥ वैद्यैः परिस्राव्युदरं प्रदिष्टं च्छिन्नोदरंचापि वदंतिचैके॥६८॥ प्रतीकारः ॥नभोलोहगंधशिलाताम्रकुष्टरसव्योषनिंबाग्निदीप्याग्नियुक्तम्।। विषंशर्वरीनालमत्याचपिष्टसमंतद्वटीमाक्षिकांबुप्रपीताम्॥६९॥ कफस्योदरोक्तं प्रतीकारमन्यत्तथाष्टौचबीजानिशुद्धानिदंत्याः॥बलेर्वामरीचस्य भागद्वयेनत्रयेणापिशुंठ्येकभागेनशंभोः॥ ७०॥ सबीजेनवाटंकणेनापितद्वटीगुंजयातुल्यभागेनभुक्ता॥ जलंशीलमस्यानुपानेनुपीतंसच्छिन्नोदरंशोथगुल्मान्निहंति॥७१॥ युग्मम्॥

॥ ॥अथजलोदरः॥ ॥ विरिक्तोथवान्तोथवास्नेहपायीत्तथाचानुसंवासितोमूढचेताः॥ पिबेच्चेज्जलंशीतमाशुवेचतस्य प्रदुष्यंतिस्रोतांसिवातद्रुहाणि॥७२॥ अथस्नेहलिप्तेषुतेषूदकंवा विशेषाच्चसंजायतेजाठरं॥ तदास्निग्धमेतत्तुसंवृत्तनाभिसमंसंततंवैजलेनैवपूर्णम्॥७३॥ यथावादृतिः क्षुभ्यतिप्रायसोत्रस शब्दंतथाकंपतेनीरयुक्ते॥ जलस्योदरेमृत्युरेवाक्रियायांक्रियायांतथासंशयश्चेतिपूर्वम्॥७४॥ समाख्यायचैतत्सुहृद्भूपदारान्सुतान्ज्ञातिनोवृद्धवैद्यान्गुरूंश्च॥ द्विजांस्तत्सदस्यांश्चसद्वैद्यभूपोत्थनुज्ञाप्यकुर्याच्चिकित्सांचतज्ज्ञः॥७५॥ सुद्धिद्रांबुसंबद्धसंत्रेषुसम्यक्सुलब्धात्तएवंवशस्थंनिगृह्य॥ तथोत्थातलेनव्यधनाभ्यधस्ताच्चतुस्त्वंगुलंचांगुलीमध्यमात्रम्॥ ७६॥ तथापूर्वमेवसमावेक्ष्यविद्वान्स्ततोव्रीहिवक्त्रेणसंभेदयेच्च॥ ततश्चो

भयत्रापि संयोज्य धारां हरेच्चाश्मनीरं तु नाड्या विशेषात् ॥ ७७ ॥ नवैकेन तथा वासरे सर्वदोषं हरेद्वा तृतीये थवा पंचमेपि ॥ तथावा चतुर्थे ल्पशश्चानुवेलं नवे दैवमेके हि दोषापहारात् ॥ ७८ ॥ ज्वरः श्वासकाशौ च तृष्णा नदा सहहासदेहप्रभंगस्तथा ॥ अतीसार-दोषेष्वलं पूर्यते यद्वजाठरं तद्व्रणं लिख्यते ॥ ७९ ॥ कंपदुक्त तैलेन सम्यग्भिषक्पुनःस्रावयेद्दोषमस्यं क्रमात् ॥ तथा विसृते सर्वदोषे ततः समागृत्य तत्र व्रणायुक्तितः ॥ ८० ॥ दृढं बंधयेत्पट्टकौशेयकैर्वा तथा गव्यमस्मै प्रदद्यात्ततः ॥ ततः कोरदूषं च भोज्यं तथा श्यामकं चाप्यमन्नं सदा भक्षयेत् ॥ ८१ ॥ पटुं वा पयोभिः स्तथा कर्षमात्राज्जलस्योदरं वै जयेद्वैद्यभूपः ॥ अन्यप्रतीकारः ॥ पलं सूतकस्याद्विगुणितशिलाव्यूषणवली पृथक्कृत्तहृच्छभोर्नेय नफलयाच्चूर्णितमिदम् ॥ स्नुहीदंतीभृंगप्रभवपयसा भाव्यमुनिभिर्दिनैर्निष्कार्धं यं जलजमुदरं हंति नितराम् ॥ ८२ ॥ सतक्रं भक्तं वासमशितुमथो हेयमसकृत्प्रभुक्तेस्मिन्चोष्णं लघुतरमलं यत्र सकलम् ॥ यथासत्वं देयं पुनरपि पुनश्चापि क्रमशस्तथाशान्तोव्याधिर्भवति नितरां नीरजठरः ॥ ८३ ॥ युग्मम् ॥ ॥ अथ शोथोदरः ॥ ॥ त्रिदोषात्प्रकोपश्च शोथेन युक्तं महाजाठरं तद्धि शोथोदराख्यम् ॥ करोत्यत्र सेव्यं विशेषेण नीरं शृतं वक्ष्यते वैद्यभूप प्रणीतम् ॥ ८४ ॥ प्रतीकारः ॥ पुनर्नवापटोलनिंबुशुंठिकामृताभया सतिक्तकासदारुणत्रिसंचितः कषायकः ॥ समाक्षिकः समस्तगात्रशोथहानि पीयतां सशोफदुष्टजाठरं गदं निहंति चत्वरा ॥ ८५ ॥ अन्यः ॥ गोजलं च महिषीपयसा वा गोपयश्च त्रि

फलारजसापि॥ गोपयोन्नमशनंचगर्भिणीनांमूत्रपानमसकृज्जठरघ्नम्॥८६॥ ॥अथनारायणचूर्णम्॥ ॥दीप्यधान्यहपुषात्रिफलाग्निकृष्णजीरगदकारविकाभिः॥ पिप्पलीस्वजटयाप्यजगंधाजीरकत्रिकटुकंशतमूला॥ ८७॥ जन्तुशत्रुशठिकासवचाभिः पंचकंचलवणस्यसमानम्॥ क्षारयुग्ममपिपुष्करमूलंदंतिकात्रिगुणाद्विगुणाच॥ ८८॥ इंद्रवारुणिजटात्रिवृतापिशातलात्रखलुवेदगुणापि॥चूर्णितोयमपिसर्वगदेषुजाठरेषुचयथाबलभुक्तः॥ ८९॥ नारायणोनाममहाप्रभावश्चूर्णस्तथान्योदरिभिश्चतक्रैः॥ सगुल्मिभिर्वाबदरांबुनैववानक्रुधानेकृत्यापिवेच्च॥ ९०॥ सुवातरोगेचप्रसन्नयैवमंडेनदुग्धेस्तुविडश्वसंगे॥अर्शश्चलद्दाडिमनीरपानैर्वृक्षाम्लजीरैःपरिकर्त्तिकासु॥९१॥अजीर्णकेकोष्णजलैस्तथैवसर्वोदरेचोष्ट्रिपयोभिरेव॥ भगंदरेपांडुगदेचकासेश्वासेगलस्यग्रहणेपितद्वत्॥ ९२॥ हृद्रोगवेगेग्रहणीगदेचकुष्ठेज्वरेमंदकृशानुकाये॥ दंष्ट्राविषेमूलविषेविषेचविषेतथाकृत्रिमयोगजाते॥ ९३॥ यथाहिमेकोखिलरोगहारीनारायणश्चूर्णमथोतथैव॥ नारायणोदानववृंदहारीतथैवसर्वोदरवृंददहर्ता॥९४॥ इतिनारायणचूर्णः ॥ ॥

अथमहाक्षारतैलम्॥ ॥तिलानांजवानांकृधासर्षपानांतथानिंबजानांचवर्षाभवस्य॥ कृनालानिदिङ्मूलकश्रीरकाणांमधूकाटकीवृश्चिकालीरवीणाम्॥ ९५॥ गवाक्षीत्रिवृद्दंतिनीरोहिणीनामपामार्गजानापलान्यभद्रिवादिक्॥ सितान्यग्निदग्धानिगोमूत्रनिर्वापितानिंद्रुतंवापुनःसप्तशश्च॥ ९६॥

ततः पाचितेस्मिन्श्ववस्याणिसम्यक् वचारात्रियुग्मौषधीपिप्पलीनाम्॥विषाम्लाष्टिकाकुष्टभल्लातकानांत्रिवृज्जंतुशत्रोश्चशिग्रोश्चतद्वत्॥९७॥स्नुवीजोद्भवंत्रैफलंहिंगुसुल्लापटूनांतथाक्षारकंपिल्लकानाम्॥ अथोम्लादिकस्याम्रवावेतसस्यसकट्वादिकारोहिणीचूर्णमेवं॥९८॥ स्नुद्ग्रस्तुमंडादकेनाथतद्वत्ततोकांजिकेनापिहव्येनतैलम्॥ स्नपक्वंविडालस्यपादप्रमाणंपिबेत्कोष्णनीरेणसर्वोदरेषु॥९९॥ गवीमूत्रकेर्मद्ययुक्तंतथोष्ट्रीपयोभिर्निपीतंतथाजाठराणि॥ शिवास्त्राणिगुल्मानिवाप्लीहरोगंप्रमेहंकृमीन्पांडुरोगंचबृध्नम्॥१००॥ उदावर्तकंमूत्रकृच्छ्राणियक्ष्मामामेनंगृहण्यर्शसांसंधमेकम्॥ तथापस्मृतिंकुंडलत्वंइहंचभगंद्यंदरंकुष्टरोगांश्चभिनत्ति॥१॥ महाक्षारतैलंतुशास्त्रप्रसिद्धंप्रपीतंतथानेकरोगान्निहंति॥ यथावज्रमेंद्रंतुपक्षंगिरीणांनशस्त्रंप्रयोज्यंभवेद्यत्रतत्र॥१०२॥ इतिमहाक्षारतैलम्॥ ॥

अथोपद्रवाः॥ ॥ आध्मानदौर्बल्यमलावरोधशूलज्वरश्वासयुःवन्हिमांद्याः॥ दाहश्चकासश्चतृषापितद्वदुपद्रवास्युर्जठरस्यरोगे॥१०३॥ अथासाध्यलक्षणम्॥ ॥ सामान्यतश्चोदरमेवकृच्छ्रंनवंतथाजातजलंचसाध्यम्॥ बलाधिकस्यार्थत्रस्त्रकास्तमसाध्यमाहुः कुटिलंचलिंगे॥१०४॥ मांसाग्निशोणितबलैरहितंविशेषात्क्लिन्नत्वनंचरवलुच्छिद्रगतांत्रकंच॥ गात्रस्यभंगमथमत्र ततुत्वचोहिचित्रत्वमाशुजठरंतदसाध्यमाहुः॥१०५विरिक्तेतथापूर्यमाणोदरंयत्तथापार्श्वभंगान्वितंशोफयुक्तम्॥अतीसारयुक्तंत्रिलिंगविशेषाद्साध्यंयशोर्थीत्यजेद्वैद्यभूपः॥

॥१०६॥ प्लीहोदरंदोषसमस्तलिंगंत्याज्यंच वैद्यैःस्फुटमाशुनस्यैः॥ गंगाजलंवालुकया प्रकामंप्रपाययेदेहरिनामधेयम् ॥१०७॥ ॥अथनिवृत्तिः॥ ॥ शोथाध्माननिवृत्तिपूर्वमसकृद्घृतागतौपाटवम् सम्यग्भुक्ततरान्नपाचनमलप्रायःप्रकृष्टंत्विदम्॥ उक्तलक्षणमेववैद्यधरणीपालेर्निवृत्तेस्तव्याधेश्चोदरमध्यगस्याभिषजांयत्समनंसर्वदा॥१०८॥ गुर्वंघ्रिपद्मामलचित्तवृत्तिःश्रीकाशिनाथोयुगवेदविद्वान्॥ श्रीनाथपादाब्जसमाज्ञयैवचकारचाष्टोदरसत्चिकित्साम्॥१०९॥ ॥ इतिश्रीमद्गुरुपादाब्जचंचरीकचतुर्वेदिकाशीनाथकृतायांचिकित्साक्रमकल्पवल्ल्यामष्टोदरचिकित्सापरागगंधिकस्तबकः॥३० ॥ ॥ नत्वाश्रीगुरुनाथंशोथगदस्य ॥कुर्वेविशदचिकित्सांघोरतरस्य॥१॥ तत्रतावत्तन्निदान॥ शकृद्यथाभक्तामटकृशतनोःक्षारतीक्ष्णाम्लकोष्णान्याकुर्युर्वादधिगुरुमृदांभक्षणादामरोधात्॥ मत्स्यक्षीरादखिलविषवसिष्टभोज्यप्रसंगाच्छोथपायोर्गदजरुधिरःस्यातिरोधादिशल्यथा॥२॥ अव्यायामादपिचवपुषोनिर्बलस्यातिघातान्मर्मस्थानेविकृतिवनितास्मृतिमिथ्योपचारात्॥ शाकाहारादपिचबहुधावायुरेवप्रदुष्टोरक्तंपित्तंकफमपितथादूषयित्वाशिरास्ताः॥३॥ नीत्वारुध्वाबहिरपिगतिस्तैस्तुकुर्यात्त्वगादावुत्सेधंसंहतमथचमांसाश्रयोत्थप्रकुर्याच्छोथंत्वग्मांसजमथतथासर्वदेहेकचिद्वारूपपूर्वंतदनुविबुधैर्वैद्यलोकैर्विलोक्यम्॥४॥ इतिनिदानं ॥ अथपूर्वरूपम्॥ ॥तस्य

वैरूप्यं दवथुः शिराणामायामरूपं किल गौरवं स्यात् ॥ कार्याक्षमत्वं चलितान्तरांकरुग्लानिपूर्वं भिषजो वदन्ति ॥ ५ ॥ ॥ अथ रूपम् ॥ ॥ सगौरवोत्सेधशिराततत्वविवर्णतास्युः श्वसलोमहर्षैः ॥ शोथस्य लिंगेप्यनवस्थितत्वमूष्मात्मकत्वं जगदुः पुराणाः ॥ ६ ॥ ॥ अथोपशमः ॥ ॥ विदाहीनि चाम्लान्यथो वा पटूनि मृदो भक्षणं मद्यपानं दिवा च ॥ त्यजेत्त्वन्नमन्नप्रकामं घृतानि तथा तैलदुग्धान्यथो वा गुरूणि ॥ ७ ॥ प्रतीकारः ॥ हरीतकीनिशामृताग्निदेवदारुविश्वकैः पुनर्नवासभार्ङ्गिकास्कदारुवात्रिमाक्षिकैः ॥ कषायमास्यपाणिपादजाठरं हरेद्द्रुतं चिरोत्थितं कृतं तथा निपीतमेव शोथकम् ॥ ८ ॥ अन्यः ॥ पुनर्नवादारुमहौषधीभिर्दन्तीत्रिवृत्त्र्यूषणवह्निभिर्वा ॥ सिद्धं गवीदुग्धमलं निपीतं शोथातुरारोग्यकरं प्रदिष्टम् ॥ ९ ॥ अन्यः ॥ सेकोर्कवर्षाभवभूमिनिंबक्काथेन शोथं विनिहंति सद्यः ॥ करवोष्णमूत्रैश्च गवां विशेषान्निंबशृतैः शोथहरश्च सेकः ॥ १० ॥ ॥ अथ प्रलेपः ॥ ॥ पुनर्नवादारुमहौषधानां सिद्धार्थशिग्रोरपि चाम्लपिष्टः ॥ करवोष्णलेपो रविरुद्देहशोथविनाशनायाशुभिषग्भिरदिष्टः ॥ ११ ॥ गुडार्द्रकं गुडौषधं गुडाभयां गुडैः कणाम् पलंपलं पृथक्पृथक् सकर्षवृद्धिवर्द्धितम् ॥ भजेन्नरश्च शोथकाशपीनसार्शसां तथा गलग्रहारुचिज्वरघ्नवेदयोगमीरितम् ॥ १२ ॥ श्वासकासप्रतिश्याय जीर्णज्वरविनाशनम् ॥ वेदयोगसमाख्यानामेकं मासाद्धितं भजेत् ॥ १३ ॥ महौषधं चापि गुडेन तुल्यं पुनर्नवा

याश्वरसानुपानैः॥ अभ्यस्तमाश्वेवनिहंतिशोथं वृंदंघना-
नामिवचंडवायुः॥१४॥ अन्यः ॥सगुडनागरमागधिकार
जोप्यसितमाशुचशोथगदापहम्॥ अथतथामशिवास्वग
दापहंबहुलबस्तिगदोषविशोधनम्॥१५॥ अन्यः ॥गुड
पलत्रयसंमितमार्द्रकंत्रिपलयाकणयापलसंमितं॥ सतिल-
लोहविशाचसमन्वितंसकलशोथहरंचरजोसितम्॥१६॥
अन्यः ॥सदेवदालीकटुतुंबिनीभिःसंस्वेदनंकांजिकसंस्न
नाभिः॥ शोथापहंकेवलदेवदालीसतुंबिनीस्वेदनमाहुरन्ये
॥१७॥ ॥अथसंप्राप्तिः॥ ॥तत्रादौवातशोथः॥ ॥शो
थोभवेच्चयदिवंचलतातनोस्त्वकूपारुष्यमत्रमरुणत्वमथो
ऽसितत्वम्॥ आसक्तिहर्षयुतसर्वरुजोनिमित्तंशाम्यत्पलंच
दिवसेपरिवृद्धिमेति॥१८॥ वाताच्चप्रोन्नमतिपीडितएवतत्र-
शुंठीरुबुकृशिववक्रजटाशृतंच॥ पौनर्नवंपरिहरेच्च निपीतमे
व पानेशनेषुचपुनःपुनरेवसेवेत्॥१९॥ प्रतीकारः॥ पिबेत्त्रि
वृच्चुर्णमथोविशेषादेरंडतैलेनचवायुजाते॥ शोथेचबंधेऽखि
लदेहजातेमासार्द्धमात्रंप्रवदंतिवैद्याः॥२०॥ ॥अथपित्तजः
॥ ॥मृदुर्गंधयुक्तोऽसितःपीतरागस्तथामज्वरस्वेदतृष्णाम-
दाढ्यः॥ विसर्पत्यतेस्पर्शनेनेत्ररोगोभृशंदाहपाकान्वितःपि
त्तशोथः॥२१॥ प्रतीकारः ॥ क्षीराशीत्रिफलात्रिवृत्स्नुधा
लताक्वथितपिच्चभवेच्चशोथरोगे॥ योमूत्रेणतथाफलत्रिकंच
वात्रिफलारिष्टपटोलदार्विकाभिः२२ क्वाथंगुग्गुलनाथवाकृतं
चवैत्रितयनित्यमिदंचसेवयेत्॥ तृष्णादाहयुतेत्वथोकफोत्थ-

जेरुजिशोथेचचिकित्सितंयथैव॥ २३॥ योगत्रयम् ॥ ॥
अथकफशोथः॥ ॥ शोथोगुरुःस्थिरतमोपिचपाण्डुरश्चनि-
द्राप्रसेकवमिवह्निकृशत्वयुक्तः॥ श्लेष्मभवोनिशिबलीप्रश-
मोस्यकृच्छ्रान्नेदाहलीत्रयगतोननभेदपीडः॥ २४॥ प्रती-
कारः॥ वृश्चीव वृद्धिवशिवामृतानांकरञ्जशम्याकपुरान्वि
तानाम्॥ कल्कंतथैषांक्वथितंयथावागोमूत्रयुक्तंकफशोथ
हारी॥ २५॥ अन्यः॥ अयोरजोव्योषयुतंयवक्षारःफलत्र
योत्थैःकटुरोहिणीभिः॥ पीतंकफोत्थंचनिहन्तिहरीतकी
गोपयसाचशोथम्॥ २६॥ योगद्वयम्॥ ॥ अथवातपित्त
जः॥ ॥ दवथुतोदयुतश्चमृदुश्चरुश्वपथुर्गधयुतोभवतीह
चेत्॥ अपिसदागतिपित्तभवस्तथाशमुपैतिचचण्डरुजा-
सलम्॥ २७॥ अपिविलेपनतोयकुलत्थिकाजलजगहूरधेनु
जमूत्रकैः॥ बहुलसेचनतोपिपुनःपुनश्वपथुनाशनयोगयु
गंत्विदम्॥ २८॥ जीर्णपिण्याकसिकताकृष्णामाशिग्रुवचल
कैः॥ प्रलेपश्वपथुंहन्याद्वातपित्तभवंमुहुः॥ २९॥ ॥ अथ
पित्तकफजः॥ ॥ स्निग्धत्वगौरवमहादवथुज्वरैश्चशोथश्च
पित्तकफजःखलुतत्रसेवेत्॥ तुल्योषणंवृश्चिजटारजस्तुत-
मांबुनानित्यमलंप्रभाते॥ ३०॥ स्नुक्क्षीरभावितकणावरकाविं-
शतिर्वावराण्ययोशमशतान्श्वपथुर्विशेषात्॥ पथ्यातथैवच
गवामपिमूत्रकैश्चनाशंव्रजेच्चक्रमशास्तिहयोगयुग्मम्॥ ३१
॥ ॥ अथसन्निपातजः॥ ॥ सर्वात्मकःसर्वविमिश्रलक्ष
णःशोथोभवेत्तत्रभिषक्प्रकुर्यात्॥ श्यामाजगच्चित्रककंटका

रीनिशाकणानागकणाघनानाम्॥ ३१॥ पाठाकणामूलक दार्विकाणां चूर्णंकवोष्णांबुनिपीतमाशु॥ हन्यात्त्रिदोषश्वयथुं विशेषात्कल्कस्तु भूनिंबमहौषधाभ्याम्॥ ३२॥ युग्म ॥रसां दूर्जनागरसाधितंचपयःशिलायुग्ममलनिपीतम्॥ क्वाथेननित्यंत्रिफलोद्भवेन शोथंत्रिदोषप्रभवंनिहंति॥ ३३॥ ॥अथाभिघातजः॥ ॥ लेपोहरिद्रारवदिकाभवोवाकुचंदनस्याप्यथवापलांडोः॥ शोथंतथाघातभवंनिहंति वृंदंघनानामिववायुवेगः॥३४॥ अन्यः ॥ गोधूमचूर्णंचनिशाषडुभ्यामाघातशोथंविनिहंतिसद्यः॥ प्रस्वेदनाद्वैद्यनृपावदंति संपाच्यनीरेण घनीकृतंच॥३५॥ ॥अथशस्त्रघातजः॥ ॥ शस्त्राघातजशोथंयामैकेनमदिराहरतिचनित्यंसेकलमेन॥ ३६॥ बिल्वस्यपंचांगरसेकवोष्णंशस्त्राभिघातश्वयथोपिवैद्य॥ सिंचेत्तनेनैवचशोषणेनतेनैवयुक्तंचतथामनुष्यः॥ ३७॥ ॥अथक्षतशोथः॥ ॥ करंजपंचांगुलवृश्चिकानांक्वाथेनसोष्णेन चसेचयेच्च॥ क्षतप्रभूतेश्वयथौचभानुमालीजगादप्रथितः सुवैद्यः॥ ३८॥ रुकवर्जेलाक्षतार्दुषुसर्षपान्वापेष्यलेपयेत्॥ क्षतजेषुचतथाशोथेप्रवदंतिभिषग्वराः॥३९॥ ॥अथहिमजः॥ ॥ दशमूलरसादैकस्तथाप्यथवार्द्रस्वरसंचप्रस्थकम्॥ गुडमेकतुलांचपाचयेन्नियतंचापिपुनर्नवाघनैः॥ ४०॥ अमृताकरदारुपत्रकैस्त्र्युदिभिस्त्र्यूषणाकल्कलैःपृथक् ॥अपिकर्षमितैश्वयोजितैर्यदिसिद्धंतुपुनर्नवादिकम्॥ ४१ ॥मधुनःकुडवेनसंयुतांहिमजशोथमलंगुडंतथा॥ उपसंहर-

नेशिते तु वैश्वसनं कासमरोचकं तथा ॥ ४२॥ जठरानलवर्द्धनं बलं जनयत्याशु तनोस्तु पुष्टिदम् ॥ ॥इतिपुनर्नवादिगुडावलेहः॥ अन्यः ॥ पुनर्नवाजराजगत्कृशानुदारुवह्निभिः रसोयवागुसंभवः पयासिवा तथा ध्रुवम् ॥ हिपंचमूलिसिद्धयूषमत्रशोथनाशनं निषेवयेद्विशेषतोथ वैद्यभूपवर्णितम् ॥ ४३॥ अथाग्निजः ॥ प्रघर्षयेद्धूलवणं च भूमौ पात्रान्तरेन्यस्य करवोष्णमाशु ॥ लिंपेच्च शोथेग्नि भवे तथैव कुमारिकां तांतुवरीनिशाढ्याम् ॥ ४४॥ ॥अथ भल्लातजः॥ ॥भल्लातजं शोथमलं निहंति कृष्णा च मृत्कृष्णातिलैः प्रपिष्टा ॥ कृष्णातिला वा महिषीभवेन हैयंगवीयेन पयः प्रलेपात् ॥ ४५॥ योगद्वयम् ॥ घनजललेपनमथवा सर्जरसेन ॥ धूपनमत्र विशेषाद्वैद्यमतेन ॥ ४६॥ ॥अथ कपिकच्छुजः॥ ॥बिभीतकास्थि लेपनाच्च दाहशोथनाशनम् ॥ कपित्थपत्रयष्टिका कुचंदनस्य कच्छुजम् ॥ ४७॥ व्रणांस्तथा विलेपनाद्धतं तु वैद्यवर्णितम् ॥ विनाशयेत्सशोथकान्श्वयोगयुग्मयुग्मकम् ॥४८॥ अन्यः ॥ रास्नामूषककर्णिकाग्निबृहतीनिंबार्कमूर्वान्वितैर्वृश्चिवैफलजंतुशत्रुमगधाशिग्रुत्वचा शोथिषु ॥ पिष्टगोपयसा कुवर्चलयुतं शठ्यासकंपिल्लुकैः शस्तं वै विषकाकमाचिकसमं चोद्वर्तनं नित्यशः ॥ ४९॥ ॥अथ विषजः॥ ॥ दंष्ट्रादंतनखावघातजनितः प्रायो विषः प्राणिनां दंशान्मूत्रपुरीषवस्त्रमलवच्छ्रीशंभुकंठाश्रयात् ॥ तद्धा विषवृक्षवायुर्विषवद्योगाश्रनाद्दीर्घ्यतः शोथो सौ विषजो भिषग्निगदितो

वेशाभंगेमैथुनात् ॥ ५० ॥ विषजश्च मृदुश्चलोवलंबिसर्प-
दिहाव्यथदाहरुग्युतोवै ॥ प्रथमंपरिधावनेनधेनोःपरित
तेनजलेननाशयेत्तम् ॥ ५१ ॥ ततोवचानिक्तकजीरशंठीध
त्तूरमूलैर्विषमुष्टिपिष्टैः ॥ लेपःकरवोष्णोहरतात्मजोवा
शोथापहारीकटुतैलमिश्र ॥ ५२ ॥ योगद्वयम् ॥ अन्यः
॥ विषजशोथहरोव्यथनिर्विषाप्रभवलेपअलंचविषायुतः
॥ अथतथानवनीतयुतारुणाबकुलभाहिजयोगजशोथहा
॥ ५३ ॥ अन्यः ॥ शालादलरसलेपश्चूर्णयुतोहि ॥ श्वयथु
मरुष्करजातंग्रसतिमनोहि ॥ ५४ ॥ ॥ अथशोथोपद्रवाः
॥ ॥ छर्दिःप्रसेकोरुचितर्षतोदाःश्वासश्चदौर्बल्यकृशानु
मांद्याः ॥ ज्वरस्तथाशोथगदस्यसर्वेत्त्युपद्रवादिक्प्रमिताभ-
वंति ॥ ५५ ॥ ॥ अथसाध्यलक्षणम् ॥ ॥ श्वासःपिपा-
सावमिकार्श्ययुक्तःशोथेतथान्यारुचिसंज्वराढ्यः ॥ तंशोथिनं
संयमनींप्रगंतुंपाथेयमुक्तंहरिनामधेयम् ॥ ५६ ॥ योमध्य
देहेश्वयथुःसकष्टोयोसर्वदेहांगगतस्त्वसाध्यः ॥ अर्धांगगो
विष्टकरश्चयोवाप्यूर्द्ध्वेविसर्पत्यथवानराणाम् ॥ ५७ ॥ ऊर्द्ध्वां
गगोयस्तुनरस्यथाप्यस्त्रियोमुखाच्चेदधरांगगामी ॥ तयोः
र्द्वयोर्बस्तिगतःप्रकुर्यात्प्रास्थानिकंश्रीयमदर्शनाय ॥ ५८ ॥
॥ ॥ अथनिवृत्तिः ॥ ॥ शिराविविक्तत्वसमस्तगात्रस्फ-
पाटवन्नोविकृतिःक्वचिच्च ॥ निपीडितेशोथनिवृत्तिरत्रख्या
ताभिषग्भिर्नितरांत्रशास्त्रे ॥ ५९ ॥ श्रीमत्तातपदारविंदसुगु
रुध्यानैकतानात्मनाकाशीनाथभि वरेणरचितायासौचि

कित्सापरा ॥ ख्याता वैक्रमकल्पवल्लिविशदा तस्यां च शोथोचितमायुर्वेदनिवेदितं तु फलितं सर्वौषधीनां कुलम् ॥ ६०॥ ॥

इति श्रीमद्गुरुपादाब्जमधुपचतुर्वेदिकाशीनाथकृतायां चिकित्साक्रमकल्पवल्ल्यां शोथरोगप्रतीकारकथकस्तबकः त्रिंशत्तमः ३०॥ ॥ अथ वृद्ध्यधिकारः ॥ ॥ नत्वा तातं गुरुं सम्यगायुर्वेदं विलोक्य च ॥ वृद्धिरोगप्रतीकारं काशीनाथः करोम्यहम् ॥ १॥ तावद्वृद्धिनिदानम् ॥ क्रुद्धो नूर्ध्वगतिः करोति च तथाधः शूलशोथावपि वायुः सोन्त्रचरः प्रपीड्य धमनीः प्रायः प्रकुर्यात् क्वचित् ॥ अंगस्यैव च वृद्धिमाशु च तदा तत्पूर्वरूपं त्विदं तोदः शोथयुतोपसंहतिरथो रूपं परं लंबते ॥ २॥ अथोपशमः ॥ गोधूमकोरदूषाद्यमन्नं वालास्त्रनाशनम् ॥ सुराद्युन्मत्तलाकांक्षि यस्य सख्यं तत्समाचरेत् ॥ ३॥ अत्याशनमार्गनिषेवणं च गुर्वन्नभोज्यं च तथापवेसम् ॥ वेगावघातं खलु पृष्ठयानव्यायामसक्तैं वचनोव्यवायम् ॥ ४॥ प्रतीकारः ॥ विशालाजटासंभवं चूर्णमाशु सगंधर्वतैलं गवि दुग्धयुक्तम् ॥ निपीतं च सप्ताहमात्रं क्रमेण निहंत्येव वृद्धिं च मुष्कादिजाताम् ॥ ५॥ ॥ अथ प्रलेपः ॥ ॥ भार्ङ्गीजटा द्रवजलेन विपेष्य लेपात् सद्यः कुरंडमुपहंति च गंडमालाम् ॥ शंबूकमध्यधृतमातपसंस्थितं च लेपात् कुरंडहरमाशु ससैंधवेन ॥ ६॥ योगद्वयम् ॥ अन्ये लेपः ॥ धत्ताम्यकृताम्रस्य पात्रविशेषात्तथा सैंधवाक्तं तु घर्मप्रतप्तम् ॥ निघृष्य वाथवा तन्मलं सप्त चैव दिनान्याशु लिप्तं कुरंडं च तेन ॥ ७॥ पुन

र्वापुनर्मासमात्रान्न वृद्धिं समायाति ब्रघ्नः कथंचित्कदापि॥ द्विवारान्नमेव प्रलिंपेच्च समर्दिनात्यंतरं तत्परित्यज्य भूयः॥ ८॥ युग्मम्॥ अन्यः॥ सलज्जालमूलाच गृध्रस्य विष्ठाप्रलेपाच्च मासेन हन्यात्करंडम्॥ तथाकृष्णगोपालिकामासले: पाद्युतं यातिनाशं च वृद्धिर्विशेषात्॥ ९॥ योगद्वयम्॥ ॥

अथ पानयोगः॥ ॥ त्रिनिष्ककं दारुनिशाभवं च चूर्णं सगोमूत्रमलं पिबेद्यः॥ चिरोत्थितस्तस्य कुरंडरोगः सद्यो विनश्यति तरां भिषजो वदंति॥ १०॥ अन्यः॥ कर्षैकतिलतैलमार्द्रकरसं संमिश्र्य चैकं पलं प्रातर्यः प्रपिबेत्कुरंडमसकृन्नाशं व्रजेत्तस्य वा॥ सूतगंधककृताभ्रकांस्यसहितं रंगसलोहं मृतं तालतुत्थवराटसंयुतमलं संपेष्य सर्वं पुनः॥ ११॥ कर्चूरं कटुकत्रयं त्रिफलया चव्यं विडंगं कणाम् पांचालीजटया च पंचलवणं गीर्वाणकाष्ठत्रुटिम्॥ अंष्टांष्ट हपुषत्वचं च जरदं दारुं समं पेषयेत्क्वाथेनैव शिवाभवेन बहुशः कृत्वैव टंकावटिम्॥ १२॥ एकां ग्रोवटिकां च सीतपयसा प्रातर्गिलेन्नित्यशस्तस्याशु प्रलयं प्रयाति सहसा रोगोंडवृद्धिः परः॥ नित्यं पथ्यतरस्य ब्रघ्नहरणी ख्याता वटीनामतः श्रीमद्वैद्यमहींद्रशास्त्ररचिता ब्रघ्नद्विपे सिंहिनीम्॥ १३॥ विशेषकम्॥ ॥ अथ संप्राप्तिस्तत्र तावद्वातकुरंडम्॥ ॥ अहेतुकं वातभवं कुरंडं स्निग्धं पिबेत्तत्र विरेचनं द्राक्॥ सक्षीरमैरंडजतैलमेकं सगोजलं गुग्गुलुना तदेव॥ १४॥ ॥ अथ पित्तकुरंडम्॥ ॥ पित्तेन दाहोष्मयुतं विपक्वम्बुदुराभं नृणां चदनाभ्याम्॥ सपद्मब्राह्मीमधुकैः पयोभिः सनीलमूलप्रभव

प्रलेपः ॥ १५ ॥ प्रतीकारः ॥ न्यग्रोधकोदुंबरपीतनानांप्लक्षस्यचाश्वत्थतरोस्त्वचश्च ॥ घृतेनकल्कस्यचलेपनंवातत्क्वाथनीरेणनिषेचनंच ॥ १६ ॥ ॥ अथकफकुरंडम् ॥ ॥ सीतोगुरुःस्निग्धतरश्च कंडूकाठिण्ययुक्तोल्परुजः कफेन ॥ फलत्रयाणांसकटुत्रयाणांसक्षारपट्वंक कषायपानम् ॥ १७ ॥ कुर्याद्द्वासर्षपलेपनंवा शिग्रुत्वचः सर्षपजं तथैव ॥ कफप्रभूतस्यकुरंडकस्यनाशायसर्वेप्रवदंतिवैद्याः ॥ १८ ॥ ॥ अथरक्तकुरंडम् ॥ ॥ स्फोटैश्चकृष्णोस्तुसदाहतोयः सपित्तलिंगोरुधिरप्रभूतः ॥ सशर्करक्षौद्रयुतंतु तत्र विरेचनं वैद्यवरः प्रकुर्यात् ॥ १९ ॥ सीतोपचारैश्चजलालयाभिः सद्यः प्रकुर्याद्रुधिरस्यमोक्षम् ॥ एतैरुपायैर्यदिनेतिशांतिंविभेदयेत्कर्णशिराद्वयवामाम् ॥ २० ॥ सव्यापसव्येतुविलोमवेधं कुर्याद्द्वयोर्वृक्षणयोर्द्वयोश्च ॥ कर्णस्यनाड्योश्चक्रमेणतत्रविलेपनंपित्तकुरंडकोक्तम् ॥ २१ ॥ ॥ अथमेदःकुरंडम् ॥ ॥ मेदःकुरंडोकफवच्चतालफलोपमस्तत्रभिषक्प्रकुर्यात् ॥ विलेपनंयत्सुरसादिकेतद्विलोममंगुष्ठशिरांदहेद्वा ॥ २२ ॥ ॥ अथमूत्रकुरंडम् ॥ ॥ मूत्रस्यसंधारणतस्तु मूत्रकुरंडकःसोपिचगच्छतस्स्यात् ॥ अद्भिर्दृतीवक्षुभितोमृदुश्चसमूत्रकृच्छ्रश्चसरुक्चकोशे ॥ २३ ॥ प्रतीकारः ॥ विरेचनद्रव्यचयैःसमूत्रैःसंस्वेद्यसंवेष्ट्यच पट्टवस्त्रैः ॥ ततश्चवैसीवनिपार्श्वतोधोविध्येच्चव्रीहीमुखशस्त्रकेन ॥ २४ ॥ ॥ अथांत्रवृद्धिः ॥ ॥ वातप्रकोपकरभोजनतोनरस्यसीतांबुनिक्वचिदपिप्लव

तोवगाहात्॥ भाराध्ववाहविषमांगविवर्तनेभ्यः क्रुद्धांत्रजं त्ववयवं त्वभितश्चवायुः॥ २५॥ संक्षोभणैर्द्विगुणितंस्वनिवेशिलस्तनीत्वाप्यधःप्रकुरुतेयदिवंक्षणस्य॥ संधिस्थग्रंथिनिभशोथमुपेक्ष्यमाणो मुष्कप्रवृद्धिमरुजंसरुजंतथैव॥ २६॥ आध्मानशूलोभवतश्चतत्र संपीड्यमानंस्वनवत्प्रयाति॥ प्रध्मापयन्नेति पुनश्च मुच्यमानोयथापूर्वमुपैति वृद्धिम्॥ २७॥ प्रतीकारः॥ एरंडतैलसपिबेद्व्लाभिःसिद्धैःपयोभिर्बहुधान्त्रवृद्धौ॥ रास्नाऽमृतैरंडबलात्रिकंठयष्ट्याह्वुवासाकुलकांघ्रिभूपैः॥ २८॥ कृतंकषायंरुबुतैलमिश्रमाध्मानशूलोपचितं निहंति॥ अत्रप्रवृद्धिंबहुधानिपीतंप्रातस्तथासायमलंतरेण॥ २९॥ ॥अथब्रध्नः॥ अभिष्यंदिगुर्वम्लसंसेवनाद्वै यदासंचितोवंक्षणस्थश्चदोषः॥ तदाग्रंथिवच्छोथमेदज्वरेणसशूलांगसादंतुब्रध्नंवदंति॥ ३०॥ प्रतीकारः॥ कल्कोभयायाश्चरुबूकतैलभृष्टः कणासैंधवमिश्रितश्च॥ भुक्तः प्रभातेविनिहंतिब्रध्नंवायुर्यथामेघचयंनभस्थम्॥ ३१॥ प्रलेपः॥ जीरकुष्ठहपुषादलपिष्टंकांजिकेनबहुधापरिलिप्तम्॥ ब्रध्नमाशुविनिहंतिविशेषाल्लेपमत्रवरवैद्यगणोक्तम्॥ ३२॥ ॥ अथोपद्रवाः॥ दाहोंगसादज्वरमेहकंडूशूलातिसारात्स्थविपाकतांच॥ स्फोटात्युदावर्तगदस्तथैव वृद्धेरिहोपद्रवसंघउक्तः॥ ३३॥ ॥अथासाध्यलक्षणम्॥ ॥स्यादत्र वृद्धिःखलुमुष्कयोश्च वायोश्चवै संचयतोनरस्य॥ संस्निग्धपोतसमाकृतिश्च साऽसाध्यवृद्धिःकथितावैद्यैः॥ ३४॥

॥ ॥अथनिवृत्तिः॥ ॥शेफशस्तरणेनीरेसर्वोपद्रववर्जितम्॥पीडितेपिनपीडास्याद्गतवृद्धेश्चलक्षणम्॥३५॥ ॥

कृताचिकित्साक्रमकल्पवल्लीश्रीतातपादाब्जसमाज्ञयाया॥श्रीकाशिनाथेनगतस्यतस्यांवृद्धेश्चिकित्सास्तबकःसमाप्तिम्॥३६॥ ॥इतिवृद्धिचिकित्सास्तबकःएकत्रिंशः॥३१॥

॥ ॥अथगलगंडः॥ ॥नवेंदुमौलिंगिरिजेशमुग्रंगुरुंस्वतातंचप्रणम्यसम्यक्॥विलोक्यवैद्यागममाप्तवाक्यात्कुर्वेचिकित्सांगलगंडकानाम्॥१॥ तत्रतन्निदानम् ॥दुष्टौयदावातकफौगलस्थौमेदोंतरस्थौगलगंडरोगम्॥विशेषतःसंकुरुतेस्वलिंगमालंबमानंगलदेशतोधः॥२॥ अस्यपूर्वरूपम्॥आद्यस्यकंठस्यशिराःसमस्तावायुःकफेनानुगतःसपीडाः॥आनामपूर्वंतुगलस्यकुर्याद्भविष्यतिद्राग्गलगंडरोगे॥३॥॥अथरूपम् ॥ह्रस्वोलघुर्वायदिकंठदेशेमुष्केवशोथःप्रतिलंबतेयः॥तमादिशंतिप्रथितंपुराणाःश्रीस्कंदमुनाद्यागलगंडरोगम्॥४॥ अथोपशमः ॥यवमुद्गपटोलकानिरूक्षंमशनंवैद्यमहीपवर्णितम्॥वमनंरुधिरस्रुतिंतथावागलगंडेप्रथमंतुकारयेद्धि॥५॥ प्रतीकारः ॥सिद्धार्थशिग्रुशणबीजजवातसीनातक्राम्लपिष्टमपिमूलकबीजयुक्तम्॥आलेपनंचगलगंडमथोपिकंठमालांजपेच्चचिरजामपिग्रंथिमुग्राम्॥६॥ अन्यः ॥रक्षोघ्नतैलेनचवारिकुंभीभस्मावलेपाद्गलगंडरोगः॥श्वेतापराद्याजितमूलद्रव्यपानाद्धिनंक्ष्यत्यथवापितद्वत्॥७॥ योगद्वयम् ॥ अन्यः ॥तिक्तालाबुफलांतराल

उषितंनीरंपिबेत्पथ्यभुक्‌॥ दत्वावागलगंडकेबहुतरान्धाशु प्रछन्नतान्यलम्॥पिष्ट्वानन्नचलेपयेद्बहुतरंगोपालिकानाफलं सद्योवेगलगंडनाशनकरेयोगद्वयंसर्वदा॥८॥पटुनीरकुंभ्याः कणाचूर्णयुक्तंप्रभातेप्रसक्तंचगंडापहारी॥९॥ अन्यः ॥ ताम्रताप्यविमलाशिववीर्यत्र्यूषणोभवकरवोष्णदिलेपा त्॥ सैंधवेनचगबीजलपिष्टाद्‌गंडग्रंथिशमनंत्रिदिनाच्च॥१० विषमुष्टिजगञ्छिवावटीमधुनाकर्षमितास्फुरवास्थित॥अ पिसप्तादिनानिगंडरोगंशमयत्यत्रनचित्रमस्तिकिंचित्॥११॥ अन्यः ॥वराहपुच्छाग्रमलंप्रदग्धसिद्धार्थतैलेनसमंप्रसे पम्॥चिरस्यगंडस्यगलादिकस्यसद्यःप्रणाशायवदंतिवै द्याः॥१२॥ ॥अथसंप्राप्तिः॥ तत्रतावद्वातजः ॥प्रसंज नात्कृष्णशिरावबद्धस्यावोरुणस्तोदयुतःकठोरः॥यदृच्छया पाकमुपैतिकालेचिरात्प्रवृद्धोनचिरात्सपाकी॥१३॥गलमालाली गलगंडकापचिभ्योयदिमांसाक्षयतोल्पमांसदेहः॥स्फुरतःस्त्री पुचकंठतालुशोषंलभतेतोबहुधाग्नियनगच्छेत्॥१४॥समी रजातंगलगंडरोगंसमीरणप्रोषधियोगविद्वान्॥प्रस्वेदयेत्कु र्याद्विजयंचतस्यनोचेच्चिकित्सामपरांब्रवीमि॥१५॥त्रिडंगाग्ना सस्नास्फुरस्करतरुजवक्षारपटुभिर्जवैस्फातिक्ताकालावाःकटुकः वरतैलंचविपचेत्॥प्रभुक्तानद्वयप्रातर्मितरोगंडमसकृत्तथान स्यंतस्यप्रबलगलगंडंविजयते॥१६॥ अन्यः ॥ कर्कारुक स्यजठरस्यरसंविडेनसिंधुद्रवेनपटुनाकिलनस्ययोगात्॥स द्योनिहंतिगलगंडरुजांनिवातोद्भूतंसमस्तभिषजस्तुवदंति

नित्यम् ॥१७॥ ॥अथकफजः॥ ॥ स्थिरःशकलवर्णोऽति कंडूतियुक्तोगुरुःशीतयुक्तोमहान्वाकफोत्थः॥ चिराद्वृद्धिमान्वाऽचिरात्पाकमेतिकदाचिद्भवेन्मंदपीडश्चगंडः॥१८॥ भवेत्तेनमाधुर्यमास्येतथैवततोतालुकंठप्रलेपःकफेन॥ द्विपाधश्रुतिर्ब्रह्ममूलेनलेप्यातनस्तंदुलानांचनीरेप्रपिष्टा॥१९॥ ॥अथशस्त्रकर्म॥ ॥ जिह्वायाश्चतुपार्श्वतोधराशिराःप्रोक्ताश्चदिक्संमिताःस्तासांमूलशिरेचमेचकतमेछिंद्यात्त्वदंतैःशनैः॥ तद्द्वावडिशेनगृह्यमतिमान्दर्भस्यवक्त्रेणध्रुवम् रक्तेचापिस्रुतेगुडार्द्रकमलंदद्याद्व्रणेवैद्यराट्॥२०॥ अनभिष्यंदिभोज्यानिकौलत्थंयूषमेवच॥ देयान्यस्मैत्वसाध्यस्यकफगंडस्यशांतये॥२१॥ ॥अथमेदोजः॥ ॥ मेदोद्भवःस्निग्धमृदुश्चपांडुरनिष्ठगंधोरुजएवलद्गत॥ अलाबूवल्लंबितदेहतुल्यवृद्धिक्षयाभ्यांसहितःकदाचित्॥२२॥ स्निग्धास्यतातत्रभवेच्चतस्यशब्दंप्रकुर्याच्चगलेननित्यम्॥ कर्णद्वयात्तस्यबहिस्तुसंधावभ्यासमध्यस्थितरामनाडचः॥ तांश्चोपरिष्टाद्विषगत्रछिंद्यान्मेदोद्भवेवैगलगंडरोगे॥२३॥ अन्यः ॥ महिषीजलमिश्रितंघटेनुस्थितमेवात्रविमुच्यलोहकिटम्॥ अपिमासदिनानिवन्हिगंचमधुनालेह्यमलंगलादिगंडे॥२४॥ ॥अथ कंठमाला॥ ॥ धात्रीकर्कंधुकोलप्रमितबहुभिःश्चापिगंडैस्तुकक्षाग्रीवामन्यास्कवक्षःस्यपिचयदितदाश्लेष्मणामेदसाश्रव्याख्यातासाकंठमालाचिरतरसमयान्मंदपाकैस्तथान्या॥ गंडैस्तस्येपसव्येप्रभवतितनपनिवरामेकतश्चापचीस्यात्॥२५॥

॥ प्रतीकारः ॥ मासिकेणवरुणस्यजरायाःशुंठिकाशृतकषायमलयः ॥ नित्यमेवतुपिबेत्खलुसोयंकंटकादिसृजतोपिविमुच्येत् ॥ २६ ॥ अन्यः ॥ पलंवापलार्द्धत्वचंकांचनारैःपिबेत्तंदुलानांजलैर्नित्यमेव ॥ जयेत्कंठमालांप्रभातेमनुष्योहिनाशीरमाश्रीसदाशीरहेव ॥ २७ ॥ अन्यः ॥ त्रिफलापलसार्द्धकंसमञ्जलभूपास्त्यमक्षकंतथा ॥ त्रिसुगंधिमिहत्रिकंटकेपरिपेष्याखिलचूर्णसंमितम् ॥ २८ ॥ पुरमाशुविमिश्र्यपिंडमेकंगुटिकाशाणमितांश्चतस्यकृत्वा ॥ परिभुज्यचमुंडिनीकषायैर्गलमालागलगंडकापचीश्च ॥ २९ ॥ व्रणगुल्मभगंदरास्रवातान्खदिरस्य...ऐकषायपानकैर्वा ॥ अपिहंतिशिवाकषायपीनाबहुग्रंथीनुपकुष्टकुष्टरोगान् ॥ ३० ॥ अन्यः ॥ चक्रमर्दकजटाभवकल्कैर्भृंगराजजलेनसमेतैः ॥ तैलमाशुकटुतुंबिविपक्वंकामिनीशिरविभूषणयुक्तम् ॥ ३१ ॥ तैलमेतदुपहंतिविशेषाद्गंडरोगमपिनिश्चविलेपात् ॥ कृष्णलाभवजटाफलतैलनीरभागयुगुलेनविपक्वम् ॥ ३२ ॥ नस्यमर्दनविधिद्वययोगात्पूर्ववच्चगुणकारिविशिष्टम् ॥ योगयुग्ममुदितंवरवैद्यैःपद्यकत्रयवरेणसमापि ॥ ३३ ॥ ॥ अथापची ॥ ॥ येग्रंथयःपूर्वविपाकमासाःस्रवंतिनश्यंत्यपरेभवंति ॥ तथातथातेचतथातथैवसैवापचीस्याद्बहुकालसंस्था ॥ ३४ ॥ प्रतीकारः ॥ तैलंचंदनरोहिणीसमशृतपथ्यावचाभिर्द्धुतंलाक्षाभिःसहितंचपीतमसकृत्सिद्धंजयेच्चापचीम् ॥ तद्दृषोषविडंगसैंधवशृतकाथेननाकास्यवानश्यांवापिनिहंतितैलमसकृद्दुष्टसच्छिद्रामपि ॥ ३५ ॥ ॥ टि

ग्रंथिः॥ ॥ मांसंसरक्तंचतथैवमेदःशिराश्चसंदूष्यप्रभंजना य॥ वृत्तोन्नतंवैग्रथितंविशेषाच्छोथंप्रकुर्वन्स्यथग्रंथिरेषः॥ ३६॥ प्रतीकारः ॥ससर्जिकोमूलकसंभवश्चक्षारःक्रुश रवस्यचचूर्णयुक्तः॥प्रलेपनाद्ग्रंथिमलानिहंतितथार्बुदंचापिवि निश्चयेन॥३७॥ ॥अथवातग्रंथिः॥ ॥संभिद्यतेवाश्र यमाविदार्यसमानतस्तुद्यनिभिद्यतेच॥द्विधाकृतेयःपरिभिद्य तेवसवातजग्रंथिरुदारुतोसौ॥३८॥ प्रतीकारः ॥हिंस्रा मृतारोहिणिकासभार्ङ्गीरस्योनाककृष्णागरुकृष्णगंधा॥बि ल्वान्विताताम्रदलेनहंतिसंपालितारवलुग्रंथिभित्स्यात्॥३९ दंतीमूलकचित्रवल्कलगुडस्नुग्भातुदुग्धान्वितोभल्लातास्थि समोविषश्चनिभृतेकाशीशयुक्तोयदि॥ग्रंथोलेपितएववापिदि वसैःकालेनहन्याच्छुलरोगान्वांगलगंडकादिसकलान्किंतत्र चित्रंबुनः॥४०॥ ॥अथोत्रशस्त्रकर्षः॥ ॥पक्वंविदार्याशु निरस्यपूयंप्रक्षालयेच्छर्कोरिवक्कतोयैः॥तिलैस्तथैरंडदलप्रपि ष्टैःसंस्वेदयेत्सैंधवचूर्णयुक्तैः॥४१॥ ॥अथपित्तग्रंथिः॥ ॥ दंदह्यमानेवचधूप्यतीहमापच्यतेमज्वलतीवभूयः॥रक्तश्चपि त्तोपिच्चपित्तग्रंथिर्भिन्नस्त्रवदुःखमपीवचास्त्र॥४२॥ प्रती कारः॥ ॥जलौकशःपित्तभवेप्रशस्तात्क्षारोदकाभ्यांपरिपेषणा नि॥काकोलिकाद्वंगनिशीतलाञ्चपिबेत्कषायाणिसितान्विता नि॥४३॥ अन्यः ॥वीरंतसमधुकजंबुकत्वग्जलैश्चपरि प्रेषयेन्मुहुः॥पित्तग्रंथिशमनायविशुद्धेपूपपंकथितस्य विशेषात्॥४४॥ ॥अथकफग्रंथिः॥ ॥विचूर्णोस्त्ररुक्

शीतश्चापिकंडूयुतश्चाश्मयद्दीपकाल्पपाकी॥ श्रवेच्छुक्लू
पूपयुतंश्लेष्मवातौविशेषेणग्रंथिश्चिकित्सास्यतद्धत्॥४५॥
अस्त्रकर्म॥ ॥विदार्यपक्वंनिरस्यपूपंप्रपेचयेच्चाथवनस्पती
नाम्॥ क्वाथैश्चतैलैर्मधुयष्टिकानांघृतैस्तथावामधुरैर्विपक्वैः॥
४६॥हृतेषुदोषेषुकपस्यग्रंथावंगुष्ठवेणूपलकैर्विदध्यात्॥
विप्लावनंतेषुविलेपयेच्च॥४७॥विट्काकमारग्वधकाकणंती
काकादनीयस्तपस्विमूलैः॥अलाबुभार्ङ्गीमदनैश्चकाली-
पिष्टैर्हुतंचात्रविलेपनानि॥४८॥ ॥अथमेदोग्रंथिः॥ ॥
स्निग्धोमहान्नीरुजएवकंडूयुक्तः शरीरस्यचवृद्धिहारी॥ मेदो
त्थग्रंथिन्तुविभिद्यमानोमेदः स्रवत्येवतिलस्यपिष्टैः॥४९॥
मेदोत्थग्रंथिंतुतिलस्यकल्कैरालिप्यसंछाद्यचपट्टवस्त्रैः॥ स
च्छेदयेत्तमसकलोहशस्त्रैः सपादयित्वादरिवलमेवमेदः॥५०॥
संदोद्धलोहाग्निविशेषयोगैर्मर्मप्रभूतानपिचानुवेलम्॥ संलि
ख्यपक्वांश्चयथोपदेशंक्षारेणनित्यंपरिमार्जयेच्च॥५१॥ ॥
अथशिराग्रंथिः॥ ॥व्यायामादवलस्यवायुरपिवासंविश्य
नाडीस्वलंसंपीड्याशुशिरः करोतिबहुधाच्चत्रोश्चग्रंथिस्ततः॥
सोऽसाध्योखिलवैद्यभूपभाणितः प्रायःकफग्रंथिवत्प्रतिवाच्य
च्चचिकित्सितंत्वविधिवत्कुर्याद्भिषक्सर्वदा॥५२॥ अथो
पद्रवाः॥ ॥कोलःकंडूदाहविस्फोटपाकास्तोदोध्वांतोःसस्र
योस्वरस्तुतिश्च॥ भगस्तद्वज्जायतेवास्वरस्यग्रंथावुक्तादिङ्नि
तोपद्रवाश्च॥५३॥ ॥अथसाध्यलक्षणम्॥ ॥
स्वसंतंचकृच्छ्रानमृदुसर्वगात्रेन्तथावत्सरातीतमेवंसवैद्यः॥

॥ तथारोचकार्तं कृशांगंतु सद्योविशेषेण भिन्नस्वरं संत्यजेच्च॥ ५४॥ पुनर्वा पुनः पच्यमानं च पार्श्वे महाशूलयुक्तं च कासज्वरार्तम्॥ तथाच्छर्दियुक्तं च कंठस्य गंडं शिरोत्थं च ग्रंथिं विशेषाच्च कृच्छ्रम्॥ ५५॥ तथा पंचग्रंथींश्च मर्माश्रितान्वा गलस्थान्कपोलस्थितान्मर्मजांश्च॥ तथा वापि मन्याभवान्संधिजातांस्त्यजेद्वैद्यभूपस्ततो दुश्चिकित्साम्॥ ५६॥ ॥अथनिवृत्तिः॥ ॥ शोथाभावो वेदनायाप्यभावः सम्यग्ग्रासस्यापि कंठे गतिश्च॥ ख्याता वैद्यैः कंठगंडान्निवृत्तिः प्रायः कंठे लंबते यस्तु गंडः॥५७ ॥ श्रीतातपादाब्जसमाज्ञया या कृता चिकित्साकमकल्पवल्ली॥ श्रीकाशिनाथेन च तत्र कंठगंडे चिकित्सिस्तबकः समाप्तः॥ ५८॥ ॥ ॥इतिगलगंडचिकित्साफलितस्तबकः॥ ३३॥ ॥ ॥

क्वचिद्देहे दोषाः क्वचिदपि च मूर्च्छंति यदि चेत्प्रकुर्युः संदूष्य प्रथममसृजं मांसमखिलम्॥ स्थिरं वृत्तं दीर्घं बहुलतरगाढार्बुदगदं पलाशीयो नित्यं प्रभवति जनस्तस्य नियतम्॥ १॥ ॥अथपूर्वरूपम्॥ ॥प्रसेकोर्बुदे चापि शोथो भविष्यत्यथो वा प्रसेकः क्लमोपि प्रकामम्॥ भवेदस्य रूपं स्थिरं मंदपीडं महांतं त्वनल्पोच्चमासस्त्वगाधम्॥ २॥ अथोपशमः ॥गुर्वन्नपिष्टमन्नपिशितमपि तथा शकभिक्षोर्विकारान् संत्यज्य प्रायशो यत्कफकरमखिलं भोज्यमन्नं तथान्नम्॥ स्नुगंडीरैरथ्यथो वा लवणनिचयैः शिशिकैर्वार्बुदानि संस्वेद्याशु प्रकामं नचयति प्रशमं वैद्यभूपोऽशिराद्या॥ ३॥ अथप्रतीकारः ॥ क्षारो हरिद्राप्रभवश्च मूलक्षारेण शंखस्य च चूर्णयुक्तः॥ लेपोर्बुदानां च विनाशहेतुरूपोदकी

नांरसमज्जनानि ॥४॥ वटस्य दुग्धेन च कुष्ठरोमावालिप्यमाना
र्बुदके प्रकामम् ॥ उपोदकीपत्रनिवेष्टनानि घ्नन्त्याशु चैवार्बुदरोग
संघान् ॥५॥ अन्यः ॥ बलिशिलाकृमिशत्रुमहौषधैर्जवज
भस्मजचूर्णयुतैरलम् ॥ अथ तथा कृकलासजरक्तकैर्हरति लि
प्तिमाशु महार्बुदम् ॥६॥ अन्यः ॥ शिग्रुमूलकभवं खलु बी
जं राजसोघ्नकरसाकजवांश्च ॥ अश्वमारसहितासहतक्रैः पे
ष्यचार्बुदगदघ्न विलेपः ॥७॥ अन्यः ॥ पटोलजटापटुताम्र
जशीर्षोरायशपट्टतलातर्बद्धा ॥ जवाग्नजमग्निजमुष्कमुकमस्थ्रा
ण्येकतमं खलु तत्र भिषक् ॥ पुनः पुनरन्यतमं च विदध्याद्यावदसा
बुपयातरुजाप्यनुह्निजतेन तथार्बुदनाशाय स्वप्रमत्तमनाः प्रय
तः ॥८॥ आस्फोतकवीरकजातिकानां पिष्टैश्च पत्रैस्तु कषायसि
द्धैः ॥ जलैश्च प्रक्षाल्य विडंगपाठाफलत्रयैर्गर्दभशाकसिद्धम् ॥
९॥ तैलं विसंधीत भिषग्विशेषादुपोदिकाकांजिकतक्रपिष्टैः ॥
ततोपनाहं लवणोनकैश्चिन्मर्मोपजातार्बुदकोटिहस्यै ॥१०॥ ॥
अथ संप्राप्तिः ॥ ॥ तत्र तावद्वातार्बुदम् ॥ ॥ संभिद्यते वा
श्वयमाशु तोद युक्तं ततं वस्तिरिव प्रकामम् ॥ भाती च चायाम्यत
एव वातज्जातं तु वैद्योर्बुदकं विचक्षीत ॥११॥ निदानदेशाकृति
दोषदूष्यैर्ग्रन्थ्यर्बुदानां न यतो विशेषः ॥ अतोर्बुदान्येव भिषक्चि
कित्सेद्ग्रन्थ्युक्तयोगौषधिभिर्विनिद्रः ॥१२॥ प्रतीकारः ॥ एर्वा
रुककोरुकसीर्षमज्जाप्रियालुदारुरिजबीजचूर्णैः ॥ पयोघृता
भ्यामुपनाहपीतवातार्बुदं चाथ स्वकोष्णसिद्धैः ॥१३॥ ॥ अ
थ पित्तार्बुदम् ॥ ॥ रक्तोष्णपीतोपिच दाहयुक्तं सास्रस्रवाधू

ध्यानि पाकयुक्तः॥ पित्तोद्भवश्चार्बुद एवतस्मिं ल्लेपप्रयुंजीतभिषक्प्रधानत्॥ १४॥ निघृष्य चोदुंबरशाकजातीदलैर्भृशंक्षौद्रयुतैः प्रलिंपेत्॥ श्लक्ष्णीकृतैः सर्जरसप्रियंगुयष्टीपमांगार्जुनलोध्रमिश्रैः॥ १५॥ ॥ अथकफार्बुदम्॥ ॥ शीतोविचूर्णोल्पकरुजो द्दढश्च पाषाणवत्श्लेष्मजविद्रधिश्च॥ शुक्लंघनपूपमलस्रवेद्योरक्ते विरक्तंखलुतत्रकुर्यात्॥ १६॥ काकस्य नीलीशुकलांगलानां काकादनीमूलकपीलविड्भिः॥ पारावतस्यापि विशाजवाग्रक्षारेणले पंकफजार्बुदंतु॥ १७॥ युग्मम् ॥ अथमेदोर्बुदम्॥ ॥ स्निग्धोमहान्कंडुयुतोनिरुद्धदेहेविशेषादपिवर्द्धतेसः॥ मेदस्स्रवेन्मदरुजोर्बुदश्चमेदोद्भवःसंप्रथमंतुवैद्यः॥ १८॥ सस्वेदयित्वाचततोविदार्यसंशोधयेन्निशयासलोध्रैः॥ आगारधूमेनपतंगकेनमनःशिलाक्षौद्रयुतैश्चलिंपेत्॥ १९॥ ॥ अथरक्तार्बुदम्॥ ॥ दोषाद्दुष्टारुधिरनिचयंयाश्चसर्वासिराश्चताःसंकोच्यप्रथमरुधिरस्यार्बुदंपीडयित्वा॥ सास्रंमांसंबहुलपललस्यांकुरैर्युक्तमेवापाकंपिंडंरुधिरमनिशंसंस्रवत्याश्वसंध्यम्॥ २०॥ रक्तक्षयोपद्रुतपांडुदेहःसंपीडितश्चार्बुदरोगयुक्तः॥ यमालिथिःसंयमनीयियाशुतस्मैविबोध्यंहरिनामधेयम्॥ २१॥ ॥ अथमांसार्बुदम्॥ ॥ अंगेषुमुष्ट्यादिभिरर्दितांगेकृन्तिस्यहार्यैर्यदिदुष्टमांसम्॥ शोथंव्रजोत्स्निग्धमनल्पवर्णमक्लेदनाशप्रसभार्यस्रंच॥ २२॥ अथोपद्रवाः ॥ रक्तःस्रवःकीटपातश्चतोदःपाकोद्दानिर्बलस्यक्षयश्च॥ शोथःपांडुःशभुशस्त्रज्वराधावैद्याख्यातोपद्रवाश्चार्बुदानाम्॥ २३॥ ॥ अथासाध्यलक्ष

णम्॥ ॥असाध्यमाहुः पललजार्बुदंचस्रोतःसुजातंखलु मर्म जंतु॥ संप्रस्नुतंचापिभवेद्व्चाल्पंजातेपुनर्जातमपाकमेति॥२४॥ कफाधिकत्वादथमेदसोपिबाहुल्यतोद्व्यंभवक्रमाच्च॥ तथैककालं बहुलार्बुदानिजातानिग्र थ्नातुनिसर्गतश्च॥२५॥ युग्मम्॥ अथकीटोपद्रवचिकित्सा॥ ॥मांसैःप्रगाढंपरिमर्दितानिनिष्पावपिण्याककुलत्थकानि॥ कल्कीकृतान्याशुविलेपितानि तान्याशुजग्ध्वानिपतंतिकीटाः॥२६॥ जग्धंचकीटैरवशिष्टमल्पमग्निंचतत्राशुदधीतपश्चात्॥ शेषाणिदोषाणिपुनर्भवानि कुर्य्युर्बुदान्याशुततोविशेषात्॥२७॥ तस्माद्दशेषाणिसमुद्धरेच्च यस्माद्धिनष्टानिनसंभवंति॥ ॥अथनिवृत्तिः॥ ॥ निःपीडितेचार्बुदकप्रदेशेरुजस्यशोथस्यनिवर्तनंचेत्॥ अन्यत्रदेहेनसमंचतत्रशोषोनुलेपादिषुतंनिवृत्तौ॥२८॥ ॥श्रीतानपादाब्जसमाज्ञयाप्राकृताचिकित्साक्रमकल्पवल्ली॥ श्रीकाशिनाथेनगतस्यतस्यारुजोर्बुदस्यस्तबकश्चिकित्साम्॥२९॥ ॥इत्यर्बुदचिकित्सास्तबकः॥३३ ॥ ॥ ॥अथश्लीपदनिदानम्॥ ॥येवैपुराणोदकसंप्रयुक्तादेशाश्चसर्वर्तुषुशीतलाश्च॥ तेष्वेवनित्यंप्रभवंतिपुंसांप्रायस्तथाश्लीपदकानियानि॥१॥ ॥अथपूर्वरूपम्॥ ॥ऊर्ध्वाद्विपादावधिगौरवंचेत्तोदस्तथाश्लीपदपूर्वरूपे॥ रूपंज्वरोवंक्षणयोर्भृशार्त्तिःशोथोभवेत्पादगतक्रमेण॥२॥ तत्श्लीपदंवैकरकर्णनेत्रशिश्नोष्ठनासास्वपिकेपिवेद्याः॥ वदंतितत्रोपशयंब्रवीमियवाःपुराणास्तथशालयश्च मुद्गास्तथाकूर्मपतत्रिणांच॥३॥ मांसानिचस्तूकपुनर्नवानांशाकानियद्यत्

खलुवातहारि ॥ विरेचनच्छर्दनलंघनानिरक्तस्यवामोक्षविधिं प्रकुर्यात् ॥ ४ ॥ ॥ इतिपूर्वरूपरूपोपशय ॥ ॥ अथप्रतीकारः ॥ ॥ प्रायस्तथाश्लेष्महरैः प्रयोगैरुग्रैर्भिषक्संविदधीतपूर्वम् ॥ निर्गुंडिकोन्मत्तपुनर्नवानांसिद्धार्थशिग्रुप्रयुतःप्रलेपः ॥ ५ ॥ ॥ अथान्योभक्ष्ययोगः ॥ ॥ कृष्णाकर्षंत्रिकटुद्विकर्षदंत्यास्तद्वैपलंविंशतिश्च ॥ तद्वच्चोक्तंसच्छिवानांगुडस्यप्रोक्तंवैद्यैर्युग्ममानंतुलायाः ॥ ६ ॥ कृत्वानासांमोदकंमाक्षिकेणभुक्तःसद्यःश्लीपदंहंत्ययत्नात् ॥ लेपस्तद्वद्गुडूचीविडंगशुंठीनिक्ता गोजलैर्देवकाष्ठैः ॥ ७ ॥ ॥ युग्मेनयोगद्वयम् ॥ ॥ अन्यः ॥ ॥ लेपःसिद्धार्थशुंठीजगदमरतरूपेष्यधेनोःपयोभिर्युक्तःसोभांजनेनप्रशमयतिभृशंश्लीपदंसद्यएव ॥ तद्वत्सिद्धार्थवृश्चीभवअपितथानागरैःकांजिकेन लेपःसद्योविनयतितरांश्लीपदंशांतिमेव ॥ ८ ॥ योगद्वयम् ॥ अन्यः ॥ ॥ स्थूलानिपत्राणिचसल्लायाःकल्कीकृतान्याशकत्तमनीरैः ॥ संसृज्यपूर्वेलवणेनभुक्त्वारोगंद्रुतंश्लीपदकंनिहन्यात् ॥ ९ ॥ अन्यः ॥ शाखोटत्वक्काथेगोपयसाहि ॥ पीतेश्लीपदनाशंभवतितथाहि ॥ १० ॥ अन्यः ॥ गोमूत्रेणचरजनीनित्यमवेहि ॥ श्लीपददद्रुकुष्ठान्हरतिपिबेहि ॥ ११ ॥ अन्यः ॥ वर्षाभूत्रिफलाकणाभवमथोचूर्णंतथामाक्षिकैरेरंडस्यचतैलसाधितशिवाचूर्णंचगोमूत्रकैः ॥ लीढंभुक्तमिहैवसप्तदिवसैर्हंतिद्रुतंश्लीपदंदुष्टंवाबहुधानिरोत्थमसकृद्योयत्रसंतिष्ठते ॥ १२ ॥ ॥ अथसप्तांतिस्तनावद्वातजम् ॥ ॥ कृष्णारूक्षस्फुटितमपिवातीव्रपीडज्वरा

हर्षवातोद्भूतं भवतिनितरांश्लीपदंतत्रवेद्यः॥ स्नेहस्वेदोपनहनविधिंप्राग्विधायाथगुल्फादूर्ध्वंवेदांगुलमिततमेतत्रविध्येच्छिरांच ॥१३॥ अथप्रतीकारः॥ ॥ वातश्लीपदमाशुवैद्यधरणीपालस्तुवाबस्तिभिर्मांसंचैवगवांजलैस्तुदिनंवातारितैलस्यवा॥ पानैर्वाभिरतस्यचूर्णसहितश्चैवाग्निनामुंदहेदत्रप्रागविचिकित्सितेनसहसायोगत्रयेकेनवा ॥१४॥ अन्यः ॥ पुराणकारसमर्दजांशिफागवांजलैर्भृशंसुकल्कितांपिबेज्जनस्तुवातजस्यनाशिनीम्॥१५॥ ॥अथपित्तश्लीपदम्॥ ॥ पित्तात्पित्तंश्लीपदंदाहयुक्तंतद्भिन्नंस्यात्सज्वरंतत्रवैद्यः॥ गुल्फस्याधस्ताच्छिरां साधुविध्येत्सिक्तश्चीतामर्दुदोक्तांक्रियांच ॥१६॥ अरुणामधुकंचरास्नयासमदृश्चीकमहिंस्रयाध्रुवम्॥ परिपेष्यतथारनालकैरनुलेपोंध्रिगदेचपित्तजे॥१७॥ ॥अथकफजम्॥ ॥ स्निग्धंपांडुतरंचगौरवयुतंश्लेष्मोद्भवंचास्थिरंप्रायंश्लीपदकत्रयंनचकफोद्रेकाद्विनाजायते ॥यस्मात्तेषुमहत्त्वमेवकफतस्तद्भवेद्गौरवम् पादांगुष्ठशिरांचतत्रचभिषग्विध्येच्चतीक्ष्णान्भजेत्॥१८॥ क्वाथान्माक्षिकसंयुतानपितथाकल्कंशिवायाः पिबेत्गोमूत्रेणततोन्ययोगविधिनातस्यानुपानंचरेत्॥ १९॥ ॥ ॥अथान्येयोगाः॥ ॥ पिबेद्देवदारुंतथावागुडूचींतथानागरंभद्रदारूंतथापि॥ भजेच्छ्लीपदानांप्रशांत्यैविशेषात्रुतैलैस्तथासार्षपैरेकमेव॥२०॥ ॥अथसन्निपातजम्॥ ॥ ॥ वल्मीकवज्जातिमलंचकंटकैःसंचीयमानंमहदल्पकंचयत्॥ तद्वर्जनीयंबहुधात्रपंडितैश्चिकित्सितंतस्यचयथाविधि

ब्रुवे ॥ २१ ॥ प्रतीकारः ॥ उन्मत्तबीजानिचशीततोयैर्नित्यैक वृद्ध्याप्रपिबेन्मनुष्यः ॥ वल्मीकसंज्ञंविनिहंतिसद्योयच्छ्लीपदं हेयमपिभिदोषात् ॥ २२ ॥ अन्यः ॥ पिष्टंसूरणकंदंसह मधु नाहि ॥ सघृतंश्लीपदमशितं हरतितथाहि ॥ २३ ॥ अथोपद्र वाः ॥ ॥ पदयोस्फुटनंज्वरोंगपीडादवथुस्फोटपदप्रशून्यतास्त्र ॥ अथकंपसकंडुरवंजताश्वप्रभवंत्यत्रचपंगुतादिदुष्टाः ॥ २४ ॥ ॥ ॥ तत्रस्फुटनप्रतीकारः ॥ ॥ मदनसिक्थकसिंधुविलेप नात्मवघृतेनचसप्तदिनादलम् ॥ स्फुटितपादयुगंकमलोपमंभ वतिनित्यमलं तुनृणांत्वरा ॥ २५ ॥ अथस्फोटे ॥ गुडगुग्गुलु सिंधुगैरिकामधुरालमदनैश्चमाक्षिकैः ॥ घृतशिक्थकपेषि तैस्समंसनृणस्फोटहरंतुकोष्णकम् ॥ २६ ॥ इतिप्रलेपः ॥ अथपददाहे ॥ ॥ निशाभागमेकंत्वथोवाकुचीनां द्वयंतद्धिक र्षेघृतक्षौद्रयुक्तम् ॥ तिलैर्वाकुचीनद्वदेवेतिकेचित् पदोर्दाहह त्तैप्रखादेच्चयुक्तम् ॥ २७ ॥ अथकंडूतौ ॥ प्रथमतोनवनी नविलेपितंपदयुगंहयशत्रुदलस्यवै ॥ अपिविधूप्यपुनर्नरमूत्र केरपिविधूतमकंडुमृजुंभवेत् ॥ २८ ॥ अन्यः ॥ रसगंधकयोः समंस्कवर्णदिनमेकंपरिमर्द्यचित्रनीरैः ॥ पदगुल्फसमाश्रितार्ति कंडूंत्वरितंहंतिविलेपनेननित्यम् ॥ २९ ॥ ॥ अथासाध्यलक्ष स्यणम् ॥ ॥ सकफस्यकफस्यकारकैरशनैर्वापिविहारकैस्तथा ॥ सकलैरपिचिन्हितंचनोस्त्रवतीत्यत्रचपामयान्वितम् ॥ ३० ॥ सततंनचिकित्सितव्य एवतमसाध्यंजगदुःपुराणवैद्याः ॥ ॥ अथनिवृत्तिः ॥ ॥ पदयोर्लघुतागतौतथागमनेशक्तिरलंकफ-

क्षयः ॥ ३१ ॥ त्द्दयेयदितर्हिनिश्चितंविगतश्लीपदलक्षणंस्फुटम् ॥ श्रीतातनपादाज्ञेति० ॥ ३२ ॥ ॥ इतिश्रीगुरुचरणाब्जचञ्चरीकचतुर्वेदिकाशीनाथकृतचिकित्साक्रमकल्पवल्ल्यांश्लीपदचिकित्सास्तबकः ॥ ३४ ॥ ॥ ॥ अथविद्रधिः ॥ ॥

परुषाध्युषितोष्णशुष्कभक्ष्यैरथवालोहितदूषणैरपि ॥ अशनैरुपबर्हणादिभिश्चतैः शयनैवक्रतयानिवेशितैः ॥ १ ॥ बहिरन्तरमेवकुत्रचिद्वापलमेवोथमसृक्प्रदूषितम् ॥ परिगम्यचकंडराकलत्त्वकुरुते वृत्तमथायतंकचित् ॥ २ ॥ सरुजंयदिशोथमेकदेशेवरवैद्यैर्भणितश्चविद्रधिः ॥ प्रभविष्यतितत्रचास्थिशोथः प्रथमंस्फोटसमुद्भवःकिल ॥ ३ ॥ विशेषकम् ॥ इतिनिदानपूर्वरूपे ॥ ॥ अथरूपम् ॥ ॥ चि० अपाकरूपःकिलतत्रभोज्यागोधूमशालीचणकाःपुराणाः ॥ तथाकुलत्थापलमेकमेवमानूपवर्ज्यंकिलदुग्धतैलैः ॥ ४ ॥ वोलंपिबेत्तंदुलवारिणैवमासंचकर्षप्रमितंमनुष्यः ॥ प्रातर्ध्रुवंविद्रधिनाशनायसाम्लादिभक्ष्याणिचवर्जयित्वा ॥ ५ ॥ ॥ अथक्वाथः ॥ ॥ शिगूग्राःश्वत्थजःक्वाथोहिंगुसैंधवचर्चितः ॥ विद्रधिंचिरजंहंतिप्रातर्नित्यंनिषेवितः ॥ ६ सौभांजननिर्यूहोसिंधुयुतोहि ॥ विद्रधिहत्येपेयोहिंगुयुतोहि ॥ ७ ॥ सहस्रवर्षसंभूतमिष्टविट्मरिचान्वितम् ॥ अर्धमासघृतेर्लीढंविद्रधिंहंत्यसंशयम् ॥ ८ ॥ ॥ अथभूनिंबादिचूर्णम् ॥ ॥ पलार्धभूनिंबपलमितंनिशादारुरजनीद्विमानातस्यार्द्धजलदवरकालोद्भवजटा ॥ पलैकादुस्पर्शापलमितपलार्द्धत्रिकटुकापलार्द्धंविश्वायाःपलममृतमर्द्धंसमुचितम् ॥ ९ ॥

कवच्याः कर्षैकं मुनिदलमथो वत्सकमपि समं चूर्णीकृत्या द्विपरिपुत्रस्वस्यापि च रसः॥ पुरैर्दार्वी तुल्यैः समशितमिदं चूर्णमसकृत्प्रपीतं वासायाः स्वरससहितं विद्रधिहरम्॥१०॥ युग्मं ॥इति भूनिंबादिचूर्णम्॥ ॥प्रियंगु रात्रि लोध्र कट्फलानि धानकीत्वचा समं तु तैलकं शृतं च विद्रधिप्ररोपणम्॥११॥ द्विपंचमूलशिग्रुकैः फलत्रयैस्त्रिवृद्यवै कुलत्थकैश्च मूलकैः शृतं तथा गणैः स्मृतम्॥१२॥ अन्यः ॥ नीरेशवल्कलकषायसमं पिबेद्यः कासीससैंधवशिलाजतुहिंगुभिश्च॥ शिग्रोजटाभवजलं मधुना पिबन्हत्सद्यो निहंति खलु विद्रधिमेव पीनम्॥१३॥ योगद्वयम् ॥अथ संप्राप्तिस्तत्राद्यो वातविद्रधिः॥ ॥कृष्णोऽरुणो वा विषमो भृशार्तश्चित्रोत्थितो वापि विचित्रपाकी॥ वातोद्भवा विद्रधिरेव तत्र वातघ्नभूतौषधितैलहव्यैः॥१४॥ लिंपेद्रसाभिश्च सुखोष्णयोगैः पयं च दिङ्मूलपुनर्नवानाम्॥ श्रीदेवदार्वोरभयापुराभ्यामेरंडतैलेन च वातजाते॥१५॥ युग्मम् ॥अथ पित्तजः॥ ॥औदुंबराभो ज्वरदाहयुक्तः स्यात्वारुणः क्षिप्रभवः प्रपाकी॥ पित्तोद्भवो विद्रधिरेव तत्र त्रिवृन्निशिवा माक्षिकमाशु खादेत्॥१६॥ ॥अथ क्वाथः॥ ॥त्रिवृत्कल्कयुक्तं फलानां त्रयस्य॥ कषायं पिबेद्विद्रधौ पित्तजाते॥१७॥ अथ प्रलेपः॥ ॥घृतकल्कितपंचवल्कलैरथवा गव्यघृतैः सहस्रधा॥ अथ धौतनरैस्तथैव वा नवनीतैरपि लेपयेद्द्रुवम्॥१८॥ त्रयो योगाः ॥अथ कफजः॥ ॥शीतश्शरावप्रतिमानि पांडुस्निग्धोऽल्पपीडोऽपि चिरोत्थितश्च॥ चिरप्रपाकी कफविद्रधिश्च मासा

च्चिकित्स्यस्तनुपीतशफ्कठः॥१९॥ प्रतीकारः ॥इष्टकाभिरय-
वासिकताभिर्गोमयेनतुषयागविर्नीरैः॥पेषिताभिरलमेकत-
राभिः स्वेदयेच्चकफविद्रधिमाशु॥२०॥ ॥अथक्वाथः॥ ॥
वरुणत्रिफलादशमूलशृंगबक्कुपत्रसमंपुरमूत्रयुतम्॥ कफविद्र
धिनाशकरंविदितंवरवैद्यगणैरुदितंपिबतम्॥२१॥ ॥अथा
मविद्रधिः॥ ॥दोषाप्रवृत्तिस्वमाद्यायत्रसामंचतंवदेत्॥गो
धूमजवमुद्गाभिर्घृतपिष्टैर्विलेपयेत्॥२२॥ प्रतीकारः ॥सवे
सवारैः कृशराभिरामसमुद्भवंविद्रधिमाशुवैद्यः॥ तथापयोभिः
किलपायसैर्वाविशेषतःस्वेद्यविरक्तयेच्च॥२३॥ ॥अथसन्नि
पातजः॥ ॥नानावर्णरुजाकरोतिविषमोस्त्रावश्चयद्दालकः
पाकंयातितथैवयस्तुविषमःकालाच्चदोषत्रयैः॥संभूतंखलु
विद्रधिंगदहरैर्योगैर्द्रुतंनाशयेन्नानादोषनिकायनाशनपरोबु
द्धोभिषग्भूपतिः॥२४॥ ॥अथागंतुकः॥ ॥नैस्तैर्भावै
रभिहततरेपथ्यहीनस्तनेचेद्वायुःसंस्थः क्षतजमसकृत्पित्तदू
नंकरोति॥तृष्णादाहोज्वरअपितदाजायतेगंतुकोसौख्याती
वैविद्रधिगदस्त्रथोपित्तवत्साचिकित्स्यः॥२५॥ ॥अथरक्तजः॥
कृष्णाःस्फोटैःसंयुतस्तीव्रदाहःश्यावस्तद्वत्तीव्रपीडासमेतः
॥रक्तोद्भूतोविद्रधिःपित्तवद्वावैद्यःसद्यःसंचिकित्सेच्चतद्वत्
॥२६॥ ॥अथाभ्यंतरविद्रधिः॥ ॥असात्म्यगुर्वन्न-
विरुद्ध शुष्कशाकाम्लभोज्यैश्चपयःसमंतात्॥ दोषाचिदा-
हीनिमलानिगत्वाचिराच्चिताविद्रधिमंतरेव॥२७॥ कुर्युश्चव
ल्मीकनिभंगुदेचवस्तौमुखेवापितथैवनाभौ॥कुक्षौतथावंक्ष

णयोश्चवृक्कयुग्मेपिप्लीह्निप्रथितेचसव्ये ॥ २९ ॥ हृद्यप्यथोक्लोम्निचतत्रतत्रबाह्यक्रमव्याधिचिकित्सितानि ॥ कुर्याच्चतत्स्थानविशोष्यलिंगमत्रब्रुवेयेनविनिश्चयोस्य ॥ २१ ॥ गुदेवायुरोधस्तुवस्तौचकृच्छ्रंभवेन्मूत्रतोनाभिजेचातिहिक्का ॥ भवेच्चेच्चकुक्षौचसाटोपवायुः प्रकुप्येच्चवैवंक्षणेचेत्तदानीम् ॥ ३० ॥ कटीपृष्ठयोर्वैग्रहोविद्रधौवानथावृक्कयोः पार्श्वसंकोचउक्तः ॥ भवेत्प्लीह्निचोच्छ्वासरोधोनरस्यप्रकामंतुसर्वांगकेदुर्ग्रहश्च ॥ ३१ ॥ हृदिप्रोत्थितः कासकारीचतद्वद्भवेत्क्लोम्निजातेतुदुग्धंपिबेच्च ॥ भवेद्विद्रधौनाभितश्चोर्ध्वजातेविकारस्तुतिश्चोद्भूतोधस्तुजाते ॥ अधस्तात्स्रवेन्नाभिजोर्ध्वेतथाप्यधस्तात्स्रवेन्मार्गयुग्मेनसद्यः ॥ ३२ ॥ प्रतीकारः ॥ पाठामूलंतंदुलांबुप्रपीतंमंतर्जातंविद्रधिंक्षौद्रयुक्तम् ॥ हंतिप्रायोनान्यथायोगविद्भिस्सर्वैरुक्तंकाथमेतत्प्रसिद्धम् ॥ ३३ ॥ अन्यः ॥ सहिंगुकाशीसशिलाजतूनांससैंधवानांचरजःसमेतम् ॥ शृतंतुनीरेशाजवल्कलानामंतस्थितंविद्रधिमाशुहंति ॥ ३४ ॥ ॥अथविद्रधेरुपद्रवाः ॥ ॥ आध्मानंमूत्रकृच्छ्रंवमनमपितथातर्षहिक्काज्वराद्याः श्वासःकासोविदाहः प्रभवतिसहसापाकताचास्यजंतोः ॥ वैद्यारव्यानाभवंतिप्रबलतरगदाविद्रधेर्विभ्रमूतास्तैःसर्वैरवयुक्तोभवतियदितद्वोपद्रुतोसावसाध्यः ॥ ३५ ॥ ॥अथासाध्यलक्षणम् ॥ ॥ अधःस्रुतेविद्रधिरेषसाध्योभवेदसाध्योर्ध्वमुखस्रुतश्च ॥ हृन्नाभिवस्त्युद्भवमेवहित्वात्वन्येषुबाह्यस्रुतिरप्यसाध्या ॥ ३६ ॥ ॥यकृत्प्लीह्निचक्लोम्निजातो

न्यत्रविद्रधिः॥ तत्रतत्राशुशस्त्रेणकुर्यादूत्यस्तुनिंबुधः॥३७॥सा
ध्मानंबद्धमूत्रंबहुलतररुजंछर्दिहिक्कातृषार्तंस्यक्तत्वासमर्थमभि
षग्वाजयतिचनितरांपंचकंविद्रधीनाम्॥ श्वासाढ्यंसन्निधीनप्र
भवमपितथाज्ञामजंशोथयुक्तंत्याज्यंरोगंविशेषादपिवरभिषजा
संमतंसर्वतश्च॥३८॥ ॥अथनिवृत्तिः॥ ॥अशेषस्तुनेशो
थहीनेव्रणेचविसंमर्दितेनीरुजत्वंभवेच्च॥ अकंडुत्वमेवस्फुटंवि
द्रधेश्वनिवृत्तिस्तदावैद्यधुर्यैःप्रदिष्टा॥३९॥ श्रीतातपादाब्ज
समाश्रयेति०॥तस्यांगतोविद्रधिसच्चिकित्साफलान्वितोयंस्तबकः
समाप्तिम्॥४०॥ ॥इतिश्रीमद्गुरुचरणाब्जमधुपचतुर्वेदि
काशीनाथकृतचिकित्साक्रमकल्पवल्ल्यांविद्रधिचिकित्साफलि
तस्तबकः॥३५॥ ॥ ॥ ॥अथव्रणानिदानम्॥ ॥
॥ ॥दुष्टांबुभोजननिषेवणतोतिक्रोधात्साराशनादपितथाभिघ
धातंचशोथात्॥ रक्तस्यवापरिविदूषणतोनराणांदुष्टव्रणाप्रभव-
कारणमुक्तमाद्यैः॥१॥ ॥अथव्रणपूर्वरूपम्॥ ॥भवेदे
कदेशस्थितोयत्रशोथोव्रणानांभवेत्पूर्वरूपस्तुतत्र॥ सशोथंसपी
डंभवेत्तत्रयत्तुतदुक्तंचवैद्यैर्व्रणस्यस्वरूपम्॥२॥ ॥अथोप
शयः॥ ॥नात्युष्णांचद्रवोन्नंचबहुधाजीर्णांचशाल्योदनंनो
ष्णांस्निग्धमथोत्रजांगलपलैर्वास्तूकजीवंतकैः॥ वार्तांकैश्चप
टोलमूलकभवैश्शाकैश्चकारवेल्लुजैस्तद्दाडिमजैर्निषेणाकभवै
र्मुद्गारसैःसैंधवैः॥३॥ अन्यैर्मधुरादिभिर्व्रणहरैर्भक्ष्यैश्चका
लोद्भवैः वैद्यवरःसमंचव्रणिनेदद्याद्व्रणारोपणम्॥ त्यक्त्वाम्लं
दधिशाकमम्लमथवाक्षीरंस्वगुर्वन्नकमायासाच्चपथुर्दिवाचशय

नंत्याज्यंसदामैथुनम्॥३४॥ युग्मम् ॥दिवास्वापाद्रवेद्रागश्वपथुश्चायासतोभवेत्॥ मैथुनाच्चव्रणीसद्यः सूर्यजस्यगृहेव्रजेत्॥३५॥ बंधनाद्व्रणशुद्धिःस्यान्मृदुत्वंचोपगच्छति॥ रोहत्यपिव्रणःसद्यस्तस्मात्पूर्वंचबंधयेत्॥६॥ तद्यथा ॥न्यग्रोधकादेर्मृदुभिश्चपत्रैराच्छाद्यपूर्वंचव्रणप्रबध्नीत्॥ निबंधनाद्व्रणांविचूर्णितानिसंपिच्छितान्याशुव्रणानियांनि॥७॥ रोहंतिछिन्नान्यपिसद्यएवस्नायुप्रवृत्तानिशिरोहतानि॥ अतोनिबध्नीतभिषग्व्रणप्राकुन्यग्रोधकादिर्व्रणहागणोग्रे॥८॥ न्यग्रोधकोदुंबरपीतनानामश्वत्थजंबूद्रुमवंजुलानाम्॥ कदंबकाश्वेतकतिंदुकानांलोध्रेन्दुनंदीद्रुमबादराणाम्॥९॥ प्लक्षस्ययष्टीमधुयष्टिकानांभल्लातब्रह्मद्रुमपल्लवानाम्॥ न्यग्रोधकादेर्गणएषउक्तोव्रण्यस्तुदाहघ्नभगोत्थरोगे॥१०॥ ॥अथव्रणानामवस्था॥ ॥मंदोष्णतास्पत्वमथोत्रशोथेकाठिण्यमेवत्वचिवर्णसाम्यम्॥ रुजश्चमांद्यंखलुतत्रचेद्यात्स्यामव्रणानामिहसात्ववस्था॥११॥ कुशानुनेवप्रतिदह्यतेयःक्षारेणयद्वत्परिपच्यतेचेत्॥ पिपीलिकाभिर्बहुभिर्यथैवसंदश्यतेछिद्यतएवयद्वत्॥१२॥ संभिद्यतेवेवतुशस्त्रपातैर्दंडेनवाताड्यतएवतत्र॥ प्रपीड्यतेवेवशयेनचांतःसूचीभिरत्रप्रतितुद्यतेव॥१३॥ शोषोपिचोषोंगुलिनेवतद्वत्प्रपीड्यतेवाशयनासनेषु॥ नशांतिमायातिचवृश्चिकेनविद्धोयथाध्मातमलंचबस्तिः॥१४॥ ज्वरोरुचिस्तर्षअलंभवेयुःपापच्यमानव्रणलक्षणानि॥ ॥इतिव्रणपच्यमानावस्था॥ ॥ ॥अथपक्वावस्था॥ ॥शोथस्यभावोप्यथलोहितत्वंरुज

श्चशांतिर्वेल्लिसंभवश्च ॥१५॥ अनुन्नतत्वंखलुनिम्नताचेत्तोदो-
नुवेलंचनथैवकंडूः॥ उपद्रवाणांप्रशमस्तचश्चभवेत्ततःप्रस्फुटनं-
विशेषात् ॥१६॥ वस्ताविवाम्बुपचरत्वमचशोथेंगुलिस्पर्शनिपी-
डनंद्राक्॥ भवेद्धुभुत्सान्नणपाकतायांसम्यग्मृदुत्वंगलपूयपीड
म्॥१७॥ ॥अथव्रणदोषनिरूपणम्॥ ॥क्षतेव्यथावा
नकृताप्रपाकोभवेत्तथापित्तकृतःकफेन॥ पूयोद्गमोवैत्रयएवदो
षाःपचंतिकालेव्रणमेवसर्वे॥१८॥गंभीरपाकत्वमसृक्प्रयातिशो
थंकफोस्थेत्वविशीर्णताच॥ त्वचःसवर्णत्वरुजोल्पताच स्पर्शेश्मतु
ल्यत्वमलंव्रणेपि॥१९॥ अैपांगृहंप्राप्यथाकृशानुर्वानेरितःसं
दहतेसमंतात्॥ तथैवपूयोप्यविनिःसृतश्चेस्वलंशिरास्नायुचखा
दतेत्र॥२०॥ आमंविदग्धंखलुयस्तुवेत्तिसम्यग्विपक्वंसचवैद्यभू-
पः॥यश्चाममज्ञायछिनत्तिमूढोप्यपेक्षतेपक्वमलंतथासः॥२१॥
॥ ॥अथवातिकव्रणलक्षणम्॥ ॥स्तब्धस्तथातिकठि
नोतिरुजस्तथावासंतुद्यतेव्रणअथस्फुटतेचवातात् ॥ श्यावोस्य
पित्तजव्रणोज्वरदाहमोहदुःखावदारणविगंधविपूययुक्तः॥
२२॥ ॥अथकफजः॥ ॥स्तिमितश्चगुरुश्चपिच्छिलश्चि
रपाकीसितमंदवेदनः॥ कफजश्चव्रणोस्यकार्दकःप्रथितोवै
द्यवरैरुदीरितः॥२३॥ ॥तत्रतावदामव्रणचिकित्सा॥ ॥
लेपश्चसेकश्चतथैववैद्यैःकार्यस्तथाविप्लवनंस्तुतिश्च ।रक्तस्यच
त्वारिचिकित्सितानित्वामव्रणानांप्रथितानिवक्ष्ये॥२४॥ ॥ततः
त्रतावल्लेपः॥ ॥सुवर्णपत्रमूलकैःप्रपेषितैःससैंधवैःकृतोष्णा
लेपएषवैव्रणोस्यदुष्टशोथहा॥२५॥ अन्यः ॥मातुलुंगस्य

रदारुचित्रकाहिंस्रकाग्निमाथितेनपाचिताः॥ राक्षसयोषधियुता श्वपेषितालेपितास्त्वनिलशोथनाशनाः॥ २३॥ ॥ अथपित्तशोथे॥ ॥ दूर्वयामधुकचंदननीरैःपेषितैश्चनलमूलसमेतैः॥ लेपएवव्रणपित्तजशोथनाशनायकथितोप्यतिशीतः ॥ २७ ॥ ॥ अथकफशोथे॥ ॥ लेपोश्वगंधाप्रभवोजशृंग्यामंजिष्ठिकायाः सरलस्यतद्वत्॥ एकैकएतेषुकफोत्थशोथव्रणापहारीप्रथितोविशेषात्॥ २८॥ ॥ इतिचत्वारोलेपाः॥ ॥ अन्यः॥ न्यग्रोधकोदुंबर वेतसानांप्लक्षस्यचाश्वत्थतरुद्रुवानाम्॥ स्ववल्कलानांसघृतः प्रलेपोत्यागंतुकानांव्रणिनांचशोथे॥ २९॥ रक्तव्रणभवशोथेलेपितएव॥ तत्क्षणमेवनिकामंहरतितमेव॥ ३०॥ ननिशिलेपनदानविधिःस्मृतोनपतितोपिपुनःपरदीयते॥ अपिचपर्युषितंनविलेपयेद्दृढुलशुष्कमलंनचधारयेत्॥ ३१॥ निशितमःपिहितेषुचरोमजेष्वखिलगर्तमुखेषुचसंस्थितः॥ अथतयोष्णचयोनिशिलेपनाद्व्रजतिदूरतरंनिशिलेपयेत्॥ ३२॥ स्निग्धःशीतपयोन्वितोनिगदितःकोष्णःप्रलेपोनिशिशोथेपित्तभवेभिषग्भिरगदितस्तद्वत्कफोत्थेध्रुवम्॥ सक्षारोप्यथधेनुमूत्रसहितःप्रायःकवोष्णोनिशिरागाढ्येश्वपयोन्चवैद्यधरणीपालैःप्रलेपोदितः॥ ३३॥ ॥ अथसेकः॥ ॥ यथांवसंसेचनतोतिचंडवन्हिःप्रशांतिंभजतिप्रकामम्॥ तथैवदोषाग्निरपिप्रचंडसेकात्प्रशाम्यत्यचिरेणनित्यम्॥ ३४॥ रक्तावसेचनमलंप्रथमंप्रकुर्याच्छोथेमहत्यपिव्रणेरुजिवातजाते॥ वातघ्नयोगशृतनीरकैश्चसिंचेन्मांसप्रभूतजरसैश्चघृतैरथोष्णैः॥ ३५॥ वातव्रणभवशोथंकांजिकमेव॥ सेकाद्धरतिनि-

तोतनलक्षणमेव ॥ ३५ ॥ पित्तरक्तजनितेप्यभिघातसंभवेपिचत थाव्रणशोथे॥ शीतलैश्चमधुदुग्धघृतैर्दूर्गिक्षनीरजकैरपिसिं चेत् ॥ ३६ ॥ अशीतैश्चमूलादिभिर्मूत्रवर्गैः कफघ्नौषधीनांकषायै स्तथोष्णोः॥ प्रसिंचेत्कफोत्थेचशोथेविशेषान्भिषक्क्षीरवर्गा म्बुभिश्चप्रकामम् ॥ ३७ ॥ ॥अथविस्रावनम्॥ ॥ पूर्वंचाभ्यज्य वेणुप्रभवनलिकाछिद्रनिर्यातधूमैर्यत्रप्रायोभियक्क्रियतंस्वेदयि त्वाशनैर्वा ॥ गृण्हीयाच्चतलेनवापिबहुधाचांगुष्ठकेनध्रुवंतद्विस्रा वनमेववैद्यधरणीपालोदितंतुव्रणे॥ ३८ ॥ अथरक्तमोक्षणम् ॥ वेदनोपशमनायशांतयेपाकताजनितदोषसंहते॥ सद्यएवजनि तेव्रणशोथेरक्तमोक्षणमलंबहुयत्नात् ॥ ३९ ॥ रक्तंमूलंवेदना- याश्चतच्चेन्नास्तिप्रायोरुक्कुतस्तत्रजंतोः॥ तस्मात्स्निग्धस्यापिज तोःशिराभिस्तुंबीश्रृंगीवाजलौकाभिरित्थम् ॥ ४० ॥ दोषस्थाना द्रक्तमोक्षंप्रकुर्यान्नीरस्याभिर्जोड्यवैवर्ण्ययुक्तात् ॥ श्यावात्पीडा संयुतात्चाथग्रंथेस्तुंब्याःप्रायःश्लेष्मदोषप्रशांत्यै ॥ ४१ ॥ वातोद्भू ताद्दोषदेशाच्चश्रृंग्यापित्तोद्भूतान्नीरगेहाभिरेव॥ नाडीवक्रात् सन्निपातस्यदोषान्तत्कुड्यप्रायोरक्तमोक्षंप्रकुर्यात् ॥ ४२ ॥ रुजो यदादारुणतात्वशोथेजाड्यंभवेत्तत्रभिषक्प्रकुर्यात्॥ संस्वेद- नंवामधुतेचशोथेविदग्धशोथेपिच लेपनानि ॥ ४३ ॥ अलंप्रशाम्ये दविदग्धशोथोविदग्धशोथोपिचपाकमेति॥ स्वेदार्थमुक्तौषधि वर्गअग्रेसंवक्ष्यतेशोथविनाशनाय॥ ४४ ॥ दिङ्मूलवातारिजटा फलोत्थबीजानिसोभांजनसैंधवानि॥ ससाजिगंधौषधिशाण- बीजकुबेरमूलानिकुलित्थकानि ॥ ४५ ॥ कार्पासबीजानितिला

यवाम्बप्रसारिणीगंधपलाससीच ॥ ससिंदुवारः कणयामिसि श्चपुनर्नवासर्षपवादराणि ॥ ४६॥ एतायथालाभमलंतथाम्ल रसैश्चपिष्टाव्रणशोथसुघम् ॥ वातोद्भवेस्वेदनतांनराणांसद्योवि निंद्यांतिनाचित्रमत्र ॥ ४७॥ कृष्णाहिभस्मकटुतैलविलेपनेनगं डःप्रशांतिसाधिरच्छतिपाकमेति ॥ सद्यस्तथास्पुटजमाशुव्र णःप्रयातिधत्तूरमूलपरिपेषितहिंगुलेपात् ॥ ४८॥ योगद्वयम् अन्यः ॥ पुनर्नवासर्षपदारुशुंठीशिग्रुप्रलेपोम्लरसःप्रपिष्टः सुरवोष्णएवप्रथितोविशेषात्शोथंनिहन्यात्सकलंसर्वजातम् ॥ ४९॥ ॥ अथपाचनम् ॥ ॥ नशांतिमायातिविलेपनेननान्यै रुपायैरपियस्तुशोथः ॥ तत्पाचनार्थंवरयोगमत्रप्रवक्ष्यतेवैद्य मतेनसम्यक् ॥ ५०॥ शणस्यशिग्रोरपिमूलकस्यबीजानिसि- द्धार्थतिलातसीनाम् ॥ सकिण्वमुष्णांकिलसक्तुजातमालेपनं शोथविपाचनाय ॥ ५१॥ ॥ अथपच्यमानव्रणचिकित्सा ॥ पुरोभेदनपीडनशोधनंचतथारोपणंवासवर्णप्रकुर्यात् ॥ बुधःपाकमा नेव्रणेपंचनित्यंक्रमात्संप्रवक्ष्येखिलानत्रयुक्त्या ॥ ५२॥ तत्रता वद्भेदनम् ॥ द्विधाभेदनंशस्त्रमार्गेणचैकंद्वितीयंतथाप्यौषधीनां प्रयोगात् ॥ शिरासंधिमर्माणिसंत्यज्यभूरस्थलात्सूक्ष्मशोफनकुर्या न्नकदापि ॥ ५३॥ तावदौषधिभेदनम् ॥ चिरबिल्वकृशानुचि त्रकैर्हयमारेणकपोतकंकजम् ॥ अपिगृध्रजमेवविट्सदापरि लिप्तंव्रणभेदनंत्वरा ॥ ५४॥ संघर्ष्यदंतंतुगजस्यनीरैर्बिंदुप्रमा णंव्रणशोथमध्ये ॥ धृत्वोपरिष्टात्सुधयाचसर्ज्जीविलेपनादाशुव्र णभिनत्ति ॥ ५५॥ बालस्यवृद्धस्यसशीतकस्यतथाबलायाश्चसुम

भेजस्य॥ व्रणस्यवाद्दारणमौषधीनांयोगैः प्रकुर्याद्भिषगप्रमत्तः ५६॥ ॥अथपीडनम्॥ ॥तावद्व्रणांतस्थितएवपूयोयावन्नवैद्यः परिपीडयेत्तम्॥तस्मान्निपीड्याशुनिरस्यपूयंमुखंपरित्यज्यविलेपयेत्तम्॥५७॥यगोमाचूर्णानिपुनरपिपुनःपान्यमसकृत्प्रलेपःशफक्तंव्रणमलशेषश्लेनबहुधा॥नरवस्पर्शोपिह्यन्सततमपिसंत्यज्यनियमाद्विशुद्ध्यर्थंनिंबच्छदशृतजलेनापिबहुधा॥ ५८॥ अस्यानुवादः। ॥जवगोधूमजमाषजचूर्णमवेहि॥ पीडितव्रणपरिलेपाच्छोधनमेहि॥५९॥कुलकनिंबदलाम्बुनिषेचनैर्व्रणमलंवरवैद्यमणिःसदा॥परिविशोध्यततःखलुरोपणं मलमलेपनतैलविधिंचरेत्॥६०॥वातिकंचदलमूलकषायैः क्षीरिणांचवरवल्कलतोयैः॥ पित्तजंचकफजंचकषायैराजवृक्षजस्कवल्कलजातैः॥६१॥ अश्वत्थकोदुंबरवेतसानांप्लक्षस्यतद्वटवल्कलानां॥ क्वाथैर्निषिंचेदुपदंशशोथविनाशनायान्यव्रणेषुतद्वत्॥६२॥ अन्यः ॥जटासारिवायाःप्रकामंव्रणानांभवेद्रोपणीशोधिनीनिंबकल्कम्॥तिलैर्माक्षिकैर्वाव्रणानांचतद्वद्विलेपंचतच्छोधनरोपणंद्राक्॥६३॥ त्र्यो योगाः ॥जात्यादिनिंबादिघृतादितत्वैर्वर्त्यादिनानाविधिकल्पनाभिः॥ व्रणेषुसूक्ष्मान्तरेषुवैद्यः प्रकल्पयेच्छोधनरोपणानि॥६४॥ ॥अथयथालाभयोगाः॥ ॥लोध्रान्वगंधामधुयष्टिकाचसमंगयाकट्फलकंमदायाः॥ पुष्पाणिवैद्यैः कथितान्यमूनिसर्वे विशोधनार्थंप्रतिरोपणाय॥६५॥सबाणपुंखंमधुसंप्रलेपाद्दुष्टव्रणानांखलुरोपणंस्यात्॥तथाजटानासघृतश्चकल्कोविलेपनाद्व्रणरो

पर्णद्राक्॥६६॥ ॥अथसवर्णकरणम्॥ ॥मुचकुंद दलप्रलेपनात्कुशशांडिल्यजटाप्रलेपनात्॥ ककुभस्यचजंबुकात्वचासहलोध्रेणचकट्फलेनच॥६७॥ ॥इत्यनेकयोगाः॥ ॥परिलेपनतःसवर्णताव्रणिनांसत्वरमेवजायते॥ कृष्णमानिमदाभवानिलोध्रैःपरिलिप्तानिप्रियंगुनापितद्वत्॥६८॥ ॥अथसमाप्तिः॥ ॥तावद्रक्तव्रणः॥ ॥पक्कोप्यपक्को रुधिरंस्रवेद्योरक्तव्रणःस्यादपिछिन्नसंधिः॥ रूक्षानिरक्तैरवलुप्य व्रणास्तान्संसाधयेद्वाहिविधिज्ञवैद्यः॥६९॥ त्वानानिभूतानस सज्जान्व्रणांस्त विधूपयेद्भूर्यजवाज्यसिक्थैः॥ श्रीवेष्टदेवाह्वयुतैर्भिषक्प्राक्पीडानिवृत्त्यैचविशोधनार्थम्॥७०॥ एकद्वित्रिभवा व्रणानिगदिताःपूर्वेश्चतेष्वाशवस्तैर्लिंगमवेक्ष्यतत्प्रतिकृतिंकुर्य्याच्चथातत्क्रमात्॥ एकद्वित्रिविशेषभेषजगणैरुक्तैश्चयोगाः न्वयैर्व्यस्तैरेकतमेनयोगयुगुलैःसंयोजितैर्वापृथक्॥७१॥ अतिपूययुतोऽतिपूयवाहीचिरकालप्रभवोपिकोटरांतः॥ अविशुद्धयुतोविवर्णताभिःसहितोवातिरुजोन्वितोतिदुष्टः॥७२॥ बलासमंगामधुकोत्पलानांसधातकीचंदनदार्विकानां॥ मेदातिलाभ्यांसघृतप्रलेपात्सद्योभवेद्दुष्टव्रणप्रशांतिः॥७३॥ सगुग्गुलुर्यस्त्रिफलाकषायंपिबेन्नरःसप्तदिनावसाने॥ दुष्टव्रणव्याधिविमुक्तिमस्यदेवोक्तयोगंप्रवदंतिवैद्याः॥७४॥ ॥अथागंतुकव्रणाः॥ ॥नानाधारामुखमुखरतरैरस्त्रशस्त्रैरनेकैर्नानास्थानप्रपतितनमेदेहसंधौकचिच्च॥ नानाकारानिखिलव्रणकुलाशल्ययुक्तास्त्वशल्यास्तेषांत्वबाह्यविधिविधिमलशल्यत

ञ्चोक्तमथे ॥७५॥ सद्यक्षतं वैद्यवरः सशूलं निषेचमेद्याष्टिकयो ष्णहव्यैः ॥ विशेषतो वा मधुकेनयुक्तैर्घृतैरत्तथा माक्षिकसंयुतै र्वा ॥ ७६ ॥ शीतां क्रियां क्षौद्रघृतान्वितां च सरक्तपित्तोष्महरां प्र कुर्यात् ॥ सद्यक्षतक्षीणविनिग्रहार्थं स्निग्धाः कषाया मधुराः प्रलेपाः ॥ ७७ ॥ कुष्ठे व्रणे झटिति जे मधुरादिलेपसेकैरधोर्ध्वम पिशोधनमाहरार्याः ॥ आभोजनं च बलयस्या निरीक्ष्य हस्तसंमो क्षणे विधिमलं च भिषक् प्रकुर्यात् ॥७८॥ ॥ अथ छिन्नव्रणः ॥ ॥ तिर्यग्विनिश्छिन्नमृजुव्रणोयश्चात्यायतो गात्रनिपात- नोपि ॥ छिन्नव्रणोसावपि वा प्रविद्धो भिन्नाधिकं यो रुधिरं स्रवे- च्च ॥ ७९ ॥ रक्तक्षयात्तत्ररुजः करोति वायुर्भृशं तत् प्रशमाय वै- द्याः ॥ स्नेहस्य पानैः परिषेचकैश्च बस्त्याशु तस्यैव जयेत्तमेव ॥८० ॥ अतिविनिर्गतरक्तजनः पिबेद्रुधिरमेव कदूष्णघृतैरलम् ॥ सम धुकं बहुधापि च सारुणं रुधिरनिर्यहायुगदापहम् ॥ ८१ ॥ शी- ताः कषाया मधुराश्च सर्वाः क्रियाश्च सद्यो व्रणिने प्रयोज्याः ॥ रसैः रपामार्गजपत्रजातैः सेकः प्रवृत्तं रुधिरं रुणद्धि ॥ ८२ ॥ ॥ अ थ भिन्नव्रणः ॥ ॥ कुंतेषु खड्गाग्रविषाणशक्तिपाषाणकाष्ठा दिभिराशयस्तु ॥ हतस्तु किंचित्स्रवते सभिन्नव्रणो भिषग्भूपग- णैर्निरुक्तः ॥ ८३ ॥ तस्य प्रतीकारः ॥ आमाशयस्थे रुधि रे वमेच्च पक्वाशयस्थे च विरेचनानि ॥ वंशत्वगेरंडयुताश्च दंष्ट्रा- काथोश्मभेदेन सहिंगुसिंधुः ॥ ८४ ॥ पीतस्तु कोष्ठस्थमसृक् प्र- यत्नात्संस्रावयेत्तत्र न कापि शंका ॥ ॥ अथ कोष्ठभेदः ॥ ॥ नासौ च भिन्ने रुधिरप्रपूर्णे ज्वरोति दाहो भवति प्रकामम् ॥ ८५ ॥

रिंगात्त्वपायोर्वेदनाच्चतद्दूषणाच्चरक्तंबहुलंप्रयाति॥ मूर्छा तृषाश्वासगदाभवंति स्थाध्मानमन्नारुचिगात्रगंधिः॥ ८६॥ विण्मूत्रयोर्वातसमन्वयश्चस्वेदप्रसेकोऽक्षिविलोहितत्वम्॥ सलोहगंधत्वमलंमुखेचशूलंहृदिस्यादपिपार्श्वयोश्च॥ ८७॥ अस्यप्रतीकारः॥ ॥ पादायुधंकृष्णतनुंसमस्तं सुखंचतस्याश्रुनिबद्धतोये॥ कुलांशमात्रेपरिपाचयेत्तंपादावशेषंतुपिबेत्सकामम्॥ ८८॥ अनेनपीतेनचकोष्ठगंयद्रक्तंद्रवेत्स्वास्थ्यमसौलभेच्च॥ कोलैःकुलित्थैश्चजवैःकृतंचनिस्नेहमन्नाशुरसंपिबेद्वा॥ ८९॥ सिंधुयवागूपानंवात्रहिताय॥ आयुर्वेदनिगदितंरुधिरंशमाय॥ ९०॥ ॥ अथामाशयपूर्णताल क्षणम्॥ ॥ आमाशयस्थेरुधिरेविशेषाद्वमेन्नरोरक्तमजस्त्रमेव॥ आध्मानशूलेभवतःप्रकामंतद्धक्षणंवैद्यनृपावदंति॥ ९१॥ ॥ अथपक्वाशयगतरक्तलक्षणम्॥ ॥ सशूलंगौरवंप्राणोरक्तेपक्वाशयस्थिते॥ अधःकायेविशेषेणाशीतलत्वंतत्रजायते॥ ९२॥ ॥ अथविद्धम्॥ ॥ सूक्ष्मस्यशल्याभिहितंयदंगंविनाशयंतुंडितमप्यजस्त्रम्॥ विनिस्सृतंशल्यमिहैवविद्धमाहुर्विशेषेणचशल्यविज्ञाः॥ ९३॥ ॥ अथसशल्यव्रणम्॥ ॥ सशोथश्यावंचाभवतिपिडिकायुक्तमसकृद्धरंरक्तंयत्र प्रचलनरुजोबुद्बुदसमम्॥ भवेन्मांसंतद्वन्मृदुतरमथोप्युच्छ्रितमसशल्यंतत्प्रोक्तंव्रणमिहभिषग्भूपनिकरैः॥ ९४॥ ॥ अथकोष्ठशल्यलक्षणम्॥ ॥ भित्त्वावापरित्यज्यवायदिशिरादीनित्वचोतीत्यच कोष्ठस्थःखलुशल्यएवकुरुतेस्तांस्तानेनेकान्

गदान्॥ समैवाप्यथवाक्षतस्यचपरं ब्रूमोवयंलक्षणम्॥ छि न्ननातितथैवभिन्नमथवाप्रायक्षतंकीर्तितम्॥ ९५॥ विषमतां गगताकुरुतेक्षतं विषममेवभिषक्परिकीर्तितम्॥ प्रहरणाद परस्यचपीडनाद्रुधिरमज्जगतंपुलमस्थिगम्॥ ९६॥ त्विपिडि तांचगतंखलुमुद्गरादिभिरलंपरिघर्षितमेववा॥ अपिचताडि तमाशुचकेरपिनिगदितैंखलुपिच्चितमेवनत्॥९७॥ ॥ इतिविषमपिच्चिते॥ ॥अथघृष्टम्॥ ॥गतत्वत्वघर्षण तोभिघाताद्दुष्यात्त्वचंघृष्टव्रणंवदंति॥ ॥अथमर्मविद्धम्॥ ॥ भ्रमःप्रलापः पतनंचमोहोविचेष्टनोष्यात्वथिमूर्छनानि॥ स्र स्तांगताग्लानिरथोर्द्धवातस्तीव्रारुजोवातकृताश्चयाताः॥ सर्वेंद्रियार्थोपरमश्चयत्रमांसोदकाभंरुधिरंस्त्रवेच्च॥ ९९॥ मां सास्थिनाडीषुचसंधिमध्येस्नायौप्रविद्धोपिचमर्मविद्ध ॥ घ्रा णोस्यलिंगश्रवणादिपायप्रवर्तमानंप्रभवेद्विशेषात्॥ १००॥ ॥ ॥अथपृथग्मर्मविद्धम्॥ ॥तत्रादौशिराविद्धः॥ ॥ यदिंद्रगोपप्रतिमंचभूरिक्षतोश्चवातोरुधिरस्त्रवेच्च॥ शिराक्षि विद्धोत्वथवाक्षतारुकशिरोभितापांधकतादिरोगाः॥ १०१॥ अथस्नायुविद्धम्॥ ॥ कौब्जंचदेहावयवावसादौरुजश्चव नानारुक्रियास्वशक्तिः॥चिराद्व्रणोरोहतियस्यतंवैस्नायुप्र विद्धंभिषजोवदंति॥१०२॥ ॥अथसंधिविद्धः॥ ॥ बहुरुजश्चपथुयदिसंधिषुबलहतिर्विचलास्रुचलास्रुच॥य दिचसंधिजकर्मविरागताभवतिसंधिषुविद्धजलक्षणम्॥१०३ ॥ ॥अथास्थिविद्धम्॥ ॥ नदिवसेननिशिक्वचिदप्यसो

बहुरुजो लभतेन स्फरवं यदि ॥ तमळमस्थिनि विद्ध मलं जगुः स कलशल्यविदो भिषजो ध्रुवम् ॥१०४॥ भिषगलं परिभाव्य यथा तथं सकलमर्मकशल्यगतिं बुधः ॥ अपिभवंतिचयानिचमर्मक निविशितेषु चतानि शिरास्वपि ॥१०५॥ ॥ अथाग्निदग्धः ॥ ॥ तत्राग्निदग्धो द्विविधो विशेषाद्द्रव्यं च लोहादिकमत्र बोध्यम् ॥ स्नेहादिदग्धं प्रवदंति वैद्याः सस्नेहमेतच्च चतुर्विधं तत् ॥ १०६॥ प्लुष्टं च दुर्दग्धमथो विदग्धमाहुः पुराणा भिषजोतिदग्धम् ॥ प्लुष्टं विवर्णं भवतिप्रकामं तत्राग्निनातापमथोष्णयोगै ॥७॥ तोयैः स्तथोष्णैः परिषेचयेच्च चिकित्सितं संविदधीत वैद्यः ॥ यतः स्वभावाच्छिशिरं च वारि प्रस्कंदयात्याशु च शोणितानि ॥ ८॥ ॥ अथ दुर्दग्धम् ॥ ॥ तीव्रदाहजरुजो यदि तत्र स्फोटजालमथ कालविपाकात् ॥ शांतिमेति चिरमुक्तमलं तद्दग्धमेव दुर्दग्धमवेहि ॥ ९॥ प्रतीकारः ॥ दुर्दग्धसीतमुष्णासकलमपि भिषक्कारयेदोषधं द्राक्लेपं कुर्याद्‌ तस्य प्रशिशिरतरांश्चापि सेकान्विशेषात् ॥ तद्व्जीर्णां स्कधां वा भिषगथ ततो भर्जयित्वा जलेन लेपं पिष्ट्वा पुनरपि पुनः स्फोटनाशाय कुर्यात् ॥ ११० ॥ ॥ अथ सम्यग्दग्धम् ॥ ॥ सम्यग्दग्धं दाहपीडासमेतं वर्णं ताम्रं स्कास्थितं नोगभीरम् ॥ ग्राम्यानूपैर्मांसपिष्टैः प्रलेपात् सम्यग्दग्धं शीघ्रमायाति शांतिम् ॥ ११ ॥ ॥ अथातिदग्धम् ॥ ॥ त्वचश्च मांसं खलु यत्र दग्धं विश्लेषमासं च वपुः स मस्तम् ॥ स्नाय्वस्थिनाडी तनुसंधिमध्यवेधो भवेच्चाप्यतिदग्धमुक्तम् ॥ १२॥ प्रतीकारः ॥ विशीर्णमांसानि विशोषयत्वाद्

हृत्यकुर्यादतिशीतलाच्च ॥ क्रियाभिषग्भावमुपैतिरक्तस्रावः प्रशांतिंखलुतावदेव॥१३॥ प्रतीकारः ॥मधुकचंदनखर्ज्जुरसैस्तथामधुनलारुणिकाभिरलंभिषक् ॥ घृतमिदंपरिपाच्यचमूर्वयाहरतिदग्धव्रणंपरिलेपनात् ॥१४॥ अन्यः ॥तिलतैलविमिश्रितसर्ज्जरसं द्रुधाशिशिरांबुविधूतमलम् ॥ परिलेपितसमदिनानिध्रुवंविविधदग्धव्रणस्यरोपणम् ॥११५॥ ॥ अथव्रणग्रंथिः॥ ॥ वातोस्रमस्त्रुतिमलंपरिशोष्यदुष्टं कुर्यात् सदाहव्रणग्रंथिमिति प्रसिद्धम् ॥ कंडान्वितंच बहुधाखलुतत्र वैद्यः सक्षारसूत्रमथवाप्रथुलोनयुंजीत ॥११६॥ कपित्थकल्कंश्च सुरदारुणात्रिविडंगसिद्धं यदितैलमेकम् ॥ ग्रंथौविलिप्तं व्रणग्रंथिमाशुविनाशयेत्त्वकूलमलांप्रकुर्यात् ॥१७॥ ॥अथभग्नव्रणः॥ ॥ भग्नंव्रणांद्विविधमस्तितथैककांडे संधावपीत्थमिह्युग्मगतप्रसंधौः॥ उत्पिष्टमेकमथवाप्रभवेत्तथैव विश्लिष्टमेवमपरंचविवर्तनंच॥१८॥ तिर्यक्परिक्षिप्तमधश्चकोष्ठातत्रोग्निवेशेकथितानियानि॥ आकुंचनेभवतियत्रविलोमकेस्मिन्स्पर्शासहत्वमथवापिरुजोभवंति॥१९॥ कांडभग्नमिदमुक्तमथोपिसंधिभग्नमुभयत्रचशोथे॥ अस्थियुग्मपरिघट्टितसंधिभागयोरुपरिशोथयुतत्वात् ॥१२०॥ उत्पिष्टमेतन्नचयत्रनिद्रारात्रौचविश्लिष्टमुदाहृतंतत् ॥ विवर्तितेपार्श्वरुजाभवंति तिर्य्यग्गतेतीव्ररुजश्चतद्वत्॥२१॥ क्षिप्तेतिपीडाचदिवानिशंद्राग्वैषम्यमासापिनिरंतरंच॥ आदौचभग्नंविनिरीक्ष्यसद्यो निषेचयेच्छीतलनीरसेकैः ॥२२॥ पंकेनचालिप्ययथास्थिविद्वांच्छलोकिकाभिःशिथिलंनगा

दम् ॥ यद्दृश्यखंडोपरि साधु मध्यविधिज्ञवैद्यः परिबंधयेच्च ॥ २३ ॥ सीतेविमुञ्च्येदथसप्तमहिधर्मेविमुञ्च्येत्रिदिनांतराले ॥ सामान्यतः पंचदिनांतरालेयद्वायथाद्दोषमथोत्रवैद्यः ॥ २४ ॥ मंजिष्ठामधुकंतथैवविधिनाचाम्लद्रवैः पेषितं ॥ मिश्रंतच्छततधौतइक्षुनिकरैः पिष्टैश्चशाल्युद्भवैः ॥ १२५ ॥ लेपंवैद्यवरश्चभंगविचलत्कांडेप्रकुर्य्यात्तथा लेपंपिष्टपट्टप्रयुक्तमथवाप्रायोम्लिकायारसैः ॥ भग्नास्थीन्यपिवज्रवत्सकुरुतेसंधायपूर्वंयथाशोथंरागरुजश्चभग्नजनितानाशंव्रजेयुस्तथा ॥ २६ ॥ अथान्यलेपः ॥ कटुजंकामजटाप्यथचिंचिकाफलदलानिचाशिग्रुभवानिच ॥ अपिचकेंबुकमूलयुताथवावरजटास्वलुवृश्चिकसंभवा ॥ २७ ॥ सक्षुद्यतक्रेण सकांजिकेनसंपेष्यतासांचविपाच्यलेपात् ॥ शोथोव्रणानांप्रणितांचपीडाविनाशमायांतिचकोठजाद्यैः ॥ २८ ॥ द्रुत्यास्थिसंहारपलंकषाणगोधूमवीरद्रुमवल्कलानाम् ॥ संध्यस्थिभग्नेपयसोनुपानाच्चूर्णोपिबेद्भग्नविसंधनार्थम् ॥ २९ ॥ ॥ अथ कांडभग्नः ॥ ॥ संपीड्यमानः सहसासशूलः स्पर्शासहस्यंदतिनोदयुक्तः ॥ नसर्वकालेषुचशर्मलाभोभग्नस्यकांडेप्रभवेत्कदापि ॥ १३० ॥ भग्नश्चकांडेभवतिप्रकामसनामरूपोह्यधिकंदशोक्तः ॥ स्वरूपयुक्तः खलुकर्कटाख्यस्तथाश्वकर्णोतिविचूर्णितंच ॥ ३१ ॥ संपिच्चितंचास्थिविचिच्छितंचकांडप्रभग्नंत्वतिपातितंच ॥ मज्जागतंविस्फुटितंचवक्रंछिन्नंद्विधास्त्रस्तसमस्तगात्रे ॥ ३२ ॥ शोथाधिकश्चातिरुजोभवंतिचिकित्सितंवैद्यकशास्त्ररीत्या ॥ तेषांयथावल्लरिकीर्तयिष्येसम्यक्भिषग्भूपतिवर्णितं

यत्॥ ३३॥ प्रतीकारः ॥ यथातथास्थिमथमं प्रकल्प्य निम्नो न्नतं यत्र तथैव तन्न॥ पथ्याभिलधीत भिषक् प्रकाम मारोग्य हेतो न्यविधीन् प्रकुर्यात्॥१३४॥ लशुनमाक्षिकद्रव्यपलकषाजनितकल्कमलं च सितायुतम्॥ पिबति च्छिन्नमथोस्थिविभिन्नकं च्युतमिहाशुदृढं भवतित्वरा॥१३५॥ अन्यः ॥ घृतमज्जनलाक्षयोरजः सपुरं दुग्धधृताशिना सदा॥ असितं खलु मानुषेण वा बहु भग्नास्थि दृढीकरोति हि॥३६॥ अन्यः ॥ शृंगादप न्योद्भवमूल्यचूर्णं पीत्वा नरो मासरसेन नूर्णम्॥ एकाधिकैर्विंशतिभिर्दिनानां संधानमाप्नोति च भग्नकेस्थि॥ ३७॥ अन्यः ॥ आभाचूर्णं माक्षिकेणाशु पीत्वा सायं प्रातस्तन्न्यहं भग्नमस्थि॥ कुर्याद्दृढं वज्रसारं विशेषात्सर्वैरुक्तं वैद्यभूपाधिभूपैः॥३८॥ अथ स्वेदः॥ ॥ कर्कोम्लिकाफलभवः खलु तैलमिश्रः सौवीरमिश्रितअथो बहुधा प्रभग्ने॥ स्वेदाद्विनाशयति शोथमथो रुजश्च संधानमस्थिगणखंडमलं प्रयाति॥ ३९॥ ॥ अथाभादि गुग्गुलुः॥ ॥ आभाफलत्रिकटुत्रिकतुल्यभागः संसेवितो यदि पुरो बहुधा नरेण॥ संध्यस्थि भग्नमपि वज्रसमं प्रकुर्याच्चूर्णीकृतं च बहुधा त्रुटितं विशेषात्॥ १४०॥ अन्यः ॥ लाक्षानागबलासमं च ककुभोऽस्थि स्तु संधानकं सिद्धं गुग्गुलुनाश्वगंधिकजटा तुल्यं समस्तं पृथक्॥ एकीकृत्य विधानपूर्वकमिदं भुक्तास्थि संधानतां कुर्याद्भग्नतरास्थिसंधिशकलं वज्रेण तुल्यं सदा॥४१॥ ॥ अथ नाडीव्रणः॥ ॥ पूर्वयः शोभमानं बहुलतरमलं पूयमज्जो व्रणं च कालातीतं चिकित्सारहितमथवा वद्धय

माणं वनस्य ॥ पूयमध्यांतर्विदार्य प्रविशति बहुधा पूर्वमुक्तस्थले सुस्थित्वा नाडी वनाडी पुनरपि नितरां नेन नाडीव्रणोयम् ॥ ४२॥ प्रतीकारः ॥ वर्तिस्नुही भानुजदुग्धदार्वीकृता तु नाडीव्रणसं प्रविष्टा ॥ एषा समस्तांगशरीरनाडीं हन्यात्प्रयोगस्त्वधिराट्प्रयोगः ॥ ४३॥ अन्यः ॥ क्षौद्रेण चारग्वधरात्रिषष्टीचूर्णस्य वर्तिः किल सूत्रजाता ॥ योज्या च नाडीष्वखिलांगजासु संशोधिनी पूयनिग्रहत्वे ॥ ४४॥ अन्यः ॥ जातीभानुपयः करंजजवजक्षारैश्च सिंधूद्भवैरंती सर्जियुतैश्च सूत्ररचिता वर्त्तिः स्नुहीदुग्धकैः ॥ युक्ता चित्रकचूर्णसंयुतलमे संपाकसंयोजिता नाड्यामंतरतो निहंति सहसा पूयोद्गमं भूरिशः ॥ १४५॥ नाड्यामुखं चैव वरश्च शस्त्रपातेन पूर्वं च बृहद्विधाय ॥ जात्यादितैलं घृतमन्यदेवरसं तथोक्तौषधिजं विशेषात् ॥ ४६॥ निवेशयेद्धैलं घुहस्तनाभिः कर्पूरसंसाधितसार्षपं च ॥ तैलं च सिंदूरमलं दुष्टनाडीषु पूयस्य गतिं भहत्यै ॥ ४७॥ ॥ अथ वातनाडी ॥ ॥ परुषसूक्ष्ममुखी त्वनिलोद्भवा बहुलफेनिलपूयसमुद्गमात् ॥ भवति शूलयुता च निशागतिः प्रबलवातभवा खलु नाडिका ॥ ४८॥ प्रतीकारः ॥ ॥ अनिलजामुपनाह्य तु नाडिकामथ च पूयगतिं प्रविदार्य वै ॥ अहिभुजोद्भवतंदुलसैंधवैरपि च पिष्टतमैः परिपूरयेत् ॥ ४९॥ प्रक्षालये द्राल्पणपंचमूलैः क्वाथैर्महापंचजटाकषायैः ॥ हिंस्राहरिद्राकटुकावचाभिर्गोजिह्वयाबिल्वजटाशतं च ॥ १५०॥ तैलं च वातनप्रभवानि हंति प्रपूरणाच्छोधनरोपणानि ॥ कुर्यात्सदा वातजनाडिकानां निशास्य पूयस्य गतिं निहंति ॥ ५१॥ ॥ युग्मं ॥ ॥ अथ

पित्तनाडी ॥ ॥ ज्वरदवथुपिपासासंयुतापित्तनाडीप्रथममथपयोभिःसीतलैरुत्कनीरैः॥ घृतकरपरिषेकैर्वापिसंशोधयित्वा ॥१५२॥ नाडीमुखंशरवमुखेनदार्यकल्कंतिलानांसमनागदन्त्या॥ मंजिष्ठयापेष्यचपूरयेत्तांप्रक्षालयेद्वाथरसोननिंबैः॥१५३॥ क्वाथीकृतेश्चाथनिशाभिभांडीफलत्रयस्तिल्वकवृक्षसिद्धैः॥ घृतैस्तथातर्पणमाशुनाड्याःपित्तोद्भवायाःप्रतिरोपणार्थं ॥१५४॥ इतियुग्मम् ॥ ॥अथकफनाडी॥ ॥नाडीज्ञेयापिच्छिलारात्रिवृन्हा कंडूयुक्ताश्लेष्मजाशुक्लवर्णा॥ स्तब्धापीडासंयुताकिंचिदेव मृद्वीकृत्वानाडिकांतत्त्ववृमः॥१५५॥ कुलित्थसिद्धार्थकसक्तुबिल्वविलेपनान्मार्दवमाशुयाताम्॥ विदार्यशस्त्रेणमुखंचतस्यानिंबाग्निदंतीनिलपिप्पलीनाम्॥१५६॥ ससैंधवानांचविधायवर्तिंविदारितास्येचव्रणेनिधाय॥ प्रक्षालयेन्निंबकरंजजातीपिल्वर्कजातस्वरसैश्चनाडीम्॥१५७॥ युग्मम् ॥ ॥अथतैलम्॥ ॥ मरिचसैंधवन्त्रिभकमार्कवरंजनिकायुगलार्कपयोन्वितम्॥ अपिचसाधिततैलमलंत्वराहरतिपूरणतोकफनाडिकाम्॥१५८॥ ॥अथसन्निपातजा॥ ॥ज्वरोमूर्छादाहश्वसनमपिवक्त्रस्यानियतंप्रशोषोनाड्यासाप्रभवतिदोषत्रयत्रयात्॥ गतिःक्लिष्टाघोरानयतिममगेहांतमचिरात्परित्याज्यावैद्यैःशशिकरयशोराशिनिचयैः॥१५९॥ स्थानेष्वदीरितनरेष्वणुमात्रिमेवनश्यकरान्विदपिशल्यमनल्पपीडम्॥शश्वदूतिंप्रकुरुतेस्त्वविभिश्चपूपतक्रादितुल्यसनिशंस्त्रवतेसशल्या॥१६०॥ शल्यनाडिंविदार्याशुगतशल्यांविशोध्यच॥ शुद्धमार्गंमुखांज्ञात्वातैलान्वर्तीश्चयोजयेत्॥१६१॥ मुस्तंप्रियंगुसरलंसलोध्रंसनागपुष्पंमदयासमेतम्॥

सौगंधिकंशाल्मलिकागदंचसक्काथ्यतैलंखलुशल्यनाड्याः॥१६२॥
प्ररोपणंवाथनिशायुगेनरसांजनंनिंबजपल्लवाश्च॥ तेजोवतीचापि
त्वत्सकालाकल्कस्तथैषामपिशल्यनाड्याः॥१६३॥ अथोप-
द्रवाः॥ ॥ विसर्पोज्वरःपक्षघातोरुजश्चशिरास्तंभकासोचमोह-
श्चतृष्णाः॥ हिक्कातिसारोपतनश्चकंपोविमिःश्वासउन्मादकाद्याः॥
१६४॥ षोडशोपद्रवश्चैतेव्रणानामथवाभ्रुवे॥ शोथकंडूतिदुर्गंधिनि
त्यस्रावोतिवेदनाः॥१६५॥ आसन्नोपद्रवान्वैद्योदाहादींश्चाप्युप
क्रमेत्॥ तावद्दाहप्रतीकारंयथावत्प्रतिपादये॥१६६॥ ॥ अथ-
दाहः॥ ॥ मधुकंजवचूर्णंसर्पिषासहतैलेनविलेपितंव्रणे॥ दव-
थुंविनिहंतिसत्वरंसहशूलेनव्रणस्यनित्यशः॥१६७॥ ॥कृमि
रोगे॥ ॥निर्गुंडिकारिष्टकरंजलेपः कृमीन्निहन्याद्व्रणजांस्तथैव
॥रसोनकारिष्टभवःसहिंगुप्रलेपितोजंतुहरोयथैव॥१६८॥ ॥
अथकंडूतौ॥ ॥ निंबुपत्रपटुहिंगुवचाभिःसर्षपैश्चविधिनाघृत
धूपः॥ रूक्षतांचकृमिजामपिकंडूंहंतिसत्वरमयंव्रणदानात्॥१६९
॥ ॥अथगंधे॥ ॥व्रणात्वपाकस्रुतिगंधयुक्ताश्चिणोत्थितायै
बहुशोथयुक्ताः॥ तेषांविनाशंत्रिफलाकषायपातेननित्यंसहसागुरे
ण॥१७०॥ ॥अथनित्यवेदनायाम्॥ ॥ मासोत्तरनित्यरुजो
व्रणायेत्तेभर्जितानांचतिलातसीनाम्॥ विलेपनाद्रोपप्रसाविनाशव्र
जंतिपीडारहिताभवंति॥१७१॥ अन्यः ॥ द्विपंचमूलीक्वथितेन
वापिकल्केनसैलेनघृतान्वितेन॥ नीरेणकोष्णेनजलेनवापिभिषेचः
येन्नित्यरुजःप्रशांत्यै॥१७२॥ अथातिस्रावे ॥ वाताभिभूतांश्च
व्रणांश्चनित्यस्रावान्भिषग्नित्यरुजश्चिकित्सेत्॥ जवाज्यभूपेणु

रुदेवदारुश्रीवासश्रीवेष्टकगुग्गुलूनाम्॥ १७३॥ मनोजशालोत्थ गदान्वितानांविधूपनेनापिव्रजंतिसद्यः॥ स्त्रावातिकाठिन्यविरुग्वि मुक्ता व्रणाःप्रशांतिप्रभजंतिदुष्टाः॥१७४॥ ॥अथशोथे॥ ॥ तिलसितामधुचंदनगोपयास्यरिवलमेवतथामधुकैरलम्॥ परिह रंतिचलेपविधानतोव्रणजशोथमथोदवथुव्यथाम्॥१७५॥ ॥अ थसाध्यासाध्यव्रणलक्षणम्॥ ॥ त्वग्मांसजातश्चसुखप्रदेशोना रुण्ययुक्तस्यचधीमतस्तु॥ कालेसुखेचाभिनवव्रणोसौसाध्योनि कृच्छ्रोविपरीतलिंगः॥१७६॥ योदीर्घकालाग्निरुपक्रमश्चमेदोव सामरक्तसमंस्त्रवेच्च॥ तथैवमज्जासदृशंस्त्रवेच्चासाध्यस्तथागंतुज एवसद्यः॥१७७॥ कुष्ठिनांचव्रणाजुष्ट तनूनां शोपिणांवमधुमेहयु तानाम्॥ येव्रणाश्चव्रणिनांचव्रणोस्युस्तेतुकृच्छ्रतमसाध्यव्रणाहि ॥१७८॥ येचांतरास्यर्थविदाहिनश्चसीतावहिर्येपिव्रणाभवंति॥ ये चावहिर्दाहयुताश्चसीतायेप्यंतरावेधुगणैः प्रहेयाः॥१७९॥ येमर्म जाःप्राणपलक्षयाश्चसश्वासकासारुचिपीडिताश्च॥ प्रवृद्धपूयस्रत जाःक्रियाभिर्नसाध्यतामीयुरलंचहेयाः॥१८०॥ मद्यहव्यसुमनोगु रूपमंचंपकैश्चशिशिरेणचतुल्यैः॥ गंधद्रव्यवरद्रव्यसुगंधैःसंयुता चव्रणिनान्ततुहत्यै॥१८१॥ ॥अथासाध्यकोष्ठरक्तपुरुषलक्ष णम्॥ ॥ कोष्ठांतर्गतरक्तंचपांडुसीतकराननम्॥ सीतोच्छ्वासंरक्त नेत्रमानद्धंचभिषक्त्यजेत्॥१८२॥ ॥अथभग्नासाध्यम्॥ ॥ अल्पाशिनोनात्मवतोहिजतोर्वातात्मकस्यापिचभग्नमेव॥ उपद्रवै र्जुष्टतमंविशेषान्नसिध्यतीतिप्रथितंस्वशास्त्रे॥१८३॥ भिन्नंकपा लंचतथैवकट्यांसंधिप्रमुक्तंचतथाच्युतंच॥ प्रतिप्रपिष्टंजघनंच

वैद्योयशोर्थकामीव्रणिनंत्यजेद्वा॥१८४॥ असंश्लिष्टकपालंच ललाटेप्यवचूर्णितम्॥ भग्नस्तनांतरेशंखपृष्ठेमूर्ध्निचवर्जयेत्॥१८५॥ सम्यक्संधिनमस्थिचेद्बभिषजाद्दुर्न्यासदुर्बंधनात् संक्षोभाद्पिविक्रियांचभजतेत्याज्यंसदासर्वथा॥ प्राणांक्षिश्रुतिकूटगानिमृदुलान्यस्थीनिवक्राणिचतद्वन्नलकानिभेदितमान्यन्यस्थिभिर्वाद्रुतम्॥१८६॥ दायवुगोभयपार्श्वस्कपृष्ठगान्यखिलवक्षसिजानुनिपायुषु॥ पदयुगेऽस्थिचयानिभिषग्वरैर्निगदितान्यथवावलयानिवै॥१८७॥ स्फुटंतितद्वलयानियानित्याज्यानिनाडीत्रिभवापितद्वत्॥ त्याज्यास्वतस्त्रः खलुयत्नसाध्यानाड्यश्ववैद्यैःसमुदाहृतास्व॥१८८॥ ॥अथनिरुक्तिः॥ ॥अस्त्रचोनिमृदुर्योसौत्वत्सवर्णोल्पवेदनः॥ व्रणाः शल्यादिनिर्मुक्त्वा रोहंतिचशीघ्रतः॥१८९॥ ॥अथशल्यतंत्रोक्तव्रणचिकित्सा॥ ॥ ॥ व्रणान्समस्तान्भिषगत्रयुक्त्याजयेत्तथागुग्गुलुभक्षणैर्वा॥ घृतैस्तथातैलपिच्चुप्रकारैर्नानाप्रकारैर्मलमादिलेपैः॥१९०

तत्रादौगुग्गुलुः॥ अमृतात्रिफलापटोलमूली कृमिशत्रुत्रिकटुप्रमाणभागैः॥ सकलैश्वसमंपुरंप्रकुर्याद्वटिकाश्वाक्षमिताश्वनित्यभुक्ताः॥१९१॥ व्रणशोथभगंदनोत्थरोगानथवावातमलंतु गुल्मरोगान्॥ अमृतादिरयंचगुग्गुलुःपरिहन्याद्बहुलमेवचोक्तरोगान्॥१९२॥ इत्यमृतादिगुग्गुलुः ॥ ॥अथलाक्षादिः॥ ॥ लाक्षास्वगंधाककुभत्वचानांसमास्थिसंहारसमन्वितानाम्॥ कुर्याद्वटीनांगवलापुराभ्यां मुक्तास्थिसंजातरुजःशमाय॥१९३॥ ॥ ॥अथत्रिफलादिः॥ ॥ गुग्गुलोश्चगुटिकास्त्रिफलाभिःस्यु

षणैश्चरचितैः समभागैः॥ अक्षमानतुलिताश्च घृतेन सीतवारि सहिताः खलु भक्ष्याः॥ १९४॥ नाडिकानिखिलदुष्टव्रणानामर्श सामखिलगुल्मगदानाम्॥ नाशनायबहुशूलगदस्य नहृदेवहि भगंदरशांत्यै॥१९५॥ इतियुग्मम्॥ इतिसत्यांगोगुग्गुलुः॥ त्रिफलात्रिगुणाकटुत्रयंद्विगुणंनहिगुणंचकल्कलम्॥ कनकारि जरोश्चगुग्गुलुः समभागः सकलौषधस्यच॥ १९६॥ दशभागमि तैश्चमाक्षिकैर्गुटिकीकृत्यनरश्चभक्षयेत्॥ व्रणकंज गंडकेषुनहृ श्च गंडेषुभगंदरेष्वपि॥१९७॥ अयमेवतुगुग्गुलुः प्रसिद्धः कनकारिः खलुनाडिकासुच॥ प्रभवंति व्रणाश्चतानजस्त्रं यदिभुक्तः शमये त्पुरातनम्॥१९८॥ ॥अथघृतानि॥ ॥जातीदलैर्निंबपटो लपत्रैरारग्वधस्यापिच बीजतुल्यैः॥ हरीतकीसिक्थकसारिवाभि- र्मंजिष्ठयामल्लकपित्तयाच॥ १९९॥ सिद्धंघृतंवैमधुकेन युक्तैर्मर्मा श्रितासूक्ष्ममुखाव्रणाये॥ संस्राविणोनित्यरुजोपियेवैशुद्ध्यंति रोहंतिचतेपिदानात्॥ २००॥ जात्याज्येपरिसिद्धेत्वेणमर्दाहियोज्यंवै घन्नृपैद्रैरितिगदितंहि॥२०१॥ गांभीर्यमासाश्चिरकालजातादुष्ट- व्रणामर्मभवाश्चसद्यः॥ जातीघृतेनापितुपूर्यमाणाः शुध्यंतिरोहंति वदंतितज्ज्ञाः॥ २०२॥ इतिजात्यादिघृतम्॥ गोरोचनानिंबपटोल जातीनिशाकरंजारुणयष्टिकाभिः॥ मांसीमधूच्छिष्टप्रपुंडरीकैर्ह्री वेरमुस्तानतचंदनानाम्॥ २०३॥ मेदामहाधाकटुरोहिणीनांतोये- नवैवल्कलपंचकानाम्॥ प्रस्थंघृतंवैमधुकेनसार्द्धं संपाचितंतन्मधुके नानित्यम्॥ ४॥ गोरोचनाद्यंघृतमेतदेवसद्योस्थितागंतुककालजानां ॥ नाडीव्रणानांचविनाशनाय संशोधनंस्यादखिलव्रणानाम्॥२०५

॥ ॥इतिगोरोचनाद्यं घृतम्॥ ॥अथघृतांतरम्॥ ॥न्यग्रोधकोदुंबरपिप्पलानां कोलस्य प्लक्षस्यच दाडिमस्य॥ पृथक्पृथग्वैद्विपलोन्मितानां मूलत्वचातद्वरपल्लवानाम्॥ ६॥ द्रोणेजलेवैपरिपाचितानां पादावशेषेणजलेनतेषाम्॥ पलार्धमानैरपिवक्ष्यमाणैः प्रस्थंघृतस्यापिविपाचयेत्तु॥ २०७॥ निशाद्वयारिष्टकरंजबीजपत्रैर्मधूच्छिष्टपटोलपत्रैः॥ कालाभयाभ्यां मपि सारिवाभ्यां मूलप्रसूनैः सुमनाभवैश्च॥ ८॥ सचंदनाभिः कटुरोहिणीभिः स्तुल्याभिराभिर्मधुकेन वापि॥ न्यग्रोधकाद्यैर्घृतमेतदेव पानाद्व्रणानां परिरोपणं च॥ सशल्यसूक्ष्मास्यगभीरनाडीदुष्टव्रणस्त्रावविवर्जितानाम्॥ स्त्रावातिपूतित्वविनाशनाय पेयं च शल्यादिनिपातनार्थम्॥ २१०॥ ॥ इतिन्यग्रोधादिघृतम्॥ ॥ तिक्ताशिवानिशारुणानृपतरुप्रोद्भूतपत्रैः फलैस्तस्यैव द्विनिशारुणागदशिवालोध्रैश्चसिक्थेनच॥ तुल्यत्वगदनीलनीरजयुतैस्तैलं तिलानां भिषक्सम्यक्पाच्यच पद्मकेन मधुकेनैवं च पर्पासमैः॥ ११॥ तद्वद्वाकटुकादिरोहिणिकयातैलं तिलानां भिषक्जात्याद्यैरखिलैश्चकल्पिततमैःसार्द्धं समं पाचयेत्॥ तत्तैलं विषजव्रणेषु सकलस्फोटेषु च क्षूरुजिदष्ट्रदंतनखक्षतेषु बहुधा पेयाभिषक्संमतम्॥ १२॥ विसर्पसर्पकीटदुष्टदुष्टमांसकर्षणेषु त्वरा क्षतप्रहारजेषु पानमस्मकारयेच्च॥ १३॥ ॥ अथविपरीतमल्लतैलम्॥ ॥ कृशानुसिंदूररसोनकुष्टसबाणपुरवाकलिनीविषाणाम्॥ सहिंगुसिन्दुकटुतैलमेद पथ्याभोक्तुश्च व्रणान्निहंति॥ १४॥ येभेषजानांचशतैरसाध्याःकुपथ्यशीलस्यचतेस्यलेपात्॥ रोहंतिसद्योविपरीतमल्लमतो मतं तैलमदाभिषग्भिः॥ २१५॥ ॥ अ

थपटोलाद्यंतैलम्॥ ॥ कुलकपत्रजकल्ककषायकैः कटुकतैलमलंपरिपाचितम्॥ दहनदग्धव्रणव्रजरोपणंनिगदितंगदितंदवथौव्रणे॥१६॥ अन्यत् ॥ दूर्वारसेनापिकृतसिद्धतैलंकपिल्लकेनापितथैवसिद्धम्॥ दार्वीत्वचश्चापितथैवसिद्धंतैलत्रयंस्याद्व्रणरोपणंद्राक्॥२१७॥ अन्यत् ॥ बलामयूरमूलकंभपेष्यतैलपाचितं व्रणापहंसतूलकंविलेपितंचतैलकम्॥२१८॥ चंदनंसवदशंगदूर्वयाकालयाचमधुकंचधातुकी॥ सर्पिषासपयसाप्रपौंडरीकेनतैलपरिपाचितंसमम्॥१९॥ वह्निदग्धव्रणरोपणपरंसद्यएवचपतंगसंगतम्॥ चंदनादिवरतैलसेवनंवैद्यभूपगदितंव्रणापहम्॥२२०॥ अन्यत् ॥ हिंस्राहरिद्राकटुकावचाभिर्गोजिव्हयाबिल्वजटाश्रृतंच॥ तैलंव्रणानांपरिपूरणेनकुर्यात्सदाशोधनरोपणानि॥२१॥ अन्यत् ॥ कर्बूरजस्वरसपाचितसार्षपयत्नसिंदूरकल्कितमकटुतैलमेकम्॥ दुष्टव्रणंव्रजतिसर्प्पजनाडिकानामाश्वेवनाशनकरंभिषजोवदंति॥२२॥ अन्यः ॥ भल्लीमरीचार्कविडंगरात्रिद्वयैःसमंमार्कवनीरचित्रैः॥ ससैंधवंपकमदस्ततैलंनाडीकृफानिलभवामपचींश्वहन्यात्॥२३॥ इतिभल्लातकादितैलम्॥ अथमलमानि॥ ॥ यन्मानिपूर्वादिमलेभ्यएवसम्यक्करोत्याशुचभेषजंतत्॥ वैद्यैःप्रगीतमलमंव्रणानांसशोधनंरोपणमाशुकुर्यात्॥२२४॥ तानियथा ॥ एकोभागस्तुत्थकाद्दोचगंधात्द्वौक्रौंचामलासारगंधात्॥ भागद्वंद्वंपारदस्यत्रयश्चभागाःप्रोक्ताःसर्जकादेरसस्य॥२२५॥ तावत्पूगंदुग्धमात्रंचतावत्स्नुही तंदुलास्वादिरंचूर्णभागं॥ तावन्मात्रंस्थूणकंपेष्यसर्वंश्लक्ष्णंवैद्यःसंहता

ऽङ्गेनयामम्॥२२६॥ घृस्रादत्वागोघृतंतावद्देवशक्तौ काचेविन्यसे त्पुनश्च॥ सोयंप्रोक्तोहंसराजारव्यएवसद्यः कुर्यात् द्रोपणंदुर्व्रणा नाम्॥२७॥ विशेषकम्॥ इतिहंसराजमलमः॥ गौरिकसि क्थकरालान्यामेकंप्रकुट्टयेच्चतैलेन॥सिक्थकइवरवलुमानमल मंतद्धरिशंकरारव्यमुदितंच॥२८॥ तद्धिद्रावितमनलेव्रणशोधनरो पणार्थमुदितंवा॥ मुनिनाकाश्यपजेनारिवलजनव्रणजातदुःख नाशाय॥२९॥ युग्मम्॥ निंबस्यपत्राणिविपेष्यकुर्याद्विचक्रिका पाच्यघनेनदग्धाम्॥ तामेणवालाघृतपेषितांचनिंबाद्यमेतन्मलमंत्र व्रण्यम्॥२३०॥ त्वक्क्षीरिकाचंदनगैरिकाणांविषस्यपूक्ष्मस्यघृते नकुर्यात्॥ वह्निप्रदग्धस्य व्रणस्यकुर्यादारोपणंवैविषगर्भमेतत्॥ ३१॥ लवणागारधूमाग्निक्षौद्रंकंकिण्वमर्दिता॥ तिलाःकृष्णाश्चम लममेतद्व्रणरोपणम्॥३२॥ अन्यत्॥ मदावलाचंदनयष्टिकानां दार्वीतिलानामधुकोत्पलानाम्॥ मेदाघृताभ्यांमलमंप्रकुर्याद्धेमी रकोक्तंवडवाव्रणघ्नम्॥३३॥ इतिहैमीरोक्तमलम्॥ निंबस्यप त्राणितिलानिदंतीमधुत्रिवृत्सैंधवमर्दितानि॥ त्वष्ट्रोक्तमेतन्मल मंविशेषाद्दुष्टव्रणानांप्रतिरोपणंच॥३४॥ इतिविश्वकर्मणाप्रो क्तम्॥ कपालकपालेनरस्यास्थिदंडेनसंपेषयेच्चानुवेलंनृमूत्रैः॥ व्रणायेप्यसाध्याःशतैर्योगवृंदैर्विनश्यंतितेचूर्णवच्चास्ययोगात्॥ २३५॥ इतिकपालादिमलमम्॥ जटावाणपुंखाभयाम्लसंया वेष्टामधूक्ताव्रणेसाधुलिप्तानराणाम्॥ गजश्वानकाश्वादिकानां विशेषात्प्रकुर्य्यात्तथारोपणंदुर्व्रणाना॥३६॥ इतिशरपुंखामलमं॥ विषनिशासमभागमलंभिषक्परिविमिश्र्यचसर्षपतैलके॥ अपिच

सप्तदिनानिरवशातपेस्थितमदोमलमंव्रणरोपणम्॥३६॥ विषनिशादिमलमंतुहिनमेकगुणंद्विगुणंघृतपरिविमर्द्यकृतंमलमंत्विदम्॥झटितशस्त्रजमेवव्रणंहरेदपिचपाकरुजोबहुधानृणाम्॥३७॥ इतिकर्पूरमलमम्॥क्रमुकदग्धरजस्कगवांघृतैर्भवतिघृष्टतमंमलमंनृणाम्॥व्रणगणंसहसोत्थनिमित्तनंहरतिलेपितमेतदनंतरं॥३८॥ इतिपूगमलमम्॥जवविदग्धरजस्तिलतैलयोस्समममलंमलमंपरिलेपनात्॥दहनदग्धव्रणंहरतित्वरानिगदितंतदिदंभिषजांगणैः॥३९॥ अन्यत्॥न्यग्रोधकोदुंबरपिप्पलानांप्लक्षस्यवावेतसजंत्वचश्च॥भस्मापिशक्के मदयागमेतत्सर्वविमर्द्यमधुनाघृतेन॥४०॥ तुल्येनयामत्रितयंनवांगमेतत्प्रसिद्धंमलमंजनानां॥ येन्येपिनानावधिजीवसंघास्तेषांव्रणानामपिरोपणंद्राक्॥४१॥ येदुर्व्रणायेविषसंभवाश्चयेसूक्ष्मवृक्काविलयंप्रयाति॥ शल्ड्यंतिशल्ड्यंति कुपथ्यशीलजनव्रजस्यापि विलेपनेन॥४२॥ अन्यत्॥मनःसिलारात्रियुगेनकालांविमर्दयेद्वाघृतमाक्षिकाभ्याम्॥ विस्फोटदग्धक्षतभग्ननाड्यो रोहंति पंचांगविलेपनेन॥४३॥ इतिपंचांगमलमम्॥ अयोरजोभिः त्रिफलाप्रसूनैःकाशीसयुक्तंवघृतप्रघृष्टम्॥ सवर्णकृद्वाहविदग्धदेहत्वचिप्रलिप्तमलमंविशेषात्॥४४॥ इतिसवर्णीकरणमलमम्॥तिलतैलविमिश्रितसर्ज्जरसंशतधांबुनिघृष्यविधूततमं॥ अपिसप्तदिनानिविलिप्यसदःपरिशल्ड्यंतिवन्हिविदग्धतनुः॥४५॥ तुल्यैकभागेनचखर्परस्यचत्वारिभागानिचयश्चभस्माः॥स्नेहस्यगव्यस्यघृतस्यचापि चत्वारिभागान्यखिलौषधीभ्यः॥

॥४६॥ तत्कज्जलाभंचनिघृष्यकुर्यान्नाम्नातुकालंमलमंविशेषात्॥ नेत्रप्रभूतांश्चगदान्निहन्याज्जलश्रुतिंवाव्रणजातिदुष्टम्॥४७॥ इतिकालमलम् ॥तुत्थैकभागेनहयारिपत्रभस्माथतुल्यंचचतुर्गुणाच्च॥ हेमाभिधासर्वमलंव्यपोष्यानसीभवैःपञ्चगुणैश्चतैलैः॥४८॥ खर्जूद्भवादद्रुभवाश्चसर्वेस्फोटाविनश्यन्तिचस्त्रावयुक्ताः॥ पीडासमेतामलमस्यलेपात्कर्वीरिकादेर्व्रणरोपणाद्राक्॥४९॥ ॥अथरोमकीर्णव्रणः॥ ॥रोमाकीर्णव्रणोनरोहतियदातत्रत्यरोम्णाभिषक्भूमिंसत्क्षुरकर्तिकाभिरखिलांसंहृश्यसंसाधयेत्॥२५०॥ योगैःसन्मलमैरथोयदितदारोम्णानवासंभवस्तत्रैवंभिषगीश्वरेणबहुधाकार्याचरोम्णांजनिः॥५१॥ ब्राह्मीसैंधवचित्रमूलसहितंशीर्षकपोतस्यचतद्वच्चापिशनाशिरोरुधिरमध्यत्राण्डमेतद्वयोः॥ पिष्टंतत्रविलेपितंतुजनयेद्रोमणांकुलंभूरिशःपादेपाणितलेकिमन्यचतथायत्रास्तिरोम्णांजनिः॥२५२॥ श्रीतातपादाब्जसमाज्ञयायाकृताचिकित्साक्रमकल्पवल्ली॥ श्रीकाशिनाथेनगतश्चतस्यांव्रणाधिकारस्तवकःसमाप्तिम्॥५३॥ ॥ ॥अथभगंदरः॥ ॥तावन्निदानं॥

वल्काशिनोमेदलदेहयष्टेसंस्थारनस्याथप्रकुर्वतश्च॥ सन्लेष्मपित्तपवनैरधस्ताद्रतेतुवेसीमनिकांतएव॥१॥ भगंदराख्यापिडिकास्वरूपंमंदाग्नियुक्तस्यनरस्यनित्यम्॥ तत्पूर्वरूपंचकटीकपालनिस्तोदकंडूदवथुव्यथाच॥२॥ अथरूपम् ॥ अंडादधस्ताद्गुदतोर्ध्वतश्चसंदारयत्येवभगेनतुल्यम्॥ भगंदराख्यःपिडिकाजनानांभवेत्सदाक्लेशकरीनितांतम्॥३॥ अथोपशयः ॥पथ्य

नगोधूमभवप्रकारदुग्धादिकंशोषणकारिषच्च॥ वास्तूकशाका
न्यमपिप्रयोज्यंत्याज्यंतथामैथुनपृष्ठयाने॥५॥ व्यायामयुद्ध
गुरुभक्षणानिव्रणप्रकोपेगमनानिनित्यम्॥ वर्ज्याणिवक्ष्यप्य
थतच्चिकित्सांयथामतिःशास्त्रमतेनसम्यक्॥६॥ प्रतीकारः॥
स्नुमनावटपत्रभेषजानिपरिपिष्टानिसुधालतायुतानि॥सहा
र्कसैंधवेननित्यंपरिलिप्तानिभगंदरापहानि॥६॥ अथतै
लम्॥ निशार्कदुग्धसैंधवैः पुरोश्वशत्रुपत्रकैः॥सुसिद्धतैललेप
नाद्भगंदराह्वरंहरेत्॥७॥ ॥अथनवकार्षिकोगुग्गुलुः॥ ॥
त्रिफलाहरनेत्रसंमितात्वरवल्कैस्त्वसमोहिगुग्गुलुः॥गुटिकाक
णयैकभागयास्वपथागुल्मभगंदरार्शसाम्॥८॥ ॥अथलेपः॥
वटपत्रपुनर्नवागुडूच्यःपरिपिष्टाःखलुचेष्टिकासमेताः॥ जगदौ
षधिसंयुताःप्रलिप्ताःपिडिकायांनुभगंदरस्यशांत्यैः॥९॥ अ
न्यः॥त्रिवृत्तिलारुणानागदंतीक्षौद्रेणसर्पिषा॥सैंधवेनसमं
घृष्टंमलमंत्रभगंदरे॥१०॥ अन्यः ॥ज्योतिष्मतीभूधरकर्णि
काभिःसलांगलीकुष्ठतिलैर्जनानां॥ दंतीशनाह्वानिवृताच्चपिष्टा
स्स्युःशोधनार्थंच्चभगंदरेषु॥११॥ तिलशिवागदलोध्रनिशावला
ग्रहजधूमयुताःपिचुमंदजैः॥ अपिदलैःपरिपेष्यभगंदरेभगजे
लिंगगदेव्रणशोधनम्॥१२॥ अन्यः ॥ विडालास्थिघृष्टफला
नांत्रयस्यरसेनाप्शुलिप्तंभगाद्यदरंच॥ निहंत्येवदुष्टव्रणानन्यजा
तीन्सवर्णीकररोपणादुर्व्रणानाम्॥१३॥ अन्ययोगः ॥चि
त्रकार्कहयमारयुगाभ्यांलांगलीसतृवृताहरताले॥ सर्ज्जिकाचसु
धयातिलतैलज्वालयाचपरिपाच्यविलेपात्॥१४॥ विसंदनंतै

लमदोविशेषात्भगंदरं हंतिविलेपनेन॥ संशोधनंरोपणमाशु कुर्यात्सवर्णतांसंधिदधातिसद्यः॥१५॥ ॥अथसंप्राप्तिः॥ तत्रतावच्छतयोनिकः॥ अतिरूक्षकषायसेवनैर्यदिवायुर्गमितस्त्वपानके॥ पिडिकांप्रकरोत्युपेक्षितस्त्वरितंपाकमुपैतिदारुणम्॥१६॥ पिडिकानिरुजान्वितांविभिन्नाऽरुणफेनंश्रवतेविशेषतः॥ अथमूत्रपुरीषरेतसःस्रवनेयःशतयोनिकस्तुसः॥१७॥ अतिसूक्ष्ममुखैर्व्रणैरनेकैर्गदितश्चालनिकासमश्चवैद्यैः॥प्रकरोतिव्रणांश्चनाडिकास्त्वथवातेषुचिकित्सितंच॥१८॥ व्रणनाडीसदृशांतुवैद्यभूपोऽथवावैश्रुतिमार्गसंश्रितांश्च॥ वरशस्त्रमुखेनमाधरेष्यतिकुर्य्याच्चचिकित्सितंततोवा॥१९॥ क्षारेणाग्निणावापिदहेत्सम्यक्चरोपणम्॥ प्रकुर्यादन्यदथवाप्रतीकारंतुपूर्ववत्॥२०॥ अथोष्ट्रशिरोधरः ॥पित्तंस्वकारेणमवाप्यचकोपमेत्यकुर्य्याच्चरक्तपीडिकांगुदगांप्रकुर्यात्॥ साचाशुपाकसहितांह्मिपूतिवाहादुष्ट्रस्यशीर्षमिवचोष्ट्रशिरोधराख्या॥२१॥ वक्रेयथोष्ट्रमपिनोचलतांजहातिनूनंतथेयमपिचंचलतांभजेच्च॥ नाशकसर्वमखिलंवरवैद्यभूपैःसम्यग्ब्रवीमिबहुतंत्रगणंविलोक्य॥२२॥ प्रतीकारः ॥ तिलमधुकत्रिमिश्रंनिंबपत्रप्रलेपमुपहरतिविशेषाच्छीतलंपित्तजातम्॥ सरुजमपिचशीघ्रंलेपनादुष्ट्रशीर्षंभगमपिदरमेतद्धंतिदृष्टंपुरस्तात्॥२३॥ ॥अथपरिस्रावी॥ ॥ घनस्रावीकंडूयुतकठिनवातोपिनिभृतंततस्तस्मिन्नभिन्नेविधिवदथगाथंत्रिसलिलैः॥ विभूत्वापीत्वावाक्वथितत्रिफलाचारिपुरयुगविडंगाढ्यंसंयोजयतिगदसंस्रावमधिकम्॥२४॥

अथशंबुकावर्ता॥ ॥शंखावर्तनिभाचयानिगदितानाडीतुपायुस्थितानस्यांगोस्तनसन्निभाहिपिडिकानानारुजाकीर्तिता। नानावर्णयुतास्रवेद्यधरणीपालेश्वशंखादिका ऽऽवर्त्ताख्याभवतेचिकित्सितमलंतस्यांयथावच्चरेत् ॥२५॥ अथोन्मार्गी॥ क्षताद्गतिःपायुगतातिरूढाविदार्यतेचेत्क्रिमिभिःप्रकुर्यात्॥ उपेक्ष्यमाणाबहुधाव्रणानामुन्मार्गमुन्मार्गिनमेतमाहुः॥२६॥ ॥ ॥अथोपद्रवाः॥ ॥ अतीसारमूर्छातृषाशोषमोहास्तथातिद्रुमिर्मार्गलोमूत्ररोधः॥ भवेद्धिड्विबंधोमणेःपूयपूर्णप्रकामंचकोष्ठेनवोपद्रवास्य॥२७॥ सर्वेसाध्यपितुभगंदरगदादुःखाच्चतेष्वप्यलंनोसाध्यस्त्रिभवस्तथाक्षतभवाविड्मूत्रशक्रान्क्रिमीन् ॥ वायुन्वाथतथास्रवंतमसकृन्नाशंनयेयुर्नरंतस्माद्वैद्यवरोविचार्यसकलंकुर्याच्चिकित्सादिकम्॥२८॥ इत्यसाध्यलक्षणम् ॥अथोस्यनिवृत्तिः ॥सम्यग्वायुपुरीषनिर्गमविधौवेगोथमूत्रस्यचलिंगाधश्चयथुव्यथानचतथापायोःकरस्पर्शतः॥२९॥सौख्यंचास्यनिवृत्तिरत्रगदितावैद्याधिभूपैःस्फुटम्॥ श्रीतातोनितरांजयत्यथमयायस्याज्ञयेयंकृता॥३०॥ श्रीतातपादाब्जसमाज्ञयायाकृताचिकित्साक्रमकल्पवल्ली॥ श्रीकाशिनाथेनभगंदरस्यगतश्चिकित्सास्तबकश्चतस्याम्॥ ॥ ॥ ॥ अथोपदंशनिदानम्॥ ॥ हस्ताद्दंतनखराद्यभिघाताद्योनिदोषतअथोप्युपदंशः॥ स्त्रीसमूहगमनादपिलिंगधावनेनचविमेवविशेषात्॥१॥ जायतेच्चखलुगंधगदोयंपूर्वरूपमपितस्ययथावा॥ यद्यतमूत्रणाहाहोकस्माच्चिमिचिमायनम्॥ भिन्नवर्णभवेन्मूत्रमुपदंशेभ

विष्यति ॥ २ ॥ ॥ अथरूपम् ॥ ॥ वरटीदंशवत्पीडालिंगस्फो टेयदाभवेत् ॥ उपदंशन्तुतंविद्यालिंगस्फोटसितारुणम् ॥ ३ ॥ अथोपशयः ॥ उपदंशगदेजवान्नमेपरिपेयानिजलानिकृतानि ॥ चणकादिचशोषकंभजेद्ध्वाहीरतंशाकमलंपरित्यजेच्च ॥ ४ ॥ प्रतीकारः ॥ स्निग्धस्विन्नस्यापिमेढ्रस्यमध्यनाडींस्विध्ये द्वाजलौकाभिरस्त्र ॥ रक्तंहार्य्यंशोथपीडानिवृत्त्यै पाकोवार्य्योयत्नतोवैद्यभूपैः ॥ ५ ॥ प्रतीकारः ॥ वटरोहार्जुनजंबुलोध्रपथ्यारचितोलेपवरोनिशान्वितश्च ॥ उपदंशरुजंसशोथकंसकलंहंतिविलेपनाद्द्रुतंवा ॥ ६ ॥ पक्केषुवैद्योप्युपदंशकेषुप्रक्षालनंवोत्रिफलाकषायैः ॥ वाभृंगराजस्यरसेनकुर्याद्दागुंडनंवद्धुरपत्रचूर्णैः ॥ ७ ॥ तत्रावगुंडनंकार्य्यंदाडिमत्वग्भवैरपि ॥ सर्वेष्वप्युपदंशेषुतत्प्रदेशेषुवाध्रुवम् ॥ ८ ॥ अन्यः ॥ जयायाश्चजात्याश्चकवीरकस्यदलानांचसंपाकजानांकषायैः ॥ प्रकुर्य्याच्चप्रक्षालनंमेढ्रपाकेभिषग्भूपवर्योदितंसोपदंशी ॥ ९ ॥ अथपटोलादिक्काथः ॥ ॥ कुलकनिंबफलवयसंभवंसमकिराततयुतंशतमंबुच ॥ परिपिबेत्रिफलाखदिराशनैरपिपुरेणयुतंरुजिलिंगगे ॥ १० ॥ नीलोत्पलानिकुमुदानिचपद्मकानिसौगंधिकानिपरिपेष्यविचूर्णितानि ॥ उक्तानिवैद्यनिकरैश्चप्रदेहहेतोर्लिंगोद्भवेभगजदुष्टगदोपदंशे ॥ ११ ॥ इतिप्रदेहः ॥ अथप्रलेपः ॥ ॥ सौराष्ट्रिकागैरिकतुत्थपुष्पकाशीसधोक्ष्यैर्लवणोत्तमेन ॥ लोध्रेणतमेन मनःशिलाभिः हरेणुकैलासहचूर्णिताभिः ॥ १२ ॥ क्षौद्रेणकुर्यान्मलमंभिषग्ध्योन्नामोपदंशानुपहंतिलेपात् ॥ अथान्यप्रलेपः ॥ सिद्ध

स्यपत्रोत्थरसैःशिरीषपत्रोद्भवैर्धात्र्यहरीतकीभ्यां॥१३॥ सम
र्धघर्षं च विधायशुष्कंक्षौद्रेणकुर्य्यान्मलमं च ताभ्याम्॥ शिवो
दितयोनिजलिंगजातान्नानोपदंशानुपहंतिलेपात्॥१४॥ वि
शेषिकेनमलमद्वयम् ॥ अथसंप्राप्तिस्तत्रतावद्वातजः॥ ॥
सतोदभेदस्फुरणानियत्रस्फोटानिकृष्णानिभवंतियत्र॥ वातोप-
दंशः कथितोमुनींद्रैस्तस्यप्रतीकारमहंब्रवीमि॥१५॥ प्रतीका
रः ॥ प्रपौंडरीकागुरुदारुयष्टीरास्नाधराकुष्ठकषायलेपैः॥ नल
निर्तैलैपनधावनानिकुर्याद्भिषग्वातभवोपदंशे॥१६॥ अन्यः ॥
बीजानिवैद्योनिचुलोद्भवानिगंधर्वहस्तोत्थभवानिपिष्ट्वा॥ गोधू-
मजातैर्जसक्तुभिश्चवातोपदंशेचकरोत्युष्णलेपम्॥१७॥ अथ-
पित्तजः ॥ बहुक्लेदयुक्तानिपीतानियत्रसदाहानिमांसावभासा
निनत्र॥ यदास्फोटसंघानिवैद्याधिभूपाजगुःपित्तजातोपदंशोभव
ति॥१८॥ प्रतीकारः ॥ गिरिमृदंजनचंदनपद्मकैर्नलदमुत्पल
मत्रचकालया॥ अथचपित्तगदेभगलिंगजेर्घृतयुलपरिपेष्यविले-
पयेत्॥१९॥ अन्यच्च ॥ निंबाश्वत्थकदंबशालवटजैःक्वाथैरल
वाम्बुलेर्जंबूदुंबुरुवेतसोत्थसलिलैःप्रक्षालनंवाघृतम्॥ एतैरेवतु-
साध्यलेपनविधिंतैरेवकुर्याद्भिषक्तच्चूर्णैरवगुंडनंप्रतिदिनंपि-
त्तास्रजेलिंगजे॥२०॥ ॥अथकफजः॥ ॥ कंडूशोथयुतैर्म
हद्भिरखिलैस्फोटैश्चशुक्लैर्घनैःसर्वैरस्रावयुतैर्भिषक्निगदितरो
गोबलाशोद्भवः॥ प्रक्षाल्याशुजलेनलिंगमसकृत्तत्रावगुंडंचरेत्॥
॥ कासीसस्यचचूर्णकेनसहसानैरुज्यतावाप्यते॥२१॥ अन्यः॥
करवीरस्यचमूलंजलपिष्टंहिलिंङ्गगदेपिविलिप्तंहरतिरुजांहि

॥२२॥ ॥अथसन्निपातजः॥ ॥ अनेकधानेकरुजोप्यनेके वर्णोप्यनेकस्त्रुतिमार्गभिन्नः॥ असाध्यउक्तस्त्रिभवोपदंशो वैद्यः पुराणैश्चरकादिभिश्च॥२३॥ प्रतीकारः ॥ तरथानिंबवासाभ्यांखदिरासनपिप्पलैः॥ अंजनेनसमंसर्वैर्गुग्गुलुंपेष्यपाचयेत् ॥२४॥ वटकानक्षमात्रांश्चकुर्य्याच्चत्रविचक्षणः ॥एकैकंभक्षयेन्नित्यमुपदंशेत्रिदोषजे॥२५॥ इतिवराटिगुग्गुलुः ॥करंजेनानिंबाशनैःशालजम्बूवटैःक्वाथकल्कीकृतैःसिद्धहव्यम्॥सरागस्त्रुतिभ्यांयुतंदाहयुक्तंसपाकोपदंशंविलेपान्निहंति॥२६॥ ॥अथलिंगार्शः॥ ॥संजातमंकुरगणैरिवचापरिष्टात्तेषामुपर्य्युपरितैरपिसंस्थितैश्च॥कोशांतएवयदिकुक्कुटचूडिकेवसंधौचपर्वगतसंधिभवाकचिद्वा॥२७॥ वर्तिश्चलिंगभववर्तिमथेनमेके लिंगार्शमाहुरपरेत्रिभवापिनस्याम्॥सपिच्छिलागणिपत्तुत्थरसांजनानांसच्छिलैशैलजाशिलाभवचूर्णयोगात्॥२८॥ लिंगार्शोनाशमुपयातिचशूकदोषोयोलिंगशोफसञ्चलंचविवृद्धिमिच्छेत्॥ योमूढधीश्चगदलुनस्यजलादिशूकलेपेनलिंगमृदुचर्मभवस्कयोयम्॥२९॥ स्फोटस्तुदार्वीस्फरसारुणानांधूमेनगेहस्यनिशायुतेन॥पक्वेनतैलेनविलेपनात्तुमेढ्रस्यरोगाःप्रशमंप्रयांति॥३०॥ अनंगस्यरोगारसाद्यंजनस्यप्रलेपाद्द्रुतंयांतिनाशंविशेषात्॥सपूतिप्रपूयैर्युतंशूलकंडूसमेतंचवैद्याधिराजोवदंति॥३१॥ ॥अथसर्षपिका॥ ॥शूकदुर्भगभवापिचगौरसर्षपेनपिडिकाकफवाताद्॥लिंगदेशप्रभवावरवैद्यैःसार्षपीतिगदितानिजतंत्रे ॥३२॥ प्रतीकारः ॥शूकेषुशूकजभगोत्थगदेषुवैद्यःकुर्या

द्विषध्नवरभेषजरेचनानि ॥ रक्तस्यमोक्षणमथोपिविलिख्य पूर्वसूक्ष्मैः कषायैरवचूर्णयेत्ताम् ॥३३॥ अथाष्ठीला ॥ ॥ अष्ठीलिके वापिच वायुजाता रूक्षातिकाठिन्ययुता सुतस्याम् ॥ मेढ्रस्यमध्यस्थशिराविमोक्षज लौकिकाभिश्चक्रियाविदध्यात् ॥३४॥ अन्यः ॥ गुग्गुलुमेकत्रिफलाकाथयुतंहि ॥ अष्ठीलामथपीतंहरतिमतंहि ॥३५॥ शूकैश्चवल्कैर्विषमैः समंतात्लिंगंयदावैग्रथितंविशेषात् ॥ वैद्यास्तमाहुर्ग्रथितंतुनाडीस्नेहेनसंस्वेद्यरुक्षोष्णयोगैः ॥३६॥ स्निग्धैः रूक्षोष्णैरुपनाहमेत्तंजंबूफलास्थिप्रतिमाथकुंभी ॥ सारक्तपित्तप्रभवापितस्यापकांविलोक्याथव्रणंविशोध्य ॥३७॥ रक्तंहरेत्तुदकलोध्रपथ्याधात्रीविभीतैः परिलेपयेच्च ॥ पूर्वोक्तद्रव्यैरपिसाध्यतैलमभ्यंजनंतत्रभिषक्प्रयुंजीत् ॥३८॥ अथालजी ॥ ईदृक्स्वरूपाप्यलजीप्रमेहाज्जातातथायापिडिकाचरक्ता ॥ सितानथास्फोटचितानितीव्रासरक्तपित्तप्रभवाचतस्याम् ॥३९॥ कुंभिकावत्प्रथितंचिकित्सितमलंकार्य्यंचरक्तस्रुताञ्जात्वानामलजीपयोभिरनिशंलेपांश्च सेकांश्चरेत् ॥४०॥ सीतांश्चान्यतमानथोत्रबहुधासर्पिश्चवापाययेत्कार्यरेचनमत्रपथ्यमेवबहुभिर्वैद्यैः सदावर्णितम् ॥४१॥ ॥ अथमृदितम् ॥ ॥ मृदितपीडितमेवयदातदाव्रजतिशोथजलंमदनांकुशे ॥ इहसदागतिनात्रबलाकृतैर्मृदितमुष्णनरैरपितैलकैः ॥४२॥ विशेषतोपनाहयेत्तथैवशंखघर्षणाज्जलेनजातकल्ककैर्विलेपयेच्चवापुनः ॥४३॥ पाणिभ्यामपिसंमूढेसम्मूढपिडकाचया ॥ वातकोपेशूकदोषविशेषादपिपिच्चिते ॥

॥४४॥ प्रतीकारः ॥ संमूढपीडिकायांतुक्रियापित्तविसर्पवत्॥ कांष्ठपूगंजलैर्घृष्ट्वाखदिरंसारमेवच॥ ४५॥ लिंगरोगहरः प्रोक्तप्रलेपोबहुभिर्ध्रुवम्॥ संमूढपिडिकायास्तुनाशनोभिषजामतः॥ ४६॥ दीर्घाबह्व्यश्चपिडिकाः कफास्रग्भ्यांसमुत्थिताः ॥दीर्यंतेमध्यतोयाश्चवदनारोमहर्षकृत्॥ ४७॥ सोवमंथः क्रियास्तत्रसर्व्वप्युक्ताःसमाचरेत्॥ क्षालयेत्त्रिफलातोयैःपक्वलिंगंपुनःपुनः॥ ४८॥ त्रिफलाचूर्णलिप्तंहरतिनमेव॥ वैद्यैरुक्तैःसर्वैरलमिदमेव॥ ४९॥ ॥अथपुष्करिका॥ ॥पित्तशोणितभवापिडिकाय॥संभवेच्चपिडिकाजलजस्य॥ कर्णिकेवविततास्वलुवैद्यैः पुष्करीतिगदिताऽगदतंत्रे॥ ५०॥ प्रतीकारः ॥ चिकित्सितपुष्करिकास्वपित्तविसर्पवत्किंशुकश्रावणीनाम्॥ वचाश्वकर्णत्रिफलासलोध्राकासीसचूर्णैःप्रतिरोपणंद्राक्॥ ५१॥ ॥अथस्पर्शहानिः ॥ ॥शूकदूषिततमंरुधिरंयत्स्पर्शहानिसदकारिविशेषात्॥ तैलमेवबलयाखलुसिद्धमुष्णमेनमुपहंतिचसेकात्॥ ५२॥ ॥ अन्यः ॥ गंधकघृतपरिलेपोऽस्पर्शरोगदोहि॥ कुदितोवावरवैद्यैलिंगपदेहि॥ ५३॥ अथोत्तमा ॥ भवेद्रक्तपित्तोद्भवामुद्गमाषोपमाचोत्तमाख्याचशूकस्यदोषात्॥ अजीर्णोत्तुतांवैद्यधुर्योविशेषात्समुद्धृत्यवाबाडिशेनैवपश्चात्॥ ५४॥ कषायकल्कचूर्णैर्मधुप्लुतैर्विशेषतः॥ समाचरेच्चवैद्यराट्प्रसेकलेपसाधनैः॥ ५५॥ ॥ अथशतपोनिकः॥ ॥ रंध्रैश्चमध्यणुमुखैश्चितमेवसर्वलिंगंसमंततश्चथोयदिवातरक्तात्॥ तेवैद्यभूपनिकराःशतपोनकाख्यरोगंवदन्तिखलुतत्ररसाक्रियाःस्युः॥ ५६॥ पृथक्प-

र्शिकादिसृततैलमेकं प्रसेव्यंचपश्चाद्दलयत्रवैद्याः॥ अथत्व
क्पाकः ॥ भवेद्वातपित्तात्त्वचः पाकरोगे ज्वरेणापिदाहेनयु
क्तः प्रकामम्॥५७॥ प्रतीकारः ॥ निंबारुणारवदिरचूर्णविलि
पनंद्राक् लिंगस्त्वचश्चखलुपाकरुजंनिहंती॥ न्यग्रोधचूतगज
भोजनजंबुकानां मौदुंबरस्यचजलेरभिषेचयेच्च॥५८॥ ॥अथ
शोणितार्बुदम्॥ ॥स्फोटैश्चकृष्णैः पिडिकाभिरेवरक्ताभिरेवं
परिपीडितंच॥ तल्लिंगवास्तोरुजमादधानं रक्तार्बुदंवैद्यनृपाव
दंति ॥५९॥ तद्रक्तविद्रधिसमंचचिकित्सितव्यं तद्वत्कुमारिजर
णोद्भवलेपनेन॥ शांतिंनयेद्द्रवथुपाकगदान्वितंच रक्तार्बुदंसकल
वैद्यमहीधरोक्तम् ॥६०॥ ॥अथमांसार्बुदमांसपाकौ॥ ॥मां
सार्बुदंमांसमलंविदुष्य दोषाः स्त्रयश्चापितु मांसपाकम्॥ कुर्वं
ति मांसानितथैवनित्यं शीर्णानिवैवेदनयान्वितानि॥६१॥ प्र
तीकारः ॥ गुंजामसीतालमनः शिलानां दार्वीहरिद्रामधुकाब्दि
नानाम्॥ सूक्ष्मोदहव्यैश्चविलेपनंद्राग्विशीर्णमांसप्रतिरोपणं
हि॥६२॥ सर्वत्रगतिकंचैवमलमंनगभाषितं॥ नोयत्रान्यगतिंस
म्यक्‌तत्रगत्वाव्रणं हरेत् ॥६३॥ ॥अथविद्रधिः॥ ॥विद्रधिं
सन्निपातेनयथोक्तंसमुपाचरेत्॥ अन्यांश्चसन्निपातोत्थान्गदा
न्वैकथयाम्यहम्॥६४॥ कृष्णानिशुक्लानि भवंतियानि चित्राणि
तद्वत्सविषाणि वापि॥ वदंतिवैद्यास्तिलकालकानि लिंगस्यपा
तायचसन्निपातात्॥६५॥ ॥अथफिरंगः॥ ॥फिरंगदेशे
बहुधोद्भवत्वात्फिरंगमाहुर्भिषजः पुराणाः॥ लिंगस्यचस्फोटविशा
रदायेतेगंधरोगंचफिरंगिणश्च॥६६॥ फिरंगिणोस्त्रीगमनाद्नराणां

स्त्रीणांभवेद्वापिचतत्प्रसंगात्॥ तेषांचतासामपिवाफिरंगना-
शायकर्पूररसः प्रसेव्यः॥६७॥ अथोत्रसेव्यकर्पूररसक्रियांपु-
रस्तात्साधुवदूयामः॥ प्रतीकारः ॥ टंकैकपारदमितंरसादि-
रहिंटंकमाकारकादिकरभंचविशेष्यसप्त॥ कुत्वावटीश्चखलुमा-
क्षिकरामटंकैः प्रातःफिरंगशमनायगिलेच्चनित्यम्॥६८॥ क्षा-
म्लेचपरित्याज्येभोज्यंरुक्षंविशेषतः॥सप्तभिर्दिवसैर्नृणांफिरंगो
नश्यतिध्रुवम्॥६९॥ ॥अथबाह्यफिरंगः॥ ॥बाह्यःफिरं-
गोविस्फोटकेनतुल्योल्पपीडः स्फुटितोव्रणेन॥तुल्योद्विधासौ
रुरवसाध्यउक्तोवैद्यःपुराणैरखिलैर्विचार्य॥७०॥ अस्याचिकि-
त्सा ॥ कर्षद्वयंश्रीशिवयोश्चवीर्यंप्रक्षप्रमाणानिचतंदुलानि
॥पिष्ट्वावलायाःस्वरसेश्चसप्तदद्युस्थधूमोद्धि दिनैर्नियोज्यः॥
७१॥ वटीत्रयस्यापिनिषेव्यानित्यंधूमंचवोबाह्यफिरंगरोगी॥स-
प्तभिर्वादिवसैश्चतस्माद्विमुच्यते ऽम्लंलवणंत्यजेच्चेत्॥७२॥
॥ ॥अथाभ्यंतरफिरंगः॥ ॥अभ्यंतरःसंधिषुयःफिरंग श्चेल-
क्षणैश्चापिभवेद्व्यथोवा॥सकष्टदोतिप्रथितश्चिरस्थोवैद्यैर्निरुक्तः
खलुकृच्छ्रसाध्यः॥७३॥ प्रतीकारः ॥पत्राणिनिंबस्यपलो-
न्मितानिपथ्याब्दमांसारजनीकलाशाम्॥ वसांशिकामामल-
कींविचूर्णर्यशाणान्मितचूर्णमदश्चनीरैः॥७४॥ भुक्त्वाफिरंगो-
भयनाशनायषड्म्लमाश्वेवपरित्यजेच्च॥ तद्वच्चचूर्णंखलुचोप-
चीनीभवंसमधूकेरशितंशिवाय॥७५॥ योगद्वयम् ॥ अथो-
भयफिरंगः ॥लिंगस्यसंधावपिसर्वलिंगेस्फोटाभवेयुर्यदिचो-
भयाख्यः॥असाध्यलिंगःसफिरंगरोगोमाप्यस्तथाद्योषधिसे

विनश्य॥७६॥ फ॥ कर्षार्द्धसूतंचकुरंडनीरैः खल्वेविमर्द्याथपला-र्द्धकेन॥ पुरेणसाकंकरभंचकुष्ठपलत्रयंचाप्यथकर्षमर्द्धम्॥७७॥ पृथक्पृथक्सर्वमिदंसमस्तंपलद्वयाभ्यांघृतमाक्षिकाभ्याम्॥ संमर्द्यकृत्वाचवटींनिषेवेत्कर्षार्द्धमानांचफिरंगरोगे॥७८॥ अन्येव्रणायेपिफिरंगजाताः सद्योविनश्यंतिचतेपिसद्यः॥ इमांवटींभक्षयितांमुखांतःशोथःकदाचिन्नहिजायतेच॥७९॥ लवणमम्लरसंचपरित्यजेद्दिनदशात्रयमेकदिनाधिकम्॥ अथपलाशनघृतमलंनरःप्रतिदिनंदशमाषमितंभजेत्॥८०॥ अपिजलेनचलिंगविलेपनाद्व्रजतितैरिहनाशमसौगदः॥ उभयजामपिफिरंगविनाशनंनिगदितंविदितंभिषजांगणैः॥८१॥ अथोपद्रवाः॥ कार्श्यंबलक्षयमथोखलुनासिकायाभंगोपिवन्हिलघुतास्थिविशोषउक्तः॥ वक्रत्वमस्थिभिषजःप्रवदंतिसर्वेप्रायःफिरंगगदसंघउपद्रवाश्च॥८२॥ ॥अथासाध्यलक्षणम्॥ ॥ विशीर्णयन्मांसंकृमिभिरपिजग्धंचबहुशः शिश्नंमुष्कंवानिपतितमनोज्ञांकुशगदम्॥ परित्याज्यंवैद्यैर्निखिलजनितावंधुभिरतः॥ परित्यक्त्वाभोगानिजगदहरंसेव्यमपितैः॥८३॥ संजायमानक्षणमेवमूढोभोगावसक्तोनचरोत्क्रियांयः॥ कालांतरेदाहकृमिप्रपाकशोथैर्विशीर्णेंद्रियपाकमेति॥८४॥ मांसार्बुदंमांसगतंश्चपाकश्चेद्विदाधिर्वातिलकालकास्युः॥ अतनतेनक्वचिदेवसाध्यासाध्योबहिर्भूतउपद्रुतोन॥८५॥ अभ्यंतरःकृच्छ्रतमःप्रसिद्धोबहिर्भवःक्षीणतरस्यजीर्णः॥ उपद्रुतश्चेन्मुनयोवदंतिफिरंगरोगोबहुधाप्यसाध्यः॥८६॥ अथास्यनिवृत्तिः॥

संभोगकालेभगलिंगयोश्चदाहोयदैवप्रतिजायतेन॥ श्वेताच्छ शुक्रेपतितेमनोजज्वरेनराणांचफिरंगमुक्तिः॥८७॥ ॥अथो त्रोपदंशादिफिरंगगदोभयफिरंगांतरोगाणांसंघः साध्यारोग्य करींकर्पूरभांडेश्वरादिरसायनचिकित्सांतत्रांतरेभ्यः साधुवक्ष्यामः ॥यथाशुद्धसूतंसमंगैरिकंतेमवेचेष्टिकाभ्यांउसंरंजनीमृत्तिकां म् ॥ सैंधवंक्षारवल्मीकमृत्स्नेतथालूवरीखाटिकांमृत्तिकांवैभि षक् ॥ ८८॥ मर्दयेहस्तपूतंपुनस्तावनाजायतेसर्वमेकंयथाया वता ॥स्थालिकांतर्न्यसेत्तत्नगाढंभिषक्मर्दयित्वाऽन्ययाएणामु खेयोज्यते ॥ ८९॥ स्थालिकायामुखेनापिसमुद्रयेत्तसप्तभिःक र्परैर्मृत्तिकाभिर्दृढम्॥ आतपेशोषितांचुल्हिकायांतथापाचयेद्दू दसंख्यादिनानिक्रमात्॥९०॥ स्वांगसीतंचयंत्रंयदाजायतेयंत्रमु द्धृत्यचस्थालिकांमोचयेत्॥ स्थालिकांतोर्ध्वगंसूतराजंतथावैद्यरा ज्ञोनिगृह्याथकर्पूरकम्॥ ९१ ॥ कस्तूरिकाकुंकुमदेवपुष्पैःसमं चकर्पूररसंचचूर्णैः॥ गोधूमकानांपरिवेष्ट्यदेवपुष्पस्यचूर्णैरिवधू स्ययत्नात्॥९२॥ दंतादिसंस्पर्शमरुंविहायमिलेत्फिरंगस्यविना शनाय॥ कर्पूरभांडेश्वरसेवनेनपुष्टंचवीर्यंविलभेन्मनुष्यः॥९३ रमणीशतकंशतधारमयेदनिशंमदनस्यविवृद्धिकरम्॥ अशितं सकलाभयजित्तनुतेतनुतांभगलिंगगदे॥ ९४॥ शिखीपथ्यापू गंसहखदिरकंतुल्यमखिलमथोम्लेच्छपिष्टापथमशिखिभागा र्द्धमपिच॥ चतुर्थांमांनिंबूरसयुतमलंलस्यगुटिकाप्रभुक्ताऽकैका हरतिभगलिंगोद्भवरुजः॥९५॥ ॥अथधूमपानयोगः॥ ॥ पुराणशाणपत्रकैश्चहिंगुलाहिफेणकैःप्रकांढ्नाहिपत्रकैश्चधूम

पानयत्रकैः॥९६॥ पिबेच्चधूममन्वहंसदुग्धभक्तभोजनं करो
तियस्त्वहंनरः समुच्यतेमनोभवात्॥९७॥ अथान्ययोगः
॥ केकिनंमर्दयेन्मत्स्यपित्तासमानिंबुकद्रावयुक्तंचयामद्वयम्॥
तद्वटींटंकमानांनरासेवयेच्चोपदंशस्यनाशायरुक्षाशनम्॥९८
॥ अथान्यः ॥ तालमूलीद्वयशल्कसूतंसमंदीपिकायुग्मभ
ल्लातकंत्रैफलम्॥ देववल्लीतिलजीर्णमंडूगुडसर्वमेकत्रसं
कुट्टयेत्सूर्वतः॥९९॥ वैद्यराजोवटीन्तस्यकर्षंध्रुवन्कामरोगा
तुरंपश्यनस्मैद्रुतम्॥ माक्षिकाक्तांचदंतादिसंस्पर्शनवार्य्य
भोक्तुंप्रदद्याच्चसप्ताहकम्॥१००॥ सूकदोषोपदंशादिकंवात
जंचान्यदोषंफिरंगादिकंसर्वशः॥ नाशयेद्रूक्षभोज्याशनाभि
त्वराः प्राकृतार्याःक्तवैद्याःस्वतंत्रादलं॥१०१॥ अथान्ययोगः
॥ कर्पूरकंशंकरवीर्यजातमेलालवंगोषणजातपत्र्यः॥ आर्द्र
स्यनीरैस्त्रिदिनंविमर्द्य टंकप्रमाणास्यवटीप्रभुक्ता॥१०२॥
आवेष्ट्यनित्यंघृतमाक्षिकाभ्यांदुग्धोदनंपथ्यमलंप्रकुर्वन्॥
नरेणकुर्य्याच्चमनोजरोगाफिरंगरोगादिविनाशमाशु॥१०३॥
युग्मम्॥ ॥ भृंगराजरससिक्तकवस्त्रखंडमेवपरिलेप्यसमंता
त्॥ हिंगुलेनपरिपेष्यभुजंगवल्लरीदलजनीरयुतेन॥१०४॥शो
ष्यतच्चमदनेनविदिग्धंवह्निनाचबहुधाद्रविलेन॥ वर्तिकाञ्च
खलुतस्याहिसततसंविधायपरिवेष्ट्यप्रदीप्य॥१०५॥नेत्रयो
श्चनिपतंभगलिंगसन्निधौस्वविधिनाविधिविज्ञैः॥ सीतवात
रहितेपिविधर्मेमंदिरेचनिवसन्नपिवारान्॥१०६॥ज्योतिदीप
कलिकोत्थविधूमधूपनादपिविलोकनतोपि॥ नाशमाशुचकि

रंगमनोजजातदुष्टव्यभिचारगदानाम्॥ १०७॥ ॥अथान्यो धूपयोगः॥ ॥ मातुलानीयवानीयुगहिंगुलैः शंभुबीजोत्थन ष्टारमतुल्यनरैः॥ पेष्यपत्रेणसंधूपितलिंगरोगोशूकदोषोपदं शादिकंनाशयेत्॥ १०८॥ ॥अथपानौषधियोगः॥ ॥भू मिनिंबांबुनिंबसानिंबसदासेवितशोषणपोषितंमाक्षिकैः॥वा रिणाकुष्ठशूलोपदंशान्हरेद्वैद्यभूपोजगुर्येनतस्यध्रुवम्॥१०९ ॥ अथात्रपथ्यम् ॥सतुषचणकदालीषोडशांशाम्बुसि द्धाभवतियदिविपाकात्पादशेषावशेषात्॥अशितुमिहनरा णांपारदोत्थास्यशोथेसभगजगदहंत्यैवैद्यभूपैर्निरुक्ता॥११०॥ ॥ ॥अथास्यशोथपाकनिवारणगंडूषयोगः॥ ॥कोविदार त्रिफलाककुधुमूलपूगफलमालतिकाभिः॥ क्वाथितैश्चखदिरे णमधूकैःशोथमास्यगमलंविनिहंति॥११॥ ॥अथशूक दोषोपदंशफिरंगादीनांपुनरुत्थानोपद्रवानांप्रतिषेधौषधियो गार्कविधिंव्याख्यास्यामः॥ ॥यथा॰ महानिंबानिंबजलध रणिनिंबंचसकलंसमस्तांगजातीदलभुजगवल्लीदलयुतम् ॥ बलायुग्मंवासाखदिरमरुणादेवकुसुमंसनिर्गुंडीधात्रीपु नर्नवणिकात्रैफलगणम्॥ १२॥ मुरारास्नायुग्मंकुलकजलदा रग्वधुगदान्हिपर्णीत्रायंतीत्रिकटुचवरीचंदनयुगम्॥ निशायु ग्मंश्यामागदनत्तविडंगामरतरून्सपाठाग्निब्राह्मीजलरुहवि शालामरलता॥१३॥ सरेणुर्गंधर्वासनदशजदार्वासस्करसा लपुंखाखाणाधाकुंदजबरुणावल्गुजजलम्॥ वचाकाश्मी रोत्थासितरदनकाभृंगमधुभिःसमस्तंवारुण्याःसममथचनिं

यांतमखिलम् ॥११२॥ इरायन्द्रेःसिद्धं घृतमिदमलंकाचघटिते स्रपात्रेनिम्बार्कंपिबतिमधुनायस्त्विहफलम् ॥ फिरंगोत्थान्दोषान्पुनरपिपुनर्जेतिमचिरात्सनासाभंगोत्थैरपिनविकृतिंकापिलभते ॥१३॥ ज्वरान्सर्वान्वातान्रुधिरविकलानास्यगलजानुरोरोगाञ्छूलानपिचकटिकुक्षेन्द्रियगदान् ॥ त्रिजातानेकोत्थान्हिभवसकलाल्लिंगभगजान्फिरंगादीन्कुष्ठानपहरतिपीतंतुक्रमशः ॥१५ श्रीत्वानपादाब्जसमाज्ञयायाकृताचिकित्साक्रमकल्पवल्ली ॥ नस्यांचशूकादिचिकित्सकोयंसमाप्तिमागात्स्तबकःशमस्क ॥ ॥११७॥ ॥इतिशूकदोषोपदंशफिरंगचिकित्सास्तबकः॥ ॥

॥ ॥ ॥अथत्वग्दोषः॥ ॥तावत्तन्निदानम् ॥ विरुद्धान्नपानानितद्द्रुरूणीद्रवंस्निग्धभोज्यानिनित्यंजनानाम् ॥ सदाचाश्वतानिघ्नतांछर्दिनेगानथोन्यांश्चवन्हिप्रतापांश्चभुक्त्वा ॥१॥ श्रमांश्चाप्यथोकुर्वतामुष्णसीतान्तथालंघनाहारसंसेवनाद्या ॥ अतिकामुकानामजीर्णाशनाच्चतथाभीतिघर्मश्रमार्तीजनाये ॥ २॥ द्रुतंशीतनीरस्यपानाच्चतेषां तथापंचकर्मापचारान्नराणाम् ॥ दधीनश्चमत्स्यमाषपद्धातिमूलकपिष्टान्नदुग्धाशनाद्धातिलानाम् ॥३॥ गुडस्याप्यजीर्णेदिवास्वापभोगाज्जनानांसदाविप्रदेवान्गुरुंश्च ॥ कुवाक्याज्ञयाघर्षयन्त्याशुमूढाजनाश्चापिदोषास्त्रयस्तेपितेषाम् ॥ ४॥ त्वचोरक्तमांसाम्बुसंदूषयित्वाप्रकुर्वीतकुष्ठानिचाष्टादशानि ॥ पूर्वरूपम् ॥अ निम्लक्ष्णास्पर्शोभवतिखरवत्स्वेदविकृतिर्विवर्णत्वंदाहस्त्वचितुदनकंडूनिशयनम् ॥ तथाकोठोन्नत्यश्रमत्रपिव्रणश्चावमधि-

केचिरस्थायीशीतःप्रभवतिचरूक्षत्वमसकृत् ॥५॥ अरुःस्रा
णांरौक्ष्यंत्वचिभवतिरक्तत्वमसृजस्ततः काष्र्ण्यरोमणामभिश
मपिहर्षोत्पत्तिनिचये ॥निमित्तेल्पेकोपोभवतिचमहान्यत्रभिष
जोमहाकुष्ठव्याधेर्जगदुरितिपूर्वंभवतियत् ॥६॥ युग्मम् ॥
अथरूपम् ॥ ॥ त्वग्मांसमासाद्यशिराश्चतिर्य्यग्गतास्तमां
संरुधिरंविदुष्य॥ मांसास्रमेवंश्लथयन्चरंत्योबहिस्तनस्त्व
ग्विपरीतरूपम् ॥७॥ दोषाःप्रकुर्य्युःखलुयत्रसर्वेतत्कुष्ठरूपं
प्रवदंतिवैद्याः॥ उपशमाः ॥ यत्कुष्ठकारीप्रथमंनिदानंत
त्सर्वमेवात्रविवर्ज्जनीयम् ॥८॥ पथ्यंचरूक्षंचवणकादियद्यत्
प्रोक्तंहिरक्तादिविशोषकंयत् ॥ प्रतीकारः ॥ पथ्यानिशाव
ल्गुजयक्षारसिंधुविडंगासिद्धार्थकमूत्रलेपः॥ कायःप्रयत्नाद्य
कुष्ठदारीप्रलेपमन्यंचततोब्रवीमि ॥१०॥ अन्यः ॥एलावि
डंगानलकुष्ठदंतीशतावरीनागबलांजनानाम् ॥ लेपःप्रकुर्य्या
न्खलुकुष्ठनाशंसुपथ्यशीलस्यजनस्यसद्यः॥ ११॥ अथोद्व
र्तनंसोमराजीभवसमंचूर्णमार्द्रद्रवैःसंविधाय॥ नरोयःकरो
त्याशुकुष्ठात्प्रमुक्तोभवेद्दिव्यकायोयथापूर्वदेहः॥१२॥ अ
न्यत् ॥ अथप्रग्रहस्याश्वमारस्यपत्रैस्तथाकाकमाच्युद्भवैः
पेष्यप्रत्तात्॥ नरस्तैलालिप्तांगदेशोपुकुर्याद्यदोद्वर्तनंकुष्ठरोगा
त्समुच्येत ॥१३॥ अवाकुच्यादिलेह ॥ अवल्गुजाकृष्णा
विडंगपिप्पलाहविर्भुजां सधान्यकंसमाक्षिकंसतैलमेतदेव
हि ॥ समस्तकुष्ठनाशनेचलोठमाशुसर्वदावलेहमत्रवैद्यभूप
वर्णितःसुधाद्रवः॥१४॥अन्यः ॥ हरनेत्रफलाविडंगकृष्णामधु

नालीदतमाश्वपेथ्ययत्नात्॥ कृमिकुष्ठभगंदराश्वनाडीव्रण संधानुपनाशयंतिसद्यः॥१५॥ ॥अथस्वायंभुवगुग्गुलुः॥ ॥ शशिलेखवाणपलागिरिजंचतावदेवात्रगृण्हीयात्॥ दशगुग्गुलोश्वभागान्पलानित्रीणिभस्मनस्ताम्रस्य॥१६॥भागद्वितयंलोहंस्त्रावणिकातावतीचसंयोज्या॥ त्रिफलातावन्मानाधनदस्यापिपत्राणितावंति॥१७॥ खदिरगुडुचीदंतीरजनीविडंगचित्रघनशंपाका॥कुटजत्वग्घननिंबान्पलद्वयांश्वपृथक्पृथक्पिष्ट्वा॥१८॥घटिकारचितामधुनासघृताप्यशिता; प्रातर्गवांचमूत्रेण॥ कुष्ठानस्टक्समीरंचित्राण्युदराणिप्रमेहगुल्मानि॥१९॥ स्वायंभुवसमश्नन्गुग्गुलुमेकंभजेच्चगोमूत्रैः॥ अशितःपांडुगदानुपहंतिचवलिपलितान्सद्यः॥२०॥ अन्यः ॥दहनत्रिफलाकटुत्रयैगदजंतुघ्नविषामरद्रुमैः॥ लवणोत्तमचव्यकारवीचकिकाजीरकयावशूकजैः॥२१॥ त्रुटिभारतिकाजमोदिकाभीरसनाभिश्वसमोहिगुग्गुलुः॥ सघृतःपरिपेष्यपाचितोगुटकीकृत्यप्रगेनिषेवितः॥ ॥२२॥ अशितःखलुभोजनस्यकालेसकलान्कुष्ठमदान्निहंतिच॥ मनुजेश्वयथाबलंतथावाछमिरोगान्ग्रहणीसचित्रकुष्ठान्॥२३॥ अपिहंतिचमेहपांडुरोगान्मुखजान्रोगगणान्गलग्रहांश्व॥ अपिकोष्टगदेचगुल्मरोगान्गुदरोगानपिग्रधसीतथैव॥२४॥ ॥इत्येकविंशकोगुग्गुलुः॥ ॥ अन्यश्च॥ भल्लातकप्रस्थयुगंचशस्त्रैस्थित्वापचेद्द्रोणजलैर्गुडूच्याः॥ प्रस्थद्वयंक्षुण्णमलंप्रदायपादावशेषपटपूतनीरम्॥२५॥द-

त्वाकवाहे ऽथशरावमात्रे गोसर्पिषा गोपयसाढकेन सितां तथा प्रस्थमितां प्रदाय॥ सिताईमानेनचमाक्षिकेणमृदग्निनापाच्यतनोवतार्य॥२६॥ क्षेप्याणिबिल्वाग्न्यमृताजवानिदद्रुघ्नधात्रीरजनीशिवानाम्॥ शंठीकणापर्पटसिंधुपत्रत्रिकंटकोशीरघनोषणानाम्॥२७॥ कर्पूरकाळाधिचमंदलैलाद्विचंदनानांगजकेशरस्य॥ चूर्णानिनिक्षिप्यपलार्द्धकानिपृथक्पृथक्वापिचसोमराज्याः॥२८॥ निधायपात्रे प्रयतः प्रभाते पलोन्मितं शीतजलेनसेवेत्॥ कुष्ठान्यथाष्टादशवातरक्तान्यर्शांसिसर्वाण्यपिहंतिसद्यः॥२९॥ व्यायामघर्मानलतापजायाद्ध्यम्लमांसानपहायनित्यम्॥ तैलस्यचाभ्यंगमथोतिनीरस्नानपरित्यज्यमिहामृताद्ये॥३०॥ पीयूषभल्लातकसंज्ञयायोवैद्यः प्रदिष्टोप्यवलेहयोगः॥ संसेव्यमानोऽखिलकुष्ठनाशकरोस्यतस्तेनसमोनचान्यः॥३१॥ अन्यच्च ॥ निंबारुणापर्पटसोमराजीशर्यानिकाचंदनसारिवानाम्॥ फलत्रयारग्वधरात्रियुग्मपीयूषसप्ताह्वकणेंद्रजानाम्॥३२॥ वासाधरानिंबविशालिकानांपटोलमूर्वानललांगलीनाम्॥ कट्वीमहानिंबगजश्रुतीनांजलोत्थवेत्रोच्चटिकाफलानाम्॥३३॥ पुनर्नवारग्वधभृंगरेणुशाखोटकाकोटकुरंटकानाम्॥ पाठारुणामुस्तककृष्णावेत्रगायत्रिदर्वीबाधिजंतुहानाम्॥३४॥ दुरालभाश्यामपुनर्नवानांबीजद्रुमस्यापिफलद्वयानाम्॥ पृथक्पृथक्कर्षमलंतुद्रोणजलेहिसंपाचिनमष्टमांशम्॥३५॥ तद्वस्त्रपूतंविनिधायपात्रेछित्वाथभल्लातसहस्रमन्यत्॥ त्रीण्यर्मणेगां

विनिपाच्यपश्चाद्दशावशेषंविनिगृह्यतच्च॥३६॥उभौकषायौ चविमिश्रयेद्वातस्मिन्पुनःक्षेप्यकटुत्रयेच॥फलत्रयंमेघविडंग चित्राकुष्ठंतथासैंधवचंदनाभ्याम्॥३७॥दीप्यंपृथक्चाथपृथ क्पलैकंसर्वंचतुर्जातपलंपलंच॥संपाच्यसंमिश्रशिवोक्तएष महांश्चभल्लातकजोवलेहः॥३८॥कुष्ठानिचित्राणिचकाकणंच विस्फोटकंचर्मदलंकपालम्॥पामानमौदुंबरपांडुकच्छून्विपादि कांश्वासभगंदरादीन्॥३९॥कासंतथाशोहितपित्तमुग्रवातास्र दद्रूक्रिमिपुंडरीकान्॥निहंतिछिन्नापयसोनुपानात्पयोनुपा नादपिभुक्तएषः॥४०॥निर्मंत्रणेनापिलुभोज्यजाथाविहारकाह रचरांचरेषु॥त्यक्त्वाम्लमुष्णानिचधर्मसेवांव्रणांश्चसर्वानुपहं तिसद्यः॥४१॥ ॥इतिमहाभल्लातकावलेहः॥ ॥अथक्वाथः ॥ ॥अरुणात्रिफलानिशामृतापिचुमंदक्वथितंसतिक्तकम् ॥सकणंपरिपीतमेतदेवसकलान्कुष्ठगदान्निहंतिच॥४२॥ ॥ इतिमंजिष्ठादिक्वाथः॥ ॥कुलकखदिरनिंबश्यामवेत्रप्रभूत हरनयनफलाभिःक्वाथमेकंप्रपीतम्॥हरतिसकलकुष्ठंतिक्तभो ज्येरतस्यव्रणगणमपिसर्वंहंतिचित्रंकपालम्॥४३॥मरिचंत्रि वृतंमनःशिलाहरतालामगदारुचंदनैः॥गदरात्रियुगार्कदुग्ध- भूतजताकंठगताश्वमारकैः॥४४॥अपिकर्षगतैःपृथग्गवीश ट्टदर्केणसमंविपाचयेत्॥कटुकंखलुपस्यसंमितंवरतैलपय सोचतुर्गुणैः॥४५॥अथकर्वविशालिकासमंद्विगुणैरेवगवां चमूत्रकैः॥मरिचाद्यमिदंविशेषतोबहुधाभ्यंगविधानतोनृणा म्॥४६॥अपहंतिचचित्रकुष्ठकानथपामामपिसिध्मदद्रुका

न्। त्वचिशून्यतरत्वमेववाप्यथकंडूतिविसर्पकादिकान्॥ ४७
॥ ॥इतिमरीच्यादितैलम्॥ ॥अथकर्वीरादितैलम्॥ ॥
श्रश्वमारःसबोलःकृशानुभिश्चसंपाचितसकलकुष्ठविना
शहेतोः॥ अभ्यंजनायगदितंवरवैद्यभूपैस्तैलंकपथ्यमश
तांबहुधाजनानाम्॥ ४८॥ ॥अथपानयोगः॥ ॥नरःसो
मराज्यारसंकोष्णनीरैःपिबेद्वर्मतमस्तथैकांतगेहे॥ पयोन्नं
समश्नन्त्रिसप्तनिशानांभवेत्कुष्ठमुक्तःप्रकामंसयावत्॥ ४९
॥ अथान्ययोगः ॥रसोगुडूच्यापियथाबलंयोजीर्णेपि
बेत्तस्यघृताक्तभोज्यात्॥ स्वल्पेनयूषस्यरसेनभोक्तुर्दिव्या
तनुंकुष्ठगदात्प्रमुक्ता॥ ५०॥ ॥अथत्रिफलायोगः॥ ॥
दशपंचफलानित्रैफलस्यजोजंतुहरस्यसतवै॥ अपिलोह
पलद्वयंतथाशतभल्लातकपलंचवाकुची॥ ५१॥ उदितात्रशि
लाजतोरपिद्विपलंचापितथैवगुग्गुलोः॥ अथपुष्करमूलजर
जःपलमेकंमरिचंसचित्रकम्॥ ५२॥ मगधोषधिमेघवल्क
लानपिपत्रेणसमंचकुंकुमम्॥ अपिकर्षमितंसमंसमसक
लंचूर्णमिदंतुशर्कराम्॥ ५३॥ समभागमितंतुपाच्यवेपकि
कास्तस्यचमोदकान्भिषक्॥ खलुतेष्वपिचैकमेकमेवप्रयतो
वातगदान्प्रभातके॥ ५४॥ अपहंत्यशितोभगंदरानथवाष्टा
दशकुष्ठगुल्मकान्॥ कफजानपिविंशतिर्गदानथवैतद्विगुणांश्च
पित्तजान्॥ ५५॥ गलतालुशिरोक्षिभ्रूगदान्रसनोद्भूतमयोर्द्ध
जत्रुजान्॥ द्विभवानपिसन्निपातजानथदोषैकभवांश्चनाश
येत्॥ ५६॥ तनुजातसमस्तकालिमामथवालोमविनाशनाश

नः॥ ऊर्ध्वजत्रुजगदेषुच भुक्त्वा प्रातरेव प्रथमं तनुरोगे॥५७॥
औदरेषु च तथाशनमध्येत्रिफलं च बहुधा खलु खादेत्॥ ॥
इति त्रिफलामोदकः॥ ॥ अथ पंचनिंबादिचूर्णम्॥ ॥ निं
बपुष्पदलमूलफलानां वल्कलस्य च रजो वरवैद्यः॥ खादिरास
नभृतैश्च पयोभिर्भावयेच्च परिशोष्य नतरलम्॥५८॥ वक्ष्यमा
णसकलौषधिवर्गैर्योऽयतानपि ब्रुवे यथावत्॥ वह्निजंतुरि
पुचक्रमहैकर्व्याधिघातमगधामरिचानाम्॥५९॥ भल्लिका-
मलकविश्वगोक्षुरलोहचूर्णकुटिलाहिशिवानाम्॥ चूर्णमत्र
रजनीसमखंडे तुल्यभागतुलितं प्रथमं तत्॥६०॥ भृंगराज-
जरसैः परिसिंच्य शतशश्च परिशोष्य निधाय॥ पात्रकेऽथ पयसा
नुविडालपादमात्रमथवापि घृतेन॥६१॥ प्रातरेव खदिरासन
तोयैर्भक्षितोपि नियतं यदि मासात्॥ कुष्ठरोगमखिलं विनिह
ति नात्र चास्ति परिहारविचारः॥६२॥ पंचनिंबवरचूर्णमल-
घः सेवयेच्च नलिकालककुष्ठान्॥ व्यंगमाशकतिलकक्षयरो-
गान् संविजित्य कुर्याद्दृढदेहम्॥६३॥ ॥ अथ तालकेश्वरः
॥ ॥ तालस्य पत्राणि पृथक् पृथक् स्युरभ्रेण तुल्यानि तुषस्य
तच्च॥ पुनर्नवायाः स्वरसैर्दिनैकं समर्द्य कुर्याद्दृढचक्रिकां च॥
६४॥ विशोष्य सम्यक् प्रथमं तु तस्य तामेव वैद्यस्तु पुनर्नवायाः
॥ क्षारेण वा पूर्वं च हंडिकायां क्षारोर्ध्वमाधाय पिधानपात्र्या॥
६५॥ मृद्वस्त्रमुद्रां सुदृढां विधाय विशोष्य धर्मे च निधाय चुल्ल्या
म्॥ मंदं दिवारात्रमनल्पमल्पं क्रमं परित्यज्य हुताशनं हि॥६६
॥ प्रज्वालयेद्वैद्यवरः प्रकामं समक्रमेणान्यदिने स्वशीतम्॥ निगृ

ध्यपात्राद्रसमुत्तमंतुतालेश्वराख्यंचगुडूचिकाद्यैः॥ ६७॥ गुंजामितंपक्कजलैर्निपीतंरोगानिमान्नाशयतिप्रकामम्॥ कुष्ठानिचाष्टादशवातरक्तंफिरंगदेशोत्थरुजोनिहंति॥ ६८॥ अम्लंतथायोलवणंविहाय भजेच्चसात्म्यार्थमिहाल्पसिंधून्॥ कदंबल्पद्वग्निनिषेवणानिसंत्यज्यमस्यंनरसायनंद्राक्॥ तालेश्वराख्यश्चसमस्तकुष्ठविनाशनार्थेस्तभिषक्प्रगीतः॥ ६९॥ ॥

अथाहिवधोरसः॥ ॥ स्तपक्कस्थाल्यंतर्वलिमपिनिधायाथविमलंविचूर्ण्याविस्तीर्यप्रतुलितशरावांशमथवा॥ शरावार्द्धंनाभ्रंतनुतरस्तपत्रीकृततमंशरावार्द्धंनागंतनुतनुस्तपत्रीकृतमलम्॥ ७०॥ क्रमाच्चाभ्रंनागंवलिमुपरितस्याथक्रमशः पुनस्ताम्रंनागंसकलमपिसंधायविधिवत्॥ वलेशेषंचूर्णंसकलमुपरिक्षेप्य स्तहृदमुखंस्थाल्यारुध्वाखदिरगुडचूर्णैश्चबहुधा॥ ७१॥ विशोष्यस्थालींतलगदहनंज्वाल्यतदधोनिराखंडंयावद्ध्वनिप्रहरद्वादशमितिः॥ ततःस्वांगेशीतंसकलमथवास्थाल्यंगमिदंप्रपिष्ट्वापूतंवाप्रटतरस्तखंडेनविधिवत्॥ ७२॥ अथोत्रान्निद्रोणंजलमपिचसंधातुमुचितंविशालास्यंदीर्घंभवतिसुदृढंमार्द्वघटम्॥ ७३॥ ततश्चैकंनागंसकलमपिकृष्णांगमथवा तथागोधूमाभंमहृदतिवलपुष्टमपिच॥ ७३॥ तथावध्याहृत्वानभवंतियथातच्चनुगतंक्षतंलावत्तालंकुडवयुगुलंयोषितंतमं॥ विषंक्षूणंतद्दलपरिमितंसर्पंजठरमुखद्वाराद्यचबहुधापूर्वक्रमशः॥ ७४॥ विषंक्षूणंत्वेकंपलपरिमितंप्रस्यमथवात्यवल्गोभल्ल्याचाशतकतुजवा नाभिकंतथा

निधायाथोपूर्वसगुडरुधयालिप्तजठरे घटेपश्चात्सर्पनदुपरि यथाकुंडलनिभम्॥७५॥ततस्तस्यप्रायःपरितउपरिष्टाच्चदिनकृत्रूकपत्रैनालेनप्रतुलितशरावद्वयमितम्॥स्नुहीनालप्रस्थंवटभवजटारोहमपिचकुमारीप्रस्थैकंसकलमुपरिष्टाच्चरुद्धं॥७६॥घटास्यंसंमुद्र्यप्रथमगुडचूर्णात्क्रमसकृन्मृदाक्तैःसहस्रैरथचपरितःशोष्यरुघटम्॥ ततश्चुल्ह्यांस्थाप्यप्रहरमितकालंचतदधःकृशानुंसंज्वाल्यप्रपचतियथातंदुलचयम्॥७७॥ततोग्निःसंज्वाल्योद्दमथद्दटाद्यामदशाकंपुनःपश्चाद्यामंदहनमथवातंदुलविधिः॥यथापाकेज्वाल्यंतदनुचशरावत्रयमिदंघृतंगव्यंदत्वाहृदलरकटाहेथसकलम्॥७८॥ घटस्थंयद्रव्यंतदपिचघृतंक्षेप्यतदधःहुताशंसंज्वाल्याथदर्विकटाहोत्थितमदः॥ समस्तंयद्रव्यंदहतिदहनश्चैतमपितंभवेत्तावत्तस्मिन्पलयुगुलभृष्टान्नतुवरी॥७९॥ तथाभृष्टन्नहत्पलयुगुलकंरकणमपिततोयामंतत्राग्निमिहबहुचसंज्वाल्यमसकृत्॥ प्रचाल्यंदर्व्याथोमिलतिसकलंयावदपितत्ततस्ताम्रंशीशंसकलमपिसंमिश्र्यविधिवत्॥८०॥ रसोयंसंप्रोक्तोप्यहिविधिसमाख्योत्रनितरांप्रसेव्योगुंजैकोयदिचमरिचैकेनतुयथा॥ तथागुंजायुग्मंमरिचयुगुलेनापिचध्रुवंत्रिगुंजंवागुंजायुगमरिचयुग्मद्वययुतम्॥८१॥ क्रमाद्गुंजामानात्प्रतिदिनमसौवेदादिवसैःप्रवृद्धोगुंजातोमरिचनिचयेनापिचयदा॥ भवेद्गुंजावेदप्रमितश्चथतावच्चजवजाप्रभुंजीतप्राथोलवणरहितांसमादिवसाम्॥८२॥ नरोरोटींषष्ठीप्रभवमथवाभक्तमसकृन्नचेत्यक्तु

कश्चित्लवणमपिवासैंधवमलम् समस्तागंकुष्ठसकलमपि दोषत्रयगदम्॥ सयक्ष्माणंसद्यो हरतिनिखिलव्याधिनिचयम्॥८३॥ ॥अथसंप्राप्तिस्तत्रतावत्कपालकुष्ठम्॥ ॥ कृष्णारुणंभवतियत्तुकपालकाभं रूक्षंभवेच्चपरुषंतनुवातजंतत्॥ नोदान्वितंचविषमंवरवैद्यभूपाः कापालिकंगुरुमुशंतिसवातरक्तात्॥८४॥ प्रतीकारः ॥श्रीवेष्ठकत्रिकटुकुष्ठविडंगलेपोमूत्रेणकुष्ठकिटभानिकपालकंच॥ दद्रूणिसिध्मनिचयानितथैवपामांसद्योनिहंतिबहुधापरिपेष्यलेपात्॥८५॥ ॥अथसोमेश्वरः॥ ॥सूतंशुद्धंताम्रमभ्रंमृतंच गंधंशुद्धंमर्दयेत्सप्तरात्रम्॥ निर्गुंडिजद्रावयुक्तंतथ्यरुध्यापश्चाद्धूधरेतद्दिनैकं॥८६॥ पक्वाद्धृत्वावच्युतैलैः कषायैस्तस्याश्चैकंभावयेद्वादिनंहि॥ घर्मेतस्यप्रायशोनिष्कमेकंवाकुच्योल्यंकाकमाचाफलानाम्॥८७॥ चूर्णंकर्षमाक्षिकाद्यैस्त्रयाणांसम्यग्भुक्त्वाहंतिकुष्ठंकपालम्॥ प्रोक्तोवैद्यैरेषसोमेश्वराख्यः कुष्ठान्हंतुंनित्यमेवप्रसेव्यः॥८८॥ ॥इतिसोमेश्वरोरसः॥ ॥शुद्धपारदसमंवरगंधं गंधकाच्चतुतिमितंखलुतालं॥ कुक्कुटीदलरसैःपरिमर्द्यवाकुचीसृतकषायचयैर्वा॥८९॥एकमेवदिवसंचततश्चपारदाद्त्रियतस्त्रिगुणंयत्॥ मारितंतुवरलोहजभस्मताम्रभस्मवरलोहसमानम्॥९०॥ संमिश्र्यखल्वेपरिमर्द्दयेच्चपूर्वोक्तद्रव्यस्वरसैःकषायैः॥ दिनानिपंचाथविधायगोलंपुनर्नवायाःस्वरसैःसिताया॥९१॥ सार्द्रंप्रभांडेचपिधानमस्यतद्गोलकंतत्रनिधायसम्यक्॥ विधायमुद्रांस

योज्वालगर्दभः॥२१॥ प्र० ॥नीलीकुलकजमूलंजलघृष्टंहि ॥धृतमिश्रितमुपलिप्तंहरतिरुजंहि॥२२॥ ॥अथारिवेल्लिका॥ ॥उत्तमांगेभवांवृत्तांपिडिकामुग्ररुजाकरीम्॥सर्वात्मिकांसर्वलिंगांजानीयादरिवेल्लिकाम्॥२३॥ अरिवेल्याश्चिकित्सांतुकुर्यात्सिद्धविसर्पवत्॥ गंधना ॥पिडिकामेतादृशीमन्यांत्वग्गतांस्फोटसन्निभाम्॥गंधानांपित्तकोपोत्थांतद्विसर्प्पेणसाधयेत्॥२४॥ ॥अथगंधालजी॥ ॥समंडलांघनामल्पपूपामुन्नतरूपिणीम्॥ अंधालजांसवक्त्रांतांविद्याच्चकफवातजाम्॥१२५॥ अंधालजांतुप्रथमंवैद्यःस्वेदेनयोजयेत्॥मनोह्वागदद्देवाह्वदारुकल्कैःप्रलेपयेत्॥२६॥ ॥अथजवप्रख्या॥ ॥ग्रथितानुजवाकाराकठिनामांससंस्थिता॥पिडिकाश्लेष्मवातोत्थायवप्रख्येतिकथ्यते॥२७॥जवप्रख्यांचिकित्सेच्चयथागंधालजीतथा॥ ॥अथपनसिका॥ ॥कर्णाभ्यंतरसंभूतांपिडिकांतीव्रवेदनाम्॥स्थिरांपनसिकांप्राहुर्वातश्लेष्मसमुत्थिताम्॥ अपक्वांपनसिकांतद्वदन्यालजिकासमम्॥२८॥ चिकित्सेच्चभिषक्पक्कांव्रणवत्समुपाचरेत्॥ ॥अथकच्छपिका॥ ॥षट्तथपंचवाग्रंथयोदारुणायत्रवाकच्छपोत्सेधवत्संगताः॥ कच्छपीश्लेष्मवायुप्रभूतांभिषक्पूर्वतःस्वेदयेद्वाप्रलिंपेच्चतः॥२९॥ प्रतीकारः ॥विशाशिलातालककुष्ठदारुकल्कैःप्रलिप्येद्यवातुपक्वाम्॥चिकित्सकस्तांव्रणवत्सकामप्रसाधयेद्वैद्यमतेनसम्यक्॥१३०॥ ॥अथपाषाणगर्दभः॥ ॥हनुसंधिभवश्वयथुर्यादिवातकफप्रभवोल्परुजाप्र

ति ॥ भूः कथितोऽस्मरवरः ग्रथितः खलु विक्षणएव भवेच्च यदे
वतदा ॥ ३१ ॥ प्रतीकारः ॥ संस्वेद्यपूर्वं भिषगस्मपूर्वं स्वरं ततो
वातकफघ्नलेपैः ॥ कल्कैरनेकैरपिचोष्णयोगैः सम्यांश्च भूयोव्र
णवच्चिकित्सेत् ॥ ३२ ॥ विनौषधं वापिजलौकिकाभी रक्ते हृ
तेनश्यतिसास्वयंहि ॥ ॥ अथानुशायी ॥ ॥ सवर्णागंभी
राश्वपथुसहिता किंचिदपि यात्यधस्थापि सैर मुपरितथा
हृष्टिपथगा ॥ सदांतः संपक्का पुनरनुशयीविद्रधिसमं चिकित्से
त्सहैद्यः कफहरप्रयोगैश्चक्रमशः ॥ ३३ ॥ ॥ अथविदारि
का ॥ ॥ कक्षांवक्षणसंधिजातमपिय ह्यार्त्तविदारीजयाय
ह्लांचविदारिकां बहुरुजायुक्तां जलौकादिभिः ॥ ३४ ॥ शस्त्रे
श्चाप्यवलिरव्यपूर्वमथवै शांतिं व्रणप्रक्रमैः ॥ नीत्वा तां भिषग
प्रमत्तश्रथवा संलेख्यसंरोपयेत् ॥ १३५ ॥ ॥ अथशर्करार्बु
दम् ॥ ॥ श्लेष्मानिलश्चाप्यथमासनाडीस्नायूनि मेदश्चतथै
वकुर्यात् ॥ विद्धाच्यग्रंथिं सचभिन्नमात्रः स्त्रवत्यलं माक्षिक
द्रव्यतुल्यम् ॥ १३६ ॥ वसानिभं क्वापिचतत्रवायुः प्रवर्द्धमानः
प्रकरोतिशोष्य ॥ मांसंतदासंग्रथितं विधायविस्नाल्पदुर्गोधि
मनेकवर्णम् ॥ ३७ ॥ तांशर्करायास्त्रवतोनितां तकुर्याच्चमेदोर्बु
दवच्चिकित्साम् ॥ तस्यायथासविलयंप्रयाया तथा तथा वाप्रति
रोपयेच्च ॥ ३८ ॥ ॥ अथकंदरम् ॥ ॥ शर्करोन्मथितपादत
लेवाक्राप्यथोपियदिकोलसमानः ॥ ग्रंथिरेवकदरः खलु तंवै
संदहेच्चदहनेनचतैलैः ॥ ३९ ॥ ॥ अथचिप्यम् ॥ ॥ नख
मूलमधिष्ठितश्चवायुः सहपित्तेनचदेहिनायदा ॥ कुरुतेनस

दाहपाकमेवचिप्यंतमवदंतिवैद्यभूपाः॥१४०॥ प्रतीकारः ॥ रुधिरमोक्षणशोधनरोपणैरुपचरेच्चविलोक्यगतोष्यक म्॥ पुनरथोत्रकवोष्णजलैरलं परिनिषेचनमाशुसमाचरेत् ॥१४१॥स्वरसैरभयांचनिशाप्रभवैःपरिघृष्यतु लोहजपात्रव रे॥ अनुवेलमलंपरिलेप्यतथाखिलचिप्यगदंखलुयस्यकरे ॥४२॥ मुनिभिश्चदलैरथकाश्मरिकाप्रभवैःपरिवेष्ट्यनखप्रक रैः॥ ध्रुवमाशुविनश्यतिचिप्यगदेनखमंडलमंडितमस्यकरे॥ ४३॥ कवित्वमेतत् ॥अथारूंषि॥ ॥अथारूंषिका- श्लेष्मरक्तप्रकोपात्कमीणांप्रकोपाजनानांशिरःस्थ॥ बहुक्लेद युक्तानिनानामुखानिभवंतीतितत्रप्रतीकारमेवम्॥४४॥ प्रतीकारः ॥अरूंषिनश्यंतिजलौकिकाभीरक्तस्यपानाद- पितत्रतासाम्॥ प्रक्षालनात्त्वत्रकषायकैश्चससैंधवैर्वाथमुहुर्वि लिंपेत्॥१४५॥पटोलवासाप्त्विमंदपत्रैर्मूत्रप्रपिष्टैरपिलेपये च॥ मुहुर्मुहुर्वाखदिरस्यनिंबजंबोस्त्वचामूत्रसमंप्रलेपैः॥ ४६॥ कार्याथवासैंधवकुष्टमूत्रैस्त्वचा समलेपवरश्चमूर्ध्नि ॥ शकृच्चधेनोरसपिप्पलेपस्तत्कृज्जदातालभवाच्चमूत्रैः॥४७॥ ॥ ॥अथाग्निरोहिणी॥ ॥कक्षाभागेष्वेवमासेनतुल्या- स्फोटावन्हेस्तुल्यदाहान्तरस्थाः॥पक्षाहाद्वाद्वादशाहाद्दिने कान्मृत्युंकुर्याद्रोहिणीवन्हिपूर्वा॥१४८॥ प्रतीकारः॥ ॥ रोहिणीनाशनंलंघनंप्राक्प्रकुर्यादथोरक्तमोक्षंततोह्लक्षण च॥ कायशुद्धिंचवैद्यःप्रकुर्याच्चतावन्नयावत्सवृद्धिर्भवेच्चैव- तस्याः॥१४९॥ ॥अथवल्मीक॥ ॥ग्रीवाकक्षाहस्तपाद

प्रदेशे संधौ कंठे जायते न्यस्त्रिदोषैः॥ ग्रंथिर्वैद्यास्तं च वल्मीक-
माहुः प्रायः सर्वैत्वक्रियाणां जनानाम्॥ १५०॥ नानामुखैस्तो
दयुतैः प्रयुक्तैः स्रावान्वितं सर्प्पतिचोन्नतोयम्॥ वल्मीकमा
हुर्भिषजं प्रकामं नत्वस्य नीकं विदितं जनानाम्॥ ५१॥ शस्त्रे
णचोत्कृत्य च वैद्यभूपो वल्मीकमग्निप्रयुतैस्तथैव॥ क्षारै-
र्नितांतं परिसाधयेच्च ततोर्बुदोक्तेन विधानकेन॥ ५२॥ संशो
ध्य संरोप्य विधिश्च तत्र मर्मप्रभूते रुधिरप्रमोक्षम्॥ कृत्वा कु
लत्थस्य जटापटुभ्यां विलेपनं बाल्यमृतापटुभ्याम्॥ ५३॥-
आरेवतस्यापि जटा प्रलेपः कार्योथवा दंतनिकाजटाभिः॥ श्या
माजटाभिः सपलाभिरेव ससक्तुकोलेपवरश्च कार्यः॥ ५४॥
स्निग्धैः सुखोष्णैरुपनाहयेच्च पक्कं च संशोध्य विरोपयेच्च॥ म
नःशिलैलागुरुचंदनैश्च भल्लातजातीदलनिंबतकैः॥ १५५॥ तै
लं तु सिद्धं परिलिप्तमाशु वल्मीकरोगं बहुधा सरंध्रम्॥ पा-
ण्योः पदोर्वा गलकक्षयोर्वा नानाव्रणं शोथयुतं विहाय॥ ५६
॥ ॥ अथ शूकरदंष्ट्रः॥ ॥ सदाहो भवेद्रक्तपर्यंत एवत्वथो
त्वक्प्रपाको तथातीव्रपीडः॥ सकंडूनिकामं डलं संप्रकुर्याद्वि
षघ्वर्णितः शूकरो गोहिदंष्ट्रः॥ ५७॥ प्रती० ॥ अथ भृंगरा
जजटाभिश्शावरचूर्णकेन विलेपिता॥ खलु शूकरहृज्जतां तथा
विनिहंति सप्तमवासरात्॥ ५८॥ अन्यः ॥ करंजमोचावस्क
मूलमेधासूर्यस्य चावर्त्तजटास्तु हीभिः॥ तैलेन संपाच्य विले
पितास्ता विनाशयत्याशु च क्रोडदंष्ट्रम्॥ ५९॥ मेधार्कसिद्धं
खलु तैलमेकं मेधाविकं नाम निहंति कुष्टम्॥ दंष्ट्रं सकच्छूं ब

त्वर्णकारी कृष्णादिरात्रेयमुनिर्बभाण॥ १६०॥ अथोपद्रवाः॥ ॥ तृड्श्वासदाहज्वरमर्मरोधविसर्पहिक्कापलसाभिकोचाः॥ मदस्तथामीदशमः प्रयुक्ता ह्युपद्रवास्फोटगदस्य वैद्यैः॥१६१॥ ॥अथसाध्यलक्षणम्॥ ॥ भवेदेकदोषश्च साध्योद्विदोषस्तथाकृच्छ्रउक्तस्त्रिदोषोद्भवश्च॥ असाध्यस्तु सोपद्रवो वैद्यभूपैर्निरुक्तस्तु तस्फोटरोगो नराणां॥६२॥ अथोत्वग्गतारक्तजाः पित्तजाश्च तथा श्लेष्मजाः श्लेष्मपित्तोद्भवाश्च॥ मसूर्यस्तु साध्या विनाप्यौषधं वा तथा वातजा वातपित्तोद्भवायाः॥ ६३॥ तथा वातजाःश्लेष्मयुक्तास्तु कृच्छ्रास्त्वसाध्यास्त्रिदोषोद्भवायास्तथातः॥ प्रपाकं व्रजेयुश्च सद्यो नराणां त्वसाध्याः प्रयुक्ता भिषग्भिः प्रकामम्॥ ६४॥ कासोहिक्कामोहदाहप्रलापास्तृष्णामूर्छापूर्णतातिज्वरश्च॥ आस्याद्रक्तप्रस्रवे घस्यतहृद्घ्राणान्नेत्रात्कंठगंघुर्घुरत्वम्॥१६५॥ श्वासोगच्छेद्घ्राणजार्णानित्यं यस्य प्रायो वै मसूरीगदेषु॥ सोयं गंतु धर्मराजस्य गेहं त्वात्वातस्मै जान्हवीवारिदेयम्॥१६६॥ मसूरिकांते यदि कूर्परेषु शोथो भवेद्वा मणिबंधकेपि॥ तद्वाभित्यं फलकप्रदेशे स दुश्चिकित्स्यो भवति प्रकामम्॥ ६७॥ काश्चिद्विनायत्नविधिप्रयोगात्साध्याः स्वतः शीतलिकानराणाम्॥ काश्चित्तथा कृच्छ्रतमाः प्रदिष्टाः सिध्यंति वा नैव च काश्च यत्नात्॥ ६८॥ बालाचरणसरोरुहद्वंद्वहृदि विनिधाय भिषयोन्द्रैः परिगदितस्फोटशमाय॥१६९॥ श्रीतातपादाब्जसमाज्ञयाया कृताचिकित्साक्रमकल्पवल्ली॥ श्रीकाशिनाथेन गतस्य तस्या

स्फोटाधिकारस्तबकःसमाप्तिम्॥१७०॥ ॥इतिश्रीमद्गुरुचरणाब्जचंचरीकचतुर्वेदीकाशिनाथकृतायांचिकित्साक्रमकल्पवल्ल्यांस्फोटाधिकारस्तबकः॥ ॥ ॥ ॥

अथातःक्षुद्ररोगाधिकारः॥ ॥अथमुखरोगाः॥ ॥तन्निदानम्॥ ॥आनूपमांसाशनदुग्धपानमाषान्नदध्यादिनिषेवणेन॥ दोषाधरोष्ठद्विजमूलतालुवाकंठजाश्चास्यगदान्प्रकुर्युः॥१॥ भवेत्पूर्वरूपस्यवैरस्यमेषांमुखस्यप्रसेकोव्रणांविशेषात्॥ अथोत्याज्यमन्यच्चसर्वंब्रुवेचिकित्साप्यथाशास्त्रमत्रध्रुवम्॥२॥ फलानिचाम्लान्यथशीतवारिभक्ष्यंभवेद्यत्कठिनंतदेव॥ अद्धंतसंशोधनदारुदंतरोगीविशेषेणपरित्यजेच्च॥३॥ प्रतीकारः ॥वचाजवान्याग्निप्रद्रूनिशाठ्यासंसिंदुवारेणकवोष्णकल्कं मुखेधृतंदंतगदान्निहंतिमुखामयांश्चान्यतमांतथैव॥४॥ अन्यः ॥वचाग्रंथिमेकंमुखेधारयेद्यादिवारात्रिमेवप्रमुच्येन्मुखस्य॥ गदेभ्यःकफास्रग्भवेभ्यस्तुरक्तंविमुच्येद्दिषेणैववैद्याधिभूपः॥५॥॥

अथतैलम्॥ ॥निशाद्वयलोहितपल्लवानिकणाविडंगानलचंदनानि॥ बलारुणाकेतकमूलकानिसगंधसौवर्चलसैंधवानि॥६॥ उशीरदेवद्रुअलादुहारक्रासमान्येवपृथक्पृथक्च॥ विधायकल्कंमधुकेनपद्मकाद्येनतासामपिबिल्वबिल्वैः॥७॥ तैःकल्कसंघैःसहपाचितंयत्प्रस्थोन्मितंतैलमलंपयोभिः॥ नस्यादिगंडूषविलेपनानितस्याप्रकुर्युश्चशिरोर्तिनाशम्॥८॥ उपजिह्वगदंचगंडमालांश्रुतिशाल्कंम

थोर्बुदं विदारीं ॥ परुपाकगलग्रहास्यशोषानुपहन्यादनुद न्तचालनानि ॥ ९ ॥ ॥ इतिहरिद्रादितैलम् ॥ ॥ अन्यच्च ॥ लाक्षारसप्रस्थयुतं च तैलं प्रस्थप्रमाणं खलु वक्ष्यमाणैः ॥ पलप्रमाणैरखिलैः पृथक् च क्वाथीकृतैः स्तच्छ्रुतिमाननीरैः ॥ १० ॥ लोध्रारुणापद्मकचंदनानां नालीकषष्ठीसमषट्पला-नाम् ॥ सकेशरं पाचितमेव तैलं गंडूषसंधारणतो नराणाम् ॥ ११ ॥ दंतारिकं पहिज दालनं च दंतप्रमोक्षं च कपालिकां च ॥ वैरस्यमास्येस्य च शीतभावं पूतिं मुखस्यापि निराकरोति ॥ तथा रुविंवक्रगतांश्चिरस्य लाक्षादिकं दंतगदापहारी ॥ १२ ॥ ॥ अथेरिमेदतैलम् ॥ ॥ इरिमेदभवं च वल्कलं सकलं खंडकृतं पलशतम् ॥ क्वथितं चतुराढकाम्बुभिः शृतशेषं तु तदंबुणा दकम् ॥ १३ ॥ तिलतैलमथार्द्धमाढकं परिपाच्यं त्वथ वक्ष्यमाणकैः ॥ इरिमेदभवैश्च वल्कले खदिरस्यापि तथैव कल्कितैः ॥ १४ ॥ अरुणामधुकेन पद्मकैरगलाक्षागुरुभिः पतंगकैः ॥ गिरिमृत्कुसुमैर्मदाभवैस्त्रुटिजातीफलदेवपुष्पकैः ॥ १५ ॥ वट वरांगयुतैश्च कल्कितैरपि कोलसमैः स्तथास्रकैः ॥ प्रतिसिद्धमिदं मुखामयानखिलांश्चापि विनाशयेदपि ॥ १६ ॥ विशीर्णदंतविद्रधी सदंतहर्षसाषिरो हि दंतशीतजंतुदारुणान्विनाशयेत्तथा ॥ विचालितं प्रदुष्टमांसदीर्णतां च मत्वरं कुपूतिमास्यतो हरेच्च नित्यमेव सेवनात् ॥ १७ ॥ ॥ इतीरिमेदादितैलम् ॥ ॥ खदिरवल्कलमेकतुलामितं सममशृतं खलु द्रोणजलेन तत् ॥ अथ वसुप्रभितेम्बुनि शोषिते प्रथमसंस्तन

वस्त्रविपूतके ॥ १८ ॥ प्रविधूल्यचपूगशशीरजासमरजश्च लुकट्फलसंभवम् ॥ अपिकमादिगकोलफलान्विताविरचितावटिकासमजातिका ॥ १९ ॥ मुखधृतावटिकागलतालुजाद्विजरदच्छदजाननिखिलान्गदान् ॥ प्रशमयेद्रसनोद्भवदुर्जयान्वदन जाननिखिलांश्चगदांस्त्वरा ॥ २० ॥ अन्यः ॥ इरिमेदजवल्कलंतुलाद्वैसतुलंखादिरसारजंतुलैकम् ॥ विपचेद्दशभागिकैश्चनीरैरवशिष्टपरिगृह्यपादमात्रम् ॥ २१ ॥ परिपाच्यपुनस्तदेवमंदंदहनेतत्प्रभवेद्यथाघनंत्त्र ॥ त्रुटिचंदनवारिलोह्यष्टीविकसामेघतमालधातकीनाम् ॥ २२ ॥ सितचंदनगैरिकामृणालत्रिफलाभूतजटालवंगकानाम् ॥ रजनीफलगंधवल्कलप्रमदाकट्फलजातिकोशकानाम् ॥ २३ ॥ वटरोहजवासवासकानामथकंकोलरसांजनैःसमेतम् ॥ अतिपद्मकजोतिकाफलानामिहचूर्णंचपलप्रमाणकानाम् ॥ २४ ॥ शयनामसृयः प्रसूनचूर्णंपरिमेल्याथफशीतलेचतस्मिन् ॥ घृतसारचतुःपलंविमिश्र्यगुटिकांकृत्यकलायमात्रमास्य ॥ २५ ॥ विधृतंमुखदंतकंठजातानपिहन्याद्दसनप्रभूतरोगान् ॥ अपितालुरदच्छदोत्थरोगास्थिरतांदंतगणाल्लिघुप्रकुर्यात् ॥ २६ ॥ लघुतारसनेंद्रियस्यकुर्याद्रुटिकैषाहहतीमुखादिरीयम् ॥ मुखपंकजधारितानुवेलंमुखमब्जोपममाशुगंधिकुर्यात् ॥ २७ ॥ ॥ इतिमहाखदिरवटी ॥ ॥ अन्यः ॥ गृहधूमरसांजनोग्निलोध्रत्रिफलाव्योषजवाग्रजैःसपाठम् ॥ कवलमधुनामुखस्थितंवासमतेजः प्रभवेनवल्कलेन ॥ २८ ॥ रदकंठमुख

प्रभूतरोगानपि हन्याद्धृशमेतदेवचूर्णम्॥ उदितंभिषजाञ्चकालकर्याह्निदितपद्यवरद्वयेनयुग्मम्॥२९॥ ॥इतिकालकंलामचूर्णम्॥ ॥अथसंप्राप्तिः॥ ॥तत्रादावोष्ठरोगः॥ ॥
कर्कशौचकठिनावपिशोथसंयुतौचभवतिस्फुटितौच॥ वातपित्तकफकोपवशेनद्वंद्वजत्रिभवदोषचयेन॥३०॥ प्रतीकारः॥
पीयूषनिंबमगधाकटुभिःसमेताराश्यास्थिताश्वकवलश्चहृपूर्णयोगात्॥ ओष्ठप्रकोपमपिहन्युरलंचवातसंजातमास्यगदमाशुसदानराणाम्॥३१॥ ॥अथपित्तजः॥ ॥यदासरक्तैरपिकंठकैर्द्वौगोष्ठौचपित्तेनसदाद्युक्तौ॥स्तोचात्तदारक्तविमोक्षणञ्चकुर्याद्विशेषान्मधुरैर्विपश्चित्॥३२॥ गंडूषनस्यप्रतिसारणानिपित्तप्रभूतौष्ठगदेनराणाम्॥ ॥अथकफजः॥ ॥कफेनचोष्ठावपिगौरवेणयुक्तौतथाशाल्मलिकंटकाभैः॥चेलंकटकैरक्षतमाब्दतोस्तौरक्तंलिखित्वाचनिरस्यसम्यक्॥३३॥ कुर्यात्कणादिमधुसंयुतोयस्तेनैवभूयःप्रतिसारणानि॥ मुखेचधार्यंसितसर्षपाणांससैंधवंवैकवलंतदेव॥३४॥ एकद्विदोषत्रिभवोष्ठरोगेयथास्वमन्यद्विदितंयथावत्॥ ॥अथदंतपुप्पुटः॥ ॥दंतयोश्चबहुधात्रिषुवापिजायतेत्वसकलेष्वपिशोथः॥दंतपुप्पुटगदःकफरक्तात्तत्ररक्तपरिमोक्षणमेव॥३५॥ प्रतीकारः ॥ सक्षौद्रंकटुपंचकंनिगदितंसक्षारकंसारणंबीजनैचुलमेवमास्यकलितंसिद्धार्थकैःपाकलम्॥ नीरैरुष्णतरैस्तथैवघटितंदंतावलीमूलजशोथंतूर्णमपाकरोतिकवलीकृत्यस्फुटंनित्यशः॥३६॥ ॥अथतं

कृत्यत्वमूलमांसान्॥५४॥ शस्त्रेणचोत्कृत्यतुभग्नमस्थि कीलंनिराकृत्यततोग्निकर्म॥ क्षारक्रियांतत्रसमाचरेद्वारक्त स्रुतिरत्वाशुकरोतिकाणाम्॥५५॥ तस्मान्नचोर्द्धरदमुद्ध रेच्चक्षाराग्नियोगेनचनिर्हरेत्तम्॥आतीत्रिकटमदनैःखदि रत्वचापिवल्कलैःकषायनिचयैरपिजातिपत्रैः॥५६॥ कल्की कृतैःकनकपत्रयुतैश्चकंटकारीत्रिकंटकनतैःखदिरारुणाभ्या म्॥ सिद्धंचतैलमसकृद्धिनिहंतिनित्यंगंडूषधारणविधानव शेनसद्यः॥ ५७॥ दंतोत्तरीगतिमसंशयमेवहंन्तिनिष्ठीवना द्विदितशास्त्रभिषक्प्रणीतम्॥५८॥ ॥अथदंतविद्रधिः ॥ ॥ दंतमांसमलसंगतसास्त्रीजायतेत्रश्वयथुरेवतुवा जात्॥ दाहरुग्रुधिरपूयसंस्रवाद्विद्रधिश्चकथितोत्रयथा वत्॥५९॥ प्र० ॥विद्रध्युक्तोविधिरपिसदाविद्रधौदंत जातेकुर्यात्सम्यक्सकलभिषजांसंमतंशस्त्रकर्म॥एवानुक्ता रदगतजटाच्छादनोद्भूतरोगानन्यान्वेमोरदनिजगदान्दाल नोदीन्यथोच॥ ६०॥ दीर्यमाणयद्वादंतंयत्रपीडाद्युतंभवेत्॥ दालनोनामसोव्याधिःसंघातादिसमुद्भवः॥ ६१॥ प्र० ॥ तैलंतिलानांचपयोगवीनांलाक्षारसश्चापितुवक्ष्यमाणैः॥द्र व्यैःपलैकप्रमितैःपृथग्वाक्वाथैश्चतुर्भागमितैःपचेच्च॥ ६२॥ लोध्रारुणाकट्फलपद्मयष्टीश्रीखंडलाक्षौरजलोद्भवानां ॥सपद्मकाष्ठेनजलंविहायसिद्धंतुखेधारितमेवसद्यः॥६३ दंतालिदालनमथोरदचालनंवाभोदूक्षतस्याशिशिरत्वमलं कपालीम्॥ वैरस्यमास्यगमहोज्वरुत्तिंचपूतिभावंचवक्रगत

माशुनिराकरोति ॥६४॥ अन्यः ॥ कासीसंघृतपक्कंदंतघृ तंहि॥ दंतरुजोघ्नंनियतंपरिगदितंहि॥६५॥ ॥अथक्रमि दंतकः॥ ॥दंतगमेचकछिद्रस्रवतिद्रवंहि॥क्रमिदंतकमि दमुदितंतीव्ररुजंहि॥६६॥ प्र० ॥क्रमिदंतजवातगदेऽटि तिविधेहि॥भर्जितहिंगुनिधानंहिजगविलेहि॥६७॥ अ न्यः ॥ अभयाचूर्णमधुनाक्षणमेकंतुताम्रपात्रसंपक्कं॥गु टिकाकठिनाधाटितोदंतेषुतत्क्रमिगणानाशुहन्यात्॥६८॥ अथधूपः॥ ॥अतिसंतापितलोहेकटुतैलेद्रवारुणीफ लधूपैः॥ दंतव्रणक्रमियोगान्सद्यःस्यात्क्रमिदंतकस्याशु नाशोहि॥६९॥ ॥अथभज्जनकः॥ ॥वक्रंभवेद्वक्रम थोपिदंतभंगोबलासेनसवातकेन॥तभज्जनंव्याधिमुशंति धीरावैद्याःपुराणाश्चरकादयोऽन्ये॥७०॥ प्र० ॥कोलबी- जास्यदंतप्रयोगोनवदंतदार्ढ्यंभवेदश्मभेदस्यवा॥धारणा- द्दंतपंक्तेस्त्वरादंतजापंक्तिरेवंभवेद्वज्रकल्पासदा॥७१॥ ॥ अथदंतहर्षः॥ ॥शीतरुक्षाम्लवातातिवैदंतहर्षोभवेद्दं- तहर्षेसदा॥ कोष्णकाःस्नसनावातदोषापहाग्रासकावासि नादंतहर्षापहाः॥७२॥ अन्यः ॥ निर्यूहानिलहंतारोदं तहर्षनिषूदनाः॥ तिलकर्षद्विप्रस्थांबुकथितंप्रस्थशेषितं ॥७३॥ दंतचांचल्यहर्षादीन्मुखरोगानशेषतः॥ गंडूषधार- णान्नृणांस्त्रीणांचापिचनाशयेत्॥७४॥ ॥अथदंतश र्कराकपालिकाच॥ ॥दीर्यत्सुदंतेषुमलान्वितेषुकपालिके यंकथितामुनींद्रैः॥दंतान्छिदेषारदरोहिणीसातस्यांसमु

कृत्यरदं प्रयत्नात् ॥ ७५ ॥ लाजारजोभिर्मधुनासमेतैः पुनः पुनर्वाप्रतिसारयेच्च ॥ यदंतहर्षे कथितंविचार्यंतदत्रकार्यंभिषगीश्वर्यैः ॥ ७६ ॥ ॥ अथश्यावदंतकः ॥ ॥ श्यावदंतेतुदंतानामशक्यंघर्ष्यसंहरेत् ॥ संशोध्यक्षारमेकंतुप्रयुंजीतभिषग्वरः ॥ ७७ ॥ अन्याःक्रियास्तुयाःसर्वाःताःकार्याःशीतलाबुधैः ॥ अथकरालः ॥ दंताश्रितोयदाकुर्यात् करालान्विकटान्हृदान् ॥ वायुःकरालदंतोसौनैवसिद्ध्यतिकर्हिचित् ॥ ७८ ॥ वराहहननान्नृणांदंतुरत्वंप्रजायते ॥ घृतकुंभतदादद्याद्दक्षिणाभिस्मशांतये ॥ ७९ ॥ अथदंतशूलः ॥ ॥ अवल्गुपंचांगमलंमुखस्थंतद्दन्मुखस्थापिचचंद्रकांतिः ॥ दंतालिशूलंविनिहंतिसद्योलेपोथवातत्प्रभवस्तथैव ॥ ८० ॥ ॥ अथगुटिका ॥ ॥ कासीसबाल्हीकदिवौकदारुसौराष्ट्रिकानांचवटींविधाय ॥ जलैर्मुखेस्थाप्यनदंतशूलाद्भीतिर्भवेन्नैवकृमिप्रभूता ॥ ८१ ॥ ॥ इतिदशदंतरोगाः ॥ ॥ अथजिह्वारोगाः ॥ ॥ रसनास्फुटितापभंजनेनप्रीतिस्फुपाप्रभवेच्चशाकतुल्या ॥ अतिरक्ततरारसानभिज्ञाविहितंशोणितमोक्षणंचतत्र ॥ ८२ ॥ अमृतव्रततीपिचुमर्दकणापटुभिःकवलोविहितःकटुभिः ॥ रनिलक्षुद्रयोरनिलप्रभवेकथितोनिहितोष्णगदत्वंहरेत् ॥ ८३ ॥ ॥ अथपित्तजः ॥ ॥ सदाहस्तैरपिकंटकैश्चपित्ताद्दुहद्भिर्यदिचीयतेच ॥ निघृष्यतद्रक्तविनिस्त्रुतेचगंडूषसारणीविधिर्मधुरैश्चनस्यं ॥ ८४ ॥ ॥ अथकफजः ॥ ॥ कफेनवाशाल्मलिकंटकाभैर्मांसोच्छ्रयैर्दी

र्धतरैश्चितंचेत्॥ विलिख्यतत्कंटकजालमस्त्रक्वविनिःसार्य
कणामधुभ्याम्॥८५॥ कुर्यात्तथासारणमेवतत्रससैंधवं
वाकवलंमुखेथ॥ संधारयेद्गौरसर्षपाणांसंपेष्यविद्वान्
कफजोष्टरोगे॥८६॥ ॥अथलासः॥ ॥जिह्वातलजं
श्वयथुर्गाठोपःकफरक्तजःप्रसिद्धोयम्॥ जिह्वास्तंभनपा
कंकुरुतेतोहेयस्सहेध्यधुर्यैश्च॥८७॥ ॥अथोपजिह्वः
॥ ॥ जिह्वाग्रतुल्याकफरक्तमूर्तिर्योजायतेसोश्वयथू
पजिह्वः॥ उन्नम्यजिह्वांदवथुप्रयुक्तःकंडूसमेतोपिभिष
कूप्रगीतः॥८८॥ आकृष्यचैनंबडिशेनविद्वान्संछेदयेन्मं
डलकाग्रकेण॥ तीक्ष्णौषधैर्घर्षणमत्रकुर्यात्तन्नाशनार्थं
भिषजोवदंति॥८९॥ ॥अथवलयः॥ ॥कफोन्नतंशो
थमलंप्रकुर्याज्जिह्वागतंचान्नगतिर्निवार्य॥ तदेयमाहुः
प्रतिवार्यवीर्यंरोगंप्रदुष्टंवलयंसवैद्याः॥९०॥ प्र० ॥शि
रोविरेकेणतथैवविद्वान्गंडूषधूमादिनिषेवणैश्च॥ व्योषा
भयाक्षारकृशानुचूर्णैःप्रघर्षणात्तंप्रशमंनयेच्च॥९१॥ ॥
अथजिह्वाजाड्यंकंपंच॥ ॥जिह्वाजाड्यंचापिकंपंसतै
लंभस्मप्रायोघर्षणाद्धापटूनाम्॥ हन्यात्सद्यक्षारजंचीरयो
श्ववारंवारंचर्वणंसद्यएव॥९२॥ भोजनार्थेपटोलानिनिंब
वार्ताकदूषकैः॥ सक्षाराणिविशेषेणजिह्वाव्रणमथोच्यते॥
९३॥ प्र० ॥मरीचकट्फलटंकणमागधीजवजहिंगुपुते
रपिसार्द्रजैः॥ सभगसौभगमंडनसंयुतैर्मुखघृतैरसनाव्र
णमव्रणम्॥९४॥ मूकतांचेडमूकत्वंकर्मणाजायतेनृणा

म् ॥ नत्तत्कर्मविशङ्कद्युर्थ भारताख्यानपुस्तकम् ॥ ९५ ॥ पलैकस्वर्णसंयुक्तं ब्राह्मणायनिवेदयेत् ॥ श्रुतिशीलाय शान्ताययथास्वसमदक्षिणाम् ॥ ९६ ॥ ॥ अथतालुरोगाः ॥ तत्रतावद्गलशुंडी ॥ ॥ कफरक्तभवश्वपथुर्यदितालुसमुद्भवोपितथा ॥ गलशुंडिगदः प्रथितोगजशुंडिकयाप्रतिमोतिबृहन् ॥ ९७ ॥ कसनश्वसनार्वतितर्षमलंविदधातिसमंनिजकोपचयैः ॥ अथतांपरिघृष्यसमंतुनयेत्खलुवक्ष्यगणैः खिलैश्चयथा ॥ ९८ ॥ प्र० ॥ व्याधिवचाप्रवसिंधुकणानांचूर्णमलंमधुपाठसमेतम् ॥ घर्षितमाशुनिहंतिचशुंडीतालुभवामपिदुष्टघ्नानिसद्यः ॥ ९९ ॥ अंगुष्ठकेनांगुलिनाप्रगृह्यशुंडीगलस्थामपि मंडलस्य ॥ अग्रेणसंछिद्यविचार्यसम्यक्यत्नो निछेदादतिरक्तमोक्षात् ॥ १०० ॥ मृयेतवेह्नाप्यतिहीनछेदाच्छोफोभवेत्स्रावजलमुखश्च ॥ लालाप्रसेकभ्रमसंयुतश्चतस्माद्भिषक्सर्वसभाधिराज्ञः ॥ १०१ ॥ आज्ञांसमासाद्यगुरूक्तयुक्त्यासंछेद्यकुर्याद्विधिनाचिकित्साम् ॥ कणाविषाकुष्ठवचोषणानांसलोकचूर्णैःपटुमाक्षिकाभ्याम् ॥ २ ॥ तांछिन्नरूपांप्रतिसारयेच्चयथायथास्याः कृशिमाभवेद्वा ॥ अथोभिधास्येन्यरुजंतुतुंडकेरीसमनामसमंयथावत् ॥ ३ ॥ शोथकृच्छ्रदवथुप्रतितोदैःपाकमेतिकफरक्तभवाया ॥ तुंडिकेरिगदितावरवैद्यैस्तत्रहेतुकफनाशनयोगैः ॥ ४ ॥ कफघ्नरसगंडूषधारणान्ष्ठीवनादपि ॥ तुंडिकेरीक्षयंयातिनैवच्छेद्याविजानता ॥ १०५ ॥ ॥ अथध्रुवः ॥ ॥ शोथस्तब्धोलो

हितवर्णः शोणितजातोधूर्वश्चनिपीडः॥ वाणीरास्नारोहि
तकाभिविश्वापाठानिंबविपक्कं॥१०६॥ धार्यंवक्त्रेनाशनमस्य
प्रायोवैद्योरुक्कसिद्धाशक्त॥ कूर्मोत्सेधः शीघ्रभवोन्योज्ञेयोवैद्यैः
कृच्छ्रपरोगः॥७॥ सोनिंब्यीडः कफसंजातः कुष्ठप्रविषावा-
ग्भिःपिष्टा॥ साकंक्षौद्रैः पटभिःकुर्यान्कारीचैर्वापटुभिश्चूर्णैः
॥८॥ पाठाकुटन्नरक्षौद्रसैंधवैः सहवैद्यराट्॥ प्रतिसारणमे-
वाशक्तकुर्यात्पूर्वोदितैः सह॥९॥ ॥अथतात्वर्बुदम्॥ ॥
तालौशोथःपद्मतुल्योभवेच्चेद्रक्तोद्भूतेनार्बुदेनापितुल्यः॥
यद्वत्पद्मकेशराकीर्णमध्यंतद्वन्मांसः स्यांकुराकीर्णमध्यम्
॥११०॥ तात्वार्बुदंसिंधुवचाकटूनांचूर्णैस्तथासार्यमलाभि
षग्भिः॥ समाक्षिकैरर्बुदवद्विशोषाच्चिकित्सितंतस्यविधेयमे
वम्॥११॥ ॥अथसंघातः॥ ॥पलंश्लेष्मणादूषितंतालु
सस्थंतथानीरुजंमांससंघानमाहुः॥ विलिप्तपयोभिश्चवा
वन्निकायाविनश्येच्चशुंडीपटुस्नेहयोगात्॥१२॥ योग-
द्वयम्॥ ॥अथतालुपुप्पुटम्॥ ॥तालुस्थितोनीरुजएं
वकोलमात्रः कफात्माप्यथमेदसापि॥ युक्तोग्निमत्स्येनचवा
स्तुकस्यकुर्यात्तथाचर्वणमेवसद्यः॥१३॥ प्रतीकारः ॥
जटारक्तसेफालिकायाः प्रकामंपुनर्वापुनश्चर्वितातालुसंस्थम्
॥ तथाप्युपुटंतालुपूर्वंविशेषान्निहन्त्येवसद्यस्त्वकवैद्यावदंति॥
१४॥ ॥अथतालुशोषः॥ ॥तालोःशोषोदीर्यतेयत्रता
लुर्वाताच्छ्वासोजायतेयत्रतत्र॥ स्नेहस्वेदौतत्रद्विधातायकार्यौ
क्षारैःसिद्धैर्भोजनंवाघृतैश्च॥११५॥ ॥अथतालुपाकः॥

तालुनिपाकंपित्तकृतंयत्तद्धिनिहन्यात्पित्तहरंयत्॥ धौत
मथोवावारशततन्मूर्द्धिविलिप्तंहव्यमथोयत्॥१६॥ ॥इति
नवतालुरोगाः॥ ॥अथगलरोगाः॥ ॥तत्रादौवातरोहि
णी॥ ॥गलेवायुःपित्तंकफश्चापिचमूर्छामिततमाःप्रदुष्या
रक्तंमांसंगलस्यरिवलमवरुध्यंवहुभिः॥ पलोद्भूतैःसूचीसम
तरनिशानांकरणैःसरुग्जिव्हायस्याखलुनिगदितारोहिणि
गदः॥ १७॥ जिव्हापरीताबहुवेदनाभिर्मांसांकुरैर्वातसमुद्भ
वैश्च॥ उपद्रुतोपद्रवसर्वमार्गैःकण्ठावरोधस्यकरैरनेकैः॥१८॥
सारोहिणीवातभवाचतस्यारक्तप्रमोक्षंबहुधाप्रकुर्यात्॥ वा
छेदनंनस्यविधिंचधूमपानंचगंडूषविधारणंवा॥स्विन्नंततोन्तः
खलुबाह्यतोथवातोद्भवामंगुलिकाग्रकेण॥ शस्त्रेणवासोष
णयुगस्नेनलिखेद्धिरक्तांप्रतिसारयेत्तां॥१९॥ ससैंधवाद्यै
र्लवणैर्विशेषात्सकोष्णतैलैःकवलैर्जलैश्च॥ निक्षेपसंधार
णधारणाभिर्वातोद्भवांरोहिणिकांजयेच्च॥२०॥ अथपि
त्तरोहिणी॥ ॥क्षिप्रजाक्षिप्रदाहान्वितात्क्षिप्रपाकाज्वरेणा
न्वितासाचपित्तोद्भवा॥ रोहिणींतांचविस्राव्यपूर्वंभिषग्भाक्षि
काक्तैसिताचूर्णकैःसारयेत्॥२१॥ सिताक्षौद्रभियंगूनांक
वलंमुखधारितम्॥ तद्वन्माक्षिकपत्तंगकवलंवारिवास्तृत॥
२२॥ द्राक्षापरूषसंजातःक्वाथोवामुखधारितः॥रोहिणींपि
त्तजनितांकंठस्थांहंतिसत्वरम्॥२३॥ ॥अथकफरोहि
णी॥ ॥स्रोतोनिरोधिन्यथरुग्विहीनास्थिराकफोत्थाख
लुरोहिणीया॥ साऽगारधूमैःसकटुत्रयैश्चनित्यंप्रयत्नात्

तंमहाज्वरेणसंयुतम् ॥ प्रभंजनात्समुत्थितसपित्तजस्त्र-
तोद्भवम् ॥ १३४॥ सतादकंचकंठजेगदेयथाचिकित्सितंसम
चरेच्चतीक्ष्णकैःस्रुनस्यकादिकर्मभिः॥१३५॥ प्रतीकारः
दार्वीत्वक्पिचुमंदतार्क्ष्यकालिजक्वाथंपिबेत्तत्रवैवृत्तोन्तःश्व
पथुःसदाहश्वसृजायुक्तोगुरुःकंडुरः॥ जातोसौकफकोपत
श्वगादितोवृंदस्तथैकादिकः॥३६॥ प्र० ॥ विश्राव्यप्रथमं
चशोधनमथोतस्याशुवैद्यश्चरेत् ॥ यथा ॥अथैकवृंदरोगेन
हरीतकीश्रृतंजलम् ॥समाक्षिकंचपीतमत्रवैद्यभूपवर्णितम्।
१३७॥ ॥अथशतघ्नी॥ ॥घनावर्तिःकंठेप्रभवतियदा-
कंठमखिलंरुणद्धिप्रासक्तैरपिपलभवैरंकरगणैः॥ भियामा-
त्माणान्साहरतिसहसासाध्यतिरुजाशतघ्नीतच्चुल्याप्रति
कृतिविधानादिरहिता॥३८॥ ॥अथगिलायुः॥ ॥धा
त्र्यस्थितुल्योगलजस्तुग्रंथिरासक्तग्रासससमोनराणाम्॥सश्ले
ष्मरक्तप्रभवोगिलायुःशस्त्रेणसाध्यश्चभिषक्प्रदिष्टः॥३९॥
प्रतीकारः ॥ कटुकातिविषाकलिंगमुस्तादिविषदारुवृकी
श्रृतंगवीनाम्॥ हविषातुनिपीतमात्रमेतद्गलरोगंविनिहंतिचा
पिसद्यः॥१४०॥ ॥अथगलविद्रधिः॥ ॥गलसर्वव्याप्य
प्रभवतिरुजोयत्रसकलाःसमुद्भूताःसर्वैरपिगलगतेविद्रधि
गदः॥निशातार्क्ष्याभ्यांवैगिरिभवमृदालोध्रमधुभिःस्नुतंप
त्तंगोत्थेजलमपिश्रुतोधार्यमसकृत्॥४१॥ ॥अथगलौघः
॥ ॥गलरोधकरोमहांश्चशोथोज्वरवान्वायुगतिंनिहंति
यश्च॥कफरक्तभवोगलौघएषःकथितोवैद्यमहीन्द्रशास्त्रवि

द्धिः॥१४२॥ प्र० ॥ जवाग्रजस्तेजवतीसपाठारसांजनंदा रुनिशाकणाभ्याम्॥ समाक्षिकाचास्यगनावटीयागलमय- ध्वंसकरीसमेषाम्॥५३॥ ॥अथस्वरघ्नः॥ ॥नरस्ताम्य मानः प्रसक्ताभिभाषीश्वसेच्छुष्ककंठोबलाशोपदिग्धः॥स भिन्नस्वरोमुक्तकंठोनिलात्मामवेद्यत्रसायंस्वरघ्नस्त्वसा- ध्यः॥५४॥ ॥अथमांसतानम्॥ ॥प्रतानैःसंयुक्तः श्वपथुरथकष्टोपिकुरुतेत्रिजातोरोधंवागलगतमसौचानुक्र मशः॥समासाद्यस्तानोनिगदितश्रलंप्राणदशकप्रहारी- संहारीगलगतगदानामनवरः॥१५५॥ ॥अथावदारी ॥ ॥सदाहतोदसंयुतोविसीर्णपूतिमांसकोगलोत्थिता तशोथएवलोहितः॥ प्रकीर्तितःसपित्तजोवदारिकागदोज नोविशेषतोत्रपार्श्वनीद्रश्चक्रियः॥१५६॥ ॥इत्यष्टादश कंठरोगाः॥ ॥अथमुखरोगाः॥ ॥तत्रादौवातसरः॥ ॥ सतोदैःसंस्फोटैर्वदनमभितोनर्यदिचितंसवातोत्थोयंस र्वशरइतिवैवैद्यगदितः॥तदास्यंचूर्णैर्वासपटुसहितैश्च प्रतिदिनंप्रतीसार्यस्नेहैरनिलहरकैर्नश्यकवलैः॥१५७॥ अथात्रस्नेहधूमदानविधिः॥ ॥शालेरंडमधूकसारर- चितैराजादनस्यापिवासारेणापिसगुग्गुलुर्निगदितोमज्जा न्वितोध्यामकैः॥मांसाम्बीमधुभिश्चशैलजतुभिः कालान्वि तासारिवाधूपःसर्जरसेनगत्स्यपललैश्रेष्ठ्ढक्चन्तैःसमम्॥ ५८॥ धूमस्त्वैहिकएषएवमधुभिःसंमिश्रितोधूपनासद्यःसर्व सरंसुखांतरगतंहन्याशुवातोद्भवम्॥ तद्वद्भाकफजंचनीरु

जमलंश्वथंचकंडूतिकंरोगंसर्वसरंनिहंतिसकलंचान्यत्क-
फघ्नंचयत्॥४९॥ ॥इतिकफसर्वसरस्य॥ ॥गृहधूम
कुशानुधार्दार्यपाठात्रिफलाव्योषजवाग्नजैःसलोध्रः॥ मधु
नारचितासतेजिनीसावटिकादंतगलास्यरोगकाली॥ ५०
तनुलोहितपीतवर्णकैःसहदाहेनसमन्वितैरपि॥ अथसर्व
सरेत्वपित्तजातेबहुभिःस्फोटगणैश्चितंमुखम्॥५१॥ पित्तजे
पित्तशमनींक्रियांवैद्यःसमाचरेत्॥ अथातोमुखपाकादिना
स्यरोगानपिब्रुवे॥ ५२॥ ॥अथमुखपाकः॥ ॥मुखपा
कगदेशिराविमोक्षंशिरसोरेचनमाशुकारयेत्॥ घृतमूत्रपया
सिमाक्षिकंवाकवलेधूममथोत्रवर्णितानि॥ ५३॥ अन्यः॥
जातीदलतिलचर्वणमास्यगदेहि॥ कुरुनावरगादितमनसि
निधेहि॥ ५४॥ अन्यः ॥जातीदलामरलतात्रिफलायवा
सादार्वीनिशाशतकषायमलगवीनाम्॥ स्तन्याःसमाक्षिक
मिदंमुखधारितंचेत्सद्योनिहंतिमुखपाकगदंनराणाम्॥५५
कृष्णाजीरगदशक्रयवानांचर्वणंत्रिदिनतोपिनराणाम्॥ क्ले
दगंधजमलंमुखपाकाद्दुःखजालमसकृद्धिनिहंति॥ ५६॥
अन्यः ॥पटोलनिंबाम्रकमालतीनांकृतःकषायःकिलप-
ल्लवानाम्॥ मुखस्यपाकेमुखधावनार्थंगंडूषरीत्याप्रथितः
सुखाय॥५७॥ ॥इतिपल्लवक्वाथः॥ ॥अन्यः॥ मुनिकु
लकदलानांमुस्तकोशीरपथ्यानृपतरुशिशिराणांतिक्तया-
सारुणश्च॥शृतजलमसकृद्वापीतमत्रमकामम्॥ हरतिचमु
खपाकंदीर्घकालोपपन्नं॥५८॥ अन्यः ॥कुलकत्रिफला-

निशाविशालाकटुकालोकस्कधाललास्कयासैः॥ क्वथितमुख पंकजास्थितंवामधुनाहंतिवक्रसन्मुखपाकादिसमस्तरोगसं घान्॥५९॥ ॥अथवटी॥ ॥गायव्येकतुलाचद्रोणपय सासंपाच्यवस्वांशकेजातीकोशशशीमृगांडजचतुर्जातास्त्र पूजैःसमैः॥ कर्षैकप्रमितैः पृथक्पृथगथोपिष्टैर्जलेमिश्रितैः कृत्वातद्गुटिकांचणेनसदृशीमास्यस्थरोगापहाम्॥१६०॥ इतिखादिरीवटी॥ ॥कुष्टाब्दधान्यमधुकत्रुटिकेलवालुय ष्टीप्रकल्पितमुखांकलिताश्चिरस्थाः॥ आस्येरसोनमदिरा- दिभिरान्तंयदूधंनिहन्त्युरखिलंकवलाःप्रकामम्॥६१॥अ हिलतादलमिश्रितचूर्णकैर्मुखमलंयदियस्यतुदत्यते॥स- तुमुखास्थितकांजिकतैलयोरपिपृथक्पृथगेवविधिंचरेत्॥ ६२॥जातीदलत्रुटिकणामधुमातुलुंगपत्रैःसलाजरचितोमु खगोवलेह्यः॥ कंठेध्वनिंप्रकुरुतेखलुयस्यसोयंगानंकरोतिमधु रंबहुकिन्नरैश्च॥६३॥ प्रियंगुसंमिश्रितकोलमज्जान्हीवेरका- श्मीरकचंदनानाम्॥ आस्येप्रलेपःप्रकृतोनराणांचंद्रद्युतिंवक्त्र मलंकरोति॥६४॥ ॥अथजंतुमणिः॥ ॥वातादिभिःसमु त्पन्नमरुजंमंडलंबुधैः॥स्निग्धंचकृष्णमपिवाप्रोक्तोजंतुमणि र्गदः॥१६५॥ आरक्तपञ्जनुमणिनुल्यंप्रोक्तंलक्ष्मप्रवरभिष ग्भिः॥१६६॥ कृष्णानिसूक्ष्मानितिलोपमानिनिलानिदेहेपि च्चनीरुजानि॥ तथालकान्यायसदेववातास्पित्तात्तथावाकफ तोभवंति॥६७॥ ॥अथमशकः॥ ॥स्थिरमवेदनकृष्ण पलंतनौमलिनवर्तुलमेवसमुन्नतम्॥ मशकमेनमरुजगदु-

र्वुधास्त्रमनुकृत्यतथातिलकालकान् ॥ ६८ ॥ जतुमणिंखलु लक्ष्मतथाभिषग्दहनदाहजवाग्जलेपनैः ॥ उपचरेच्चततोमु खकंटकान्युवजनस्यतथापिडकान्बुवे ॥ ६९ ॥ कफमारुतसं भवानशरणापिडकाः शाल्मलिकंटकावभासाः ॥ वदनेप्रभवं तियौवने वा मुखसौंदर्यविदूषकाश्चताः ॥ १७० ॥ प्र० ॥ लो ध्रधान्यपरिलेपनमाशुयौवनोत्थपिडकानपिवाचा ॥ रोचना चमरिचैरपिधेनोर्लेपनादपिनिहंतिचतानि ॥ ७१ ॥ अन्यः ॥ सिद्धार्थसैंधववचापरिपिष्टलेपो लोध्रेण हंतिमुखयौवनकंट कानि ॥ नोशांतियांतियदितानिभिषग्वरिष्ठो वातेनवाप्रति दिनंविजयेच्चसद्यः ॥ ७२ ॥ अथान्यच्छमम् ॥ महद्वास्य- स्यंवासितमसितमेवंततुततं तथाश्यावंक्वापिप्रभवतितथा- मंडलमलम् ॥ सहोत्थंन्यच्छाख्यंजयतिविशिरामोक्षमचिरा द्यःपिष्टैर्दुग्धैस्तरुभवचयैर्लेपनविधिः ॥ ७३ ॥ ॥ अथव्यंग ॥ ॥ क्रोधायासप्रकुपितमतोवायुरेवात्रसार्कंपित्तेनास्येतु मूर्छामितम्अपिततोमंडलंव्यातनोति ॥ व्यंगेप्राहुः सकलभि षजोनीरुजंश्याववर्णं लेपान्नाशंव्रजतितनुकंकालपामासि केण ॥ ७४ ॥ समसकरवरांकुरप्रलेपाद्रुधिरर्क्तेनशशास्यवातथे व ॥ वरुणात्वचयाजमूत्रकैर्वाप्रशमंव्यंगमलंप्रयातिसद्यः ॥ १७५ ॥ अन्यः ॥ जातीफलवरलेपोव्यंगगदंहि ॥ स्वर्णद्यु तिमभिनतनुतेऊर्दिनैविधेहि ॥ ७६ ॥ ॥ अथनीलिका ॥ ॥ एवंविधंनीलतमंचवक्त्रे क्वापिवेहाथतनौनराणां ॥ स्त्रीणां चजातीफलवल्कलेपात्तद्योविनाशंव्रजतिप्रकामम् ॥ ७७ ॥

अन्यः ॥ अर्कदुग्धरजनीपरिलेपान्नीलिकाश्चविजयेन्मु-
खजानाम् ॥ मालतीगदकचंदनलोध्रपीतदारुवटपीतदला
नाम् ॥ ७८ ॥ लेपनेनमुखजातनीलिमायौवनोद्भवमुखप्र
भवानाम् ॥ संघमाशुकवत्तथापिडकानांवैद्यभूपतिवचांसि
यथाच ॥ ७९ ॥ युग्मेनयोगद्वयम् ॥ अथपद्मिनीकंदः ॥
चितंकंटकैर्मंडलंकंडुरंयत्कफेनध्रुवंरक्तयुक्तेनजातम् ॥ भ
वेत्पांडुरंवर्तुलंवैद्यभूपेरलंपद्मिनीकंदउक्तस्तुसद्यः ॥ १८० ॥
प्रतीकारः ॥ अथोपद्मिनीकंदकेनिंबपत्रोद्भवैर्वाजलैश्छर्द
येत्तंनरंवै ॥ घृतंनिंबकल्केनसिद्धंचतस्मैप्रदेयंचपातुंतथाक्षा
क्षिकेन ॥ ८१ ॥ प्र० ॥ उद्वर्तनंनिंबनृपद्रुमाणांपत्रैःसमंक-
ल्कितमारयमारात् ॥ चंद्रद्युतिंसंविदधातिसम्यक्तत्रस्यरो
गांश्चनिराकरोति ॥ ८२ ॥ ॥ अथपाददारी ॥ ॥ वायुःस
दाचंक्रमणान्नराणांसंरुक्षणैःपादतलेविशेषात् ॥ दारीरु
जोभिःकुरुतेचतस्यांशिरांचविध्येत्तलशोधिनींवा ॥ ८३ ॥
स्नेहस्वेदोपन्नंपदतलयुगुलंसिक्थमज्जावसाभिःलिप्तंक्षा
रेणद्रव्यैःपटुमधुसहितैरुष्णतोयैःप्रसिक्तम् ॥ तद्वत्सर्जेन
द्रव्यैःपटुघृतमधुभिःक्षालनंसर्षपानांतैलैःकुर्याच्चकंजप्र
तिममृदुतरंदारिकांहंतिसद्यः ॥ ८४ ॥ अन्यः ॥ मधुसि
क्थकगैरिकापुराणांसघृतसैंधवशालजद्रवैश्च ॥ सशिलं
मलमंघ्रिद्वयोश्चकुरुतेपंकजकोशमार्दवंच ॥ १८५ ॥ ॥
अथकृष्णीकरणम् ॥ ॥ लोध्रंनीलीजतुतुवरिकामागधी
दाडिमीभिःश्यामाधात्रीखदिरविकसामालतीभृंगपत्रैः ॥

पत्रैश्चैवंजलजभसितैःसान्निहिन्धाश्वनकैः कृष्णीकुर्याच्छि कुरनिकरंमूर्द्धिवक्त्रेविलिप्तम्॥८६॥ शोकश्रमक्रोधकृतस्त थोष्णादेहस्यमूर्द्धिप्रगतःसपित्तः॥ केशान्यचत्येवलसाकुरत्र वैद्यास्तुरोगंपलितंविशेषात्॥८७॥ तत्रकेशरंजनम्॥ ॥ कर्षंलोहस्यचूर्णंकलितकफलंचैकमेवंतुधान्याच्छुग्मंथुग्मंशि वायारत्यथपरिगाहिताच्चूतमज्जाचलोहात्॥ अर्द्धालोहस्यपा त्रेत्र्यमितमुषितंपेषितंतस्यलेपात्तकेशानीलाभ्रमरसदृशा स्मश्रुजाःसंभवंति॥८८॥ अन्यः॥ नीलीभृंगत्रिफलजमय श्चूर्णितंछागमूत्रैःपिष्टंलेपाज्ज पतिपलितंमूर्द्धिवक्त्रेक्रमेण ॥अन्यन्माजूफलस्तुतमृदाश्मध्यनासूतजेनतुत्थाक्तंपेषमो चाररससमंमृदितंतद्वदेवप्रकुर्यात्॥८९॥ ॥अथतैलम्॥ आम्रास्थिभल्लातकदाडिमाम्लनीलीमिहृदामृततुत्थलोहैः ॥ कासीसमाजूफललोध्रकालाश्यामातिलैरामलकीशिवा नाम्॥९०॥ काश्मीरमोचारसभृंगनीरैर्जातीदलैरोचनया गवीनाम्॥ शंखस्थचूर्णैःखदिरेणसार्द्धंसहोषितंसप्तदिना निधान्ये॥९१॥ ततोव्ययत्नान्निरगत्स्यतैलंकेशेषुश्मश्रुषु वि लेपनीयम्॥ राज्ञांशिरःस्मश्रुकरंजनायपथ्येस्त्रिभिर्वर्णितम त्रकल्पम्॥९२॥ ॥अथपरिवर्तिका॥ ॥अभिघाताच्चाड नाद्वापिमर्दनादपिमेढ्रजम्॥ चर्मसंभजतेवायुस्तदातस्यविव र्तते॥९३॥ सशोथंवासदाहंवापाकंव्रजतिवाकचित्॥ परि वर्तिकांचतांविन्द्याद्वातजांसरुजांभिषक्॥९४॥ कंडुकाठि न्यदाहाद्यैःकफजांपित्तजांतथा॥ ज्ञात्वायथास्वमेतांतुस्वेद

नैश्चद्युनैस्तथा॥१९५॥उपनाहयेभ्रिरात्रंवापंचरात्रमथोपि
च॥९६॥ शाल्वणेनविधिनापरितोत्रस्वेद्यमर्धपरितोमाणिमे
व॥चर्मणोंतरगतामुपनाहैर्योजयेच्चखलुवस्तिभिरेव॥९७
॥ ॥अथावपाटिका॥ ॥अल्पीयसींहर्षबलात्प्रकामात्
स्त्रियंप्रगच्छेदथहस्तघातात्॥ तच्चर्मतोहर्तितमेवलिंगम
णेस्तुमूचुर्भिषजोवपाटीम्॥९८॥वातेनरूक्षासरुजानिकु
ष्णापित्ताच्चपीताचसदाहरक्ता॥ तृष्णान्विताथोकफजातु
कंडूयुक्तातिकाठीयतनाविपीडा॥९९॥ प्रतीकारः ॥स्नेह
स्वेदैरपिप्रायोयथास्वंसमुपाचरेत्॥अवपाटींभिषक्सम्य
क्ज्ञात्वदोषबलाबलम्॥२००॥ ॥अथनिरुद्धःप्रकाशः
॥ ॥वातेनमेढ्रस्यचचर्मयत्रमणिंसमंतात्अयनेयदेव॥
चर्मोपमच्छेतुमणौतुमूत्रस्रोतोनिरुद्धंभवतिप्रकामम्॥१
॥ सन्निरुद्धप्रकाशस्मिन्नाडीमुभयतोमुखीम्॥ विध्वाचज
तुनादार्वीधृताभ्यांवार्तिमनवा॥२॥प्रक्षेशयेहसामज्जाश
शनागवराहजाम्॥ सिंचेत्तैलैर्वचादारुमद्यसिन्हैरथोपिच
॥३॥ वर्तिप्रवेश्यमतिमान्मूत्रस्रोतोविवर्द्धयेत्॥ स्निग्ध
मन्नंनतस्तस्मैदत्वाव्रणवदाचरेत्॥४॥ ॥अथसन्नि
रुद्धगुदम्॥ ॥वायुर्वेगस्यरोधाद्व्रजतिगुदमसौसंस्थि
तोयन्महच्चस्रोतःसंरोध्यकृच्छ्राद्व्रतिमपिकुरुतेस्वल्पभो
ज्ञान्मलस्य॥कुर्यात्तत्रप्रसेकानथपवनहरैस्तैलबस्तिप्र
संगैरोगोयंवद्रमूलैर्निगदितम्बलनामतोदुःस्तरःसः॥५
॥ ॥अथाहिपूतना॥ ॥शकृन्मूत्रसमाश्लिष्टेपानधौ

नेशिशोर्भवेत्॥ तत्रस्फोटा भवंत्येवमिलितास्तेपरस्परम्॥ ६॥ कंडूदाहरुजः सर्वैर्युक्तोतंडूयनात्तथा॥ एकीभूतव्रणं घोरमहिपूतनिकाभिषक्॥ ७॥ प्र० ॥ धात्रीदुग्धेनसंधौता त्रिफलाखदिरांबुना॥ सौवीरशंखयष्ट्याह्वैर्लेपः कार्योहिपूतनैः॥ ८॥ कंडूतावुत्कटेकुर्याज्जलौकारक्तमोक्षणम्॥ शिशोः करंजत्रिफलातिक्तैःसिद्धंघृतंहितत्॥ ९॥ कासीस तुत्थहरितालनिशास्थपिष्टः सध्वांक्ष एषपरिलेपनतोनिहंति॥ धौतैर्घृतैश्चशतधाशशिनासमेतैःसिंदूरकैः सहशिशोर हिपूतनांच॥ २१०॥ ॥अथोपानयोगः॥ ॥कुलकप त्ररसांजनसाधितंत्रिफलयाघृतमाशुपिबन्सदा॥ शिशुर लंबहुधाप्यहिपूतनांविजयतेजयतेऽन्यव्रणान्यपि॥ ११॥ ॥ ॥अथवृषणकच्छू॥ ॥स्नानात्सादनमत्रयोनकुरु तेनरस्यैववायन्मलंसंश्लिष्टंवृषणोस्थितांकफयुतांद्रक्कास सुत्यांभिषक्॥ १२॥ जयेद्वृषणकच्छूंतामहिपूतनयासमम्॥ सर्ज्जसैंधवकुष्ठानांसर्षपैःसहपेषितम्॥ १३॥ उद्वर्त नंप्रकुर्वीतयोनृकच्छूप्रशांतये॥ नीलभृंगदलैर्दूर्वाचिल्लीभि र्लेपनंचरेत्॥ १४॥ ॥अथखालित्यम्॥ ॥रोमकूपानु गंशोणितंपित्तदोषेणचेन्मूर्छितंच्यावयेत्॥ रोमसंघस्र क्तः कफोवैनदारोममार्गावरोधंप्रकुर्यादलम्॥ २१५॥ ना न्यरोमोद्गमोजायतेवैतदाचेंद्रलुप्तंचखालित्यरुत्येजगुः॥ तिक्तकारेवतस्यापिपत्रोद्भवैरंबुभिर्मर्दनाद्रोमसंघोद्भवः॥ १६ ॥ अन्यः ॥ तिलगोक्षुरयोश्चपुष्पकाणिमधुनाहव्यसमेन

पेषितानि ॥ शिरसी हविलेपनानि सद्यो बहुकेशानसितप्रभा-
न्प्रकुर्युः ॥ १७ ॥ गजदंतमषीरसांजनपयसाच्छागीभवेनपे-
षितम् ॥ यदि लिप्ततरं तलेपिवा बहुरोम्णां प्रकरं तनोतितनम् ॥
१८ ॥ यष्टींदीवरगोस्तनी घृतपयस्तैलैः प्रलेपः शिरः कुर्यात्
केशविराजिकुंतलजुषं खालित्यमुद्धृत्य च ॥ तैलं जातिकरंज
दारुणहृयोशल्यग्निसंपाचितं भृंगद्रावयुतं च तुत्थमसकृल्लेपा-
त्खालित्यनुत् ॥ १९ ॥ अथ योगाः ॥ अन्यः ॥ ॥ स्नुह्यर्क
दुग्धैर्हलिनीरसैश्च विशालिकाभृंगरसैरुजानाम् ॥ मूत्रैर्गवी-
नामपि गुंजिकाभिस्तैलं ससिद्धार्थवचाविषैर्वा ॥ २२० ॥ पक्वंस्र
तैलं शिरसि प्रलिप्तमिंद्रप्रलुप्तं विनिहंति सद्यः ॥ केशोद्गमं संवि
दधाति मूर्द्धि हलस्य तद्वच्च तलेपिलेपात् ॥ २१ ॥ ॥ अथ दा
रुणकम् ॥ ॥ दारुणा कंडुराकेशभूमिर्यदा जायते चापि रू
क्षा तदा शास्त्रकैर्दारुणम् ॥ माक्षिके लेपनान्नस्यति प्रायस
श्चान्यमन्नप्रतीकारमस्य ब्रुवे ॥ २२ ॥ प्रियालुबीजानि रसालु
मज्जा पथ्याद्वयं कुष्ठपयांसि माषाः ॥ मूर्ध्नि प्रलेपान् मधुकेन
सार्द्धं घ्नंतीव रोगं खलु दारुणाख्यम् ॥ २३ ॥ अन्यः ॥ ॥
गुंजाफलैर्भृंगरसैश्च सिद्धं तैलं शिरस्याशु विलिप्तमात्रम् ॥ कं
डूं कपालीमपि दारुणं च सद्यो निहन्याद्दथ कुष्ठरोगम् ॥ २४ ॥
अथान्नौषधीसेवनजनितगुदादिशैथिल्यसम्पादितनैरुज्यकर
णविधिः ॥ धारोष्णदुग्धं ससितं कणाढ्यं नित्यं पिबंत्येव श-
तायुषस्ते ॥ सपुनर्भूत्वप्रमदाजनानां काम्या वदान्या विरुजो
भवंति ॥ २२५ ॥ पलाशवृंतानि समाक्षिकानि कर्षप्रमाणानि

समाशितानि॥ नरंशतायुष्यमरोगभाजमसंशयंसंविदध-
तिसद्यः॥ २२८॥ लवणार्द्रकभक्षणंप्रभाते दिनमध्येसशित
स्यमाक्षिकस्य॥ अशनंचदिनांतकेयवान्यास्त्वगदत्वंविदधा
तिकोष्णनीरैः॥ २२७॥ शतवीर्यामलकीसुधालतामधुयष्टी
त्रिफलात्रिकंटकैः॥ सतुमंससितंविचूर्णितंसघृतंपुष्टिकरं
पयोषितम्॥ २२८॥ गोक्षुरामलसुधाघृतखंडैःसेवितैश्च
सुरजानिसमूह्याः॥ श्यामकेशनवयौवनबाल्यैःसभृताःस
ततंप्रभवंति॥ २२९॥ तिलभृंगदलाशनमत्तिघृतैर्नयनाद्धित
स्यसमस्तगदान्॥ बलवीर्यंचयंकुरुतेघनामलकानिसदा-
विदधातिपरम्॥ २३०॥ शतैकवारान्परिधाव्यधान्याच्चूर्णैर
सैस्तत्फलजैर्घृतेन॥ सितापयोभिःसततंनराणांसमस्ततां
यौवनमादधाति॥ २३१॥ श्रीतातपादाब्जसमाज्ञयायाकृ
ताचिकित्साक्रमकल्पवल्ली॥ श्रीकाशिनाथेनगतश्चतस्यां-
मुखादिरोगास्तबकःसमाप्तिम्॥ २३२॥ ॥इतिश्रीगुरुच
रणाब्जचंचरीकचतुर्वेदिकाशिनाथकृतचिकित्साक्रमकल्प
वल्ल्यांमुखरोगादिनानागदचिकित्साधिकारस्तबकः॥ ॥
॥ ॥ ॥ अथकर्णनिदानचिकित्साधिकारः॥ ॥
समीरणःश्रुतिगतोऽन्यथाचरन्समंततः॥ यथास्वमंवदोष-
कैश्चकर्णशूलकारकः॥ १॥ श्रुतिस्रोतःसंस्थेक्वचिदपिसमी
रेतुमनुजःशृणोत्येवंनानाविधरवगणांस्तत्रचश्रुतौ॥ क्वचि
द्भेरीशंखप्रतिमविरुतान्मर्दलसमात्सकर्णोद्योनादःश्रुतिम
धिगतोरोगइतिच॥ २॥ श्रोतोयदाशब्दवहंचवायुरावृत्यति

छत्यथवाकफेन॥ युक्तस्तुबाधिर्यकरश्चपित्तयुक्तःस्वनंवे-
णुसमंकरोति॥३॥ क्ष्वेडंकरोत्येवहिकर्णयोस्तत्कर्णादिकं
क्ष्वेडमुदाहरंति॥ मूर्द्धाभिताघादतिमज्जनाद्वाजलातिपाता
दथविद्रधेश्च॥ पूयंश्रवेत्कर्णतएववायोःपीडासमेतःश्रवणः
श्रवसः॥ वायुःकफेनःश्रुतिगःकरोतिकंडूंत्तथापित्तविशेषि
तश्च॥५॥ श्लेष्मैवपूयःकथितोभिषग्भिर्यदाव्रजेच्चंद्रवता
सपूयः॥ विलापितोघ्राणमुखंप्रपन्नः सकर्णकाद्यःप्रतिना-
हरोगः॥६॥ करोतिसोयंसिरसोर्द्धभेदंतद्वंधयोगादथजंत-
वश्च॥ जायंतएवंखलुमक्षिकाश्चसृजंत्यपत्यानिचकर्णरोधा
त्॥७॥ कृमिश्रुतिरोगवरमितिवैद्यः॥ जगदुस्तंतेश्रुतिगत
शास्त्राः॥८॥ यदापतंगाशतपद्मकाद्याःस्रोतःश्रुतःसंप्रविशं
तितत्र॥ कुर्वंतिपीडामरतिंतथावाभृतंश्रुतोव्याकुलतांनयंति
॥९॥ निस्तुद्यतेकर्णमथोत्रकीटेच्चलत्यलंपफरतामुपैति॥स्यं
देरुजःसंप्रभवंतितीव्राःक्षतानिघातादथविद्रधेश्च॥१०॥वा
तादिभिर्लोहितपीतरक्तमस्त्रंस्रवेत्तोदविदाहयुक्तः॥ धूमा
यनेनापिचचोषवान्सोयथास्वमस्त्रःपवपाकतश्च॥११॥तथा
बुनापूरितकर्णदेशात्पूपंसपूतिश्रवतीस्वदोषात्॥ सपूयक
र्णःकथितोथशोथदोषोर्बुदाशांसिचतत्रकर्णे॥१२॥नादो
रुजःकर्णतलस्यशोथःस्त्रावस्तथावाश्रवणंचवातात्॥रागः
सशोथोदरणःसदाहंपीतःसपूयस्यश्रवस्यपित्तात्॥१३॥
कंडूतिवैश्रुत्यपुनस्थिरत्वंशोथस्यशुक्लस्यस्युतिर्विशेषात्॥-
स्निग्धस्यपूयस्यचनीरुजत्वंकफप्रभूतेश्रुतिजेगदस्युः॥१४॥

नानास्वरूपाणिचसन्निपातान्नानाविधस्रावविवर्णताभिः॥ पूयस्यनित्यंश्रुतिजेगदेहिदोषाधिकेवर्णसमंश्रुतिश्च॥१५॥ ॥इतिकर्णरोगनिदानम्॥ ॥अथप्रतीकारः॥ ॥कर्णस्यशूलेप्यथकर्णनादेबाधिर्यकेक्ष्वेदगदेतथैव॥ सामान्यमेवौषधिमाहुरार्यास्निग्धैस्तुवातस्यशरैश्चतैलैः॥१६॥ स्विन्नंश्रुतिंचाशुविरेचयेद्वाभुक्तोपरिष्टादपिसर्पिरत्र॥ योज्यंचवस्तिश्चतथैवतत्रब्रुवेचिकित्सांश्रुतिरोगहंत्रीम्॥१७॥ अश्वत्थस्यदलवहुंबहुपत्रंहि॥ तैलागारकयुक्तंश्रवणागतंहि॥१८॥ तद्भूततैलंनियमाद्धरातिरुजांहि॥ श्रुतिगतमखिलंरोगंमुनिगदितंहि॥१९॥ अन्यः॥ रविजपीतदलंघृतलेपितदहनतप्तमलंश्रुतिपीडितम्॥ श्रुतिगमंकदलार्कमदोदलंश्रुतिजशूलरुजोबहुधाहरेत्॥२०॥ सेहुंडपत्रंघृतसंप्रलिप्तंमाठेनप्रतप्तंथवणेनिषिक्तम्॥ आपीड्यतस्यद्रवमेकमेवकर्णार्तिशूलानिनिहंतिसद्यः॥२१॥ अन्यः॥ सशब्देतिपीडान्वितेक्लेदयुक्तेश्रुतौध्यागमूत्रेणकवोष्णंतथा॥ युतंसैंधवेनप्रभातेनिषिक्तंश्रुतिक्लेदशब्दार्तिशूलानिहंति॥२२॥ ॥अथतैलम्॥ ॥हिंगुलुतुरुजगन्धकृततैलंसार्षपंश्रवणगंश्रवणस्य॥ विश्रुतिंश्वमथश्रुतिशूलंहंतिसत्वरमदोभिषजोक्तम्॥२३॥ ॥इतिहिंगुतैलम्॥ ॥अपामार्गजक्षारतोयेणतद्वदपामार्गकल्केनतैलंतिलानाम्॥ श्रुतंकर्णनादापहंपूरणाच्चश्रुतौचाथबाधिर्यसंधारिकारि॥२४॥ सिद्धंसार्षपतैलंभूलतयाहि॥ रुजमपिकर्णप्रगतंहरतिसदाहि॥२५॥ शंबूकजपलाश्सिद्धकटुतै

लंहि ॥ श्रुतिनाडीमुपहन्याच्छ्रवणगतं हि ॥ २६ ॥ सूर्यावर्त कमूलकार्द्रकभवंनीरंचसोभांजनंयुक्तमाक्षिकतैलसैंधवभ-वैरंशैः पृथग्वापृथक् ॥ एकैकंश्रुतिजातशूलमखिलंहन्त्येवसं पूरणाद्योगानांचचतुष्टयंनिगदितंश्रीवैद्यभूपैरलम् ॥ २७ ॥ ॥ ॥ इतिचत्वारोयोगाः ॥ ॥ तैलंसिद्धंकांजिकक्षौद्रलुंगनी रैर्मूत्रैर्वाथक्षौद्रार्द्रनीरैः ॥ मोचाशिग्रोर्मूलजद्रावसिद्धंतैलंहृद्यं कर्णशूलापहारी ॥ २८ ॥ योगद्वयम् ॥ बिल्वगराजजलैर्गो विमूत्रैः सिद्धमलंवरतैलमदोषा ॥ कर्णगतंखलुकर्णविदारहं तितथाश्रुतिशूलउभेवा ॥ २९ ॥ ॥ इतिबिल्वादितैलम् ॥ ॥ हिंगुदारुभिसिमूलकभस्मभूर्यवल्कलजभस्मजमेघैः ॥ सिंधुजी रकवचांजनरंभामूलनीरमधुसक्तजगद्भिः ॥ ३० ॥ मातुलुंगरस मूलकभस्मसिंगुकोद्भिदयुतैरपितैलम् ॥ स्वर्जिकाविडयुतंवि-निहंतिश्रूशिरःश्रवणाशकुलिशूलम् ॥ ३१ ॥ प्रस्थंजंबीरनीरं पलमितमगधायुग्मकंमाक्षिकंच सम्यक्संमिश्रयित्वाध्नतच रक्तभंगेभाजनेधान्यराशौ ॥ मासैकंमुद्रयित्वाभवतिसमरसं संधितंवैद्यभूपैः शुक्तंमध्वादिकंतन्निगदितमुदितंयत्रतत्रैव योज्यम् ॥ ३२ ॥ ॥ इतिमधुशुक्तम् ॥ ॥ अथान्ययोगः ॥ ॥ अष्टांगुलान्येकचपंचमूलान्महत्तराचापिनिगृह्यतानि ॥ कांडा निचक्षौद्रनिवेष्टितानितैलेनसंसिच्यप्रदीपितानि ॥ ३३ ॥ यत्तै लमेतच्च्यवतेतदेवश्रुतौनिषिक्तंश्रुतिजाननेकान् ॥ बाधिर्यपी डास्त्रवपूतिश्रावान्सद्योनिहन्याद्भिषजोवदंति ॥ ३४ ॥ अन्यः सामुद्रफेणंअवसिप्रपिष्टंक्षिप्तंसदाश्रावमलंनिहंति ॥ पूयस्य

सांद्रत्वमपाकरोतिव्रणंतथारोहयतिप्रकामम्॥३५॥ अन्यः ॥ गोमूत्रघृष्टंविषमेवशस्तंश्रोत्रेनिषिक्तंविनिहंतिसद्यः॥ कंडूतिपीडाश्रवश्रोत्रशूलान्गांगंयथावारिसमस्तपापान्॥३६॥ इतिविषयोगः ॥रुजोमार्दवंस्याच्चयावद्धिकर्णेद्रवंस्थापयेत्तावदेवप्रकामम्॥तथावेदनेस्थापयेद्वाशतैकंसतेलंतुतन्मात्रिकाणांसदैव॥३७॥ ॥अथमात्राप्रमाणम्॥ ॥यावच्चापिलघुद्व्याक्षरसमुच्चारश्चसंपाद्यतेसामात्रामितिरत्रवैद्यभणितासर्वैर्निधेयाहृदि॥३८॥ रास्नैरंडकराशनामरतरून्विश्वौषधंगुग्गुलुंसर्वंगादलरांविमृद्यमलिमान्खादेच्चवातामया॥ प्रायःकर्णशिरोगदीव्रणगदीनाडीव्रणीसर्वदा॥३९॥ अन्यः ॥ गोमूत्रंतुकवोष्णमेवसततंकर्णस्यप्रक्षालनं पथ्यातिंदुकलोध्रधात्रिविकसाक्वाथःश्रुतिःक्षालनम्॥ ४०॥ जातीपत्ररसैश्चतैलमथवासिद्धंचनारीपयःकर्णाक्षिसमलंरसांजनयुतंकर्णस्यपूतिप्रणुत्॥ हिंगुत्रागददारुविश्वपटुभिःसतैलंवरीछागजैर्मूत्रैःसिद्धमलंतथानिगदितंयोगत्रयंपंडितैः॥४१॥ योगत्रयम् ॥चूर्णंगंधकशिलारजनीभिरष्टमांशतुलितैःकटुतैलम्॥ स्वर्णपत्ररसतुल्यफलानिसिद्धमंतिचिरजःश्रुतिनाडीम्॥४२॥ वार्ताकधूमोथकटुंचतैलंगोमूत्रपिष्टंचतथैवतालम्॥निक्षिप्तमात्रंश्रवणेकृमीणांयोगत्रयंनाशमलंप्रकुर्यात्॥४३॥ ॥इतिकृमिकर्णयोगत्रयम्॥ ॥सूर्यावर्तरसंरसंचकलिनीमूलोद्भवंवारसंतंडुलसदलोद्भवंकृमिगदेकर्णेसमुत्स्येतथा॥ चूर्णंत्र्यूषणसंभवांश्चवसिवाक्षिसंविनाशंनयेज्जालक्

तुचयस्यकर्णकुहराद्योगयुगंचैकशः॥४४॥ ॥इतिकृमिकर्मयोगचतुष्कम्॥ ॥हलिरविभक्तारसमपिकर्णे कृमिगणहत्यैनिर्हिततमंवा॥४५॥ कर्णजलौकाकृमिकारंडाकीटपिपीलिप्रमुखाःसर्वे॥ श्रीहरिभक्ताकलिनीनीरेश्रोतसिपूर्णेनिपतंत्येते॥४६॥ ॥अथकर्णमलहरणोपायः॥ ॥प्रक्लेद्यगूथंश्रवणेस्कतैलैःक्लिन्नंशलाकावडिशेनविद्वान्॥जह्यात्समंताद्धिनिवार्यश्रोत्रममीणिसूर्येन्मुखमादिलोक्य॥४७॥ स्नेहस्वेदौश्रुतेःपूर्वंप्रतिनाहेप्रयोजयेत्॥ दिस्केशिरसःपश्चात्क्रियांप्रोक्तांसमाचरेत्॥४८॥ बालस्यवृद्धस्यचिरोत्थितंयद्बाधिर्यरोगंश्रवणस्यहेयम्॥ शीतांबुपानानिचमैथुनंचसर्वैःप्रहेयानिगदेश्रुतेश्च॥४९॥ ॥इतिकर्णरोगोपक्रमः॥ ॥अथकर्णपालीरोगोपक्रमः॥ ॥अथोसौकुमार्य्याच्चवाबालकानांचिरोत्सृष्टकर्णेनुविद्धेपिसद्यः॥ विसंवर्द्धितेकर्णशोथश्चपालीमभिव्याप्यसंजायतेबालिकानाम्॥५०॥ सरुजःपरिपोटकाच्चसःपरिपोटोरुणमेचकोभवेत्॥ श्रुतिपालिगदश्चदश्चदारुणोजनितस्तच्चश्रसौतुवायुना॥५१॥ गुरुतराभरणाद्पिघर्षणाद्पिचताड्यतःश्रुतिपालिका॥ दवथुपाकरुजान्वितलोहितश्चपथुनाकलितापिचमेचका॥५२॥ रुधिरपित्तभवःसगदोमतः खलुसमुत्पतितोपिचनामतः॥ अथवलाच्छ्रुतिवर्द्धनमाचरेच्छ्रवणपालिगतस्तकसदागतिः॥५३॥ प्रकुरुतेपरिगृह्यकफबलाच्छ्रपथुमस्यसवेदनमेवच॥ निगदितःकफपित्तविकारतः सचतथोन्मथितोपिचनामतः॥५४॥ ॥इत्युन्मान्थः॥ ॥दुर्विद्धकर्णेप्यतिवर्ध

मानेशोथोभवेद्दाहरुजान्वितश्च ॥ सपाककण्डूसहितस्त्रिजातो नाम्नागदो दुःखविवर्द्धनश्च ॥ ५५ ॥ सकफलोहितजंतुगणाय दाप्रकुपितायदिसर्षपसन्निभाः ॥ दवथुकंडुतिकासहिताध्रुवं श्रवणपालिगताः पिडिकास्तदा ॥ ५६ ॥ कर्णपालींलिहेयुस्तेविसर्पइवतेतदा ॥ परिलेहीतिरोगोयंश्रुतेःपालींगतोयथा ॥ ५७ ॥ ॥ इतिकर्णपालीरोगनिदानम् ॥ ॥ कर्णवायुजरुजःशमनार्थंस्वेदनादिविधिरुक्तउक्तःयः ॥ तंप्रकुर्यश्रुतिपालिविवृद्धिंकारयेच्चबहुधाशनकैर्वा ॥ ५८ ॥ नवतालमुलीमहिषीभवेननवनीतकेनापिचधान्यराशौ ॥ मुनिवासराण्येवचसंधितेचश्रुतिपालिकांवर्द्धयतिप्रकामम् ॥ ५९ ॥ ॥ अन्यः ॥ सवाजिगंधानिलशत्रुबीजकैः शतावरीद्रावपयःसमन्वितम् ॥ शतंतुतैलंविनिलेपनेनवाश्रुतेश्चपालीमतिपोषयेत्खलु ॥ ६० ॥ सपोटकास्त्वंचविधायसम्यग्नीत्वाक्षयंचाप्यथचंद्रिकांतु ॥ कल्केनतैलंखलुजीवनीयवर्गस्यचानूपपलस्यनीरैः ॥ ६१ ॥ संपाच्यसम्यक्परिलेपितंद्राक्कर्णस्यपालीपरिवर्द्धयेच्च ॥ संपोषयेदाभरणस्यभारंसोढुंप्रकुर्यादृढतांविशेषात् ॥ ६२ ॥ स्त्रुग्दीतलेपैश्चजलौकिकाभिरुत्पातकर्णादिगदंचिकित्सेत् ॥ जीवंतिकावाकुचिकास्वगंधासिध्मकेरारुत्थाहलिनीरसैश्च ॥ ६३ ॥ गोधावसाकंकवसासमेतंपक्वंतयोन्मंथहरंचतैलम् ॥ अभ्यंजनान्यच्छ्रुतिपालिकानामुपक्रमश्चापियथास्वमेव ॥ ६४ ॥ ॥ इतिकर्णपाल्युपक्रमः ॥ ॥ श्रीतातपादाज्ञसमाज्ञयाऽयाकृताचिकित्साक्रमकल्पवल्ली ॥ श्रीकाशिनाथेनगतश्च

तस्यांश्रुतेश्चिकित्सास्तबकः समाप्तिम्॥ ॥ ॥ ॥
अथातोनासारोगोपक्रमंव्याख्यास्यामः॥ ॥तत्रतावत्तन्निदानम्॥ ॥ आनह्यतेधूप्यतियत्रनासाशुष्क्यतेवापिविशुष्यतेच॥ नवेत्तिगंधंचरसंमनुष्यस्तंपीनसंवातकफप्रभूतम्॥१॥ प्रदुष्टदोषैर्गलतालुमूलेसंमूर्च्छितोनिस्सरतिस्तुयस्य॥ नासामुखाभ्यामतिपूतिरेतितंपूतिनस्यंगदमामनंति॥२॥ घ्राणेस्थितपित्तमसृग्विषियत्र पाकंप्रकुर्यात्सतुघ्राणपाकः॥ सक्लेदशोथावपिदग्धदोषैर्ललाटदेशेभिहितस्यजंतोः॥३॥ नासास्रवेत्तैरस्रजंसपूयंतंरक्तपूयस्रवमाहुरार्याः॥ घ्राणंगतोमर्मणितत्रयातोनीलःसशब्दोमुखनासिकाभ्याम्॥ ४॥ निरेतियत्राशुकफानुयातोगदंतमाहुः क्षवथुंसुवैद्याः॥ विनिर्घ्नतस्तीक्ष्णकटुश्चमूत्रमादित्यसंमुख्यरजः प्रसंगात्॥५॥ उद्घाविलेनाथकरुणास्थिमर्मण्यागंतुकोन्यःक्षवथुःप्रदिष्टः॥ नासाविलाभ्यामनिवारितोपिसांद्रोविदग्धोलवणोनिरेति॥ कफस्तुपूर्वाशिरसीहसंस्थःसूर्यप्रतप्तोभ्रंशनुवदंति॥६॥ घ्राणेसदाहेयदिधूमतुल्योवायुश्चनिःसारमुपैतियत्र॥ दीप्तेचनासारवलुयस्यतस्यदीप्ताख्यरोगंकथयंतिवैद्याः॥ ७॥ कफःसवातोयदिसन्निरुध्यादुच्छ्वासमार्गंप्रतिनाहरोगः॥ घनःसितःपीततनुःस्रवेच्चघ्राणात्तुदोषोयदिस्रावयुक्तः॥ ८॥ यदाघ्राणस्रोतःपचनमखिलंगादमपिचप्रकुर्यात्सशोष्यश्वसनमुभयंकृच्छ्रवशगम्॥ अथोर्ध्वंयस्मिन्वानिखिलभेषजस्त्वंनिजगदुर्गदंनासाशोषंत्रिभवमथवाशोगदमपि॥ ९॥ शालक्युसि

ह्यान्नविचारविद्भिः सर्वात्मकंचार्बुदमुक्तमत्र॥ शिरोगुरुत्वंविरु
न्धिश्चनासाश्रवःस्वरश्चापितनुर्विशेषात्॥ १०॥ क्षामस्तुनिष्ठी
वतियत्रवारोश्लेष्मापिसंमज्जतिपीनसंतम्॥ आमजमुर्यत्र
घनश्चपक्वमपीनसपक्वमथोब्रवीमि॥ ११॥ स्वरस्यवर्णस्यचय
श्शर्हिरूपीनसंपक्वमुदाहरंति॥ अजीर्णसंधारणधूलिभाष्य
क्रोधर्तुवैषम्यशिरोभितापैः॥ १२॥ दिवाशयाज्जागरणाच्चरा
त्रौश्चापांतशीतांबुनिषेवणाद्वा॥ स्त्रियोतिसंगादतिबाष्पशो
कैःसस्त्यानदोषैःप्रबलः सिरस्थः॥ १३॥ वायुःप्रतिश्यायगदं
प्रकुर्यान्नासास्रवस्तत्रनिरंतरंस्यात्॥ अथोगता मूर्द्धनिवात
पूर्वाःसर्वैःपृथग्वारुधिरंचनस्तः॥ १४॥ प्रवर्तयंतिस्वनिदानकोप
मासाद्यवैद्याः प्रवदंतितंच॥ रक्तप्रतिश्यायगदंचतस्याप्युप
द्रवान्मीन सजंब्रुवेथ॥ १५॥ क्षवथुःशिरसोतिपूर्णताच परिह
ष्टाखिलरोमतांगमर्दः॥ अपरेचपृथग्विधास्युरस्तनुजस्तंभप्र
तिश्ययाभियुक्ताः॥ १६॥ गलतालुरदच्छदेषुशोषो प्यथतोदः
खलुशंखयोश्चनित्यम्॥ स्वरघातश्चथोनिलात्मकेपिप्रभवेच्चा
पिगदस्तुघ्राणजेहि॥ १७॥ उष्णःसपीतःस्रवताहिनित्यंघ्रा
णात्वलःस्रावश्चलंचपित्ते॥ कृशोतिपांडुःप्रभवेत्प्रतप्तःसोष्णः
सधूमाग्निवमीनरःस्यात्॥ १८॥ श्वेतंसपांडुत्वश्रवेन्मुहुश्चकफ
हिनासासतुशङ्कवर्णः॥ शूनाक्षिकोगौरवयुक्शिरोस्यताल्वोष्ठ
मूर्द्धागलकंडुरश्च॥ १९॥ भूत्वाभूत्वावाप्रतिस्यायरोगोयस्मा
कस्मात्सन्निवृत्तिंसमेति॥ पक्वोपक्वःसर्वलिंगस्त्रिदोषाज्ज्ञेयोवै
द्यैःपीनसःसत्वजातः॥ २०॥ नासाक्लेदश्चापिशोषःपुनश्चयस्य

कस्मान्नत्थने:ऽनस्यतेच॥श्वासोच्छ्वासेर्यत्र दुर्गंधिरेनिगंधंस
म्यग्वेत्तिनोकृच्छ्रमाहुः॥२१॥प्रवर्तनेघ्राणत एवरक्तंस्त्रावस्त
थालोहितलोचनस्य॥यस्याप्युरोधानरुजोतितीव्रारुच्छ्वास
गंधोनचवेत्तिगंधम्॥२२॥तंरक्तजंवाथवदंतिवैद्यारोगंप्रति
श्यायमलंतथाच॥सर्वप्रतिश्यायगदाश्चिरस्थात्यसाध्यतायां
तिविशेषसृष्टाः॥२३॥मूर्छंतिचान्नेच कृमिप्रवेकास्निग्धार्णव
श्वेतसितातिरक्ताः॥नानाविधादोषचयानुकूलाःशिरोगदेज
तुभवेसमानाः॥२४॥बाधिर्यमूकत्वविलोचनोत्थान्गदान्प्र
कुर्युर्विविधांस्तथान्ये॥सादंचकासांश्चविवृद्धमानास्तेजंतवःपी
नससंप्रभूताः॥२५॥अर्बुदानिसकलान्यपिशोथानर्शसाम
पिसमस्तगदाये॥रक्तपित्तमपिघ्राणगदेत्रसंभवंतिनिजगदे
थचिकित्साम्॥२६॥सर्वेषुपीनसगदेषुविवातगेहेकुर्यात्त
थैवशिरसःपरिमर्दनानि॥तैलादिभिश्चकटुकाम्लरसप्रभोज्यं
संस्वेदनानियमनानिघृताशनानि॥२७॥ प्रतीकारः ॥पं
चाग्निसंस्कृतपयोप्यथवाभ यांग्निसर्पिर्गुडाश्वरसकागजयूष
मेव॥ सेव्यंचपीनसगदेदधिसोषणंवानित्यंगुडेनगदितंवर
वैद्यभूपैः॥२८॥पथ्यंचगोधूमघृतप्रयुक्तंशस्तंतथात्रैवदधि
प्रयोगम्॥संजातमात्रेगुडसंयुतंतुमारीचचूर्णेनदधिप्रसेवे
त्॥२९॥ प्र० ॥कटुकत्रितयाम्लवेतसानलतालीसकति
त्तिडीत्वचाम्॥श्चुदिजीरकचव्युसंयुतंसगुडंपीनसपाचनंर
जः॥३०॥कट्फलत्रिकटुकत्रिफलानांपुष्करांघ्रिशटिकामधु
कानाम्॥भार्ङ्गिकासितमदुप्रयुतानांश्टंगिकासमहरेणुभि

रेव॥ चूर्णं पत्रञ्च कषायमथासां मूत्रमूर्च्छितमथागदितं वा॥
३१॥ विस्वरत्वमनिलत्रयकोपान्श्वासकासकफजान्विनिहं
ति॥ वाहलीमकृगदस्वरभेदं पीतमान्नमनिलं सकफं तु॥ हंति
चापितमकंचविशेषात्पीनसं च गदमाशु निहंति॥३२॥ ॥
इति कट्फलादिचूर्णं॥ क्वाथश्च ॥ स्नेहस्वेदौ छर्दनं संस-
नं च कार्यं सम्यक्पीनसे पूपनस्ये॥ उष्णं तोयं धूमपानं ह्रिनं च तीक्ष्णं भक्तं यत्कफघ्नं तदन्नम्॥३३॥ कुलत्थमुद्गादकिजाश्च जूषाः
ससैंधवा व्योषसमन्विताश्च॥ वार्ताकशाकं च सदा निषेव्यमपी
नसे श्लेष्महरं समस्तम्॥३४॥ कलिंगवाहीचमरीचकृष्णाजंतु
घ्नलाक्षासुरसोग्रगंधाः॥ सकट्फलाः शिग्रुयुताश्च पिष्टास्त्व
पीनसे वाप्यवपीडनार्याः॥३५॥ ॥अथ स्नेहनस्यम्॥ ॥
पाठानिशायुग्मकणासजातीदलैश्च मूर्वासमदंतिनीभिः॥ तैः
लं प्रसिद्धं बहुधा प्रयोगान्नस्यस्य वा पीनसरोगहारी॥३६॥
अन्यः ॥ सर्जोदुंबुरवीरवत्सकभवैस्त्वग्भिः समं पाचितैः
क्वाथैर्धावनतोथवाश्रुतजलैः कल्कैश्च तासामपि॥ सिद्धन-
स्यविधानतो घृतमपि घ्राणस्य पाकं हरेन्मिश्रं गुग्गुलुनाक-
पित्थकघृतैर्धूमः क्षवध्वंसनः॥३७॥ त्रयोयोगाः ॥ना
सावनाहेतु घृतं गवीनां शोषे च तस्याः ससितं पयो वा॥ पिबे
च्च तद्वत्खलु नासिकायाः स्रावे तु तीक्ष्णौषधिनस्यमेकम्॥
३८॥ ॥अथ प्रतिश्यायप्रतीकारः॥ ॥ प्रायः प्रतिश्या
यगदे प्रकुर्यान्निर्वातगेहस्थितिमत्र मूर्ध्नः॥ प्रवेष्टनं चोष्णत
रैश्च वस्त्रैः पिबेच्च धूमं खलु वक्ष्यमाणम्॥३९॥ जंतुघ्नवाल्हीं

कमनःशिलानांवचापटुभ्यांचपुरेणसार्द्धम्॥ धूमंप्रतिश्या
यगदेपिशस्त्यैपिबेत्प्रतिश्याशमनंविशेषात्॥ ४०॥नवसादर
समकलिकाचूर्णमिदंहि॥ गुंजेकंनाशीकलितंघ्राणगदंहि॥
४१॥ अन्यत् ॥सोम्रंचूर्णंवस्त्रेबद्धमलंहि॥ घ्राणाघ्रातं
सततंहरतिगदंहि॥४२॥ कारवीवस्त्रबद्धावाघ्राणाघ्रातांचन
स्यवत्॥ प्रतिश्यायशिरोरोगान्नाशयेच्चैवनित्यशः॥४३॥ ॥
अथचूर्णम्॥ ॥शटीव्योषधात्रीभवंचूर्णमेकंगुडेनापियुक्तं
सहव्यंनराणाम्॥अभुक्तंप्रतिश्याहरंपार्श्वशूलंनिहंत्येवहृद्
हृस्तिशूलानिसद्यः॥४४॥ ॥अथचित्रहरीतकी॥ ॥कृ
शानुमूलस्यशतंपलानांशतंपलानांचगडूचिकायाः॥ धात्रीफ
लानामपिपंचमूल्याशतंशतंचापितथापलानाम्॥ ४५॥स
क्षुःसमेतंत्रिविलंचतुर्भिर्द्रोणैर्जलानांशतपादशेषम्॥दत्वा
गुडस्यैकतुलाचपथ्याढकेनपक्काश्रृतशीतलेस्मिन्॥४६॥
क्षिप्त्वाचप्रस्थार्द्धकमाक्षिकस्यत्रिगंधकत्र्यूषणापट्पलानि॥
जवाग्रजःस्यार्द्धपलंतथैवदत्वाप्रभुंजीतरसायनस्तत्॥ ४७॥
शोषेप्रतिश्यायगदेकफोत्थक्षीणेप्रवृत्तेचमलेनिषेव्यम्॥उर
क्षतक्षीणनरेऽग्निसादेकफप्रभूतेषुशिरोगदेषु॥ ४८॥ हि
क्काभिभूतेवमथौचचित्रहरीतकीयंगदिताभिषग्भिः॥यथाब
लंनित्यनिषेवितव्यारसायिनीरोगगणप्रहंत्री॥४९॥ ॥
इतिचित्रहरीतकी॥ ॥हिंगूग्रगंधाकुटजप्रसूनरुक्तीक्ष्णगं
धासुपुनर्नवाभिः॥ विडंगलाक्षात्रिकटुप्रयुक्तैःसकट्फलंगोज
लसिद्धतैलम्॥ ५०॥ सुसार्षपञ्चस्यविधिप्रपीतंनासामयाना

मखिलार्त्तिहृत्यै ॥ हिंग्वादितैलंनिखिलैरुदारैर्वैद्यैःप्रगीतंब
हुधास्वतंत्रे ॥ ५१ ॥ श्रीतानपादाब्जसमाज्ञयाया कृताचिकित्सा
क्रमकल्पवल्ली ॥ श्रीकाशिनाथेनगतश्चतस्यांनासाचिकित्सा-
स्तबकः समाप्तिम् ॥ ५२ ॥ ॥ इतिश्रीगुरुचरणाब्जचंचरीक
चतुर्वेदीकाशिनाथकृतचिकित्साक्रमकल्पवल्यांनासारोगपीनस
चिकित्साफलितस्तबकः ॥ ॥ ॥ ॥ अथनेत्ररोग-
निदानचिकित्सा ॥ ॥ तत्रतावत्तन्निदानम् ॥ ॥ जनस्योष्ण
तप्तस्यचांबुप्रवेशात्तथादूरतश्चेक्षणात्स्वप्नतोपि ॥ दिवाचानि-
शाजागरात्स्वेदतश्चरजोधूमसंसेवनाच्छर्दिघातात् ॥ १ ॥ अ
थोवानिच्छर्दिप्रसंगान्निशायांद्रवान्नाशनाद्वातविड्मूत्ररोधात्
॥ प्रसक्तातिसंरोदनात्शोकतःकोपतोमूर्द्धजानाभितापान्तथा
वा ॥ २ ॥ ऋतूनांविपर्यासतोथोक्षयाच्चातिवामाप्रसंगातिघाता-
श्रुरोधैः ॥ अथोसूक्ष्मलक्ष्याणिवापश्यतांवैवराणांतुनेत्रेषुदो
षाविकारान् ॥ ३ ॥ समुत्पादयंतीत्यमत्रैववालान्तथाप्लुतःश्लो
। अभिष्यदमेवंचतुर्द्धाक्षिरोगान्स्वयंजायमा
नस्त्वनेकान्प्रकुर्यात् ॥ ४ ॥ तदनुस्तंभनरोमहर्षतात्यपिपारु
ष्यशिरोपतापता ॥ दृशिसंकोचविरूक्षताश्रुणःशिशिरत्वंप्रभ
वंतिवातजे ॥ ५ ॥ भवेतांयदादाहपाकौचनेत्रेतथाशीतलेच्छा
दिधूमायनञ्च ॥ तयोष्णाश्रुतापीततावाप्यसेकोभवेत्पित्तजा
तेक्षिरोगेनराणाम् ॥ ६ ॥ उष्णाभिलाषोगुरुताक्षिकण्डूशोथा
वनाह्वावतिशीतभावाः ॥ स्रावोश्रुणःपिच्छिलरेवयत्रतंनेत्ररो
गंकफजंवदंति ॥ ७ ॥ अश्रुस्रावोलोहितत्वंचनेत्रेराज्यस्तद्द

क्तवर्णाःसमंतात्॥ अन्यत्सर्वेयत्रपित्तेनतुल्यमाहुर्वैद्यारक्त
जंनेत्ररोगम्॥८॥अत्यर्थमुत्पाद्यतएवयद्भिर्मथ्यतेनेत्रमलं
सिरोर्द्धम्॥ सलक्षणैस्तुल्यतमाधिमंथाभवंत्यभिष्यंदगदो
द्भवान्ये॥९॥श्लेष्माधिमंथोमुनिरात्रितोथरक्ताधिमंथोभवबक्त्र
रात्रात्॥षड्रात्रितोवातभवःप्रहन्याद्दृष्टिंकुपथ्याचरणाच्चपैत्तः
१०॥सद्योथ्यलंवेसमुदीर्णवर्त्मसरागशोथान्वितनेत्रयुक्तम्॥
संघर्षनिस्तोदशिवाश्रुबाधैरामंवदेन्नेत्रगदंविपश्चित्॥११॥क
ण्डूसमेताल्परुजोश्रुकोपशांतिःप्रसन्नत्वमथोक्षिमार्गे॥संपक्व
दोषंनयनामयंतंजगुःपुराणाजनकादयोन्ये॥१२॥कंडूपदेहा
श्रुयुतःप्रपक्वमुदुंबराभःपरिपच्यतेयः॥सरंभवान्नेत्रगदस्त्रिदो
षजातःसपाकःप्रवदंतिवैद्याः॥१३॥यदाशोथहीनानिलिंगानि
नेत्रप्रपाकेत्वशोथोद्भवेसंभवंति॥ तदोपेक्षणाद्वातजाताधिम
न्यःप्रकर्षेणचासादयत्येवरुग्भिः॥१४॥ असाध्यएवं तु हताः
धिमंथोनाम्नाभिषग्भिःपरिकीर्तितःसः॥ यत्रानुवेल्लवभ्रुवौ
तुनेत्रेपर्येतवायुर्वहरुक्समेतः॥१५॥ उक्तोगदोवातविपर्य
योयत्तत्कोणितंयत्रचरूक्षवर्त्म॥ पारुष्ययुक्ताविलदर्शनंच
संदृश्यतेदारणमत्रशुष्कम्॥१६॥ अक्षिप्रपाकंव्रजतिप्रका
ममथोपियस्यश्रुतिगश्चवातः॥ शिरोक्षिमन्याहनुगोन्यतोवा
कुर्याद्रुजंसोन्यतएववातः॥१७॥अपेक्षोहितातन्नश्यावनराणां
समस्ताक्षिकिंवातथापच्यतेहि॥ सदाहंचशोथेनयुक्तंतदानु
भवेत्स्रावमम्लेनवैचाम्लतोपि॥१८॥ अरुजःसरुजोथवाक्षिरा
ज्योयदिताम्राश्चमुहुर्मुहुर्विरक्ताः॥ प्रवदंतिभिषग्वराश्चनेत्रे

रुजमुत्पालमलंशिरःपरम् ॥१९॥ उपेक्षितःक्वापिगदोनरा-
णांमोहाच्छिरोत्पातश्रसौपृथक्च ॥ शिराप्रहर्षःप्रतिजायतेत्र
तांम्राभमच्छंचस्त्रवन्नपश्येत् ॥२०॥ ॥इतिसर्वगताः॥ ॥
रूपंमग्नंकृष्णमध्येचसूच्याहिन्द्रंयदृत्तदृद्देवप्रभाति ॥उष्णा-
श्रावंचेत्स्त्रवेत्सव्रणांतनशक्यंप्रोक्तंवैद्यभूपैःस्वतंत्रैः ॥२१॥ न
दृक्समीपेप्रभवेन्नगादंस्त्रवेदृथोवेदनयाविहीनम् ॥ नच्छुक्रयु
ग्मंभिषजोवदंतिसाध्यंभवेत्क्वापिकदाचिदेव ॥२२॥ सस्पंदं
चोषयुक्तंशशिदरधवलकुंदपुष्पावभासमाकाशाभ्रप्रकाशंत
नुविशदवरंचाव्रणंसाध्यमेतत् ॥ गंभीरंदीर्घकालप्रभवबहु
तरंकृच्छ्रसाध्यंचशक्रंविच्छिन्नंमध्यदेशेपललपरिवृतंदृष्टि
नाशप्रकारि ॥ २३॥ नंद्वसूक्ष्मैःशिराभिस्त्वलमपिचिरजंहि-
त्वचोरंतरक्तंहेयंशक्रंचवैद्यैर्नयनगदहरप्राप्तविद्यानवद्यैः॥
यत्रोष्णोवाम्यपातःप्रभवतिपिडिकामुद्गतुल्याचनेत्रेहेयंप-
त्रेणातुल्यंप्रभवतिनितरांतित्तिरस्येवशक्रम् ॥२४॥ असित
मंडलमेवसमंततोयदिभवेद्वरुद्धमदोदरैः॥ सकलदोषचयै
र्नयनस्ययत्निगदितंखलुपाकमिदंत्यजेत् ॥२५॥ अजापुरी
षताभ्रमोरुजान्वितश्चलोहितःस्रलोहितःस्रपिच्छिलोऽजका
दिजातमुच्यते ॥२६॥ ॥इतिकृष्णजाः॥ ॥दोषोयदाद्य
पटलेप्रविश्यदृष्ट्यंतरेचेत्स्थिरतामुपैति ॥ अव्यक्तरूपाणिकदा-
चिदेवसंपश्यतीतिभवदंतिवैद्याः॥ २७॥ दृष्टिर्भृशंविव्हलता
मुपैतिदोषोद्वितीयेपटलेप्रविष्टे॥ पश्यत्यवश्यंसनुमाक्षिकाणां
जालानितद्वमशकान्मरीचीन् ॥ २८॥पारिपूवान्कुंडलमंड-

रूपाणित्वध्माणिवावर्षतमाशिपश्येत्॥ दूरस्थितान्येवतथानि-
केचसमीपगानूदूरचरानूप्रपश्येत्॥ २९॥ दृष्टिस्तुवागौरववि-
भ्रमेणानसूचिपाशंबहुयत्ततोपि ॥पश्यंतत्चाधोर्ध्वमलंप्रपश्ये-
द्दोषेतृतीयेपटलेगतेच॥ ३०॥ महंतिरूपाणिच्चवस्त्रसंधेरा-
च्छादितान्येवहिपश्यतीव॥ कर्णाक्षिनासारहितानितानिजा-
नातितद्वद्विक्कितानितत्र॥ ३१॥ दोषेवलीयस्यपिदृष्टिरेवयथ-
थास्वमस्यप्रविरच्यतेच॥ आधोस्थितेन्तस्थमदूरभाजंदूरंप्र
पश्येदथचोपरिस्थे॥ ३२॥ नैवप्रपश्येद्थपार्श्वसंस्थे पार्श्वस्थि
तंपश्यतिनैवतद्वत्॥ समंततःसंस्थितदोषसंधेरूपाणिप
श्येदिवसंकुलानि॥ ३३॥ दृष्टेस्तुमध्यस्थितदोषसंधेमहं
तिरूपाणिलघूनियद्वत्॥ द्विधास्थितेपश्यतिवाद्विधेवाप्यने
कधास्थेत्वथवाप्यनेकान्॥ ३४॥ दोषेचतिर्यग्विमतेचदृष्टावे
कंद्विधापश्यतियश्चयत्र॥ नवेद्यभूपास्तिमिरंवदंतिरुणद्धिदृ
ष्टिंपटलेचतुर्थे॥ ३५॥ तल्लिंगनाशेवततःप्रभूतेनचातिरूढे
त्तुमहागदेपि॥ नक्षत्रताररविचंद्रविद्युत्तेजांसिभ्राजिष्णुत
रांश्चपश्येत्॥ ३६॥ यत्रांतरिंद्रेसर्वलिंगनाशस्तुनीलिका
काचउदाहृतोत्र॥ वातेनरूपाण्यथवाविलानिभ्रमंतिविद्धा
निविलोहितानि॥ ३७॥ शक्रस्यचापंचरविंतडिच्चखद्योत-
मप्यत्रचपित्तदोषम्॥ शिखंडिनृत्यानिचनीलमन्यत्सर्वंप्रप
श्यत्यपिकाचदोषे॥ ३८॥ कफेनरूपाणिसितानिपश्येज्ज-
लप्लुतानीवचपिच्छिलानि॥ शंखाभ्रतुल्यानिचमन्यतेपिव्य
भ्रेनभःसाभ्रमिवस्वदृष्ट्या॥ ३९॥ रक्तेनरक्तानितमांसिप

श्येसितासितान्येवचमेचकानि॥ पीतानिरक्तानिविचित्रितानि त्रिदोषतःपश्यतिविप्लुतानि॥ ५०॥ दोषस्तुभूयानपिपस्यसोथ द्विधात्रिधापश्यतिचापिनित्यम्॥ न्यूनाधिकाण्यानिसमस्तरूपा एयथोपितेजांसिसमंततस्तु॥ ५१॥ पित्तंपरिप्लाविविमूर्छितंय द्रक्तस्यदृष्टावपितेजसात्र॥ पीतादिशःपश्यतिसूर्यचक्रमुद्यंतमे वप्रतिमन्यतेन्यत्॥ ५२॥ खद्योतसंघेरथविकीर्यमाणान्वृक्षा श्वतेजःसहितांस्तुयद्वत्॥ वक्ष्यामिरागेरपिषड्विधयत्तल्लिंगना शंनयनप्रभूतम्॥ ५३॥ रक्तोरागःप्रभवतिसदावातजःपित्त- तोथरागःपीतःकथितस्त्वपिचानीलवर्णस्तथैव॥ शुक्लोरागः कफजजनितोरक्तदोषाच्चरक्तश्चित्रोरागःप्रभवतिसदासन्निपात स्यदोषात्॥ ५४॥ स्थूलंकाचारुणनिभमलंमंडलंदृष्टिमध्येनी लंक्वापिप्रभवतितथाम्लायिनीरोगदोषे॥ तस्मिन्प्रायःक्वचिद- पितथादर्शनंदोषनाशात्तत्तुल्याशाह्वास्वयमपिचवासर्वरूप- स्यपुंसाम्॥ ५५॥ अरुणंपरुषंचमेचकंप्रभवेन्मंडलमेकवात जम्॥ अथकांस्यनिभंतथैवचाप्यतिपीतंतुखलुपित्तमंडलम्॥ ५६॥ शंखेंदुकुंदप्रतिमंकफेनस्यान्मंडलंस्निग्धमथोपलस्य ॥पद्मस्थपत्रस्थमिवांभसस्तुबिंदुर्यथासर्प्यतिमृज्यमाने॥ ५७॥ प्रवालपद्मोद्भवपत्रतुल्यंस्यान्मंडलंरक्तभवंतथैव॥ त्रि दोषजातेपिचलिंगनाशोविचित्रोभवेन्नेत्रगतोहिरागः॥ ५८॥ यथा स्वदोषप्रसिरुक्तसंभवानिलक्षणानियथाचपित्तदग्धदृष्टिमा नवःकफेन॥ सधूमदर्शनाह्वरानदीर्घसत्वदर्शनात्प्रकथ्यते भिषग्वरेश्चनाकुलाध्यसंयुतः॥ ५९॥ गंभीरसंज्ञांलभतेऽदृ

ष्टिः षड्लिंगनाशेषु षडेवतेस्युः॥ दृष्ट्याश्रितास्तेषुयथास्वमेव रूपाणिसूक्ष्माणिबृहंतिपश्येत्॥ ५०॥ पित्तदुष्टपरिदूषितः दृष्ट्यापीतरूपचयदर्शनमस्य॥ जायतेचखलुपित्तविदग्धदृष्टि रेवगादितोखिलवैद्यैः॥ ५१॥ पटलमत्रतृतीयमलंगतेनिशिन पश्यतिनैवादिनेकश्चित्॥ अपिचदोषचयेदिनवर्धितेनिशिचापि चकुशात्वनिमित्ततः॥ ५२॥ कफविदग्धदृशःसितदर्शनंपटलम- स्यगतेचतृतीयके॥ निशिनदर्शनमेवसमालभेद्दिवसिसूर्यगृहीत कफात्यता॥ ५३॥ ज्वरायासमूर्द्धाभितापातिशोकैस्तथाभ्यंहता दृष्टिरेवंचयस्य॥ सधूम्रांस्तथासर्वभावान्प्रपश्येदसौधूम्रदर्शी जनःसंप्रदिष्टः॥ ५४॥ तथान्हस्वदर्शीदिनेष्वेवन्हस्वस्वरूपाणिप श्येन्नचेद्रात्रिमध्ये॥ विशेषेणपित्तस्यपश्येत्प्रकामंनतस्मात्प्रभा वान्च्हस्वानिनित्यम्॥ ५५॥ विद्योतमानानकुलस्यपद्वदृष्टि र्हिदोषेणभवच्चयस्य॥ सचित्ररूपाणिदिवाप्रपश्येतद्रोगमाहु र्नकुलांध्यमेव॥ ५६॥ वायुःप्रस्तृशान्वविरूपमाशासंकुच्यमा यतरत्रःप्रयाति॥ तमक्षिरोगंसरुजंसवैद्यागंभीरकाख्यमेव दंतिसर्वे॥ ५७॥ बाह्योप्रविष्टावपिसंप्रदिष्टावकारणात्कार- णतस्तथाद्वौ॥ शिरोभितापाच्चनिमित्तभूतादुक्त्वाभिस्यंदनि दर्शनाख्यः॥ ५८॥ देवर्षिभानूरगराजदृष्ट्यागंधर्वसंदर्शनतोनि मित्तम्॥ दृष्टिर्विहन्येद्यदिलिंगनाशोजनस्यसोयंत्वनिमित्त- जातः॥ ५९॥ विस्पृष्टनेत्रामिवयत्रविभातिरागोवैदूर्यवर्णसक स्वमेवतुतत्रनेत्रे॥ व्याकीर्यतेत्रखलुसीद्यातिभिद्यन्तेपुंसोभि घातनिहताखलुसातुदृष्टिः॥ ६०॥ ॥इतिदृष्टिरोगाः॥ ॥

प्रस्तार्यर्मभस्त्रविस्तरंसितगतं श्यावंसरक्तंतथाशुक्लार्मप्रग
तंचशुक्लमसकृत्संवर्द्धमानंचिरात्॥ पद्माभंमृदुलंसितार्म
पललंपश्चीयतेवैसितेस्थूलंमृद्धधिमांसजार्मबहुलंप्रोक्तंय
कृत्संनिभम्॥ ६१॥ शुष्कस्नाय्वर्मवेद्यः प्रसरितपललंसास्थि
रंपंचमंचश्यावंमांसेनतुल्यंसलितासितपराबिंदवोयत्रसेयम्
॥शुक्तिःस्याच्छुक्लवर्णाल्पथचपरतराकृष्णवर्णाप्रदिष्टाशु
क्लेच्चैकोभवेच्चेच्छशरुधिरसमोबिंदुराहुःप्रवीरम्॥ ६२॥ ॥
इत्यर्जुनम्॥ ॥सश्लेष्मवायोश्च यदेवकोपाच्छुक्लेतयोर्च
चपलंविशेषात्॥ तसिष्टवत्पिष्टममुंवदंतिमलाक्तमादर्शमि
वपकामम्॥ ६३॥ भवतिजालनिभः कठिनःशिरानतभ्रलयदि
लोहितसंभवेः॥ अरुणएवसजालगदेःस्मृतः पुनरथान्यगदा
नुसितजान्ब्रुवे॥ ६४॥ शिरावृतायाः पिडिकाःसितास्युःसिते
सितस्येवसमीपनाड्याम्॥ कांस्याभएकोमृदुवारिबिंदुकल्पः
थबिंदुःसितगोबलाशः॥६५॥ ॥इतिबलासः॥ ॥इतिशु
क्लजाः॥ पक्वः शोथः संधिजातःसतोदः पूयस्रावीचैवपूयाल
साख्यः॥ दृष्टेःसंधौग्रंथिकापाकहीनाकंडूयुक्तानीरुजासोपना
ह्य॥ ६६॥ गत्वाश्रुमार्गेणतथात्रसंधौदोषायथास्वंबहुधाप्रकुर्युः
॥स्रावंचतंकेपिवदंतिनेत्रनाडीवसाप्यत्रचतुर्विधास्यात्॥ ६७॥
पूयंस्रवत्येवचसंधिपाकात्ससर्वजःस्रावगदःप्रदिष्टः॥ श्वेतंससा
द्रंचकफपिच्छिलंचश्लेष्मप्रकोपात्स्रवतिप्रकामम्॥ ६८॥ पीतंहरि
द्राभिमुष्णतोयप्रभूतसंधेःस्रवतीहपित्तात्॥ सास्रंचतद्रु
धिरजकोपाद्रक्तंस्रवत्येवहिसंधिमध्यात्॥ ६९॥ ताम्रातन्वीभ

वनिरुधिरास्रवैणीवृत्तिशोफाजातः संधावसितसितेदाह पाकोपपन्ना॥ स्यात्तावेद्यैर्जनकसदृशैर्नेत्ररोगोलजीसातस्या-मेवप्रभवतितथाव्यापितापूर्वलिंगैः॥ ७०॥ कृमिग्रंथिर्यस्तकम भवतिलथावर्त्मनिपर्ययथापक्ष्मण्येवंद्रुतबहुलकंडूचकृमयः ॥प्रकुर्युस्तेनानाविधिबहुतराःसंधिसितजाश्चरंतस्तेस्त्वंतर्नयन मथवादूषितवरम्॥७१॥ ॥इतिसंधिजाः॥ ॥अभ्यंतरस्या-प्यिचलोहितातुयावाह्यतोवर्त्मतएवरक्ता॥ कंडूसमेतापिडिकानि तांतसोत्संगयुक्तापृथुकंडुराच॥ ७२॥ वर्त्मांतजातापिडिकात थैवध्मातानभेदंप्रलभंतियाश्च॥ कुंभाकबीजप्रतिमास्रवास्ताःकुं भीकसंज्ञास्त्रिभवाःप्रसिद्धाः॥७३॥रक्तसर्षपनिभाःपिडिकायाः कंडुराश्चगुरुजाश्रवयुक्ताः॥ पोथकीतिकथिताःसरुजस्तानेत्रपक्ष्म णिशिशोर्बहुधाःस्युः॥७४॥स्थूलाःसूक्ष्मयुतास्वरास्तुपिडिका वर्त्मन्यलशर्करारोगःसोधमलभिषग्निगदितोवर्त्मादिवैदूषकः ॥७५॥ एर्वारुप्रभवैः प्रकाममथवाबीजैश्चतुल्यास्तयावर्त्म-स्थाःपिडिकाखरानिगदितास्तामंदपीडान्विताः॥ अर्शोवर्त्मप्र कीर्तितात्यथतयादीर्घांकुरोयःखरः स्तब्धोदारुणएवचांतरभ वोव्याधिस्तुशुष्कस्मृतः॥ ७६॥ अर्शोरोगअथोत्रदाहतुदनैर्यु क्तातुलाम्रा तुयावर्त्मन्येवसमुद्भवातुपिडिकामृदल्पपीडायु-ता॥ ज्ञेयासांजननामिकाथयदिस्वेद्वर्त्मद्रुतंचीपतेसर्ववापिडि-काभिरेवबहुभिर्वर्णान्वितैर्निश्चलैः॥ ७७॥ उक्तंतद्बहुलादिव र्त्मचतथाकंडूल्पतोदेन यःशोथेनाथतुवर्त्मजेननयननोद्घा द्यतेबंधनात्॥७८॥ मंदल्पवेदनमलंयदिवर्त्मनाम्नाक्लिन्नंसम

भवतितत्क्लिन्नवर्त्मसंज्ञम्॥ क्लिष्टादिकंत्वथपुनर्यदिपित्तयु-
ष्टरक्तं दहेद्यदिचवर्त्मजकर्दमाख्यः॥ ७९॥ यद्वाह्यतोंतश्चभ
वेद्मकामंश्यावंचशूनंयदिवर्त्मयत्र॥ तच्छ्यावववर्त्मेतिजगुःस्रुवे
द्यायेवर्त्मरोगप्रविचारदक्षाः॥ ८०॥ शूनंभवेच्चेदरुजंचवाह्ययद्व
र्त्मपुंसांत्वरसोपितद्वत्॥ प्रक्लिन्नमाहुर्भिषजःपुराणास्तत्क्लिष्ट
मप्यर्थमदस्तथाच॥ ८१॥ धौतान्यधौतानिपुनःपुनर्वापक्वानिव
र्त्मानिनरस्ययत्र॥ दत्यंतएवप्रवदंतिवैद्यास्तंक्लिन्नवर्त्मेतिगदंपु
राणाः॥ ८२॥ विमुक्तसंधिद्रुतमक्षिवर्त्मविचेष्टितंयत्रनिमीलतीत्थम्॥
उदीरितंवानहरंतकर्मवैद्यैश्चववर्त्मोत्थगदज्ञविज्ञैः॥ ८३
वर्त्मांतरस्थंविषमंचग्रंथीभूतंभवेद्यदिरुजंतथैव॥ तमर्बुदंप्राहु
रलंनुवैद्यायेवर्त्मरोगेविषमस्यविज्ञाः॥ ८४॥ निमेषणीयाश्चशि
रास्तुवायुराविश्यसंधिस्थितएवपुंसाम्॥ वर्त्मानिसंचालयतीव
मुक्तानिमेषनामाविहितोक्षिविज्ञैः॥ ८५॥ वर्त्मास्थितंयन्मृदु
रंकुरश्चसलोहितंलोहितजंतुछिन्नम्॥ विवर्धतेतत्पुनरेववैद्यै
स्तरोगदोवर्त्मभवःप्रदिष्टः॥ ८६॥ अपाकःकठिनःस्थूलोयोग्रं
थिर्वर्त्मजोरुजः॥ लगणाख्यगदःसोयंलेपितःक्वापिकीर्तितः॥
८७॥ शोथंबहिश्चेज्जनयंतिदोषास्त्वथश्चांतछिद्राणितुवर्त्मनोऽम्बु
॥ स्रवंतिनीरविषवद्विशेषात्तदुक्तमाद्यैर्विषवर्त्मसंज्ञम्॥ ८८॥
संकोचयंत्याशुमलेनदोषाद्दृग्वर्त्मद्रष्टुंनचतत्रशक्तः॥ तत्कुंचि
तंप्राहुरलंपुराणाःश्रीवैद्यभूपाजनकाद्ययोये॥ ८९॥ वातेनप-
क्ष्माणिविचालितानियदक्षिणीप्राप्यविशंतितत्र॥ दृष्टानिचा
क्षाणिमुहुरेवतानिसंरंभमेवंजनयंतिकृष्णे॥ ९०॥ सितेचभागेपि

तथैवमूलकोशात्पततीतिचपक्ष्मकोपः॥ सवर्त्मपक्ष्माशयगं चपित्तंरोमाणिवापातयतिप्रकामम्॥९१॥ तंपक्ष्मशातंनयना-मयज्ञावदंतिनाम्नाक्षिगदंस्कवैद्याः॥ अथोचिकित्सानयनामया नांगमप्यन्नुवेलक्षितलक्षणानाम्॥९२॥ ॥इतिनेत्ररोगनिदा नलक्षणानि॥ ॥अथनेत्ररोगप्रतीकारः॥ ॥अथोलंघना-लेपनस्वेदनानि शिरामोक्षणं स्वेम नेत्ररोगे॥ अभिष्यंदकेवैद्यभू पःप्रकुर्यात्क्रमादंजनाश्चोतनानि द्रुतंचा॥९३॥ येजक्षिजाकुक्षि जाश्चप्रतिश्याच्चणाः पंचभिर्लंघनः सज्वरालक्षणैः॥शुद्धिमायांति तेवैद्यभूपाजगुर्नेत्ररोगप्रतीकारदक्षाः सदा॥९४॥ नेत्रांजनंपूर-णमौषधीनांकाथार्ककल्कैरथतैलहव्यैः॥ पानंकषायस्यतथाच तुर्थादिनादभिष्यंदविपक्कदोषे॥९५॥ संपक्कदोषस्ययथोक्त मेवसमाचरेदंजनमक्षिरोगे॥ हेमंतकालेशिशिरेचमध्यादिने-जनंपूर्वदिनस्यभागे॥ तथापराह्नेथनिदाघकालेशरद्यलंचांज नमिष्यतेत्र॥वर्षास्वनभ्रेदिवसेतितमकालातिरिक्तेचसदावसंते॥९६॥ प्रागंजयित्वानयनंचवामंपश्चात्ततोदक्षिणमंजयेद्वै ॥श्लेष्मातकैर्वस्त्रभृतैश्चनेत्रजातेत्वभिष्यंदगदेमनुष्यः॥९७ काशीसयुक्तेर्जलसंप्लुतैर्वात्वाश्चोतनंतत्रमुहुर्मुहुश्च॥आश्चो तनेत्काभिफलासलोध्राकुचंदनैर्दारुनिशाप्रशस्ता॥९८॥कुमा रिकाचाहिमदेनभृष्टानिश्चोतनार्थंतुवरीसमेता॥लवंगपुत्रा पटसंभृतापिनित्यंत्वभिष्यंदरुजांनिहंति॥९९॥ससैंधवंगैरि कताक्ष्यंशैलाभयाभवकोष्णजलप्रपिष्टम्॥ आलेपनंनेत्रजरो गहारीपक्ष्मोपरिष्टादुभयत्रदत्तम्॥१००॥ वस्कदशारनिसरच्या-

विंद्वोलेखनादिष्वपिनिगदितमात्रास्नेहनारोपणेषु ॥ क्रमशश्चथतथात्राश्चोतनार्थंचतिस्त्रोनयनगदनिहत्यैवैद्यभूपैःप्रदिष्टा॥१०१॥ शोथंदाहंरागमत्युग्रकंडूक्लेदंचाक्ष्णोरश्रुजातप्रसेकम्॥हन्यात्सद्य श्चोतमार्गैर्विशेषात्तस्मात्कुर्यादेववाश्चोतनानि॥२॥जात्यापत्रैर्हव्यभृष्टैरथोत्रपत्रैस्तद्रुङ्गिर्भ्रजैर्हव्यभृष्टैः॥ प्रोक्तोवैद्यैश्चोपनाहोचनेत्ररोगान्जेतुंसर्वदायोजनीयो ॥३॥ अरुणात्रिफलामृताश्वरतंसहदार्व्यामधुनाचसंयुतं ॥नयनस्यनिषेवमानयोर्गदितंवैद्यवरैःकषायमेतत्॥४॥श्वेतलोध्रघृतभर्जितचूर्णमुष्णनीरपरगालितमेकम्॥ आक्षिसेकतश्चलनयनोत्थानाशकंसर्वसरुजोविनिहंति॥१०५॥ अरुणयापटुनार्क्ष्यजगैरिकानपिजलेनविपेष्यबहिस्तथा॥ नयनयोरुपरिहुतमेवचेयदिविलेपितमाक्षिरुजोजयेत्॥६॥ घृतभर्जितलोध्रमेकमेवजलपिष्टंपटसंभृतंचदार्व्याः॥ क्वथितेनपरिप्लुतंचनेत्रकुपितरागचयंनिहंतियोगात्॥७॥ इत्याश्चोतनम्॥ ॥ कुलकनागरमेघवरामृतामधुकपंचजराश्वर्षनिंबजम्॥ क्वथितपंबुसमीरवलाशजंतिमिरशोथरुजोश्रुस्त्रुतिंहरेत्॥८॥ वृषमेघशिवापिचुमंदश्वरतंधनदारुकमूलकधात्रियुतम्॥ दृशिरक्तकफप्रभवाश्चगदानपिहंतिनिपीतमथोक्षिरुजः॥९॥ वासातिक्ताकुलकममृतावत्सकंचंदनंचदार्वीशुंठीजलदविजयानिंबधात्रीकलिंगैः॥ क्षोणीनिंबाग्निजनकलिंजैःक्वाथयित्वादिनैकमन्येद्युस्थापितमपिदिनस्याष्टभागावशेषम्॥ ११०॥पीत्वा नृ्हीपटलतिमिरांश्चुक्रकंडूव्रणांश्चदाहपीडांनयनजनितानर्बु

र्बुश्चूर्णेपि ह्यालाम्॥ जित्वारोगान्नयनरुरवुमांगृधदृष्टिप्रभानेल-
ब्ध्वासूक्ष्मंद्रुततरमखिलंलक्ष्यमाशुप्रपश्येत्॥ १०४॥ समीरा-
रिपत्रेम्लिकापत्रकाणांद्रवंपाचितांमांपुटीकृत्यसिंधोः॥ फलेनैव
कांस्येतुसंघस्यतावन्मशीभूतमेतच्चनेत्रांजनंद्राक्॥ ५॥ निहंत्य-
क्षिनिष्यंदकंडूरुजांधिमंथानिकोपंतथामानवानां॥ अन्यत्॥
प्रत्यक्प्रसूनप्रभवाजटाथोसमाक्षिकासैंधवताप्यपिष्टा॥ ६॥
बह्निप्रकोपंहरतिप्रकामंनेत्रांजितांकज्जलसन्निभासा॥ ७॥
कृशानुमूलत्रिफलाजवानांपटोलपत्रैःसहसंनिदध्यात्॥ क्वाथं
पिबेच्चापिघृतेनरात्रौचक्षुष्यमेतत्तिमिरंनिहन्यात्॥ ८॥ धात्री
निंबकपित्थपत्ररपदैरेयेष्टीतिलैःसाधितंक्वाथंनेत्रगदेषुयोपि
सनलैलोध्रान्वितेःशीतलम्॥ नेत्रेसिक्तमसंदेवनघनासक्ते
चक्षुःकादिकंसद्योहंतिवदंतिवैद्यनिवहायेनेत्ररोगंविदुः॥ ९॥ क-
र्पूरचूर्णंत्ववटस्यदुग्धैःश्लक्ष्णंप्रघृष्टंनयनांजितंचेत्॥ दिनैःकि-
यद्भिःस्तघनोत्रनयच्छुक्रंनिहंतीतिनचित्रमत्र॥ ११०॥ किंशुक
तरुरसभावितबीजैःपुनरपिपुनरपिराजफलोत्थैः॥ अंजनमिचप
रिपेषितसत्वैर्नयतिनयनरुजमंजनमेतैः॥ नेत्रजगदमिहपांडु-
तरयन्नयनविरुनक्तमंन्तिविदूरे॥ वैद्यजनकनृपवर्णितमेत-
न्मुनिवरचरकमतेनराः॥कामम्॥ १११॥ निशिमधुघृतयुक्तंत्रिफला-
चूर्णमेकंभजतिखलुनरोयोनित्यपथ्यप्रसेवी॥ सजयतिगदजा
तंनेत्रजंसर्वमेवन्नृपइवनयसेवीशत्रुजालंसमंतात्॥ १२॥ त्रिफ-
लाघृतवारिणाप्रभातेसततंधावनमेवनेत्रयोर्यः॥ कुरुतेनभवं-
नितद्रुहायेत्वपिजानात्वयमाशुयांतितेपि॥ १३॥ हिनिशात्वपल

भयागदैरपिमांसीसहितैःप्रपेषितैः॥ इतिसौगतमंजनंचनेत्रप्रभवान्रोगचयान्निहंतिवै॥१४॥ ॥इतिसौगतंम्अंजनम्॥ ॥शिखोग्रापांचालीमरिचकलिमज्जागदशिलासपद्माजादुग्धैःपुनरपिपुनःपेषिततमा॥इयंवर्तिर्नेत्रेहरतितिमिरंकाचपटलेःधिमासंपुष्पंवानयनभवकंड्वांबुदगदाम्॥११५॥ ॥इतिचंद्रप्रभावर्तिर्जलेनांजितव्या॥ ॥मुक्ताभस्मकणासिताभ्ररसकस्रोतोंजनांभोभवैःकेकीभृंगदरोत्थनाभित्रिफलामज्जांडजापौरिभिः॥ वर्तिश्चंद्रकलाश्रुपातपटलस्रावान्हरेदंजिताकंडूमंडलशक्रकाचतिमिरान्पिल्लंचनाशंनयत्॥१६॥ पथ्याविभीतामलकीफलानांत्रिगुग्मभूभाग३।४।१मितासुमज्जा॥ तद्वर्तिनेत्रांजनतोनराणांशीघ्रासिकोपोत्थरुजोविनश्युः॥१७॥ अन्यच्च ॥सिताब्धिफेनोर्जुनमंजनेनराव्यंधतोगोमयभृष्टकृष्णा॥रसांजनंभूषणयुक्तचपिल्लंशक्रंचतापीमधुनानिहंति॥१८॥ ॥इत्यंजनचतुष्टयम्॥ ॥पुष्पांजनाजनसितोदधिफेणसर्ज्जसिंधूत्थगैरिकशिलामरिचैःसमानैः॥ संपेष्यमाक्षिकरसेननिहंतिकाचवर्त्मार्ज्जुनादिनयनोत्थगदानशेषान्॥१९॥ अन्यच्च ॥मुस्ताकुचंदनमवासकशंखपद्मसौवीरदारुरजनीमधुतुत्थकानाम्॥ अंभोधिफेणसहितंतुसकट्फलंद्राग्लोहेनिघृष्यजदयांजनमाक्षिरोगे॥१२०॥ अन्यच्च ॥अरुणामधुकोत्पलोदधिमलमांसीदर्नाभिचंदनैः॥ दलवल्कलसेव्यगैरिकागिरिकारोचनयांजनैरलम्॥२१॥नयनशोणितशक्रजलश्रवानपिचपिल्लरुजोक्षिजकंडुकाम्॥ अपहरेदथसर्वरुजोजनानयनयोर्विहितोनिहितंजनैः॥ २२॥ रसेंद्र

नागोचसमानभागावष्यंजनंतद्द्विगुणांशशीन्च ॥ तस्याष्टमांशोन-
यनामृताख्यंस्यादंजनंपेषितमाक्षिरुक्ष्॥२३॥ ॥ इतिनयनामृ-
तम्॥ ॥ तिमिरपटलकाचान्शक्रमर्माार्ज्जुनानिशमयतिनिय
तंत्रेत्रपीयूषसंज्ञम्॥ कलितमपिचनित्यंनेत्रयोः पथ्यमस्माबुद्धि
तमिहतुवैद्यैर्नेत्रनैरुज्यहेतोः॥ २४॥ अन्यत् ॥ स्निग्धपट्ट
कलिताविभीतफलस्यमज्जायुवतीपयोभिः॥ पुष्पंनिहन्याच्छ्रव
णोद्भवेननेत्रयांधताभूषणपंकमेकम्॥१२५॥ अंजनद्वयम्॥
सहिंगुद्रोणपुष्पिकारसेनचांजिताक्षिका चिरोत्थनेत्रकामलाजपी
तिमांविनाशयेत्॥१२६॥ अन्यच्च ॥ मगधात्रिफलापलंकषाः
सहलोध्रेणचसैंधवेनच॥ अपिभृंगरसेनपेषितंगुटिकाख्यंनय-
नांजनंस्मृतम्॥१२७॥ काचार्मकंडूतिमिरार्जुनानिशक्रंचहन्यादु
टिकांजनंतत्॥ स्तंद्वाम्बियोःपत्रजतुल्यमर्कनारीपयस्तुल्यतमंतयो
श्च॥२८॥ कांस्येविमर्द्यंतुदृढंचलोहदंडेनताम्रस्यपलेकमात्रम्॥
संजायतेकज्जलमेवकन्तनेत्रेञ्जितंनेत्ररुजोनिहन्यात्॥ २९॥
॥ ॥ इतिनारायणार्ज्जुनम्॥ ॥ अन्यच्च ॥ हरेणुस्रोतांजनसैंध
वानांपिधाजमूत्रेणसपिप्पलीकम्॥ नत्राध्यमक्ष्यंजितमेकवारं
सद्योनिहन्यात्रिशिजांध्यकेतुम्॥ ३०॥ ॥ अथनागार्ज्जुनीश
लाका॥ ॥ विद्राव्यनागंशतधाकृशानौनिर्वापयेत्तत्रिफलाक-
षाये॥ पुनःपुनः श्वास्यततःशलाकांविधायशक्रेनरसेनलिंपेत्
॥३१॥ नागार्जुनीसाचतयांजिताक्षःसुपर्णदृष्टिःप्रभवेन्मनुष्यः
॥ अथाधिमंथार्जुनकार्मपिछ्छगदानभिष्यंदमलंजयेत्सा ॥ ३२॥
तिमिरंनरनेत्रसंभवंचयुवतीदृङ्शिरोम्बनेत्रजंहि॥ अपिहंतित्त

समस्तनेत्ररोगाननिशंपश्यतिदिव्यचक्षुषा॥३३॥ ॥अथ शशिकलावर्तिः॥ ॥रसजशंखजनाभिशिखीपुरप्रभवसर्वसमंपटगालितम्॥ शशिकलावरनिंबुरसेनसानिगदिताक्षिगदेषुचवर्तिका॥३४॥ नयनजाश्रुश्रुतिंतिमिरामकेनयनरागमथोपिसपिल्लुकम्॥ हरतिपुष्पमसंशयमंजिनंनयनयोरनयोःखलुयुग्मकम्॥१३५॥ ॥इतिशशिकलावर्तिः॥ ॥अन्यच्च ॥शिशिरगैरिकमालतिकाभवाप्रफलिकाकलितासमलाक्षिका॥सव्रणशुक्रहराञ्जनवर्तिकारुधिरसंस्तुतिनेगहरीमता॥३६॥ ॥अन्यच्च ॥कतकफलदरोत्थवितिदुकंचस्तनजनितरसैर्निघृष्यकांस्ये॥रजतमृदुदलेश्चनेत्रशुक्रंव्रणसहितमथोनिहंतिरागम्॥३७॥रुधिरविकलहीनंनामतेनैवशुक्रजलगृहनिभृताभिःस्तद्वतंहार्यमेव॥ क्षतजनिरभवंवाशुक्रमास्तिप्रभंगंजनयतिवततस्मात्नहिनंनैवधार्यम्॥३८॥ राज्यांभोदकृष्णाविडंगमरिचैःपथ्याजमूत्रान्वितैःपथ्यानुष्णविशोषितांजनवरीनेत्रेजितास्वीभवैः॥सन्नीःशुक्रमलंजलैश्चतिमिरमध्वान्वितानाशयेन्नेत्रेयस्तलंचवारिकलिताचंद्रप्रभापिच्छरीम्॥३९॥ अयंस्थितत्रैफलकंकषायंससर्पिषंसायमकंचभुक्त्वा॥ पिबेज्जनोमासदिनैरुतथांधःपश्यत्यवश्यंप्रवदंतिवैद्याः॥१४०॥ भुक्त्वानरःपाणितलंचहस्तासवारिनेत्राबुजयोःप्रदद्यात्॥तद्वारिनित्यंतिमिराणिसद्योनिहंतिनस्यंप्रवदंतिवैद्याः॥४१॥ निशावसानेदिवसादिसंध्यानुत्थायनासाविवरेणनीरम्॥पिबत्यसम्पूर्णमतिश्चताश्च्यद्दृष्टिर्जरारोगनिवर्जितदेहाः॥४२॥ कासश्वासज्वरजरुजाकोष्टजाकुष्ठशोथानासा

कर्णाक्षिकफजशिरोरोगसंघाश्च तोस्याः॥ मूलाधातान्यगद्
गलजाव्याधयोंतेनिशाया घ्राणे जांबुप्रशमयंति वैपाननतोलिंग
पायोः॥ ४३॥ ॥अथरत्नांजनंसर्वनेत्रामयेषु॥ ॥माणि
क्यमुक्ताफलपुष्परागवैडूर्यगोमेदकविद्रुमाणाम्॥ वज्रस्यनी
लस्यचमारकस्यतांतस्यभागानिसमानितद्वत्॥ ४४॥ कस्तू
रिकापारदनागभागान्स्तुल्यांश्चसर्वैश्चसमानमेकम्॥ सौवीर
कंसर्वसमंविशोध्यसर्वंसुखल्वेपरिमर्दयेच्च॥ १४५॥ गृध्रास्थि
नीरैश्चनथाप्युलूकहग्नीरकैश्चात्रेफलाकषायैः॥ करीरसैश्चंदन
वारिभिश्चत्रह्मद्रुमूलस्यरसैस्त्रियश्च॥ ४६॥ दुग्धैस्त्रिवारंपरिभा
व्यछायाशुष्काचरत्नांजनसंज्ञिकासा॥ नीराजितानेत्रगदांस्त्रि
संध्यामपाकरोत्याशुत्वपिहुशुक्रान्॥ ४७॥ पटलतिमिरकाचा
न्स्रावकंडूतिवर्त्मप्रभवमसितरोगान्शुक्लभागप्रभूतान्॥ अप
नयतिसमस्तान्नेत्रजान्नागदोषान्खगपतिसमदृष्टिंवाधदृष्टेः प्र
कुर्यात्॥ ४८॥ ॥इतिरत्नांजनम्॥ ॥सकेतकचंदनतुत्थलाक्षा
मनःशिलाभिःसुमनःसिताच॥ रसांजनंकंजविडंगशंखनाभ्या
श्चधात्रीप्रभवैश्चबीजैः॥ ४९॥ समुद्रफेनेनफलैस्त्रुटीनांकुर्यान्
मरीचैर्मधुकैश्चवर्तिम्॥ दृष्टिप्रदाश्चीजनकोदितांतुतयांजिताक्षो
ऽक्षिगदात्प्रमुक्तः॥ १५०॥ तिमिरपटलंचशुक्तिकामपिशुक्रंच
तथैवराजिकाम्॥ अपिहंतितथार्मरागशुष्कानथवास्त्रावत्रिदोष
जानपि॥ ५१॥ ॥इतिवैदेहीवर्तिः॥ ॥अथघृतम्॥ ॥
क्वाथैश्चकल्कैस्त्रिफलाभवैश्चघृतंशृतंगोपयसामनुष्यः॥ भुक्त्वोप
रिष्टाद्यपिबेच्चसायंदृष्ट्याभवेत्सोपिखगेशतुल्यः॥ १५२॥ पलत्रि

कण्डूषणगोस्तनीनांविडंगनीलोत्पलचंदनानाम्॥ तिक्तेभपुष्याह्विनिशासमेतह्रिसारिवाणांमधुकेनसार्द्धम्॥५३॥ कर्षप्रमाणेनपृथक्पृथक्चगवांपयोभिर्द्विगुणैरसेभ्य॥ फलत्रयाणांच घृतस्यप्रस्थंसंपाचितंपीतमिदंनराणाम्॥५४॥ विसर्पकंडूतिमिरार्बुदानिस्त्रावार्मवर्मश्वयथूनितोदम्॥ सितासितस्थान्निखिलानिनेत्रप्रभूतरोगानपिकामलादीन्॥१५५॥ निहंतिस पिंस्तिमिरंविवस्वान्निवांधहृष्टिःसमदृक्प्रपश्येत्॥ नभेषजंचान्यतमंविशेषात्क्षीकश्यपाद्याः प्रवदंतिचास्मात्॥५६॥ दृष्टिप्रसादनमलंखलुमध्यमाद्यमेतद्घृतंत्रिफलयापरिसाधितंच॥ गृध्रस्यदृष्टिसमयोजनदूरदर्शीप्रायोभवेदपिनिरंतरमस्यसेवी॥५७॥ ॥ इतिमध्यत्रैफलंघृतम्॥ ॥ त्रिफलामलकीवृषामृताशतमूलास्वरसैश्चभृंगजैः॥ हविषःपरिपाचयेद्भिषक्पयसाकल्ककृतैश्चप्रस्थकम्॥५८॥ मधुकोत्पलमागधीसितामधुयष्टीवरगोस्तनीसमैः॥ अपिदुग्धधराभिपाचितंसहकंटारिकयाभिषग्वरैः॥५९॥ सकलनेत्ररुजोविनिसेवितंविजयतेत्रिफलादिमहाघृतम्॥ दृशमलंविदधातिखगाधिपप्रतिमयोजनदूरचरींसदा॥१६०॥ जीवंतिकावास्तुकमत्स्यनेत्रापुनर्नवामेघरवाणितिक्ता॥ शाकान्यचाक्षुष्करणिसर्वाण्यत्रत्यवैद्यैःपरिकीर्तितानि॥६१ माषारनालाम्लविदाहशाकसिद्धार्थकल्केहजलावगाहाः॥ क्षुद्राक्षरालोकनवेशवारमध्याशनमौनमनींद्रतक्रैः॥६२॥ सूर्यावलोकोपिचनेत्रदृष्टेर्हानिप्रकुर्युःपरिसेवितानि॥ गोधूमशालीजवतंदुलमुद्गसिंधुगोदुग्धहव्यमधुशक्रसितात्रपथ्ये॥६३॥ आ

श्चोतनं शीतलमेव कुर्यान्नेत्रे तथा चाभिहिते मनुष्यः ॥ पुनर्नवा मूलजकल्कलेपः कुचंदनेनापि च तत्र कुर्यात् ॥ ६४ ॥ स्त्रीस्तन्य-सेकान्तरतश्च कार्यो रक्तस्य मोक्षोऽक्षिगदे सरक्ते ॥ सूर्यार्घ्यदीपार्च-नदानहोमास्तन्मंत्रकाराधनविप्रपूजाः ॥ १६५ ॥ श्रीतातपादाब्ज-समाज्ञयायाकृता चिकित्साक्रमकल्पवल्ली ॥ श्रीकाशिनाथेन गत-श्चतस्यां नृदृग्चिकित्सास्तबकः समाप्तिम् ॥ १६६ ॥ ॥ इति श्री-गुरुचरणाब्जचंचरीकचतुर्वेदिकाशिनाथकृतायां चिकित्साक्रमक-ल्पवल्ल्यां नेत्रामयचिकित्साफलितस्तबकः ॥ ॥ ॥ ॥

अथोत्र शिरोरोगचिकित्सादिक्रमेण व्याख्यास्यामः ॥ ॥ तत्रता-वत्सामान्यशिरोरोगनिदानचिकित्से ॥ ॥ अप्राप्तकाले पलितं च पीडा शिरस्यलं सूर्यविवर्तकाद्यौ ॥ इत्यादयो मूर्द्धगताश्च रोगा चिकित्सितव्याश्च यथात्वदोषम् ॥ १ ॥ प्रतीकारः ॥ गदैरंड-मूलं च कांजीकपिष्टं शिरोर्त्तिं जये ल्लेपनात्स्त्रीनराणाम् ॥ तथा मो-चुकुंदप्रसूनं प्रलिप्तं शिरस्याति पीडां जयेन्नात्र चित्रम् ॥ २ ॥ ॥ अन्यः ॥ देवदारुनतविश्वभेषजैः कुष्टतैलनलदैः सकांजिकैः ॥ पेषितैः कृतशिरोविलेपनाच्छूलमाशु शिरसो विनाशयेत् ॥ ३ ॥ अन्यः ॥ सारिवोत्पलगदानि चाम्लकैः पेषितानि घृततैलविमि-श्रैः ॥ सूर्यदक्षिणविवर्तकार्द्धकौ नाशयंति परिलेपितानि वै ॥ ४ ॥ नस्यम् ॥ मदनसितया गवीपयोभिर्विनिघृष्टं नसि नस्यवद्गृही-तम् ॥ विधिनाऽनुदिते रवाविदं वै शिरसोऽर्द्धं च भिनत्ति भेदमुग्रम् ॥ ५ ॥ ॥ अथ प्रधमनम् ॥ ॥ फलमनंगभवं तिलपर्णिकाप्रभवबी-जमथोपटबीजकम् ॥ कुशदलेन च वल्कलमर्द्दकं प्रधमनं कफजे थ-

शिरोगदे ॥ ६॥ प्रलपनंनिभवंचसनंह्रिकंधमनमेतदलंपरिपे-
षितम् ॥ नसिसमाकलितंपलितंद्रुतंविजयतेगदितंप्रथितंबुधैः
॥७॥ अन्यच्च ॥ काश्मीरमाज्येनसमंचभृष्टंसशर्करंलोहितयु
क्तवाते॥ भ्रूघ्राणकर्णाक्षिशिरोर्द्धशूलेस्वेनादिरुग्ध्यादिषुनस्यमु
क्तम्॥८॥ ॥अथार्द्धभेदः॥ ॥ मूलैर्वातरिजातैस्तगरशतज
टासैंधवैर्भृंगराजैः रास्नाजीवंतिविश्वामधुककृमिहरैः साधितंछा
गिदुग्धैः॥ कृष्णातैलांतिलोत्थंनसिकलिततमंबिंदुषट्कंनराणांह
तिप्रायःशिरोत्थानखिलगदचयान्दंतकेशोत्थरोगान्॥९॥ दुग्धं
भृंगस्यनीरंजलधिपरिमितंतैलतःपाचनीयंतन्नस्यंदृष्टिवृद्धिंख
गपतिसदृशांसंविधत्तेचवाह्वोः॥ आधिक्यंपौरुषस्यप्रकटयति
भिषग्भूपगीतंस्वतंत्रेग्राह्यंतद्बिंदुपट्केनिगदितमथवानामतो-
बिंदुषट्कम्॥१०॥ युग्मम् ॥ वटप्ररोहकाशनीरजोन्वितंरुं
धालतारसैश्चचूर्णपाचितंशिरोत्थकेशरोहणम्॥ तिलोद्भवंचमे
चकैस्तिलैस्तथाचमांसिभिः स्रुसारिवाजटाकणाञ्जमाक्षिकैः
पयोयुतैः॥११॥ ॥इतितैललेपौ॥ ॥गुंजाबीजंभृंगराज-
द्रवेणपूर्वंभाव्यंपेष्यतेनैवतैलम्॥ सिद्धंतस्मिन्देवदारुत्रुटीनां
चूर्णंक्षिप्त्वासज्जटंकेशभारम्॥ १२॥ कुर्याभिस्यंलेपनात्स्त्रीन
राणांनीलांस्तदृल्लंविनान्केशभूमौ॥ १३॥ मांसीवलातामल-
कुष्ठपिष्टैःसवाकुलैर्लिप्तशिरांसिलोके॥ स्निग्धायताकुंचितनील
केशानार्योनराश्चप्रभवंतिसर्वे॥ १४॥ गुंजाफलंवृहतिकाफलजा-
तनीरैर्मूलेनहाटकभवेननिघृष्य लेपात्॥ इंद्रलुप्तमसकृद्धिनि-
हंतिकेशान्नूनंतनोतिभ्रमरप्रतिमाननेकान्॥ १५॥ नीलोत्पलेन

कलिंजदुफलस्यमज्जामाधूकवल्कलानिलैर्हयगंधकाभिः ॥ योवाप्रियंगुलतयाशिरसःप्रलेपंकुर्य्यान्नतस्यचसदैवपतंतिके शाः॥१५॥ ॥अथकेशरंजनम्॥ ॥पलत्रयंमायिफलपले कहरीतकीनामपिधात्रिकाणाम्।पलानिसमेवचरवादिरस्य- सारस्यतुल्यस्यपलंपलंच॥१६॥रक्तनीलवचाश्चपलानिदिग्भि र्मितानिचैकंनवसादरस्य।लोहस्यचूर्णस्यतथापलैकंपलंतुव र्यास्तुविडोरवेश्च॥१७॥सर्वंचभृंगद्रवसंकपिष्टंश्लक्ष्णंचिरंसं धितमत्रलोहे॥भिन्नाजनाभप्रतिमंचयानंतत्कृष्णनीरैश्चकचे षुलिप्तम्॥१८॥सम्यक्समस्तकचजालमेकीकृत्यैवबातारिज पत्रसंघैः॥आवेष्ट्यरात्रौशयनंविधायप्रातःसतैलामलकैर्वि धाय॥१९॥स्नानंचनीलालकशोभमानोमर्त्योभवेत्षोडशवा र्षिकस्य॥केशैःसमानोखिलकेशभूमिंसंशोध्यकृष्णीकरणं कचानाम्॥२०॥इतिसामान्यमुक्त्वाविशेषमुच्यते॥ ॥हशो र्दाहःकंडूस्फुरणमथवाऽऽक्षेपश्चापिवाशिरोरोगेपूर्वप्रभवतिभ वत्यैकसकलाः॥रुजस्तीव्रामूर्द्धिद्रुतमथनिशायांतुभिषजोव्र दंतोवातोत्थंदहनपव्योगादिशमितम्॥२१॥यदंगारव्रातैः श्रितमिवशिरोयत्रसहसाप्रधूम्यन्नासावाप्रभवतियथाधूमसाहि ता॥शिरस्तापःसोयंनिगदितमलंपित्तजनितेनिशायांशीताद्दो व्रजतिशमनंयत्तुबहुधा॥२२॥कफोपदिग्धंतमथोपघातेसगौ रवंचेत्कफजेत्कृकूटम्॥शूनंभवेद्यत्रतुवैद्यभूपःशिरोगदोश्ले ष्मभवंवदंति॥२३॥यःसर्वलिंगःसकलप्रभूतोरक्तात्मकःपित्त समानलिंगः॥स्पर्शासहत्वंशिरसोत्रनित्यंसंजायतेवैद्यनृपाव

दंति ॥ २४ ॥ अथरक्तवसाकफनित्यगतीनांक्षयतोपिभवेत्क्षय
शोऽथप्रवृत्तिः॥ साशिरोपिभवोप्यनिकष्टतमश्च प्रभवंतिरुजोत्रच
तीव्रतराश्च ॥ २५ ॥ असौक्षुर्दनस्वेदनैरक्तमोक्षैस्तथाधूपनैश्चा
निवर्हिंसमेति ॥ अथोतुद्यतेचातिमात्रंशिरः कृमीनांगणैर्जग्ध
मेतत्स्फुटम् ॥ २६ ॥ स्फुटत्येवयद्वच्चनासास्रवेद्वासरक्तंजलं
जंतुजंरोगमेतच्छिरः ॥ २७ ॥ सूर्योदयाद्वृद्धिमुपैतिगाढंतत्तेज
साशांतिमुपैतिशांतेः ॥ तस्यैवतेजस्यपिनेत्रयोश्च भ्रुवोरुजःसं
प्रभवंतितत्र ॥ २८ ॥ शिरोगदंसर्वभवंतमूचुःसूर्योपवृत्तंभिष
जः पुराणाः ॥ अथोनिवृत्तेचदिवाकरेन्य: श्रीसूर्यकावर्तगदप्रवृ
त्तिः ॥ २९ ॥ सवातरक्तप्रभवोनिशांतेशांतिंप्रयात्येवशिरोभिता
पः ॥ अथप्रदुष्टास्त्रयएवदोषसंपीड्यमन्यांसरुजंत्वगाढम् ॥ ३०
स्थितिंप्रकुर्युर्नयनंभ्रुशंखदेशेविशेषेणततस्तुगंडात् ॥ पार्श्वे
निकंपंसहनुग्रहंचनेत्रामयान्वाविविधांश्चतद्वत् ॥ ३१ ॥ दोषत्र
योत्थंतमनंतवातशिरोगदंवैद्यनृपावदंति ॥ अथोपिरूक्षाशम
प्राक्समीरावश्योकाध्यासनमैथुनैश्च ॥ ३२ ॥ वेगस्यसंधारणाप
कर्षद्वाव्यायामयोगैरनिलैःप्रकुप्य ॥ एकैववातःसकफोपित
द्वर्द्धंगृहीत्वाशिरसःप्रकामम् ॥ ३३ ॥ मन्याभ्रुशंखश्रुतिनेत्रभा
लार्द्धेरुजोभिश्चयथास्त्रशस्त्रैः ॥ अर्द्धावभेदःसशिरोगदःस्या
द्रूणद्धातिनूनंप्रवदंतिवैद्याः ॥ ३४ ॥ नेत्रंतथाश्रोत्रमसौनिहन्याद
र्द्धावभेदःशिरसोनराणाम् ॥ अथोत्ररक्तेनसपित्तवायुःशंखप्रदे
शेयदिमूर्छितःस्यात् ॥ ३५ ॥ तीव्रारुजोंगप्रभवंच दाहंशोथंप्र
कुर्याद्विषवत्सवेगम् ॥ गलस्यरोधंचविधायशंखोमृत्युंप्रकुर्यात्रि

दिनान्तराले॥ प्रत्याख्यायाभिदिवसमिमं जीवितंचास्यजंतोर्व्याधौशंखेशिरसिजनितेवैद्यवृन्दैर्निरुक्तं॥कुर्य्याच्चैवंसकलजनितासंम्मतेनप्रकामंशास्त्रोक्तंयद्दहरणाशिरोरोगउक्तंविदोषे॥३७॥ ॥अथैतेषांप्रतीकारः॥ ॥वातप्रभूतेशिरसोगदेचस्नेहावसेकावनलेनयुक्त्या॥सस्वेदनाधूमसमस्तवानना शान्नपानानिलयोपनाहान्॥३८॥स धान्यमासप्रभवैश्चपिंडैः कुर्य्याच्चदिक्मूलजटाकासिद्धैः॥संसेचनंवौशिरसस्तदुग्धैर्धूमं नस्यास्नेहिकमत्रयुंजीत्॥३९॥ युग्मम् ॥पानाभ्यंजनसेकवस्तिषुसदास्नेहत्रिवृत्साधितंस्नेहंचात्रबलाप्रसाधितमथोमुद्गांश्चमाषानपि॥नद्यश्चापिकुलत्थकान्निशितदारवाद्नरःकेवलान्युक्त्वाकटकोष्णहव्यनिचयेरूष्णांपिबेद्वापयः॥४०॥ पंचजटाशृतदुग्धजनस्यंदेयमथोत्रचवातशिरोर्त्ये॥५१॥ देवदारुनलदंनतुकुसभेषजेश्वरवलुकांजिकपिष्टम्॥तैलसंयुतमिदंतुशिरोर्तिंवातजांचविनिहंतिविलेपात्॥५२॥नरकर्मोर्व्सभिषगत्रकुर्याद्वातप्रकोपस्ययतोत्रभीतिः॥ अतःशिरोदभ्रसुचर्मचात्रवस्त्रंगुलंतेनाशिरोवेष्ट्यः॥५३॥ माषस्यपिष्टेनविलेपयेद्रागदधस्ततोनिश्चलमूर्द्धितैलैः॥प्रपूरयेदुष्णविधानसिद्धैर्योमार्ष्कंयाममथापितद्वत्॥५४॥ यावद्रुजोनाशमलंप्रयातिबस्तिंप्रधार्य्यःखलुतावदेव॥मन्याक्षिकर्णप्रभवागदायेकंपंचहस्तोर्दितमारुतेवै॥५५॥विनाशमायांतिचमूर्द्धिमात्राशतानिपंचैवकफेचतिष्ठेत्॥पित्तेष्टमात्राप्रमितंप्रधार्यवातेनतथादिङ्मितमेवधार्यम्॥५६॥ ॥नेत्रश्रोत्रपरिपूरणविधिरेषएवगदि

तोत्रभिषग्भिः॥ भोजनादिसमयेशिरसस्तकवास्तिरत्रमुनिभिःशि वचस्कैः॥४७॥ संमितैश्चदिवसैरवधार्यमोच्यबस्तिमथवाशिर सोहि॥ स्कंधपृष्ठगलभालमुखानासंविधायग्रहणंचशयाभ्या ॥४८॥ ततः सुखोष्णांबुनिषिक्तगात्रंशालिंतथाषष्टिकदा डिमाम्लैः॥ सजागलानूपरसैः प्रभुंजीमात्रांशिरोबस्तिविधौवि शेषात्॥४९॥ ॥इतिशिरोबस्तिः॥ ॥अथमायूरघृतम्॥ सपक्षपित्तांत्रशकृत्यदास्यविवर्जितंकेकिनमेकमेव॥ दशांघ्रि रास्नामधुकैर्बलाभिः पलत्रयोन्मानमितैः पृथक्च॥५०॥ पक्व जलेनाष्टगुणेनतस्यचतुर्थकांशप्रमितावशिष्टे॥ नीरेसमक्षीर युतेघृतस्यप्रस्थंपचेद्दामधुकोत्थकल्कैः॥५१॥ कर्णाक्षिनासा रसनास्यरोगानूर्ध्वंचजंतोः प्रभवान्निहंति॥ मायूरमेतद्घृतमुष्ण कालंत्यक्त्वावसंतेशिशिरेहिमेच॥५२॥ सेव्यंनवर्षासुनिदाघ कालेशरत्स्वपथ्यांविषभोजनत्वात्॥ उष्णोहिबर्हीतुभुजंगभो क्तायतोभिषग्भिःपरिकीर्तितंच॥५३॥ ॥इतिमायूरघृतम् ॥ ॥अथमहामायूरघृतम्॥ ॥ हंसाखुकुक्कुटशशैरपिपू र्वकल्केनासान्ध्यहव्यमथचोर्ध्वगदोपहत्यै॥ संयोजयेद्भिषगतो शिखिनासमेनदिङ्मूलकेनस्कृतेनकषायकेन॥५४॥ प्रस्थघृत स्यदशमाधुरजीवनीयवर्गौषधीभिरभिपाच्यचतुर्गुणेन॥ क्षीरे णकार्षिकमितैरपिवक्ष्यकल्कैजीवंतिकामधुककाश्मरिकुक्कु टानाम्॥५५॥ द्राक्षाफलत्रयपरूषसमंगिकाणांखर्जूरमुत्पलक मृणालविदारिकाणाम्॥ भार्ङ्गीशटीबृहतिकाविशपौष्कराणांरा स्नायवासककसेरुशतावरीणाम्॥५६॥ शृंगाटकर्षभजुगास्थि

रपर्णिपुष्णामृद्वीसुकामलच्चुटीशरमेदिकाभिः॥ साकंतु कक्षितनरैश्वघृतंमसाध्यकाकोलिकादिगणकार्षिककल्कसिद्धम्॥ ५७॥ नालात्मगुप्तासहिताश्वमेदामहादिकायाप्रथितातुनस्याः॥ कल्केनसंसाधितकेकिद्रव्यंतुहन्त्वपानेशिरसोगदंहि॥ ५८॥ पानेवस्तौनस्यकर्मण्यथोवाभ्यंगेवेद्येश्वासकासेपिसेव्यम्॥ मन्यापृष्ठग्रहेवाथशोथेयोन्यातंकेशक्रदोषेनराणाम्॥ ५९॥ वंध्याप्रयोगेप्यथचार्दितेतत् घृतंतुमायूरमिदंमहद्धि॥ आत्रेयनाम्नामुनिनाप्रगीतंवंध्यावधूनांजननंफलानाम्॥ ६०॥ ॥ इतिमहामायूरादिघृतम्॥ ॥बलाबिल्वमूलैः शृतैः क्षीरभागैश्चतुर्भिः पचेच्चापिमंडंघृतस्य॥ सुपक्वंपकुंचोन्मितंनस्यमस्यप्रदद्यात्समीरेशिरस्थोपिशक्तिम्॥ ६१॥ पित्तप्रभूतेशिरसोगदेत्वास्निग्धंविशेषेणविरेचयेद्वा॥ मृद्वीककत्रैफलजद्रवैस्तंघृतैःसदुग्धैश्चघृतैर्निषिंचेत्॥ ६२॥ सशर्करैर्दुग्धजलैःशिरश्चनिषेचयेच्चाथघृतंतथावा॥ विधारयेन्मूर्द्धिजलैश्शतैववारान् प्रधौतंसिरसोगदेहि॥ ६३॥ गर्तेषुसीतौषधिनिर्मितेषुनिमज्जनंवाशिरसोऽनुवेलम्॥ कह्लारपद्मोत्पलचंदनांबुस्पर्शैश्चशीतव्यजनानिलैश्च॥ ६४॥ संवीजयेत्पित्तशिरोगदेत्वसत्रंदनोशीरबलारुणाभिः॥ नखोत्पलाभ्यांपयसाप्रदेहोजलैःशृताभिःपरिषेचनंस्यात्॥ ६५॥ अन्यः ॥मृणालशालूकबिशोत्पलानांसचंदनानांसहकेशरेण॥ शिरःप्रदेहोमलकोत्पलाभ्यांतहन्त्विपित्तप्रभवेनराणाम्॥ ६६॥ सषष्टिकाचंदनदुग्धद्रव्यसानंतिकंनस्यविधौचसिद्धम्॥ सशर्करंवामधुकंसरास्नंपित्तोद्भवेनस्यमलंप्रदिष्टम्॥

॥६७॥ योगद्वयम् ॥ संक्षयसरवंडैरपि नंद्दुलांबुघ्राणेन पीतं विनिहंति शीघ्रम्॥ पित्तप्रभूलं शिरसोतिशूलं सिंहोयथेभं समदंस्फुरंतम्॥ ६८॥ अन्यः ॥ कुष्टं सनीलोत्पलपद्मशुंडी युक्तंप्रपिष्टं सघृतं नराणाम्॥ शिरःप्रभूतं चतथैवशूलेप्रदेहउक्तोरवलुचंदनोक्तः ॥६९॥ रक्तप्रभूते शिरसोगदेचसर्वविदध्यात् खलुपित्तवच्च॥ अन्नाशनालेपनलेपनानिपानौषधीलोहितमोक्षणानि॥ ७०॥ कफोद्भवं लंघनरुक्षलीक्ष्णंधूमावपीडैरथतीक्ष्णभोज्यैः॥ पुराणगोधूमजवान्नशष्कसमूलकैर्जीर्णघृतैःप्रलिप्य॥७१॥ जयेत्तथानस्यविधानमत्र मधूकसारैरतिसूक्ष्मपिष्टैः॥ क्षीरेणशीलेयनना अरास्नादेवद्रुमैलागुरुभिःशिरश्च॥ ७२॥ स्थौणेययुक्तैर्नलदैःप्रलिंपेद्रूक्षैस्तथोष्णैरथवान्ययोगैः॥ कृष्णाह्वशुंडीमधुकोत्पलानांशतावरीनीरजलैःप्रपिष्टम्॥ शिरःप्रलेपःशिरसोतिशूलंसद्योनिहन्यान्नहितत्रचित्रम्॥ ७३॥ यवषष्टिकयोश्चपथ्यमस्मैबलकक्षारकटुत्रिलैरथ॥ वरमुद्गकुलत्थजंरसश्चप्रतिदद्यात्खलुमात्रयाभिषक्॥ ७४॥ ॥अथतैलम्॥ ॥ उभेहरिद्रेसरलंकणाचविडंगकुष्ठौत्रिदशद्रुकाष्ठैः॥ द्राक्षारुणावेतसमूलपद्मकोशीरसौवर्चलगंधकाष्ठाः॥ ७५॥ बलातथारोहिषपल्लवाश्चसौवर्चलंवैमधुकेनसार्द्धम्॥ बिल्वप्रमाणै रखिलैरमीभिःप्रस्थप्रमाणांतिलतैलमेकम्॥ ७६॥ तैलासयोभिर्द्विगुणैः प्रपक्वंशिरोरुजंनस्यविधानयोगात्॥ श्लेष्मोद्भवंवात्रिभवंचहन्यात्तथोपजिह्वंखलुगंडमालाम्॥ ७७॥ कंठस्यशालूकगदंविदारीमुखस्यशोषंचपलस्यपाकम्॥ गलग्रहंसंचलनंरदानांहनोःप्र

कंपंविनिहंतिसद्यः॥७८॥ ॥इतिहरिद्रादितैलम्॥ ॥त्रि
दोषजेवाथशिरोगदेचकार्याक्रियावाचत्रिदोषहंत्री॥पानंचजी
र्णस्यघृतस्यवैद्यैरुक्तंतथास्मिन्बहुधाविचार्य॥७९॥ कुष्ठत्रि
कोग्रासकरदारुरास्नाक्वाथोनिशापुष्करमूलसिद्धः॥नासानिपीत
श्वशिरोर्तिमुग्रांकल्केनशुंठ्यास्त्रिभवांनिहन्यात्॥८०॥ अन्य
त् ॥संस्कृद्यदाडिमभवांकलिकांचनस्येरखंडार्द्धभागसहितांक
लितांसवैद्यः॥घ्राणेनशीर्षजशिवास्वहरांवदंतिशास्त्रप्रवीणमु
नयोबहुधाविचार्य॥८१॥ अन्यच्च ॥करंजशिग्रुप्रभवंचबीजं
सशर्करंपत्रकवल्कलाभ्याम्॥घ्राणेनपिष्टंकलितंतुनस्याच्छीर्षोत्थ
रोगेष्वखिलेषुरेवाम्॥८२॥ शुंठीगुडाभ्यामपिसिद्धहव्यं विश्वा
कणाभ्यामथसैंधवावा ॥स्तंभादिरोगेषुभुजाश्रितेषुशीर्षोर्द्ध
रोगेषुचनस्ययुग्मम्॥८३॥ ॥अथघृतम्॥ ॥मधुकेनमधू
कनागराणांसहभृंगद्रवजंतुशत्रुसिद्धम्॥घृतमाशुषडेवबिंदु
भिःप्रमितंघ्राणगतंशिरोर्तिहारि॥८४॥ क्षयप्रवृत्तेक्षयनाशका
रीकार्योविधिर्बृंहणएवसर्वः॥सर्पिर्वसावामुखजोथवस्तःपातुं
चवैद्यैर्मधुरैःशृतंच॥८५॥वातघ्नमुक्तंकृमिजेकटूनांत्रयंचनक्ता
ह्वजशिग्रुबीजैः॥मूत्रैरजानामपिनावनंस्यात्कृमिप्रणाशायवदं
तिवैद्याः॥८६॥ सूर्यावर्तेगदेचनस्यमुदितंसर्पिर्गुडैःसाधितंभक्ष्यं
हव्यसमंसिद्धमेवबहुधापूपाश्चमत्रस्फुटम्॥पानंवाघृतदुग्धयोर
थतथानस्यंतथाकल्पयेत्क्षीरेसात्रतिलान्प्रपेष्यमतिमान्कुर्यात्प्र
लेपंतथा॥८७॥ तथाजीवनीयैःप्रलेपोथनस्यंविधेयंचछागी
पयोभिःसमानैः॥द्रवैर्भृंगराजस्यधर्मप्रसक्तैःप्रकुर्यादिहार्द्धप्रभेद

स्यनाशम्॥८८॥ आर्द्धावभेदेप्रथमंविधेयास्वेदस्तथास्नेहकृतस्तनस्तु॥ सस्नेहभोज्यंचविरेचनंवाकायस्यशस्तंचैनसिधूपसेवा॥८९॥ जंतुघ्नकृष्णाश्वसिलान्प्रपेष्यप्रलेपयेन्नस्यविधानतोपि॥ अर्द्धप्रभेदेशिरसोगदेहितयोर्द्वयोस्तद्दलाशनाय॥९०
सशर्करंदुग्धमिहैवपीतंनीरंतथाशीर्षफलप्रजातम्॥ सशीतलंवारिसखंडमत्रघ्राणस्यपीतंचलयोर्घृतंवा॥९१॥ मधूप्रलिप्तंचभुनक्तियोवैसंयावमेवंचघृतेनपक्वम्॥ अपूपकान्वंचशिरोर्द्धभेदगदेथसेव्यंदिनवृद्धिजाते॥९२॥ ॥अथक्वाथः॥ ॥
शिवाधात्रीरात्रिभिदशवरभोज्यैःकलिफलत्वचाभूनिंबानांरतमपिगुडाढ्यंपिबनियः॥ कषायंभ्रूशंखप्रभवमथनेत्रार्द्धशिरजंमहाशूलंसद्योजयतिनितरांसूर्यशशिनोः॥९३॥ दार्वीनिशापद्मकनिंबकालाप्रलेपनंवैनलदेनपिष्टम्॥ शंखप्रहारिप्रथितंचशीतंजलाभिषेकोप्यथवापयोभिः॥९४॥ योगत्रयम् ॥सक्षीरवृक्षत्वग्भिःप्रपिष्टैर्लेपस्तुशंखस्यविनाशनाय॥ समाषषष्ट्यामधुकस्यचूर्णैनस्येतुरीयांशविषाणुमात्रम्॥९५॥ नवसादरमार्दशुक्तिजंयद्दुग्धाघ्राणगतंचगंधमस्य॥ अपिशीर्षरुजंचनाशयेद्वाग्वदानादिजपोयब्राह्मणार्चा॥९६॥ श्रीतातपादाञ्जेति॰॥ श्रीकाशिनाथेनगतस्यतस्याशिरश्चिकित्सास्तबकःसमाप्तिम्॥९७॥ ॥इतिश्रीमद्गुरुपादाब्जमधुव्रतचतुर्वेदिकाशिनाथकृतचिकित्साक्रमकल्पवल्ल्यांशिरोरोगचिकित्सास्तबकः॥
॥ ॥ ॥ अथशिरोरोगादनंतरंस्त्रीरोगाधिकारेतावत्प्रदररोगमाह॥ ॥तत्रतन्निदानम्॥ ॥विरुद्धान्नमद्या-

शनाद्गर्भपातादजीर्णात्तथा मैथुनस्यातियोगात्॥ अथोच्चाति
प्रानाच्चशोकाध्वनकर्षणाद्वानिभाराभिघातादिवास्वापतः॥१॥
भवेच्छु भ्रणोपित्तवातप्रकोपान्त्रिकोपाद्रोऽसृग्भवस्त्रीग-
णानाम्॥ स्वदोषानुकूलैश्चवर्णैः समेतो रुजानांगमर्दनयुक्तः
प्रकामम्॥२॥ तत्रश्लेष्मीकप्रवृत्तिपूर्वकत्वात्॥ ॥आमंच
पिच्छिलमलंतु पुलाकतोयतुल्यंचपांडुप्रदरंचकफेनचेषत्॥
पैत्तिकमाह॥ ॥पीतंशितंचरवकुनीलिमरक्तकृष्णावर्णात्म
कंचभृशवेगिरुजंतुपित्तात्॥३॥ सूक्ष्मानिलंवातभवंतथास्म
मल्पंविशेषादपिफेनिलंच॥ सतोदमेनंप्रदरंकवैद्यामांसोद-
काभंप्रवदंतिसर्वे॥४॥ ॥अथत्रिदोषजः॥ ॥क्षौद्रहव्य
हरितालसन्निभंमज्जयाचकुणपंत्रिदोषजम्॥ वर्जयेच्च प्रदरं-
भिषक्सदाभेषजंचनहितंत्रसम्मतम्॥५॥ तदुपद्रवानाह
॥ ॥अतिप्रवृत्तौप्रदरस्यकार्श्यंश्रमोथमूर्छाचमदस्तृषा
च॥ दाहप्रलापोप्यतिपांडुताचवालप्रभूताविविधागदाश्च
स्युः॥६॥ ॥असाध्यप्रदरवतीमाह॥ ॥सस्रवद्रक्तम-
पिवेगहीनमस्रावमस्मिन्प्रदरेकृशांगीम्॥ तृष्णातिदाहज्वरतो
करक्तांनारीमसाध्यांप्रवदंतिवैद्याः॥७॥ ॥अथचिकित्सा
निवृत्त्यर्थंशकद्रातवलक्षणम्॥ ॥अपिच्छिलंदाहरुजोविही
नंयत्पंचरात्रानुविबंधिनाल्पम्॥ नैवाधिकंशुद्धमिहार्तवंयत्
पूर्वंप्रवृत्त्याचप्रवृत्तिमेति॥८॥ अथास्यप्रतीकारः ॥सौ
वर्चलंजीरकनीलपद्मंसमांशिकंवैमधुकेनसार्द्धम्॥ दध्नापिवे
द्यावनितापकाममसृग्दराद्वानभवात्प्रमुच्येत्॥९॥ अन्यः॥

मधुकंससितंचकर्षयुग्मंप्रपिबत्तंदुलवारिणात्रनारी ॥ प्रदरात् प्रतिमुच्यतेनितांतद्रुतमेषाजननीभवेत्फलानाम् ॥ १० ॥ अन्यः ॥ ॥ रसांजनेनापिचतंदुलीयमूलंपिबेत्तंदुलवारिणाया ॥ समाक्षिकंसाप्रदरात्प्रमुच्येत्त्रिदोषजाताद्रुतमुक्तभोज्या ॥ ११ ॥ प्रस्थद्वयेवारिणिपाच्यमम्यकृत्त्वचोत्थशोकस्यपलाष्टशेषे ॥ नीरेश्रृतेतुल्यपयोगवीनांदुग्धावशिष्टंस्फशृतंपिबेद्वा ॥ १२ ॥ चतुष्पलंस्वाग्निबलानुकूलमसृग्दरस्याशुविनाशनाय ॥ क्षुद्रानैवास्याच्छ्वसनप्रकोपंभार्ङ्गीहरेद्धिस्वयुताप्रभुक्ता ॥ १३ ॥ युग्मम् ॥ अन्यः ॥ ॥ मूलंकुशानामपितंदुलांबुपीतंत्र्यहं हंतिविशेषतोत्र ॥ असृग्दरंवाप्यथवैमलायुफलस्यचूर्णंमधुना प्रभुक्तम् ॥ १४ ॥ ॥ योगद्वयम् ॥ अन्यः ॥ दार्वीकुचंदनकिशातदिनेशपुष्पविश्वावृषाद्रुकरसांजनवारिपक्वम् ॥ पीतंस माक्षिकमलंप्रदरंनिहंतिश्वेतासितंचसरुजंचविलासिनीनाम् ॥ १५ ॥ अन्यः ॥ दार्वीरसांजनातिलाग्निकिरातवासामुस्ताकृतोमधुयुतोयुवतीजनानाम् ॥ क्वाथोनिहन्यात्प्रदरंद्रशादिवर्णैः समेतंसरुजंनिपीतम् ॥ १६ ॥ अन्यः ॥ पद्मकत्रिपुसकोसलजातबीजमिक्षुजटयाशतमूली ॥ धौतहव्यसहिताचविदारी योनिगात्रशिरसामपिलेपात् ॥ १७ ॥ योनिशूलमथवाप्रमदानां नाशमाशुकुरुतेऽथतिलानाम् ॥ चूर्णमेकमशितंदधियुक्तंसूकरस्यचवसामधुतक्रैः ॥ १८ ॥ अयोयोगायुग्मेन ॥ अथ पिचुधारणम् ॥ ॥ समुद्रपर्णीक्षततैलजातंपिचुप्रकर्षाद्र गधासितंच ॥ असृग्गदस्यप्रतिवारणंस्याद्रसोवराहस्यकुल·

स्थमुक्तः ॥१९॥ योगद्वय ॥ अन्यः ॥ एलाद्राक्षानलदशि- शिरसारिवामत्स्यपित्तालोध्रंतद्दत्पद्मापलथामेचकंचांशकमत्या ॥ इक्षोनीरैरविलमथवायापिबेत्कामिनीसासद्योमुच्येत्प्रदरद रतोवालज्जातात्प्रकामं ॥२०॥ अन्यः ॥ समधुशर्करमेणभवंत- थापिबनियावनितारुधिरंत्वरा ॥ विजयतेप्रदरंस्वरसंचथावि बुधभोजनवह्निजमेववा ॥२१॥ त्रयोयोगाः ॥ सशर्करमाक्षिक संयुतंवावासारसंवामधुशर्कराभ्याम् ॥ स्वधालतायास्वरसंनथै ववविदारिकायाश्चवरीभववा ॥२२॥ चत्वारोयोगाः ॥ अन्यः ॥ सचंदनोशीरकनीलपद्मपतंगलाक्षाकदलीफलानाम् ॥ कल्कान- मीषांमधुकाङ्कोलवटारोहत्रिपुसीजबीजैः ॥२३॥ एर्वारुबीजैः कुक्कमैमदायाःसतंदुलांभोमधुनामपुष्यैः ॥ व्यहाद्रजःपैत्तिकमा शकनस्याःपिबेत्तथाप्यबलाप्रकामम् ॥२४॥ पयातिशांनिंचस शर्करंवाषष्ठीजगन्माक्षिकसंयुतंवा ॥ दध्येवमेकंचतथापयस्या शल्कमेवंपयसोत्पलंवा ॥२५॥ बहवोयोगाविशेषकेन ॥ अ न्यः ॥ कपित्थवेणुप्रदलानिपिष्ट्वासमानिभुक्तानिचमाक्षिकेन ॥ स्त्रीणामसृक्पूर्वदरंनिहन्यात्तीव्रंतथाचंदनकादिचूर्णम् ॥२६ ॥ योगद्वयम् ॥ कुरुंडुबीजैर्मधुकंसितंयासकचंदनंपेष्यपिबेद्धि रामा ॥ सवेदनात्साप्रदराद्विमुच्येदशोकजक्काथश्टतंपयोवा ॥ २७॥ योगद्वयम् ॥ समंगामदालोध्रनीलोत्पलानियवक्षारयु क्तानिवामानिपीय ॥ जयेल्लोहितोद्रेकवेगंत्वरावावनोवुबुरोत्थ जलंमाक्षिकेन ॥२८॥ योगद्वयम् ॥ मद्युकफलत्रयरोध्रघना- नासमधुस्रुक्वाष्ट्रिनिंबसुधाभिः ॥ कफजमसृग्दररुजमुपहन्या

दूशितमदोरजरमलवधूभिः॥ २९॥ रोहीतकस्यापिचमूलकल्क मसृग्दरेश्वेतनरेपिबेद्वा॥जलेनपिष्टामलकीजकल्कंसशर्करमा क्षिकसंयुतंच॥ ३०॥ योगद्वयम् ॥ काकजंघार्ककार्पासमूलं तंदुलवारिणा॥ एकैकंतुपिबेन्नारीपांडुप्रदरशांतये॥३१॥ इभकेशरमेवकेवलंवनितायात्रिदिनानितक्रकैः॥ प्रपिबेदपितक्रमश्नतीविजयेदाशुदरंत्वसृग्दरम्॥ ३२॥ जम्बाम्रयोरस्थियुतान्वपाठारसांजनेनाश्मभिदासमंगाः॥ अंबष्ठकीमोचरसेनपद्मजातं तथाकेशरमंबुवाहम्॥ ३३॥ रोध्रंविषागैरिकबिल्वशुंठीद्राक्षामद्रापुष्पयुताजनानि॥ कुचंदनं वत्सकमत्स्यपित्तानंतांचपुष्पेण समुद्धृतानि ॥३४॥ सर्वाणितुल्यानिविपेषितानिक्षौद्रेणनित्यंच समाशितानि॥ सतंदुलानामपिधौतनीरैरर्शस्वतीसारजोगदेषु ॥३५॥ योन्यामयेमेचकरक्तपीतसितासितेषुप्रदरेषुपेयम्॥ येबालदोषाअपितत्रतेषुपुष्यानुगंचूर्णमिदंप्रदद्यात्॥ ३६॥ आत्रेयपूजितंचूर्णमतत्पुष्यानुगंभजेत्॥ यानारीप्रदरात्तूर्णं नानावर्णात्प्रमुच्यते॥ ३७॥ ॥अथघृतानि॥ ॥ प्रस्थमशोकजवल्कलमंबुमिश्रोणमितेपरिपाचितशेषे॥ अंबुनितंदुलवारिसमानं पादमितंतुसमानमजायाः॥ ३८॥ दुग्धमथात्रचघृतमपिपयसातुल्यमदःसममेवचभांडे॥ जीवकरसमपिकेशरद्राक्षाऽशोकतरुजवरमूलवरीणाम्॥ ३९॥ जीवनगणवरयुक्तपरूषैर्मधुरवजजस्यारुणयष्टी॥ औषधिगणमिदमेयप्रियालैरर्द्धतुलितपलसंमितमानैः॥ ४०॥ तुल्यरसजसमकल्कितसर्वंमूर्छितवक्रपलत्वडसमेतम्॥ पुष्यविदितवरवासरदिनेतत् पाच्यममृतमथप्रदरग

दग्धम् ॥ ४१ ॥ निपीतंतत्सर्पिर्मृदुदहनसिद्धंसितनरं स्रक्तं पीतंवासरुजमथवानीलमसकृत् ॥ प्रवृत्तंरामानांप्रदरमनिशंहंतिकृशतांकटीशूलंकुक्षीप्रभवमथवायोनिजमलम् ॥ ४२ ॥ अरुचिमनरुमांद्यंपांडुतामंगकार्श्यंश्वसनकसनवेगैः पीडितानांजनानाम् ॥ शमयतिबहुधायुःपुष्टिवर्णप्रकारीप्रगदितमथधन्यंविष्णुनाभूलहेतोः ॥ ४३ ॥ ॥इत्यशोकादिघृतम् ॥ ॥कुमुदमुसलशालिर्वलाजटाप्रतिबलाजरयामधुयष्टिका ॥ गोधूमोयवनाप्रियइतिनिघंटः ॥ यवनभोजनधान्यशतावरीकलसिकात्रिपुसीकदलीफलैः ॥ ४४ ॥ अपिचमुद्गदलावरकाश्मरीनलदजीवकपद्मकदुग्धिका ॥ इक्षुचतालशिरश्चविदारिकासममिदंपृथगेवपलार्द्धकम् ॥ ४५ ॥ द्विगुणनीरमलंचचतुर्गुणंपयञ्चथोत्रयामपिप्रस्थकम् ॥ घृतमिदंशृतशेषमलंसदाभजतियाप्रमदाप्रदराकुलं ॥ ४६ ॥ रुधिरगुल्मगदाच्चविमुच्यतेरुधिरपित्तहलीमकगर्भजात् ॥ बहुलरूपकपित्तगदाद्ध्रुवंमदमदभ्रमदभ्रममाशयः ॥ ४७ ॥ आरोचकंजीर्णतरंज्वरंचमदभ्रमपांडुगदं निहन्ति ॥ वामात्यपुष्पातरुणीनगर्भंयाविंदतिप्राग्लभतेस्वगर्भम् ॥ ४८ ॥ अहन्यहन्येवकामिनीनांप्रीतिंप्रवृद्धिंचभुवेषुकुर्यात् ॥ स्वशीतकल्याणमिदंघृतंवरसायनंस्त्रीनरभुक्तमात्रम् ॥ ४९ ॥ ॥इतिशीतकल्याणघृतम् ॥ ॥ शतावरीप्रस्थमितद्रसेनप्रस्थंघृतंचद्विगुणैःपयोभिः ॥ पलप्रमाणैर्वसुजीवनीयैःषड्भ्यश्वदंष्ट्रैःप्रबलाबलाभिः ॥ ५० ॥ द्विपर्णिकाचंदनपद्मकानांद्विशालपर्णीत्रिदतीद्वयानाम् ॥ कस्तेरुभीषासमशर्करंचघृतंतथाकाश्मरिकाफलानाम् ॥ ५१ ॥ तथात्म

त्मगुप्ताभवकल्कयुक्तंसिद्धंप्रभुक्तंप्रदरप्रहारि।सरक्तपित्तंचस
वातरक्तंसवातपित्तंश्वसनंक्षयंच॥५२॥हिक्कांगदाहौशिरसश्च
दाहमसृग्दरंसर्वभवंतथैव॥मूत्रातिकृच्छ्रंशमयत्यवश्यंभानुर्य-
थान्धंतमउष्णरश्मिः॥५३॥ इतिशतावरीघृतम्॥ ॥यूषेण
मुद्गप्रभवेणमाषजातेनरास्नानलनागराणाम्॥सिद्धंकणामेघभ
वैश्चकल्कैर्घृतंतथासृग्दरनाशनंस्यात्॥५४॥ इतिमुद्गघृतम्॥
घृतंतथाशाल्मलिकाप्रसूननिर्याससिद्धंरवलुपृष्ठिपर्ण्या॥काश्म
र्यकल्केनचचंदनस्यरसेनकल्केनतथादरघ्नम्॥५५॥ इतिशाल्म
लीघृतम्॥ ॥काश्मर्यमुद्गावटसिंहवल्काशुडूचिकाभिर्मधुकेन
सिद्धम्॥आजेनदुग्धेनघृतंविशेषादसृग्दरंपीतमलंनिहंति॥५६॥
॥ ॥इतिप्रदरप्रतीकारः॥ ॥अथसोमरोगमाह॥ ॥निधुवने
ऽतिरतावनिताचयाश्रमयुताप्यतिशोकयुतातुया॥अपिगरस्यच
दोषयुतातथाबहुलमंत्रजपादभिचारिता॥५७॥तासांशरीरेष्वखि
लेषुचापः क्षुभ्यंतितासैवस्रवंतितासाम्॥संप्रच्युतस्थानतएवमू
त्रमार्गंव्रजंतीइचनिर्मलास्ताः॥५८॥निर्गंधशीतानिरुजाःसिताश्च
निरंतरश्चावकशातिमात्रं॥शक्नोतिकिंचिन्नचमूर्द्धिवामा॥५९॥शैथि
ल्ययुक्तामुखतालुशोषमूर्छांगसंस्तंभयुतातिरूक्षा॥भक्ष्यैःअपे
ज्ञैरपिपेययोगैर्नतृप्तिमाप्नोतिचसोमरोगे॥६०॥शरीरसंधारण-
तश्चसोमइतीरितस्तस्यचसंक्षयाद्वा॥निश्चेष्टितानिर्बलताचका-
र्श्यंसंजायतेस्त्रीतनुगंचसोमे॥६१॥ ॥अथास्यप्रतीकारः॥ ॥
पचेलिमंपक्वकदलीफलंचधात्रीफलानांस्वरसंसिवाच॥समाक्षिकंपी
तमलंतरुण्यासोमस्यसंधारणमुक्तमाद्यैः॥६२॥ अन्यः ॥माषचू

र्णामधुयष्टिकामधोशर्कराश्चपयसापिबिदार्याः॥सेवितांप्रमदया द्रुलमेतास्सोमवारिपरिधारसशीला॥ ६३॥सएवसोमःसरुजःस-मूत्रस्रावंव्रजेच्चैवमुहुर्मुहुर्यः॥तत्रत्रुटीनामपिपत्रकाणांचूर्णेनहा लामथपाययेच्च॥६४॥तस्यैतयास्यापिचसोमरोगसंस्थिमेवाप्यथ कालयोगात्॥सोयंत्वतिक्रांतदिनक्रमेणमूत्रंश्रवेद्धाबहुलंमुहुश्च ॥६५॥मूत्रातिसारंप्रवदंतिवैद्यारोगंचतंनाशकरंबलस्य॥तत्रापि-कुर्याद्थतालकंदखार्जूरमोचाफलनीरदैर्वैः॥ ६६॥पयःप्रपीतंचस मंजलानांसंधारणंस्याद्विबुधावदंति॥अथोतथातालजदाविदारी खार्जूरयुक्तामधुयष्टिकाच॥ ६७॥सशर्करामाक्षिकसंयुतापिमू-त्रातिसारस्यविनाशनाय॥पीताथखार्जूरप्रियालुकास्यातिलाश्चप र्ण्यामधुनासमेताः॥६८॥ विशेषकेवत्रयोयोगाः ॥इतिसोमरोग प्रतीकारः॥ ॥अथस्त्रीणांविद्वेषमभिधास्ये॥ तत्रासांत्रिविधोवि द्वेषः॥ तद्यथा दैवकृतः अदक्षपुरुषकृतः ॥सपत्नीकृतश्चेति॥ ॥ तत्रप्रथमतोविरुद्धनक्षत्रकृतेपरिणयादिदोषात्॥ आदितएवजा-यते॥ द्वितीयाश्चाविदग्धपुरुषसंयोगात्॥ तृतीयस्त्वौषधिकृतोऽ नियतकालएवोपजायते॥तत्रप्रथमेचिनाह्निकालिकइतितद्धोमःकर्त व्यः॥ ततःप्रदोषार्द्रभक्तयुक्त लिकाहृद्यगंधधूपादिपूजितवस्त्रा दतजावकवर्तिकादीपसहितंशुक्लपुष्पमाल्यार्चितंकुशाविद्विकाको-णेषुचतुर्वर्णध्वजयुक्तंतस्यैसंदर्शयित्वादातव्यंततःसंपद्यतेदुःखम् ॥ॐह्रूंह्रूंवशीकुरुष्वस्वाहा ॥ इतिवशीकरणमंत्रः ॥ द्वितीयेतुल-ज्जालुमूलेनागजमदान्वितेनकर्पूरमिश्रितेनांगप्रलेपनंकृत्वाप्रसिद्धनव नारीविभ्रमधूपेनकृतांगधूपः॥समालंभनादिनाक्षरंगारकावशः

स्त्रियमभिगच्छेत्कुमारीणांच भोजनमुत्सृजेत्ततः संपद्यते स्र रवम्॥ तृतीयेन्वेत्प्रियंगुमधूरशिस्वाश्वेतापुनर्नवामूलंपिष्टाछा गरुपमसालोड्य योनिंप्रक्षालयेत्॥ पिष्टेनशूकरमांसेनवितस्ति प्रमाणांपुत्तलिकांकृत्वागंधादिनासमालभ्यपूजयित्वा॰स्त्रियं मथयित्वास्मशानेरात्रिप्रहरेकेदापयेत्॥ कुमारींचभोजयेत्॥ ततः संम्पद्यतेस्ररवम्॥ ॐ अघोराक्षेप्रियजननिहूंहूंस्वाहा॥ इ तिवशीकरणमंत्रः॥ ॥इतीनागार्जुनकृतौयोगसारेस्त्रीविद्वेष चिकित्सापरिच्छेदः॥ ॥अथयोनयः॥ ॥योनिःपूर्वास्तेषमला सा कफा द्याख्याताचान्याखंडिनीचाथ दीर्घा॥ अन्याख्यातास्थू लवक्राचतुर्थीयोनिःप्रोक्तापंचमीसात्रिदोषा॥ ६९॥ मिथ्याचारा द्योषितानांप्रदुष्टं प्रायःपूर्वंयद्रजस्तेन तद्वत्॥ दोषादन्याद्बीजजा द्दैवयोगात्पंचप्रोक्ताव्यापदोयोनिसंस्थाः॥ ७०॥ इत्थंस्त्रुतादि नामतेविंशतिर्योनिव्यापदस्तासांमुख्यतयापंचयोनिलक्षणमुच्य ते॥ यायोनिरुक्ताप्रथमंचसापिसफेनिलंमुंचतिवैरजश्च॥ रुक्षे णयुक्ताप्यबलाविशेषादुदावर्तिकावर्जगदेनचान्या॥ ७१॥ ज्ञेयाच वंध्याथनिरार्तवायापरिप्लुतानित्यरुजाचभोगे॥ यावातलान्याप्य तिकर्कशासास्तब्धाचनिस्तोदशिवास्त्रयुक्ता॥ ७२॥ चतुर्योनयो वर्णितायास्तुपूर्वंभवेद्दाहजावेदनास्ताकानित्यम्॥ सदाहंचसंक्षी यतेचापियस्याः सदालोहितंलोहितस्यक्षयाच्च॥ ७३॥ सवातंतु बीजंततश्चोद्वरेद्यासदाकामिनीयामिनीसंयुतंवै॥ तथासात्तथवी जंगर्भायोर्म्यंहरिद्रासमंपीतमितियावत्॥ तथास्त्रंशिनीस्त्रंसतेक्षो भितासमंसंस्थितंसंस्थितंहंतिगर्भंचयाप्रजाचीस्मृतालोहितस्य

क्षयाद्वानदा ॥७४॥ यादाहपाकज्वरसंपरीतासपित्तलायो निरुदात्हतासा ॥ तस्यांचपित्तस्यसमानलिंगक्षयोभवेच्चैवव दंतिवैद्याः॥७५॥(अत्यत्स्त्रनी)॥ संतोषमानंदमलंचग्राम्य धर्मेणयागच्छतिकर्णिनीसा ॥ तस्याविशेषादपिकर्णिकान्या सश्लेष्मरक्तप्रभवान्वसात्र॥ ७६॥ पूर्वंतदामैथुनतोनराद्धिविरिच्यतेऽन्याप्रियथाब्रवीमि॥ अनेकधामैथुनयोगतोपिबीजंनविंदत्यरिवलंतयोःसा ॥७७॥ सश्लेष्मलापिच्छिलिताचकंडूग्रस्ता तिशीताचचतुष्पीदृ॥ आद्यासकनित्यंचकफदायोपिभवेत्पकामं भिषजोवदंति ॥७८॥ अनार्तवावास्तनिकाभवेद्यायोनिःकरस्पर्शयुतातुग्राम्ये॥ धर्मेयवान्याकथितात्वखंडामेढ्रेणदीर्घेणचसूक्ष्मरंध्राः॥७९॥ वृत्तामहायोनिरुदात्हलासायासूचिवक्त्राप्यतिसंवृताच॥ यासर्वलिंगासकलप्रकोपजाताभवेद्योनिरुदात्हतासा॥८०॥ ॥अथयोनिकंदमाह॥ ॥दिवाप्रस्वापतःक्रोधाद्व्यायामाद्धातिमैथुनात्॥नखदंतक्षताच्चापिवाताद्याःकुपितायदि॥८१॥ पूपलोहितसंकाशंलकुचस्यफलंयथा॥योनिकंदगदंघोरंजनयंतिश्रुवेथतत्॥८२॥ तद्रूपभेदमाह ॥विवर्णंस्फुटितंरुक्षंवातजंतंविनिर्दिशेत्॥ रागदाहान्वितंप्रोक्तंकंदंपित्तसमुद्भवम्॥८३॥ तिलपुष्पनिभंप्रोक्तंकंडूयुक्तंकफोद्भवम्॥ सर्वलिंगंचयत्प्रोक्तंसर्वदोषसमुद्भवं॥८४॥ ॥अथयोनिरोगाणांप्रतीकारः॥ ॥नष्टार्तवायारवलुसैवबंध्यामात्स्यमत्स्यसेवेनवदंतिनित्यम्॥ वह्नात्नवास्यात्दयकांजिकंचतिलांश्चमाषांश्चदधिप्रकामम्॥८५॥ इक्ष्वाकुकटुतुंबी ॥इक्ष्वाकुबीजं

भ्रपलागुडाभ्यां दंतीजवक्षारककिएवबीजैः॥ सोवाप्रसिद्धक्रिएवंस्तरस्य ॥ स्नुक्दक्षीरयुक्तैर्भ्रविधायवर्तिर्योनौ प्रदद्यात्कुसुम प्रवृत्त्यै॥ ८६॥ योनिप्रभूतेषुगदेषुसम्यक् कर्मप्रकुर्यात्खलुवातहारी॥ यत्स्नेहवस्त्यादिपिचुप्रकारैः संस्वेदनानीहचवातजेव ॥ ८७॥ स्निग्धांस्विन्नांद्वस्थिसंस्थापयेद्वातंहस्तिन्हांन्माधुरैर्वेशवारान्॥ निक्षिप्यैवंयोनिमध्येथनैलं ताव्ड्डार्यनोहिर्जेद्वाभिःनीसा॥ ८८॥ धनद्रव्यात्तपिचुनाकर्णिनींदोषसंस्तनीम्॥ सघृतेनचसंस्विन्नांयथास्थानंप्रवेशयेत्॥ ८९॥ वेशवारैर्विधायाथततोविंधनमाचरेत्॥ हस्तेनानुमयेज्जिव्हांवर्धयेत्सूचृतांपुनः॥ प्रवेशयेत्प्रविष्टांतामप्रविष्टांविवर्जयेत्॥ ९०॥ वचोपकुंचीवृषजीवकृष्णाजमोदिकासैंधवजावशूकैः॥ घृतेनसंभर्ज्यकृशानुनाचयुक्तैःप्रपिष्टैःसमशर्कराद्यैः॥ ९१॥ प्रसन्नयात्तैरपिभक्षितैर्वायोन्यर्शगुल्मानहृदस्यरोगान्॥ जयेत्प्रकामंप्रमदाजनानांयेयत्रदोषाःप्रभवंतितेषाम्॥ ९२॥ युग्मं ॥ कदंबमूलप्रभवंचवल्कसरवादिशागारघृतंपिबेद्वा॥ कालेविशेषाद्वनिताप्रकामंसायोनिशूलान्विजयेदजस्रम्॥ ९३॥ अन्यः ॥ एरंडनिंबाद्भवबीजमज्जावटीकृतानिंबदलाद्रवेण॥ पिष्टाभगांतर्निहितावधूनांभगोत्थशूलप्रशमंकरोति॥ ९४॥ अन्यः ॥ रास्नास्वगंधावृषसिद्धदुग्धपीतंवधूभिर्भगशूलहारी॥ पीयूषदंतीत्रिफलाकषायैर्निषेचनंवापितथागुणंस्यात्॥ ९५॥ योगद्वयम् ॥ प्रविष्टयोनेःकरववीजरायाविलेपनाभिःसरणंत्वरास्यात्॥ तद्

१ मधुरवर्गरचितामाधुराख्यैः २ कलौंजीतिलोके ३ चित्रकेण ४ करववीकलिंची

ङ्साभिः खलु मूत्रकानामभ्यञ्जनाद्वाथ भगप्रवेशः॥ ९६॥ अ
न्यः ॥ पीयूषभीरुग्निफलाशिवाभिः श्रीपर्णिकापिल्लुककीरघ्रा
णैः॥ द्राक्षापरूषैरपि काशमर्दस्थैर्यान्वितैरक्षामितैः श्रतञ्च॥
९७॥ घृतञ्च प्रस्थप्रमितं तु तेनाप्यासं स्त्रलोयोनिजवातरोगान्॥
हन्याद्भिषग्भिः प्रमदाजनानां सुक्रोथयोज्यः खलु गर्दभोयम्॥ ९८
॥ युग्मम् ॥ अन्यच्च ॥ तैलं प्रस्थमितं गवां द्विगुणितं मूत्रैः प
योभिः स्रुतं पीयूषादिसमस्तकल्कनिकरैर्युक्तं पिचौ योनिगे॥ वा
तार्तिं विनिहन्ति तत्र बहुधा संचारिते सर्वदा ॥ ९९॥ अन्यः ॥ न
तगदामरदारुपटूत्तमैर्बृहतिकाजटया श्रततैलकैः॥ पिचुरलं र-
चितो भगधारितः प्रमदयाविरुजं कुरुते भगम्॥ १००॥ सेकाभ्यं
गपिचुक्रियात्र विहिता या योनयः पित्तलावातेनापि समन्विताः-
खलु तथा तासां सदा शीतलाः॥ सर्वा पित्तहरा घृतानि बहुधा वा-
रा बलासाधितं तैलं पित्तहरं च दोषमखिलं ज्ञात्वा दरध्याः क्रियाः॥
कार्य इति शेषः॥ १०१॥ काश्मरीकटुजसाधितनीरैः सिद्ध हव्य-
मथवोत्तरबस्तेः॥ योज्यमाशु रुधिराक्कयोनेः सततिघ्नपरयोनि
हितं तम्॥ २॥ योन्यां बलाशेन च दूषितायां रूक्षोष्णयोगांश्च भि
षग्विदध्यात्॥ तैलं यवानीसुपटुप्रवृद्धं पथ्यादिसिद्धं च तथाप्यरि
ष्टम्॥ ३॥ अथ वर्तिः॥ ॥ कणोषणामाषशतावरीणां वर्ति
र्विधेया गदसैंधवाभ्याम्॥ प्रदेशिनी वात्र भगे भगस्य संशोधिनी
सर्वभिषक्प्रदिष्टा॥ ४॥ त्रिदोषयोनिप्रशमाय दोषबलाबलं वी
क्ष्य भिषक्प्रकुर्यात्॥ सर्वक्रियाः शार्ङ्गरमाश्रितानां यथा गदं न
दहनाशनं यत्॥ ५॥ एलाजंबूसमंगाश्रतममलजलं मोचिकासर्ज

युक्तं पुष्पैस्तदन्मदाया भगजमथ हरेत्पूतिगंधविशेषात्॥ ६॥
क्लेदं पैच्छिल्यमुग्रं प्रसभमुपहरेत्तत्र भनेपि प्रयुक्तं क्वाथं तैलं च
कल्कं रज अपि च तथा पूर्वरोगक्रमेण॥ ७॥ ॥ अथ पिचुः॥ ॥
लक्ष्मणां चंदनोपस्थकं द्वे निशे मुस्तकं सारिवे द्वे शरीकेशरम्॥ पद्मजं
तुम्बकं वीरणं लोध्रकं भारती मांसिका रेणुका चोत्पलम्॥ १०८॥ का
र्षिकं कार्षिकं भागमेषां मिसिर्देवदारव श्वदंष्ट्रा च यष्टीमधु॥ पाचि
तं साधितं तैलमेभिर्घृतं वा तथा योनिरोगेष्वलं पाययेत्॥ ९॥ पूर
णाल्लेपनाद्धारणाद्वा पिचोर्योनिरोगापहं भोगसौख्यप्रदम्॥ पुत्र
दं कांतिदं सत्वदं बुद्धिदं कीर्तितं शीलितं चोप्सितं वल्लभम्॥ ११०॥
विशेषकम्॥ ॥ अथ वंध्याप्रतीकारः॥ ॥ शितबलातिब
लागजकेशरं वटजशुंगमधूकसमन्वितम्॥ घृतपयोमधुभिः प्र
युतं च या पिबति सा प्यकृता स्कसुतं लभेत्॥ ११॥ अन्यः ॥ य
द्यश्वगंधाश्रततोयसिद्धपयोघृतेनैव पिबेच्च वंध्या॥ साप्यार्तव
स्नातदिवा सरुद्वा भूत्वा स गर्भा तनयं प्रसूते॥ १२॥ सवत्सैकव
र्णगवीदुग्धयुक्ता जयालक्ष्मणा या श्च कन्याप्रपिष्टा॥ स्तुप्योध्व
ता चार्तवः स्नानशुद्धो निपीता पि वंध्यागणैर्गर्भदा स्यात्॥ १३॥
अन्यः ॥ कुं० पीतपुष्पप्रियावासः प्र० ॥ कुरुंडुमूलं च मदा भवानि
पुष्पाणि तद्वच्च वटांकुराणि॥ नीलोत्पलं चापि गवी पयोभिर्वंध्या
निपीतानि सुतप्रदानि॥ १४॥ अन्यः ॥ विशदविशिखपुंखा
पिप्पलं पार्श्वपूर्वं जरणयुतसमानं पीयमानं स्वकाले॥ जनयति
बहुपुत्रान्कामिनी चातुला सा परिमिताहितमन्नं पथ्यमेवात्र
यासाम्॥ ११५॥ दरः शंखे भयेशु भेत्यमरः ॥ दरशरपुंखात्र

ह्मजमेकंदलमपिधेनोर्दुग्धनिपीतं ॥ वरस्कतमानागर्भयुताया त्वपिचययासापुत्रजनित्रि ॥१६॥ वराह्नशिंबीजरयाकपित्थ- मज्जानिपीतोभयलिंगनीजैः॥ लिंगिद्युभयलिंगिनीपचगुरिये जिलोकेप्र० ॥ बीजैर्यथासाननयान्प्रसूतेनोकन्यकांक्वापिक दाविदेकाम्॥१७॥ पुत्रजीवेतिलोके ॥ यापुत्रकामास्कल- मंजरीजन्नटेशालिंगीसमविष्णुपूर्वाम्॥ कांतानिपीत्वापिचगु र्विणीसास्कतान्प्रसूतेनस्कतांकदापि॥१८॥ अन्यः ॥कृतार्त वस्नानदिनांतरेयाप्रातःपुनस्नानमथोविधाय॥ द्विजायसंपू ज्यवस्कप्रदायभक्त्याप्रपूज्यापिचलोकनाथम्॥१९॥ श्वेताब- लायाश्वजटासमंगांकर्षप्रमाणांत्तुसितांपलैकाम्॥ समं०लजाव ती ॥पिष्टैकवर्णान्वितगोपयोभिःसवत्सकायाःप्रयतापिबे- द्या॥१२०॥ युक्तंघृतेनापिनचान्यदन्नमश्नीतकांताद्भृधिताय दैव॥ सदुग्धभक्तंप्रभजेत्समेसादिनेतथाप्यर्कस्कयोगवारे॥२१ ॥ धीरागर्भाधानकालेचांचल्यरहिता ॥ धीरास्कनाथस्यचद क्षिणस्थेभागेचपर्यंकगताप्रस्कप्य॥ तत्संगत्दृष्टास्कमनाःस्वना थंभजन्स्वगर्भेविदधातिपुत्रम्॥२२॥ चिरायुषंचाद्दियुतंस्कवि- द्यंस्कभाग्यसंपत्तिमनोहरास्यम्॥ दक्षंस्कपुष्टंनिजधर्मयुक्तं कविंमहांतंकुलजांकुरंच॥२३॥ ॥अथागर्भसंपादनम्॥ कणाविडंगटंकणैःपयःपिबेच्चयाबला॥ कृतौनगर्भधारणंकरो तिवाकदापिसा॥२४॥ अन्यः ॥अथारनालपेषितंजपाप्रसू नमंगनात्रिवार्षिकेर्गुडैऋतौपिबेन्नगर्भभागिनी ॥२५॥ अ न्यः ॥धात्रीपत्राण्युषितानिलोध्रेपिबेच्चबालाप्यथचंपकस्य

॥ तावंतिवर्षाणिनपुष्पमेषालभेद्यथाकामरतिप्रसक्ता॥२५॥ अन्यः ॥यवाक्षीजरायोनिगाधारितान्वेत्करोत्येवपुष्पस्य नाशंसदेव॥ भजेन्नारिणीजारसंघाननेकान्दधात्येवनोगर्भ मेषाकदापि॥२६॥ ॥अथगुर्विण्याश्चिकित्सा॥ ॥ह्रीवेरमुस्तातिविषैद्रजानांक्वाथंपिबेन्मोचरसान्वितानाम्॥ गर्भेविशेषाच्चकिलेन्चकुक्षीगदेतथासृग्दरकेन्चवामा॥२७॥ इतिगर्भप्रचलिते ॥ मधुकपद्मकपद्मकचंदनैर्नलदशालिदलासहितैः शृतम्॥ सकमधुखंडयुतंखलुगर्भिणीज्वरहरंगदितंप्रतिसेवितम्॥२८॥ इतिगर्भिणीज्वरे ॥ क्वाथंचंदनसारिवाकृतमलंद्राक्षाढ्यलोध्रान्वितंमिष्टशर्करयानिपीतमसकृत्प्रायस्तुयागर्भिणी॥ संयुक्ताग्रहणीगदेनचतयागर्भस्यसंरक्षणंकुर्याद्धाग्रहणीगदस्यशमनंवैद्यप्रणीतंखलम्॥१२९॥ह्रीवेरधान्यकवलारलुमेघवर्मवत्सादनीनलदलोहितचंदनानाम्॥ क्वाथोयवासकविषासममागिकानांगर्भश्रुतिज्वरदरादिषुगर्भिणीनाम्॥१३०॥ ॥अथगर्भस्रावपातयोर्निदानम्॥ ॥ग्राम्यधर्माध्वयानप्रयाणज्वरोत्पातरेकप्रहाराभिरुक्षाशनैः॥वेगसंधारणोल्लंघनैर्धावनैःपीडनाजीर्णतीक्ष्णाशनैरुष्णकैः॥३१॥ उष्णतिक्तैरसैर्भाक्षितैःस्वापतः क्वापिवैषम्यमंन्वेष्वलंवास्त्रियः॥ क्वाथपानैर्हुतंछर्दिवेगेनवाभीतियोगेनगर्भस्तुतिःपातनम्॥३२॥ चतुर्थमासावधिरेवगर्भस्त्रुतिस्तथापंचमतोथपातः॥स्त्रुतौतुरक्तस्यचबिंदवःस्युःपातेसलिंगद्रवगर्भपातः॥३३॥ विषमासनपीडनाभिघातैस्तरुलग्नंचदृढंयथाफलंतु॥ पतनीत्यमकाल

एवंगर्भोविविधैरन्यतरैश्चगर्भवत्याः॥१३४॥ ॥अथगर्भस्त्रावप्रतीकारः॥ ॥गर्भस्त्रवेच्चेद्यदिगर्भवत्यागर्भोदुतंवापिमुहुर्मुहुर्वा॥सनीलमारक्तकमुत्पलंवकल्हारशृंगांबुजमुत्पलंच॥१३५॥संशीलयेद्वाकुमुदेनसाकंस्त्रावंचगर्भस्यचदाहतर्षान्॥हृद्रामयंलोहितपित्तमूर्च्छामरोचकंछर्दिगदंजयेद्या॥३६॥ ॥अथगर्भपातोपद्रवानाह॥ ॥प्रस्त्रसमानेपिचगर्भवत्यागर्भेतुदाहेपिचपार्श्वशूलम्॥आनाहकासृग्दरमूत्रसंगसंजायतेस्याःपततिप्रकामम्॥३७॥ ॥अथगर्भस्यस्थानांतरगमनेचोपद्रवानाह॥ ॥स्थानंपरित्यज्ययदैवगर्भोस्थानांतरंयातिनदैवयस्याः॥पक्वाशयामाशययोःप्रकामंक्षोभस्तुपूर्वोक्तगदास्तदास्युः॥३८॥ तेषांप्रतीकारः ॥स्तम्भिधशीतक्रिययाजयेत्तान्दर्भस्यकाशस्यरुबूकजस्य॥त्रिकंटकस्यापिचमूलसिद्धंदुग्धंसिताभिःखलुपार्श्वशूले॥३९॥तासांखदंष्ट्रामधुकप्रयुक्तमम्लानसिद्धंचपयोनिपीतम्॥ आम्लानंदक्षिणेदेशेप्रसिद्धंपुष्पम् ॥सशर्करंवैमधुसंयुतंचसगर्भकानामथवेदनाघ्नम्॥१४०॥गृहचूल्हिमृदानवमल्लिकागिरिमृदापिरसांजनचूर्णकम्॥ अपिमदाकुक्कभेश्वसमंगिकाभवरजःखलुसर्ज्जरसेनवा४१॥ स-लजालु ॥मधुयुतंवनितापिलभेत्तुयत्तदपिगर्भयुताप्रदरापहम्॥यदिभजेत्प्रदराच्चप्रमुच्यतेह्यथचतेषुभवेत्स्थिरगर्भिका॥४२॥ युग्मेनयोगचतुष्टयम् ॥अन्यः ॥सगर्भिकासृग्दरनाशनायकसेरुशृंगाटककल्कयुक्तम्॥तथोत्पलंपेष्यपिबेद्विशेषात्पुत्रंप्रसूतेप्रदरात्प्रमुक्ता॥४३॥रसोनसौवर्च

लं हिंगुयुक्तं पक्कं पयो ना इस्नुतास गर्भा ॥ पीतास्यनाशाच्चास्थिरगर्भपुंस्त्वाकालप्रसूतारुकस्ता च भूयात् ॥ ४४ ॥ यागुर्विणी वै तृणपंचमूलकल्केन साकं तु पयः पिबेत्सा ॥ सद्यो विमुच्येदपि मूत्रसंघातत्पंचमूलं च यथात्र वक्ष्ये ॥ १४५ ॥ शालीक्षुदर्भशरकाशजमूलमुक्तं प्रायस्तृणादिवरपंचकमेतदेव ॥ दाहघ्नतर्षशमनं प्रति हंति मूत्रसंगं वरक्तसहितं प्रति हंति पित्तम् ॥ ४६ ॥ ॥ अतः परं मासान्मासिकं वक्ष्यामः ॥ ॥ देवदारु मधुकं च पयस्याशाकबीजसहितं प्रथमे च ॥ कोविदारमरुणा शतमूली मेचकानि च तिलानि द्वितीये ॥ ४७ ॥ वृक्षादनी चोत्पलसारिवा च कांताव यस्या च तृतीयमासे ॥ अथोप्यनंतादिमसारिवा च रास्ना रुपद्मा मधुकैश्च तुर्थे ॥ ४८ ॥ सक्षीरशृंगा तच या बृहत्यौ स काश्मरी पंचममासि हव्यैः ॥ वचाश्वदंष्ट्रा मधुपर्णिपर्णी पृथ्वाद्रिका शिग्रुयुता च षष्ठे ॥ ४९ ॥ शृंगाटकं पद्मजमूलद्राक्षे मासे तथा सप्तमके सगर्भा ॥ पद्यार्थकोक्ताः क्रमतश्च सर्वे कर्षप्रमाणाः शिशिरांबुपृष्टाः ॥ १५० ॥ पलैकदुग्धेन विलोडिताः स्युर्गर्भव्यथानाशन पानयोगाः ॥ मासेष्टमे चाथ कपित्थबिल्वानिर्दग्धिकाभिर्बृहती पटोलैः ॥ ५१ ॥ पलाष्टकदुग्धमलाद्विप्रस्थनीरेण सिद्धं प्रमदा सगर्भा ॥ पिबेच्च गर्भस्य च रक्षणाय नत्रस्य शूलस्य विनाशनाय ॥ ५२ ॥ प्राप्तेष्टमे मासि न गर्भवत्या कार्य्यं क्वचिन्मैथुनमेव बुद्ध्या ॥ विपद्यतेंन्तः पतते पि जीवेन्मूकोन्धकः कुब्ज अकर्णको वा ॥ ५३ ॥ मासे सगर्भा नवमे पयस्यानंता च पर्णी मधुकेन सार्द्धम् ॥ पिष्ट्वा सलाजान्सजलान्सदुग्धान् गर्भस्य संरक्षणशूलशांत्यै ॥ पिबेत्यनुदिनं ॥ ५४ ॥ शठीपय

स्यापारिसाधितंयत्क्षीरंसगर्भोदशमेनिषेवेत् ॥मारोसिताक्षीरमहौषधंवासदेवदारुमधुकंपिबेच्च॥१५५॥अथवाक्षीरश्ठिपयांक्वथितंदशमेपिबेत्॥ अथवाविश्वमधुकदेवदारुजलैःपयः॥१५६॥ योगद्वयम् ॥एकादशेद्वादशकेथमासेक्षीरीसमंगोत्पलशंकरांश्च॥गर्भस्यशूलप्रशमायवामापिबेच्चतस्यैवचरक्षणाय॥५७॥ ॥अथक्षरवप्रसवविधिः॥ ॥यापोतकीमूलककल्कयुक्तनैलेनतइच्चतिलोद्भवेन॥ योन्यंतरंवैयदिलेपयेत्साप्रसूयतेचाशुसुखेननारी॥५८॥ अन्यः ॥कृष्णावचाचापिजलेनपिष्टासैरंडतैलेनतुनाभिलेपात् ॥सुखप्रसूतिंकिलगुर्विणीनांसद्यःप्रकुर्याद्बहुपीडितानाम्॥५९॥ अन्यः ॥ इक्षुजातमपिमुत्तरमूलंस्वानुमानवरतंतुनिबद्धम्॥ कामिनीकटितटेथविशेषात्सूतिमाशुविदधातिसुखेन॥१६०॥ अन्यः ॥तालजातमपिचोत्तरमूलंमध्यमाननुसूत्रनिबद्धम्॥गर्भिणीकटितटेसुखसूतिंसद्यएवकुरुतेनविलंबात्॥६१॥ अन्यः ॥ अश्वपक्षसहितागुडजातांयावधूश्चगुटिकांनिगलेत्सा॥ सद्यएवविलभेत्प्रसवंसागुर्विणीनतुलभेद्यकष्टम्॥६२॥ अन्यश्चावनमन्त्रत्रिंशदुभययंत्रान्यमंत्रौषधिभिःसुखप्रसवविधिः॥ यथाइहामृतंचसोमश्चचित्रभानुश्चभामिनी॥उच्चैश्रवाश्चतुरंगोमंदिरेनिवसंतिते॥६३॥ इदममृतमयासमुद्धृतंवैतवलघुगर्भविमुंचतित्रिदलूनलपवनार्कवासवास्तेसहलायुधेरैदिशंतिशान्तिम्॥ मुक्तायासाविषामाश्चमुक्तासूर्येणरश्मयः॥मुक्तःसर्वभयाद्गर्भस्त्वास्येहि

मान्वतेस्वाहा ॥ २॥ जलंच्यावनमंत्रेणसप्तवाराभिमंत्रितम्॥ पीत्वाप्रसूयतेनारीदृष्ट्वाचोभयत्रिंशकम् ॥ ३॥ षोडश १६ रस ६ वसु ८ युग्म २ रुद्रदिग्भिः १० अष्टादश १८ दिननाथ १२ चतुर्दश १४ वेद ४ मितांकैरंकमितैरपिकोष्ठनिविष्टैस्त्रिंशद्यं त्रमदःपरिवीक्ष्यसुखप्रसवंलभतेनुगुर्विणीसद्यः ॥ ४॥

| | | |
|---|---|---|
| १६ | ६ | ८ |
| २ | १० | १८ |
| १२ | १४ | ४ |

क्षितिर्जलंवियच्चतेजोवायुर्विष्णुप्रजापतिः॥ सग- र्भायांसदापांतुवैशल्यंचदधत्यपि ॥ ५॥ प्रसूयत्व मपिक्लिष्टमविक्लिष्टशुभानने ॥ कार्तिकेयद्युतिंपु त्रंकार्तिकेयाभिरक्षितम् ॥ ६॥ प्रसवकालेगर्भिण्याःकर्णेसप्त सप्तवारान्जपितव्यम् ॥ ॥ परूषकशिराभवएवनाभिबस्त्यादि योनिनिभृतस्तुतथास्थिरायाः ॥ सद्यःप्रसूतिमुपसंकलयंति पाठाजातस्तथाहरिमुखद्रवसंप्रयातः ॥ १६७॥ चत्वारोयोगाः ॥ ॥ अन्यः ॥ ॥ गुंजामूलस्याष्टौरवंडान्मनि ७ मितसूत्रे कटिदेशे ॥ बद्धं सद्यःसूतिंमाप्रकुरुतएवप्रवदंति ॥ १६८॥ ॥ ॥ अथापरापातनविधिः॥ ॥ इक्ष्वाकुसर्षपभुजंगमकं चुकानांधूपस्तथापिकृतवेधनसंयुतानाम् ॥ तैलेनवापिकटु- नापिभगप्रदत्तः कुर्यादथोबाल्यपराप्रपातम् ॥ ६९॥ भूर्यगु ग्गुलुभवःखलुधूपः श्रोणियोनिकलितोवनिताभिः॥ पातनप्र कुरुतेह्यपराणांसद्यएवखलुशूलहरोहि ॥ १७०॥ अन्यः ॥ कृचानिवेष्टितयांगुलिकायुतैर्गलनिघर्षणकैरपरातथा ॥ पत तिचाथतथैवतुलांगलीभवजरोत्थरसैःकरपादयोः ॥ ७१॥ अ न्यः ॥ मद्येनवागोपयसाचसिद्धंख्यापायसैःपादतलौप्रलिंपेत्

॥हस्तोतदास्याद्परापपातस्तस्यास्तुशीघ्रंखलुशूलशांतिः॥ ७२॥ हिंगुकणापाटलिकाद्वयभार्ङ्गीचव्याधिघातासनिकोश्वत नीरैः॥ योनिनिषेचनतःखलुमार्दवमेवयोनिगतंविदधाति॥ ७३॥ नबिल्वमार्कवभवंयदिमूलकाल्कितंमादिरयाप्यिवपीतम्॥ शूलमाशुभगजंप्रमदानांहंतिसूतिजनितंप्रमदाभिः॥ ७४॥ शालिमूलमथवाक्षभल्लवापिप्पलीमथतथाप्युपकुंचिम्॥ गोजलेनचतथापिलुवाम्लैर्योनिशूलशमनायचमद्यैः॥ १७५॥ ॥ चत्वारोयोगाः॥ पिबेदितिशेषः॥ सौवर्चलेनचसदागतिशत्रुसिद्धक्षीरंदशाहमबलाप्रसवंप्रपन्ना॥ योनिप्रभूतबहुशूलशमायनित्यमन्नंभजेत्सलरसैश्वशिरीषसेकम्॥ ७६॥ ॥इत्यपरापातनम्॥ ॥ततः प्रकुर्यादथजातकर्माण्याश्वेवतुर्येह्नितथातृतीये॥ सूत्रंवधूनांचप्रवर्तयन्त्वेतथादिमोह्नित्रिसवंघृतेन॥ ७७॥ समाक्षिकेनापिविलिप्यवामाकुचौनसंमन्त्र्यतुपाययेत्तम्॥ शिशुंपयोमंगलगीतमंत्रैर्मंत्रंप्रवक्ष्यामिपुरातनंयत्॥ ७८॥ यथा ॥चत्वारःसागरास्तुभ्यंस्तनयोःक्षीरवाहिनः॥ संतुतेशुभगेनित्यंबालस्यायुर्ग्रहापहाः॥ १॥ पिबन्बालोमृतरसंपयस्तवशुभानने॥ दीर्घमायुरवाप्नोतिदेवाःप्राश्यययामृतम्॥ २॥ ॥इतिमंत्रद्वयेणस्तनाभिमंत्रणंविधायबालंपाययेत्॥ ॥जातपुत्रोनिशाषष्ठीनस्यांरक्षाबलिक्रिया॥ कार्याजागर्युरेवास्यसर्वेशस्त्राम्रपाणयः॥ ७९॥ ॥अथप्रसूताभगकुक्षिकटीनांप्रकृतीकरणम्॥ ॥तुंबीदलंलोध्रमिदंद्वयंचसमानभागंपरिपेष्यदद्यात्॥ लेपंभगस्याथयथाप्रसू

ताभगस्यनुस्यादपिनिर्मलत्वम्॥१८०॥ अन्यः ॥मृद्दग्निना वेतसजानिमूलान्याक्वाथ्यतेनैव भगंप्रसूता॥प्रक्षाल्यगाढत्व-मलंप्रयाति भगस्यबालाभगवन्प्रकामम्॥८१॥ अन्यः ॥पला शकोदुंबुरयोः फलानांसमाक्षिकस्तैलयुतःप्रलेपः॥ प्रसूतिका-नांचभगस्यकुर्यात्कन्याभगस्यापिसमानभावम्॥८२॥ अन्यः ॥ मूषिकामांससंयुक्तंसूतंबर्बुरजंजलम्॥ योनिप्रक्षालना-त्कुर्यात्प्रसूताकन्यकोपमाम्॥८३॥ खंजरीटपलजागुटिकेका ऽघर्मशोषिततमामधुयुक्ता॥ योनिमध्यनिहितादशवारान्सूतिकांचविदधातिसकन्याम्॥८४॥नारीप्रसूताकिलवृद्धकुक्षी ह्रासायप्रातर्मथितेनविंशेत्॥ एकाधिकान्येवदिनानिवामाश्या मायवंचापिपिबेदशंकम्॥८५॥ मूलंमालतिकाभवंचनितरांत क्रेणसाकंपिबेद्धासायाशुप्रसूतिकास्वजठरस्यैवाथधात्रीनि-शां लिह्यामाक्षिकहृव्यसेयुततमांकार्श्यंचमध्येस्फुटम् बाला याःसदृशंप्रसूयलभतेवाराननेकान्प्रसूः॥८६॥ ॥अथामक ल्ललक्षणचिकित्से॥ ॥यदाप्रसूताऽधिरच्युतंयत्तत्स्था नतश्चाप्यपरोध्यवायुः॥ मकल्लरोगंतुततःप्रकुर्याद्धृद्बस्तिमूर्द्ध स्वपिशूलरूपम्॥८७॥ वेशोधरण्यापतितोविशेषाद्योनेश्चभि प्पीडनमिष्यतेत्र॥ यदाप्रवेशोखलुतत्रवायोःसंरक्षणोत्रक्रि याविधेया॥८८॥ हृद्बस्तिशूलंचतदैवतस्यात्याध्मानमेवंप्रति जायतेतु॥ तल्लंघनाभ्यंजकेश्चतद्वग्क्रियास्वेदकैःप्रकुर्यात् ॥८९॥उष्णांयवासूंकटुनीहृणासिद्धांमध्वान्वितांचत्रिदिनानित स्यै॥ अपाययेच्चाथभिषक्प्रकुर्याद्विशोधनंतच्चयथाविधास्ये

॥१९०॥ घृतेनचोष्णेनजलेनवापिजवाग्रजंक्षारसमंपिबेत्सा ॥ त्रिजातकत्रैकटुधान्यचूर्णान्यापाच्यजीर्णेनगुडेनतद्दत् ॥ ९१॥ मकल्लरोगस्यविनाशनायशिरोर्तिशांत्यैभिषगत्रलेपम् ॥ लुंगस्यमूलस्यसबिल्वमेवंमूलस्यमल्लीप्रभवस्यकुर्यात् ॥ ९२ ॥ अन्यः ॥त्रिकटुर्विंत्रकचव्यपटुत्रयहिंनिशकल्कमिदंचक-णाधियुक् ॥ सजवजंचकवोष्णजलेनवैवरविरेचनमत्रमकल्ल-के॥९३॥ ॥अथस्तन्यशुद्धिः॥ ॥ धात्रीपयःशुद्धिमलंप्रकु र्यान्मुस्तादिकंहृव्यमथोनिपीतम् ॥ मुद्गस्ययूषंचरसंपलस्यत-स्यैप्रदद्यादथभोजनार्थम् ॥९४॥ अन्यः ॥ भार्गीदारुवचा विषाशृततमंपीतंपयःशोधनंपाठादारुकिराताविश्वकटुकाऽनं ताविशल्याशृतम् ॥ मूर्वांशक्रयुतंनथात्रगदितंसंत्सारिवामिश्रि तम् ॥१९५॥ योगद्वयम् ॥ कुलकनागरनिंबगुडूचिकात्रिंद शदारुशृतंतुविशल्यया ॥ निगदितंकटुरोहिणिकासमंस्तनजं-शोधनमाशुचमूर्वया ॥९६॥ ॥अथदुग्धवर्धनम् ॥ ॥ध राजकुष्माडजमूलमर्कक्षीरेणसार्द्धंपिबतिप्रकामम् ॥ पुस्ना तिसास्तन्यचयैःकृतानांवृंदंकरवेनैवसदाप्रसन्ना ॥९७॥ अन्यः ॥ कुवलयतंदुलकल्कंपयसायाहि ॥ प्रचुरक्षीरानारी प्रभवतिसाहि॥९८॥ अन्यः ॥ अरण्यकार्पासजमूलयुक्त मिक्ष्वाकुमूलंपयसापिबेद्या ॥ सौवीरकेनापिपयोविदारीरसंत थास्याद्दुग्धयुक्ता॥ ९९॥ अन्यः ॥ कणाकणामूलविडंग शुंठीयवानिकाजीरकयुग्मचव्यैः ॥ सौवर्चलेनापिनिशाद्वयेनपिष्टै श्चपिष्टेनतथारनालम् ॥२००॥ विपाचितंदृष्यतमंनिपीतंप्रसू-

निकाभिर्बहुलाग्निकारी॥ सकलशूलस्यविनाशनंतत्कफस्य तद्दद्दुदुग्धकारी॥२०१॥ सामास्यवातस्यविनाशनंस्याद्दूजा दिकंकांजिकमुक्तमाद्यैः॥ प्रसूतिकास्तन्यचयैःकृतानामस्यप्र योगाद्धपिपालिनीस्यात्॥२॥ अन्यः ॥स्वर्णसेफालिकास्त्रि शाकोटकानांपत्रसंधंभिषक्कांजिकेवासयेद्वा॥ सस्तुहीपत्रक सिद्धमेतंत्रिपीतंस्तन्यवृद्धिप्रदंस्लेष्मवातापहंद्राक्॥३॥ ॥ इतिपत्रकांजिकम्॥ ॥इतिस्तन्यवर्द्धनम्॥ ॥अथप्रसूता कुचोत्थापनम्॥ ॥अलंबुषामागधिकाश्वकल्कैःसिद्धंकृतंतैल पिचुनस्यदानात्॥ प्रसूतिकास्त्रीकुचयुग्ममेतन्महाफलाभद्रुत माद्धाति॥४॥ अन्यः ॥श्रीपर्णिकायारसकल्कसिद्धंतैलंति लानांस्तनयोःप्रकामम्॥ पिचुप्रदानाद्द्रुतमेवकुर्यादुत्थापनंबा लकवृंदमातुः॥२०५॥ अन्यः ॥कासीससाठरभुजंगकणा श्वगंधासिद्धंचतैलमबलास्तनयोःप्रकामम्॥ वृद्धिंश्रुतिस्तनवः रांगकलिंगकानांकुर्याद्विलेपनविधानपिचुप्रदानात्॥६॥ का सीसाद्यंतैलम् ॥अथरोमशातनम्॥ ॥हरतालमिहैकभा गिकंदरचूर्णंखलुपंचभागिकम्॥ भसितेनपलाशजेनतत्परि लिप्तमगरोमशातनम्॥७॥ अन्यः ॥करवीरशिफारंभाक्षा रोदकत्रिवृद्धुतम्॥ कोशातक्याश्वतंतैलमभ्यंगाद्रोमशातनं ॥८॥ अन्यः ॥कर्पूरैःशंखचूर्णैःसशिलमपिजवक्षारतालायवा निभल्लातैःसिद्धतैलंनिगदितमखिलैर्वैद्यभूपैर्वरांगे॥ रोमणास घःप्रहरं निचयंयत्रकुत्रापितत्राभ्यंगान्मात्रंचित्रप्रभवतिसहसा तत्प्रदेशेविरोमम्॥९॥ ॥अथसौभाग्यशुंठी॥ ॥प्रस्थत्र

यंवैद्यवरश्चशुभ्या:प्रस्थत्रयेनैवगवांघृतेन॥ चतुर्गुणेस्याश्वग
धांसुदुग्धेसंपाच्यखंडेनचतुर्गुणेन॥२१०॥जातीफलैलात्रिफला
घनानांकणाविदारीमुशलीद्वयानाम्॥ कर्पूरद्राक्षाजरणद्वयामां
काश्मीरपत्रीशतमूलकानाम्॥११॥ पलंपलंगोक्षुरदेवपुष्पशत
प्रसूनःकपिकच्छुजानाम्॥ प्रत्येकमेलादिचतुःसमानांसपुष्करा
णामपिसत्सिगंध्या॥१२॥ पलाष्टकेनापित्रशीर्षमज्जाभागेनम
ज्जात्रितयेनसम्यक्॥ पलत्रयेनाथपलप्रमाणखार्जूरद्राक्षाकर
हाश्वकानाम्॥१३॥ कस्तूरिकालोहजभस्मभागादेशानुकू
लानुभवेन योज्याः॥ एतत्समस्तविधिनागुरुदर्शितेन मात्रायथा
बलपलैकमितांहिरुक्ता॥१४॥ शुंठीप्रमोदजनिकाशिवयोःप्रका
ममरोग्यदासकलसकलाबहुसुददात्री॥ सौभाग्यदानिगदिताप्र
थमंततोथाशुंठीप्रसूतानिकरस्थनित्यम्॥१५॥ ब्रह्माख्यातानां
रदेनाथदेव्यैःशम्भोप्रोक्तासृष्टिनिर्बाधसिद्ध्यै॥ तेवैरोगोस्त्री
तनौसंतिनैवयेचैवास्याःसेवनान्नैवनस्युः॥१६॥ कायस्थिरत्वंद
ढताक्षकांतिसौभाग्यमेधास्मृतिमंजुलत्वम्॥ सौंदर्यकाठिन्य
मृदुत्वशोभिस्तनद्वयाद्यंगगणंकरोति॥१७॥ अशीतिवातोत्थग
दास्तदर्धाःपित्तप्रभूताःकफजास्तदर्धाः॥ अष्टौज्वराद्याःश्रुति
शीर्षनेत्रजिह्वास्यनासागलतालुजाताः॥१८॥ स्तनहृज्ज्वरो
द्भवगदाअपिकुक्षिप्रभवं कटिगदाः॥ जघनोरुभगोद्भवाश्चयेश
मनंयांतिपदांगुलीभवाः॥ सुतासुतानांजननीप्रभूयादारोग्यसौ
भाग्ययुताप्रसन्ना॥ शतप्रसूतापिचकन्यकेव दृढांगयष्टिःपति
पुत्रयुक्ता॥२१९॥ ॥श्रीतातपादा०॥श्रीकाशिनाथेनगतश्च

तस्यांस्त्रीरोगनाशस्तबकःसमाप्तिम्॥२२०॥ ॥ ॥
अथबालरोगचिकित्सा॥ ॥शिवाशिवांकस्थमहंगणेशंगुहं स्वकीयंचगुरुंप्रणम्य॥ श्रीकाशिनाथोऽखिलबालतंत्रं दृष्ट्वास्वतंत्रंवितनोमिसम्यक्॥१॥ क्षीराशनान्नाशनतद्वयाशीद्वंद्वःशिशूनांत्रिविधःप्रसिद्धः॥ स्वास्थ्यंतुतस्याप्युशनादिसम्यक्पाकेह्यपाकेऽखिलरोगवृद्धिः॥२॥ योवातदुष्टंस्तनजंपिबेद्वाबालःसवातोत्थगदातुरःस्यात्॥ क्षामस्वरश्चापितनोतनुश्चविण्मूत्रवायुप्रतिरोधबंधात्॥३॥ योपित्तदुष्टंचपयःपिबेद्वाबालःसपित्तातुरतामुपैति॥ तृष्णातुरःकृष्णसमस्तगात्रःसकामलोभिन्नमलःसधर्मः॥४॥ कफप्रदुष्टंतुपयःपिबेद्यःसतालुवान्श्लेष्मगदीशिशुःस्यात्॥ सवातिनिद्रास्यचसूनताभिर्नोऽक्षेनयुक्तोगदितोभिषग्भिः॥५॥ तीव्रामतीव्रामथबालकानांवैद्यःपरिद्रोदपिवेदनांताम्॥ तद्रोदनात्तद्रुजमाशुदृष्ट्वाशास्त्रंचिकित्सांविदधीततेषाम्॥६॥ क्षुद्ररोगेचबालानामजगल्यादिपूजने॥ ज्वराद्याव्याधयोयेचतेषांतमहतामपि॥७॥ देशकालबलविद्भवैद्योबालरोगमथयत्नविचार्य॥ तस्यदोषमवधिज्वरकादौमात्रयागदितयोतुचिकित्सेत्॥८॥ भेषज्यमुक्तमहतांयदेवतद्वालवृद्धेषुनियोजनीयम्॥ यथागदंदोषचयप्रकोपमात्राविचार्यात्रकनीयसीया॥९॥ शिशुवर्त्मगतोविकारएकोनहितादृग्गदितःकुकूणकः॥स तुनेवशिशोर्विहायचान्यस्यसभंगच्छतिवर्त्मकस्यवा॥१०॥ संजातमात्रस्यशिशोश्चमात्रादेयाविडंगान्वितभेषजस्य॥ मासेचमासेचविडंगवृद्ध्याकोलास्थिमानात्वथवत्ससन्दंम्॥११॥ क्षीरान्नादशि

शोध्यभेषजमलंपयेयथोदुंबुरक्षीरादस्यच भेषजंसमुचितंधात्र्याः पयः शोधनम्॥ क्षीरान्नोभयभोजनस्यतु सदा देयंचयत्तेजसंधात्र्यावैस्तनलेपनोचितयथारोग्यंतुलोकस्यच॥ १२॥ शिशोर्नेत्ररोगे तथाशोषणोविशेषेणधात्रीशिशुंलंघयेत् ॥ यथा मात्रयान्नेन दुग्धं कचिज्जनन्यागदेगव्यमाज्यंपयः॥ १३॥ प्रदेयंन वार्यंसदापंडितैर्यतस्तलुणंगव्यमाज्यंपयः॥ शिशुंजीर्णमेवंनरंमात्रयाभिषक्साधयेद्भेषजस्योक्तया॥ १४॥ मृत्पिंडसंभोप्रतितमग्निप्रभंयदात पयसिप्रकामम्॥ प्रक्षिप्यवैद्यश्चतदुष्मणातंसंस्वेदयेदुत्थितनाभिबालम्॥ १५॥ शिशोर्नाभिपाकेविशाखागजेनभिषक्वान्हि दग्धेनसंचूर्णमेनम्॥ अथोक्षीरवृक्षत्वचश्चूर्णनंवातथाचंदनस्यापिनाभौप्रदद्यात्॥ १६॥ बह्वोयोगाः॥ तैलंनिशामधुकलोध्रप्रियंगुसिद्धमभ्यंजनेनिगदितंशिशुनाभिपाके॥ संचूर्णनंचभिषजात्रनुतैः प्रकामंकार्यंविलोक्यशिशुतंत्रमथोविचार्य॥ १७॥ यदिस्तन्यंबालाऽचिरमवशिशुर्नैवचमुखेप्रगृह्णातिप्रायोरसनमथधात्र्यस्यमधुना॥ समंकल्कीभूतैर्घृतपटुशिवाभिश्चनितरांप्रघृष्यैवकुर्यादुलतरमंमुस्तन्यरसिकम्॥ १८॥ घनाभयाभारतिकावचानांचूर्णंस्वर्णेनघृतेनसम्यक्॥ समाक्षिकंलेहमलंशिशोश्च वर्णप्रभायुः करणंप्रदेयम्॥ १९॥ मूर्वाश्वचान्यूषणकोलजंबुत्वग्दारुसिद्धार्थकसिद्धयोगाः॥ एकैकशस्तेमधुनासपाठास्तन्यस्यशुद्ध्यैप्रभवंतिलीढाः॥ २०॥ प्रियंगुनासैंधवमाक्षिकाभ्यांस्वर्जिकाजंतुरिपुप्रयुक्ताम्॥ दुग्धाशिनबालमलक्रमीणांनाशाय धात्रीप्रतिलेहयेचम्॥ २१॥ हिंगानीकिकायाः फलोत्थरसंशि

शः पंचकोलं तथा धात्रिका ॥ कृमीणां विनाशाय बाले ह्ययेल्पपीतं चपीतं सदा साधयेत् ॥ २२ ॥ लाजातुगांजनासिताः समधूकयुक्ता बालस्य सर्वगदनाशकरो वलेहः ॥ धात्र्यासमाक्षिकमलं बहुधाप्रदेयो वैद्याधिभूपतिगणाः प्रवदंति सर्वे ॥ २३ ॥ तिक्ताखंड मधुप्लुताचानितरां बालज्वरं नाशयेत् लीढावा शिशुदेहलेपित तथा कल्कीकृतातज्ज्वरम् ॥ २४ ॥ मुस्ताभयानिंबपटोलसिद्धः क्वाथो विशेषान्मधुकेनयुक्तः ॥ पीतः शिशूनामखिलज्वरघ्नः समाक्षिको बालचिकित्सकोक्तः ॥ २५ ॥ पलंकषोग्रागदहारिचर्मोरविचर्म निंबच्छदं माक्षिकाज्यैः ॥ विधूपनं बालकवृंदनानाज्वरप्रणाशाय वदंति वैद्याः ॥ २६ ॥ ॥ इति बालज्वरघ्नधूपः ॥ ॥ रसोनहिंगु वै बाललोमगोशृंगमाक्षिकैः ॥ मरिचेनचसंयुक्तो धूपो बालग्रहापहः ॥ २७ ॥ ॥ अथ क्वाथः ॥ ॥ दिङ्मूलकाश्मीरशिरीष निंबब्राह्मीविशल्याकटभीफलानाम् ॥ फलत्रिकाकुष्ठजलेशकुष्ठप्रियंगुरात्रिद्वयचित्रकानाम् ॥ २८ ॥ कंकुष्ठसिंधूत्थमधूकसार कृमिघ्नमूलामरदारुकानाम् ॥ स्फोतोग्रगंधात्रुटिशंखपुष्पी राजद्रुनीलोत्पलकारुणानाम् ॥ २९ ॥ त्वग्मेघकुंभोद्भवपत्रभानु सिद्धार्थहिंग्वंबुदशब्दकानाम् ॥ कषायकल्कैः स्नमुखीनखानां तैलं भिषक्सार्षपमाजदुग्धैः ॥ ३० ॥ पचेच्चतत्तैलमलं शिशूनामभ्यंजनात्सर्वमहापहारि ॥ अपस्मृतं हंति च डाकिनीनामावेशमेवं चपिशाचकादेः ॥ वेतालकृत्यादिकनैगमेयबालग्रहोन्मादकशाकिनीनाम् ॥ आवेशमाराक्षसपूतनानां सद्यः प्रकुर्याद्दूसकदेवसूनोः ॥ ३२ ॥ इंद्रेणोक्तं नारदायैव तेन गूढं चोक्तं चास्कंदेवमहाणाम् ॥

शांत्यै प्रोक्तं नंदगोपाय तद्वत्कृष्णस्यैवं भीतिनाशाय सम्यक्॥३३
॥तदभ्यंजनात्पूतनाद्याग्रहाये तृणावर्तवत्सादयः कालियाद्याः॥
हतां कृष्णचंद्रेण सर्वे ध्रुवं नद्यकंसराजेन ये प्रेषितास्ते॥३४॥ ॥
अथ धूपः॥ ॥मध्वरिष्टदर (दरःशंखे भयेश्वभ्रेइति) सर्षपनीरै
(श्वेतसर्षपनीरंबालकम्) गोमृतस्य च विशास्वलु धूपः॥ बालकं
ज्वरहरः प्रथितोसौ वालतंत्रगदितोग्रहहारी॥३५॥ सपचजंबूल
कपाद्धशेषेनीरेविपक्केशृततंदुलानाम्॥ पीताय वागूरवलु बाल
कानां कुट्योमयानां विनिहंति वेगम्॥३६॥ समंगा मदाशाल्म
लीबिल्वपद्मस्ककाशमीरकैः पेषितैः पाचितैश्च॥ससिद्धाजवागू-
शिशूनां विशेषादतीसारनाशाय वातंदुलानाम्॥३७॥ श्रीफलां
बुगजपिप्पलिकायाः लोध्रकेनच मदाभवपुष्पैः॥ क्वाथलेहवि
धिनात्र शिशूनां घ्नंतिमाक्षिकयुतान्यतिसारम्॥३८॥ अन्यः
॥नागरांबुघनशक्रविषाभिः पाचितांम्बुशिशुकभिः परिपीतम्॥
प्रातरेव शमयत्यतिसारं बालतंत्रलिखितं बहुवारम्॥३९॥ वास
कौषधिविषाघननीरं बालकुक्षिजगदेषु निपीतम्॥ हंति कुक्षिज
गदं बहुवेगं विध्यगस्त्यमुनिभाषितयोगम्॥४०॥ अंगुष्ठमूलेन
मदाप्रसूनविश्वौषधीश्रीफलपेषिकाभिः॥ नीरं शृतं बालककुक्षि
रोगे पेयं प्रतीतं बहुधा प्रयोगे॥४१॥ अन्यः॥ समंगामदासा-
रिवालोध्रनीरं शिशोर्दुर्धरातिस्रतौ पेयमुक्तम्॥ पटोलीजटाशृं
गवेरो वचावा विडंगाजमोदाकणाकोष्णनीरैः॥ विलोड्यामशश्व
त्प्रवृत्तोसदेवप्रदेयाभिषग्भीरतो वक्ष्यमन्यत्॥४२॥ षट्पदी
यम् ॥आम्रातकोत्थं स्वरसं शिशूनां समाक्षिकं नाशयतिवेगशो

त्तिम्॥ पीतंप्रकुर्याद्दपिकोष्ठभेदंकुमारमाराच्चकुमारकल्पम्॥४३॥ अन्यः ॥ अंशकमतीसमधांशकर्णिकाथमलंयदि बालैःपीतम्॥ क्षौद्रयुतंबहुदोषेषु हंतितरामतिसारंघोरम्॥४४॥ अन्यः ॥ द्विनिशेन्द्रजवाकणाकृतंयत् कथितंवा-रिकसिंहिकायुतम्॥ ज्वरमाशुशिशोस्तथापिसारमथवान्यन्यजदोषहारिपीतम्॥ ४५॥ शृंग्यकणाघनकृष्णाचूर्णंक्षौद्रयुतंशिशुभिर्वालीढम्॥ हंत्यतिसारमशेषंकासंश्वासवलंवमिनाप्यातापम्॥४६॥ अन्यः ॥ मदाग्नीघनालोध्रशक्रांबुलेह्यः शिशूनांज्वरंसातिसारंसवातम्॥ निहंत्येवलीढंसदामाक्षिकेण सलोध्रेंद्रधात्र्यांबुधान्यांबुदैर्वा॥ ४७॥ योगद्वयम् ॥ मधुसर्पिविडंगदेवदारुसरलैः समकुपत्रलेहिकांहि॥ कुरजारिष्टपटोलदीपिकाभिर्ज्वरछर्द्यतिसारनाशिकांचे॥ ४८॥ अन्यः ॥ पियंगुमुस्तांजनकोलमज्जाकल्कोमधुक्षिरयुतोवलीढः॥ तृष्णातिसारौवमिमाशुतेषांसद्योनिहन्याद्भिषजोवदंति॥४९॥ वृहतिकाफलमूलभवत्वचश्शृतजलंमगधाग्निकणान्वितम्॥ शिशुनिपीतमलंतुकणान्वितंवमिहरंज्वरपीनसनाशनम्॥ ५०॥ मदाविषाकर्कटशृंगिणांचचूर्णंसमंवेगजकेशरेण॥ बालैःप्रलीढंमधुनायतेषांछर्द्यातिसारंविनिहंतिसद्यः॥ ५१॥ जलतंदुलानांजलेनप्रकामंसितांक्षौद्रयुक्तंशिशूनांहुतंतत्॥ अतीसारछर्दिज्वरान्रक्तवेगंनिहंतिप्रपीतंचवैद्यप्रगीतम्॥५२॥ समंगोत्पलकिंजल्कौतंदुलवारि॥ मत्स्यांडीमधुयुक्तंरुधिरनिवारि॥५३॥ लेह्यस्तैलसितामधुप्रतियुतोयष्टीतिलाभ्यांशिशुः कल्कोछल-

निषेवतेयदितदारक्तातिसारंजयेत्॥५४॥लाजाक्षौद्रसिताः
समाःसमधुकाःक्षौद्रान्वितावातथारक्तातिस्रुतिसंयुतांबहुवि
धांतद्धुवाहींद्रुतम्॥५५॥बिल्वाग्निनीरैःसृश्रुतैश्चलाजाचू
र्णैसखंडंविनिलोड्यपीतम्॥छर्द्यतिसारंबहुधाशिशूनांनिहंति
सद्यःप्रवदंतिवैद्याः॥५६॥फाणितांजनघनामधुमिश्रंपीतमाशु
शिशुतर्षहरंवा॥आम्रजांबवहरानवपत्रैःशर्करासमधुकामधु
नीरम्॥५७॥शालूकनीलोत्पलनालमूलक्षीरद्रुसत्कोमलपत्र
शृंगैः॥दर्भाग्निपर्णीमधुकैश्चलाजाक्वाथसखंडःशिशुतर्षहारी
॥५८॥दाडिमबीजजचूर्णंमधुनादेहि॥जीरेभप्रसूनयुतंशिशु
तर्षेहि॥५९॥हिंगुसैंधवपलाशसंभवंचूर्णमत्रगदितंसमाक्षि
कम्॥बालकस्यचतृषामतिमुग्रांहंतिलीढमितिकुंभजश्चाह॥६०
॥शृंगीमेघविषाणांमधुनादेहि॥कासज्वरवमिहत्यैचूर्णमवेहि
॥६१॥शिशुवमिकासघ्नलमरुणायाः॥रजइहउक्तंमधुपरियु
क्तम्॥६२॥पुष्करायासशृंगीविषाणांरजोमाक्षिकैर्बालकोनि
त्यमश्नातियः॥मुच्यतेपंचकाशाद्सौकुंभजन्माभिषक्प्राहतंत्रे
स्वयम्॥६३॥क्षीरादस्यशिशोश्चशुष्ककसनेजातस्यधात्रीपिबे
द्धूषंयासभवंकणाघृतयुतंभार्ङ्गीयुतंभर्जितम्॥द्राक्षापिप्पलि
काजगद्धवरजोहव्यर्द्धसन्माक्षिकैःलीढंपंचविधंचकासमचिरा-
द्धत्येवबालस्यतु॥६४॥व्याघ्रीकुसुमजकेशरमुदितंतत्र॥क्ष-
णमपिकासोबालंत्यजतिनयत्र॥६५॥धान्यशिलायुततंदुलवा
रिप्रदेहि॥शिशुतनुकासनश्वसनेयोगमवेहि॥६६॥गुडोदकंवा
क्वथितंव्योषयुतंहि॥कोष्णंपटुपरियुक्तंकासहरंहि॥६७॥कु

क्षीरशृंगीरजसाघृतेनसमाक्षिकंमूलकजंफलंच॥ लेहीकृतं श्वासगदंशिशूनांसद्योनिहन्याद्भिषजोवदंति॥ ६८॥ कृष्णाद्राक्षाकर्कटायासवंशाजानाजाताबालकानांघृतेन॥ कासंश्वासंमाक्षिकेनावलीढानानाव्याधिंलोहिकांहंतिसद्यः॥ ६९॥ सद्राक्षापांचालीयुगुलमपियासप्रतियुतंशिवायुक्तंबालैर्घृतमधुयुतंलीढमसकृत्॥ ज्वरंकासंश्वासंतमकमथतेषांप्रतमकंत्रिरात्रंवापंचैवादिनमिदमलंसेविततमम्॥ ७०॥ हिंगुनागैरिकंलोकशृंगीजगन्माक्षिकेर्घर्षिकामिष्टचूर्णंभिषक्॥ बालकंलेहयेच्छ्वासहिक्कापहंवंगसेनोदितंबालतंत्रेस्फुटम्॥ ७१॥ स्वकृतगत्यरसेनचमाक्षिकैःशिशुरलंश्रुतिजातजलेहिकाम्॥ भजतियस्तुसर्वातिगदातुरो भवतितस्यकदापिनछर्दिरुक्॥ ७२॥ नागरभार्ङ्गिमरीचविशल्या लेहअलंबालकगणलीढः॥ हंतिकणामाक्षिकपरिजुष्टश्लेष्मजकासवमिगदमेवम्॥ ७३॥ निशिकणांजनलाजमधुप्लुतोमरिचकर्कटशृंगीक्रमायुतम्॥ वमनकासरुजामवलेहकःशिशुगणस्यसदैवजयत्यसौ॥ ७४॥ गांगेरुकीशिशुशिरोरुजिकाकमाचीबीजानिकोशवततप्रभवानिपिष्ट्वा॥ नूनंप्रलेपितमानिशिरोगदानां नाशंविदध्युरथवाप्यतिसारकस्य॥ ७५॥ लाजाम्रमज्जापटुमाक्षिकानांलेहःशिशूनामवलीढमात्रः॥ छर्दिंनिहन्यान्नचतत्रचित्रंश्रीवंगसेनेगदितःप्रयोगः॥ ७६॥ जंबूतिंदुकपुष्पफलंघृतमधुयुक्तं शिशुभिर्लीढंछर्दिहरं॥ हिक्काश्वासौशिशुगणजातौव्रजतःप्रायोनाशमलम्॥ ७७॥ मधुकमधुकणानांलेहिकामातुलिंगरससमंवरखंडैर्बालकानांचहिक्काम्॥ वमनमपिचतेषांहंतिलीढानिवांतं

सकलदुरितजालंजान्हवीवप्रलीढा ॥ ७८ ॥ कटुरोहिणिवरचूर्णमधुनादेहि ॥ शिशवमिहिक्कानाशनयोगमवेहि ॥ ७९ ॥ हाटकगैरिकचूर्णमधुनादेहि ॥ चिरशिशुहिक्काछर्दिषुयोगमवेहि ॥ ८० ॥ विसर्पःशिशोर्बस्तिशीर्षोद्भवःपद्मवन्महापद्मकोदोषसंघोत्त्रयाज्जायते ॥ प्राणनाशक्षमःशीर्षतश्चेद्हृदिगतोवास्तितोवायदापायुगोवालदा ॥ ८१ ॥ ततस्तत्रतस्मैपटोलीनिशानिंबकंसमंत्रैफलैःसंशृतंपाययेद्भिषक्बालकम् ॥ विसर्पज्वरातंकविस्फोटरोगैर्युतम् ॥ ८२ ॥ सारिवासोत्पलाभद्रकह्वारिकेपौंडरीकंचयष्टीद्व्यंसर्षपम् ॥ चंदनंलोहितंवानयोशीरकंबालकानांविसर्पेपरंलेपनम् ॥ ८३ ॥ विसर्पविस्फोटकपद्मकेषु घृतंविशेषाद्कुधीचरुंडी ॥ अन्यंसमस्तंचयदुष्णमत्रतत्सर्वमेवप्रतिवर्जनीयम् ॥ ८४ ॥ उदुंबराश्वत्थवटत्वचश्चप्लक्षत्वचावेतसजत्वचाश्च ॥ यष्ट्यंबुजैश्चंदनपद्मकैश्चशिशुंप्रलिप्यात्तुयथास्वलाभैः ॥ ८५ ॥ सरागविस्फोटकदाहरुक्कविसर्पकादिव्रणयुक्तदेहम् ॥ गृहधूमनिशेंद्रराजिकागदपद्मैर्नलदैःसचंदनैः ॥ शिशुसिद्धकलेपनंचरेदथपामाकृतथेवतत्रतेषाम् ॥ ८६ ॥ वचाकुष्ठविडंगानांकोष्णतोयावगाहनात् ॥ कृमिकंडूविचर्चीभिर्द्रद्रुभिर्मुच्यतेशिशुः ॥ ८७ ॥ तिलतंदुलनाडीनांमूलस्यापितुलेपनाच्छिशुवृंदस्य ॥ ब्राह्मणियष्टिकरोगःप्रशमंयातिनातिदीर्घकालाच्च ॥ ८८ ॥ कणोषणाक्षौद्रसितापटूनांलेपःशिशोर्मूत्रग्रहेस्यबस्तौ ॥ भार्ङ्गीजगन्हिंगुपटुश्चुटीनामानाहशूलेपुघृतेनपानम् ॥ ८९ ॥ चपलात्रिफलाचूर्णंसमधुघृतंहि ॥ त्वसितेरोदनयुक्तेशिशुनिहितंहि ॥ ९० ॥ छुच्छुंदरीविडंनशोद्धजबिल्वप

त्रभाषाविधूपनविधिः कथितोनिशायाम्॥ बालरोगनिवारण धूपयोगः कुंभोद्भवेनमुनिनानमृषाकदापि॥ ९१॥ कुकूणकस्त न्यज एवदोषः संजायतेवर्त्मनिबालकानाम्॥ तेनात्र नेत्राणिस्रवं तितेषांसकण्डुराण्याशुनिमीलितानि॥ ९२॥ कुर्वंतितेचाप्यवक र्षणानिललाटनासानयनादिकानाम्॥ नवर्त्मकोन्मीलनतस्तराश्च बालास्त्विकित्सामथलत्रतेषाम्॥ ९३॥ शुंठीशृंगनिशानासेसैंधवः कुकूणकेपुटपाकः॥ नयनोपरिपरिबन्धः कुकुणकगदंस्कदुस्तरंह न्यात्॥ ९४॥ शृंगवेरत्रियामाभृंगपल्लवकल्कितैः॥ बद्धैर्गोशकृवा लिनैःकुकूणंस्वेदयेद्ध्रुवम्॥ ९५॥ धात्रीदुग्धैः कांजिकैःसर्षपानां तैलंघृष्टंदीपकीलाभितप्तम्॥ नेत्रेक्षिप्तंबालकानांकुकूणंसद्यो· हंतिप्रायस्सौनेत्ररोगम्॥ ९६॥ द्विभिचारुणारोहिणीलोध्रनिंब दलैस्तोश्रचूर्णैश्चवर्तिप्रदिष्टा॥ शिशूनांकुकूणार्तिहंत्र्यैनिधेया तथाबालतंत्रोदितावैयथा॥ ९७॥ फलत्रयव्याधियुगेनलोध्रपुन र्नवालोकल्कतः स्रवोष्णः॥ कुकूणकव्याधिहरः प्रलेपोनेत्रोपरिष्टा दुदितःशिशूनाम्॥ ९८॥ व्योषंशृंगमलालधनदभवफलबीजमेत त्सुसर्वंपिष्टंवन्हौप्रतप्तंशिशुनयनसमुद्भूतकंडूशमस्य॥ लेपोदेयः प्रकामंसजलत्रपिभिषक्कीर्तितः कोष्णएव नेत्रेपक्ष्मोपरिष्टादथ मधुसहितंवृन्दहारोरसंच॥ ९९॥ योगद्वयम् ॥ कृमिघ्नलाक्षा गिरिमृच्छिलानादार्वीयुतंकांजिकपिष्टचूर्णम्॥ कुकूणकव्याधि शमायबालनेत्रांजनंकोणगदेषुचाहुः॥ १००॥ मनःशिलाकणादेरे रसांजनंसमाक्षिकंशिशोःसमस्तनेत्रजंगदंनिहंतिचांजनम्॥ १०१ ॥ इतिकुकूणकप्रतीकारः॥ ॥ मातुःकुमारोयदिगर्भवत्या·

स्तन्यंपिबेच्चेद्यदितर्हितस्य॥ श्वासश्चकासोवमथुश्चतंद्रारुचिर्भ्रमः कोष्ठविवृद्धिरस्य॥ २॥ संजायतेनंखलुपारिगर्भं गर्दंजगुस्तन्मतुर्दीपनयत्न॥ तदौषधंशास्त्रविदः पुराणा बालायदद्यादितिसंजगुस्ते॥ ३॥ शिशोस्तालुमध्येबलाशः प्रकुप्तः प्रकुर्याद्गदंतालुकंठादिकंवै॥ तंतस्यतत्तालुदेशंविनिघ्नन् शिरस्य स्थसंजायतेपुनस्तालुपाकश्चतस्यप्रकामम्॥ ४॥ ततस्तन्यविद्वेषकृच्छ्रादलंचामथुकंसकृत्सार्यते निरस्थ्यास्यग्रीवामुखाभ्यांवमिर्जायतेसो जवक्षारकैर्माक्षिकाद्यैः चिकित्स्यः स्तदावैद्यभूपैसदा॥ १०५॥ शिशुगणतालुजपाकेजबजेनापि॥ प्रतिसारणमथतालीमधुनावापि॥ ६॥ अन्यः ॥ शिलावचागदैः सममममाक्षिकस्ककल्कितम् शिशुः पिबेत्स्वधात्रिकापयोयुतंहिकंटके॥ ७॥ सैंधवगृहभवचूर्णांशिशुमुखगेहि॥ विश्वावित्तगदद्लनेसारणमेहि॥ ८॥ सैंधवोदधिफेनाभ्यांसारणंस्त्रावितेमुखे॥ शिशूनांसारिवालोध्रमधूकानांतिलैःसह॥ ९॥ धावनार्थेकृतः क्वाथः शस्यतेवमुखस्यच॥ पाकेप्रसारसंयुक्तमुक्तमार्धेरयोरजः॥ ११०॥ गैरिकमधुपरियुक्तंभेषजमेहि॥ शिशुमुख तपाकेत्वरितमवेहि॥ ११॥ अश्वत्थवल्कलदलैर्मधुनाशिशूनांपाकेस्यगेनिगदितोभिषजाप्रलेपः॥ दार्वीशिवाजरणलोहितयष्टिकानां क्षौद्रान्वितंमुखगदेपरपंचकाख्यम्॥ १२॥ दरारुणांजनान्यलंविचूर्णितानिपायुनि शिशोश्चपाकमागते विचूर्णनंस्कभेषजम्॥ १३॥ गोजिह्वाजतुनीलेपः क्षीरखंडपेयमत्र वेदाशिशूनांचगुदाशेभेषजपरमंमतम्॥ १४॥ शंखसौवीरयष्टीभिर्लेपोदेयोहिपूतने

तीव्रकंडूतिसंबाधेरक्तस्राव्यंजलोकसा ॥११५॥ पित्तघ्नीच क्रियाकार्यागुदपाकेशिशोःसदा॥ पानालेपनयोर्योज्यंरसांजनमसंशयम्॥१६॥ अम्लादिभिर्दुष्टमलुपातुःस्तन्यंशिशोः पीतवतोगुदेऽस्य॥ कुर्वंत्वपित्तंपरिधावतीत्यंकुर्याज्जलौकोदरवहृणंतु॥१७॥ सदाहमारक्तमलंज्वरेणयुक्तंतुकार्श्यंभवनीहतस्य॥ पीतंतथावाहरितंशकृद्वानेनानुवेलंखानिसार्यतेथ॥ ॥१८॥ व्रणस्यपार्श्वाऽरुणएवनाम्नातीव्रोगदस्तत्रजलौकिकानां ॥संपातनंक्षीरसमेतवृक्षत्वक्काथसंसेचनमाहुरार्याः॥१९॥ शंखनाभ्यंजनंयष्टीमधुकंमधुरंगणम्॥ पिष्ट्वापार्श्वारुणहरोलेपोबालस्यशस्यते॥१२०॥ श्रीखंडंसारिवेद्वेचशंखनाभिसमन्विते॥पार्श्वारुणेप्रलेपोयंमवलेह्यस्तथैवच॥२१॥ प्रसूनचूर्णान्यशनस्यविद्वान्पार्श्वारुणेभेषजमत्रदद्यात्॥ अलंबुषामूलभवश्चकल्कःसर्जचूर्णःकटुतैलमिः॥२२॥ घर्मस्थितोसौघनताम्रपात्रोलेपःप्रयोज्योखलुपार्श्वरक्ते॥ अभ्यंजयेद्वानिलतैलकेनचोदूखलसंभवचूर्णमत्र॥२३॥ चानारिबीजानिसितानिपिष्ट्वाविलेपयेत्तायुगदेशिशूनाम्॥ धात्र्याःपलान्यष्टगवीजलेनघर्मेचसंभाव्यमुनींद्रवारात्॥२४॥ विशेषकेनचत्वारोयोगाः॥ ॥ शोषघ्नमीरितंप्रोक्तंबालानांनवनीतकैः॥ भक्षितंसर्वदापथ्यंतर्पणंतद्वामपि ॥१२५॥ मुस्ताकूष्मांडबीजैर्द्रुततरदृषदःखंडपिष्टैःकलिंगैस्सह्वाभद्रदारुप्रयुतसमजलेर्लेपएषःशिशूनाम्॥ व्योषाभ्यासर्पिर्युक्तमधुलवणयुतंलीढमेतत्तथैवबालानांगात्रशोषज्वरहरमुदितंवैद्यविद्याप्रवीणैः॥२६॥ साम्लकांजिकपिष्टानिबीजानिशनपुष्प

या॥ कुष्ठसैंधवयुक्तानि बालानां लोमशातनम्॥२७॥ त्रिसूत्रवे ष्टितशंबूकस्थाल्यां भक्तं विपाचितम्॥ तुंडेनोत्थाप्य भुंजीत जानुभ्यामवनीं गतः॥२८॥ सशय्यामूत्रणं बालस्य घस्त्यजति नित्यशः॥ मूषकैः खनितां मृत्स्नां भृष्टां खर्परके तथा॥ किंचिच्च मधुना ह्यद्यैर्लीढा भूमौ विमूत्रणम्॥२९॥ मधुना सर्पिषा युक्तमिंद्रगोपसमं तथा॥ पक्वं च कच्छपं तैलं विधिना द्रोणवर्धनात्॥१३०॥ तत्तैलं योनिजान्दुष्टान्रोगान्बालस्य नाशयेत्॥ कपालस्थान्कपालेषु सम्यगभ्यंजने चरेत्॥३१॥ उपशीर्षे तिलं प्राहुर्मातुर्गर्भाशयोद्भवः॥ शोथः सवर्णश्चविरुक् शिशूनां गदो भिषग्भीरुपशीर्षउक्तः॥ विद्याद्यथा दोषभवान्गदांस्तान्नानाविधान्वापि च कार्बुदादीन्॥३२॥ उपशीर्षे नावनं दद्याद्वातव्याधिचिकित्सितम्॥ पक्वेत्र विद्रधिवत् क्रमं कुर्याद्भिषग्वरः॥३३॥ शिवोग्रारजनीकल्कं पीतं दुग्धेन बालकैः॥ शोषसंहेतुकं हन्यात्कुर्याद्बालं पटुं दृढम्॥३४॥ कफावरुद्धेषु शिशोर्विशेषाच्छीतादिकानामपि सेवनेन॥ ज्वरे रुचौ वापि तथा प्रतिश्याकासेषु तद्वच्छ्वसने सशोषे॥१३५॥ कटुपंचकतिक्तानां चूर्णं मधुघृतप्लुतम्॥ शिशवे लिलदाद्देयं ज्वरारुच्यादिनाशनम्॥३६॥ सैंधवत्रिकटुकैः पाठाशार्गेष्टां ऽगंकदंबकैः॥ (गिरिकदंबः) शस्यते मधुसर्पिभ्यामरुच्यादिषु दापयेत्॥३७॥ शिशुर्दुर्बलतां प्राप्तः क्षुधया पीडितोऽग्निमान्॥ विदार्यद्रिगोधूमजवचूर्णं घृतान्वितम्॥३८॥ अनुपानं गवां क्षीरैः श्रृतैः समधुशर्करैः॥ दंतोद्भेदः शिशूनां स्यात्सर्वरोगैककारणम्॥३९॥ विशेषज्वरो विड्भेदश्च कासो वमिर्वै शिरोरुगभ्यष्यंदकं पोथकी॥ विसर्पश्च संजायते दंतभेदे शिशूनां गदा ह्यत्र सर्वे

यथास्वंचिकित्स्याः॥१४०॥ पृष्ठस्यभंगेतु बिडालकानांशिखोद्गमेचापिमयूरकानाम्॥दंतप्रभेदेच तथाशिशूनामायुःप्रकर्षोविजयत्यजस्रम्॥५१॥ शिफरदमूलगतश्चवायुर्यदिकुपितोनतः दैवतस्य॥अपिसमकालमथोपितत्रदंताबहिरुपयांतिशिशोस्तदैव॥५२॥शिशोर्दंतपालिंचदंतोद्गमार्थंसंचूर्णेननित्यंभिषक्साधयेच्च॥कणाधातकीपुष्पधात्रीरसैर्वातथातैश्चिरैर्लाववल्लूरजैर्वा॥५३॥रसःपुष्पजःसारणाह्वालकानांमुखंदंतसंघैःकरोत्येवसद्यः॥ यथापंक्तिशोभाकरैर्वा हरेश्चयथास्यंशिशोर्जायतेशीघ्रमेव॥५४॥दंतोत्थाननिमित्तजाबहुगदाःप्रायःशिशूनांचयेते शाम्यंतिविनिर्गतेषुनितरांदंतेषुतेषामपि॥सद्योजातशिशोश्चदंतनिकरोत्थानेशिशूराक्षसोविंद्या ह्यलोकभयावहंचजननीतस्याशुनाशंव्रजेत्॥१५५॥यस्यैकमासेपितथाद्वितीये मासेतृतीयेपिशिशोश्चदंताः॥उत्थानमायांतिपितास्यनाशंशीघ्रंप्रयायाद्यमराजतुल्यः॥५६॥स्वभ्रातरंहंतिचतुर्थमासेदंतोद्गमेमातरमाशुतद्वत्॥स्वभ्रातरंपंचमकेथमासेपित्रोर्द्वयंहंतिचषष्ठमासे॥५७॥ दंतोद्गमश्चेद्यदिसप्तमेपिमासेचदासांश्चनिहंतिदास्यः॥गुरूंस्तथाष्टमेमासिदंताजायंतएवनवमेतथैव॥५८॥मासाद्यदावा दशमाच्चयावच्चतुर्दशंमासमुपैतिकामम्॥तावच्चदंताशुभदाः शिशूनांजाताःसहैवंशुभदानतेस्युः॥दंतोद्गमोत्पातनशमायशांतिंकुर्याद्द्विजानांपरिपूजनेन॥सवत्सधेनोरपिदानपूर्वंमुखंचबालस्यविचुंब्यमाता॥१५९॥ त्रिधाकुमारंविनिगृह्यधात्रीनौकामवारूढ्यसहैवविप्रान्॥सर्पिःपयःखंडकभोज्यमेभ्यःसंभोज्यदेयाः

स्वलुदक्षिणांच॥५१॥ लाजान्प्रदीपान्दधितन्ननीत्वानौकापरि आम्यजलेननीत्वा॥ तस्यावतीर्याशकहिजैःसबालागृहेविशेन्मंग लशब्दवाद्यैः॥५२॥ ॥इत्यकालदंतोत्थानशांतिः॥ ॥स्तन्या शनाद्यांतिकबालकस्य वायुःशिराश्चालयतिप्रकामम्॥ हत्वाश्चयं क्रमशिशोस्तदैवदंताःकणान्त्यभवकिर्कीरीति॥५३॥ तत्प्रती कारः ॥कर्कटशाकविपाचितपयसाऽऽलिप्यचरणनलावाञ्छिरा स्थि॥ दंतोद्भवमथशब्दंबालोविजहातिदृष्टमिदमचिरात्॥५४॥ योवत्सरादूर्ध्वमलंशिशुस्तवानादिदोषाद्यदिवन्हिमांद्यात्॥सं दृश्यमानोबहुमूत्रविट्कःशुष्कोस्थिमात्रोबहुरोगपीडः॥१५५॥ कृष्णास्थिलूतपलपयःश्ल्लनतैलहव्यैर्बस्त्यादिषुप्रतिदिनंप्रतियो ज्यतस्य॥ कल्केनपादनुलितन्चपीवरीणांदुग्धेनवेदशगुणेनच सिद्धहव्यम्॥५६॥ अशनलेपनतोबहुधाघृतंशिशुगणस्यच कार्श्यगदापहम्॥ निगदितंबलपुष्टिकरंसदानिखिलवैद्यमहीप गणैरलम्॥५७॥ अन्यत् ॥रास्नाश्वगंधाकृमिशत्रुजीरयुग्मैः पयस्यासहमुद्गपर्ण्या॥ शिशूक्तमांगस्यनवस्यतद्भिर्घृहयुक्तं वृषभेनतैलम्॥५८॥ काकोलिकाकल्कसमंविपक्वमभ्यगनाद्याभ्य शनाच्छिशूनाम्॥ पुष्टिप्रदंकार्श्यहरंविशेषात्तद्रोगनाशक्षममाहु रार्य्याः॥५९॥ ॥इतिबालशोषघृतम्॥ ॥गौरीचंदनलोध्रप द्मकवचालाक्षारुणाजीवकैः काकोलीदशमूलपद्मकुमुदैःपर्णी दूर्वाभोजकैः॥१६०॥ पंचत्वगृषभांबुदुग्धसहितक्वाथैश्चकल्कै रपिमेदापार्श्वनृपादनैरपिसितायुक्तंचप्रस्थंभिषक्॥ संपाच्यैतद्वि सर्परोगशमनंबालस्यचाभ्यंजनात् नानारोगहरंमुखस्यचतथाप्य

कादिकंपित्तजम्॥ ६१॥ भोज्येनस्यविधौचबस्तिविधिषुप्रायश्च गंडूषके॥ इतिगौर्यादितैलम् ॥ लाक्षाकुष्ठविडंगरात्रियुगलैःसूक्ष्मत्रुटीरोध्रयुक्तैलंदुग्धदधित्थपञ्चकभवैः कल्कैःकषायैरपि॥ ६२॥ शैरीषेश्वशिफेभकेशरदलैर्कह्लालकैः मस्थकम् तैलंवैसरलेनपाचितमथोबालप्रपंचस्यच॥ लूतास्फोटविदंशसर्पदशनः स्फोटैर्विसर्पादियन्नाडीजक्षतमूत्रसंभवगदैर्गंडापच्चीनाशयेत्॥ ६३॥ इतिलाक्षादितैलम् ॥ गांगेरीस्वरसादकेनवसमप्रस्थंघृतंछागिनीदुग्धेनापियुतंचलोध्रविकसाबिल्वाढ्कच्यूषणैः॥ सिद्धंकुष्टकपित्थकोत्पलमदापुष्पैर्भिषक्सिंधुनाबालानामतिसारकग्रहणिकानाशायपथ्याशिनाम्॥ ६४॥ इतिगांगेरीघृतम्॥ ॥ पाठाविषासरलकुष्ठनिशाह्वयानांगंडीरविश्वमगधाह्वयचित्रकानाम्॥उग्रांबुसजेकटुरोहिणिकाविडंगंदेवद्रुदाडिमजवल्कलश्रेयसीनाम्॥ ६५॥ कल्कैःकषायसहितैरजमोदिकानांमूलैर्भृशंशरतमलसहमातुलुंग्याः॥ रात्रेह्वयेनकुटजस्यफलैःस्वगंधासर्ज्जोषणैःसममिदंरवकुतेजवल्कैः॥ ६६॥ सर्पिःकुमारबलसत्वविवर्धनंतद्दुग्धैःशृतंकृमिगदापहमग्निकारि॥ पांड्वापहंश्वयथुरोगहरंशिशूनांगुल्मापहंनिगदितंस्वरभेदहारि॥ ६७॥ अरुचिकार्श्यहरंबलवर्णकृन्निगदितंशिशुदैन्यहरंपरम्॥ अशितमेतदलंशिशुभिर्ह्रुतंसकलवैद्यकशास्त्रविदोविदुः॥ ६८॥ इतिपाठाद्यंघृतम् ॥ सिद्धार्थकोग्रादरपुष्पिकाभिर्ब्राह्मीपयस्यामधुयष्टिकाभिः॥ पुनर्नवागैरिकरात्रिभृंगैर्हिंसारिवाभ्यांत्रिफलानिशाभ्याम्॥ ६९॥ श्यामारुणावासकपुष्प

पाठास्फवर्चलाभिर्मधुकेनसार्द्धम्॥ प्रस्थंघृतञ्चापिदिवौकसानां काष्ठेनतैलेनचसार्षपेन॥१७०॥ पलद्वयेनापिविपाच्यसम्यङ्मन्त्रेणवैद्यःपरिमन्त्रितंतत्॥ पस्यैप्रदद्यात्खलुगर्भवत्यैषण्मासमेषाननयंप्रसूयेत्॥७१॥ चिरायुषंबुद्धिमतांवरिष्ठंसर्वत्तमीशाविरुजंविनीतम्॥ योनिप्रदुष्टाःखलुयाश्चनार्योनराश्चयेवैभगरोगदुष्टाः॥७२॥ अस्यप्रयोगाज्जडगद्गदानांश्रुतिःस्मृतिर्गीरपिसमराच्चात्॥ नतत्रमृत्युःप्रभवेच्छिशूनांयत्रप्रयोगोस्तिचसोमहव्यम्॥७३॥ नचाग्निदाहोनचवज्रपातोनबालमृत्युःखलुसोमपानाम्॥ द्राक्षापरूषाणिचकाश्मरीणांफलानिचात्रत्रिफलाविबोध्या॥७४॥इतिसोमघृतम्॥ ॥वचाकुष्ठब्राह्मीकणासैंधवानांघृतंसारिवासर्षपाणांविपक्वम्॥ निपीतंचमासैकमेतच्छिशूनांश्रुतिंक्षिप्रमेधाकरंमंगलाष्टम्॥१७५॥ पिशाचानभूतानरक्षांसितेषांनतत्रावेशमेवंप्रकुर्युश्चपानात्॥ घृतस्याष्टकादेस्तथामंगलस्यघटोत्थेनवावर्णितस्यप्रकामम्॥७६॥ ॥इत्यष्टमंगलघृतं॥ ॥ शंखप्रसूनात्रिफलागदानांब्राह्मीवचानागरगोस्तनीनाम्॥ जीवंतिकाजीवकदाडिमानांशठीबलाबिल्वदुरालभानाम्॥७७॥ चुटीभकृष्णान्वितपुष्कराणांसकंटकारीक्वथितैःपयोभिः॥ चतुर्गुणैर्हव्यमलंकसिद्धंकल्कैःकषायैःशिशुभिर्निपीतम्॥ ॥७८॥ कुमारकल्याणघृतंचधन्यंछायाग्रहावेशगदापहारि॥ पुष्टिप्रदंवर्णकरंशिशूनामग्निप्रदंदंतगदापहंच॥७९॥ वसावामज्जावापलरसमथोवापिभिषजाविपक्वंसर्वंतत्खलुदरप्रसूनादिसकल्कैः॥ कुमाराणांपूर्वोक्तफलमपिचसंपाद्यसहसा यथा

देशंकालंतनुमुपद्रुतांचापिविदधुः॥ १८०॥ ॥इतिकुमारकल्याणघृतम्॥ ॥खदिरमदार्ज्जुनतालीसैश्चंदनरसगोपयःसासिद्धम्॥ शिशुगणच्छर्दिहरंतद्व्यंनिगदितमेवंतुवासिद्धम् ॥८१॥ इतिखदिराद्यघृतम्॥ ॥सिद्धार्थकपद्मस्यापामार्गकुष्ठशतावरी॥ ब्राह्मीसैंधवपर्णीभिः कणायुक्तंघृतंशृतम् ॥८२॥ क्षीराहारशिशूनांचभेषजंपरमंमतम्॥ नानारोगहरंतेभ्यः पातुंदेयंभिषग्वरैः॥ ८३॥ इतिसिद्धार्थकघृतम् ॥मधुकवचात्रिफलाशृतहव्यम् शिशुमुभयाशिनम्आशुनिपीतम्॥ ग्रहगदरक्षोभीतिमसंशयमेव प्रतिदिनमस्यतितस्यचतेन॥ ८४॥ इतिमधुकघृतम्॥ ॥द्विक्मूलद्राक्षानतभद्रदारुमध्वादियष्टूषणजंतुजिद्भिः॥ गवापयोभिः शृतगव्यहव्यंशिशवायुरारोग्यमलंविदध्यात्॥ १८५॥ द्विपंचमूलीघृतम् ॥श्यामाजपापुष्पकषायसिद्धंगव्यंघृतंसारुणमाशुपीतम्॥ नित्यंशिशूनामुपहंतिकासंश्वासंचलर्षेसमरक्तपित्तम्॥ ८६॥ श्यामाघृतम् ॥ पुनर्नवानागरकाकमाचीरास्नान्तृवृद्धिर्बृहतीदलानाम् ॥ भार्ङ्गीकदंबस्यफलोत्थकल्कैरक्षोन्मितैरष्टपलंगवीनाम्॥ ८७ सिद्धंघृतंदुग्धजलान्वितंचशिशोर्महकासंश्वसनापतन्त्रम्॥ पीतं निघृष्टंबहुधाशरीरेघ्रातंचनासाविवरद्वयेन॥ ८८॥ पुनर्नवाघृतम् ॥ शुंठीभार्ङ्गीकणापाठामरीचानागकल्कयुक्॥प्रस्थार्द्धंगोघृतंसिद्धमारनालैर्द्विभागिकैः॥ ८९॥ शिशोःकासहरंपानाच्छ्वासघ्नंचापतंत्रकम्॥ हंतिसद्योविशेषेणजीर्णाहारेणसेवितम्॥ १९०॥ नागराद्यघृतम् ॥ क्षीरद्वयग्रंथिकदीप्यतिक्त

जाजीकणाबिल्वदेवीककाष्ठैः॥ कल्कीकृतैर्माक्षिकमद्ययुक्तं घृ
तं चसौवीरयुतं विपक्वम्॥ ९१॥ प्रयुक्तमात्रं चसदाशिशूनां गदान्नि
हन्यादखिलानजस्त्रम्॥ क्षीरद्रुमाद्यं परिभावसंज्ञानेषांसमस्तां
श्चनिराकरोति॥ ९२॥ क्षीरद्रुमाद्यं घृतम् ॥ बिभीतकत्वग्
खदिरतालकुष्टमनःशिलासाधित तैलमेतत्॥ क्षिप्तंशिशूनामपि
कर्णरंध्रेगदंनिहन्यादपिशूनिकर्णम्॥ ९३॥ बिभीतकतैलम्॥
लाक्षारसं तैलसमंचमस्तुचतुर्गुणंपाच्यभिषक्समस्तैः॥ रास्ना
श्वगंधागदशाल्मियष्टिमूर्वाशताव्हामरदारुभिश्च॥ ९४॥ निक्ताह
रेणुप्रयुतं विपक्वमभ्यंगतोबालगणस्यतैलम्॥ ज्वरंनिहन्याद्बल
वर्णकारीरक्षोघ्नमेषांचग्रहापहारि॥ १९५॥ इतिलाक्षाद्यं तै
लम् ॥ बालः क्षणादुद्विजतेक्षणाच्चेत्पश्येत्तथारोदितियःप्र
कामम्॥ नखैश्चदंतैरपिदारयेद्धा द्धात्रिंस्तथात्मानमथोभुवोस्तौ
॥ ९६॥ दंतौष्ठमेवंक्षिपतिप्रकृष्टं फेनं स्रवामीनिशिलुमनिद्रः॥
क्षामःस्वरःशूनतनुश्चमत्स्यमधास्त्रगंधोग्रहदुष्टयुष्टः॥ ९७॥ ॥
प्रतीकारः ॥ रसोननिंबच्छदवंशजत्वग्जतुप्रधूपस्तुग्रहोपहा
री॥ सिद्धार्थनिंबच्छदवंशजत्वक्जंतुप्रधूपस्सघृतस्तथावा॥ ९८
सर्पनिर्मोचनंकेशनिर्माल्यकौमव्यहव्येनवागोरसिद्धार्थकैः॥
धूपनाद्बालकानांग्रहायेत्रसन्दतोयांतिबालान्परित्यज्यवै॥ ९९
नागव्याघ्रभुजंगसिंहतनुजैःपूतीकदिव्यूलनामपिदीप्यमर्षप
चर्चाभल्लातकुष्ठैःकृतः॥ धूपश्चायमसंशयंशिशुगणस्यापिग्र
हावेशनाद्रक्षांचैवकरोतिनित्यमबलंकुर्याच्चबालंदृढम्॥ २००॥
काकजंघासदुग्धानांवृक्षाणांचैववल्कलम्॥ कपित्थककदंबानांम

करंदानांच पल्लवैः ॥ २०१ ॥ धूपः स्नातस्य बालस्य सर्वग्रहहरः स्मृतः ॥ प्रयोज्योयं विशेषेण वृद्धवैद्योपदेशतः ॥ २ ॥ रक्तास्यिगात्रस्रवदश्रुनेत्रः सस्यंदनः कंपयुतोऽर्द्दृष्ट्या ॥ पश्येच्च वक्रेण मुखेन रक्तगंधः पतत्येव च साभिनंदम् ॥ ३ ॥ स्कंदग्रहावेशयुतो हि बालो विश्वस्तभ्रष्टानि चरो दिने हि ॥ स्वल्पं कदाचित्खलु तस्य सम्यक् धूपादिकं यच्च ब्रवीमि चाथ ॥ ४ ॥ सर्षपो ग्राहिनिर्मोकोष्ट्राजाविकगवामपि ॥ लाक्षाकाकादनीहव्यैर्धूपस्कंदग्रहापहः ॥ २०५ ॥ सोमेंदुवल्लीभवबिल्वजालवंदाकमांसीगददेवकाष्ठैः ॥ श्रीवेररास्नागुरुचंदनैलामृगादनीमूलहरेणुभिश्च ॥ शिलारुणाभ्यां समसैलवालुजतुप्रयुक्तोप्यथ साधुपिष्टः ॥ लेपः सलाक्षाःशिशुदेहलिप्तः स्कंदग्रहावेशनिवारणाय ॥ ६ ॥ बिल्वाग्निमंथाग्निलशत्रुपत्रवासाविशल्यामिसिकासुसिद्धम् ॥ तर्कारिकाजीवनवर्गकैश्च घृतं विपक्कं निशि पेयमेभिः ॥ ७ ॥ स्कंदग्रहावेशनिवारणाय तैलं विमर्द्यं मिसिभिर्विपक्कम् ॥ स्नात्वा त्रिरात्रं निशि चत्वरेषु बलिं प्रदद्याद्यवतंदुलाभ्याम् ॥ ८ ॥ अथातः प्रवक्ष्यामि बालग्रहेभ्यः सदा चैव रक्षानु वेलं दिनेषु ॥ यथाशास्त्रविद्भिर्मया लिख्यतेत्र पुराणैर्भिषग्भिः स्तथा मंत्रविद्भिः ॥ ९ ॥ तपसां तेजसां चैव वपुषां यशसामपि ॥ विधानं योजयेद्देवः स नः स्कंदः प्रसीदतु ॥ १ ॥ ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥ देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ २ ॥ देवदेवस्य महतां पावकस्य च यः सुतः ॥ गणोमा कृत्तिकानां तु स ते शर्म प्रयच्छतु ॥ ३ ॥ रक्तमाल्यांबरः श्रीमान् रक्तचंदनभूषितः ॥ रक्तदिव्यवपुर्देवः पातु त्वां क्रौंचनाशनः ॥ ४ ॥ ॥ इति

रक्षामंत्रः॥ ॥इतिस्कंदग्रहः॥ ॥विसंज्ञोयदाफेनवामीशिशूर्यः ससज्ञस्तुरोदित्यतीवात्रनित्यम्॥ सपूपास्त्रगंधोभवेत्स्कंदकेनकृतापस्मृतिस्तच्चिकित्सांब्रुवेथ॥२१०॥ बिल्वशिरीषस्करसादिभिश्चगोलोमिभिर्वैपरिषेकउक्तः॥ बस्तस्यमूत्रेणविपक्कतैलमभ्यंजनेऽपस्मृतिनाशनंस्यात्॥११॥स एरीरकस्सकाकोलीगणक्काथशृतघृतम्॥ सपयःसपयःसिद्धपेयंबालेरपस्मृतौ॥१२॥ वचाहिंगुभिर्गृध्रकोलूककानांविशाकेशरुडीनखेर्लोमभिश्च॥वृषस्यापिहव्यैस्तथाधूपनंद्राक्भवेत्स्कंदजापस्मृतौबालकानाम्॥१३॥ अनंतांचबिंबांतथाकुक्कुटींचतथामर्कटींधारयेद्वाविपक्वां॥ निर्मांसानिरक्तानिवान्नप्रसन्नोदनानिप्रदेयानितत्र॥१४॥चतुष्पथेबलिंदत्वास्नानंबालस्यकारयेत्॥रक्षामंत्रंप्रवक्ष्यामितेनरक्षांचकारयेत्॥२१५॥स्कंदापस्मारसंज्ञोयःस्कंदस्यदयितःसखा॥ विशाखसंज्ञश्चशिशोःशिवोस्तुविकृताननः॥१॥ इतिरक्षामंत्रः ॥स्रावपाकैर्दवथुप्रयुक्तैःस्फोटैश्चितःस्रस्ततनुश्चभीत्या॥बालःसदायश्चकितोरुजार्त्तोज्ञेयःक्षतोसौबहुधाशकुन्या॥१६॥ प्रतीकारः ॥वेतसाम्रजकपित्थजनीरैःसंस्कृतैश्चपरिषेचनमत्र॥ तैलमेवमधुरैश्चकषायैःसिद्धमाशरवलुतश्चलेप्यम्॥१७॥ मधुकनलदनीरैःसारिवापद्मलोध्रैःकमलगिरिजमृद्भिःसप्रियंगुःप्रदेहः॥उदितइहतथान्यत्स्कंदकारब्धग्रहेयन्निखिलमपिव्रणानामुक्तपथ्यादिकंतत्॥१८॥ लक्ष्मणान्धारयेद्वापिसहदेवींबृहतींतथा॥ शिशुश्चशकुनीशांत्यैवक्ष्यमाणंबलिंहरेत्॥१९॥स

तिलतंदुलमाल्यमनःशिलाविरचितोहरितालसमोबलिः॥ वितरितव्यनिकुंजघनेष्वलंशकुनिकाप्रशमायशिशोरलम्॥ २०॥ स्नानंप्रयोक्तव्यमलंशिशोश्चविधानतोनिष्कुटमध्यएव॥ शिरीषगंधांबुगदैःपुरेणससर्षपंतैलमथाविमर्द्यम्॥ २१॥ कुर्याच्च पूजांकुसुमैर्विचित्रैःशुभैःशकुन्याश्चथमंत्ररक्षाम्॥ यथातथामंत्रमुदाहृतंचवक्ष्येथतंत्रोक्तविधानपूर्वम्॥ २२॥ अंतरिक्षेच यादेवीसर्वालंकारभूषिता॥ अधोमुखीतीक्ष्णतुंडाशकुनीते प्रसीदतु॥ १॥ दुर्दर्शनीमहाकायापिंगाक्षीभैरवस्वरा॥ लंबोदरीशंकुकर्णी शकुनीतेप्रसीदतु॥ २॥ इतिरक्षामन्त्रः ॥ स्फोटैर्व्रणैर्यस्यशिशोश्चगात्रंचितंभवेत्पक्षिकगंधमस्त्रम्॥ संभिन्नवर्चाश्चसवेज्वरेणदाहेनयुक्तःसतुरेवतीभिः॥ २३॥ अजगंधासहदेवीश्रृंगीहिंसारिवेपुनर्नवायुग्मम्॥ सविदारिकसंस्कृतिमेषांतोयेरेवतीनिषेचनयुक्तम्॥ २४॥ अजगंधादिकषायेनतैलमभ्यंजनेस्मृतम्॥ कुष्ठसर्जरसंलाक्षोशीरागजकदंबकैः॥ २५॥ धवाश्वकर्णककुभौस्तंदुकीधातकीसमैः॥ काकोल्यादिगणैःसर्पिःसिद्धंचपेयमिष्यते॥ २६॥ कुलत्थशंखचूर्णानांप्रदेह्नःसार्वगंधिकः॥ गृध्रोलूकविशाबाणयाजवैर्द्व्येनसंध्ययोः॥ २७॥ उद्धूपनंशिशोःकार्यरेवत्याश्चनिवृत्तये॥ शुक्लपुष्पपयोधान्यतंदुलैश्चबलिस्तथा॥ २८॥ गोतीर्थेपिप्रदातव्योरेवत्यास्तुनिवृत्तये॥ रक्षांवक्ष्येथतांकुर्याद्बालकस्यविचक्षणः॥ २९॥ यथा ॥ नानावस्त्रधरादेवीचित्रमाल्यानुलेपना॥ चलत्कंकणशोभाढ्यारेवतीतेप्रसीदतु॥ १॥ याजमंतिसततंदेव्योविविध

भूषणाः॥ लंबाकरालाविनतारेवतीचशफभानना॥२॥ शुष्कनासाचप्रसादेवीरेवतीतेप्रसीदतु॥ इतिरक्षारेवती ॥ अतीसारस्तथातृष्णाज्वरोजाड्यमनिद्रता॥उद्वेगोरोदनंयस्यग्रस्तोयंपूतनयाशिशुः॥२३०॥ अरलुवरुणयुक्तंपारिभद्रंविशेषाच्छिशुगणपरिषेके वंकपारावनाद्याः॥ वटकचटकमांसंतित्तिरस्यापिचात्रमधुरगणशृतसिद्धंवश्यजातेनहव्यम्॥ ३१॥ मञ्जिकाकुष्ठनतैश्चकालीयदूर्वाकुशमूलसर्जैः॥ सतंदुलैर्हव्ययुतस्तुधूपो बालस्यचैपूतनिकापहारी॥ ३२॥ द्विषास्थिशकलंघृष्यवारिणात्रशिशोस्तनौ॥ लेपनासानतावापि बालान्यजतिपूतना॥ ३३॥ मत्स्यौदनंकृसरयापललंशरावयुग्मेनसपुटविधानबलिंप्रदद्यात्॥ शून्येगृहेत्यजतिपूतनिकाचबालंसंधारयेच्चत्रिफलांचविंबाम्॥ ३४ काकादनींचगुंजांचयथालाभंतुधारयेत्॥ ब्रह्मःपूतनिकाविष्टःकुंभजातेनवर्णितम्॥२३५॥ मलिनीचचलादेवीमलिनारूक्षमूर्द्धजा॥ शून्यागारांश्रयादेवीदारकंपातुपूतना॥ १॥ इतिरक्षा॥छर्दिज्वराभ्यांकसनेनबालस्त्नर्षेणगंधेनवसासमेन॥ कार्श्यातिसारारुचिभिःसमेतो पुष्टोन्धकावेशवशेनबाधः॥३६॥ प्रतीकारः ॥ तिक्तद्रुमाणांदलजःकषायःकार्योभिषेचार्थमलंशिशूनां॥मृगादनीवात्रिफलाचतुंबीधार्योशिरस्यत्रचबालकानाम्॥३७॥ आमंपलंपक्वमतथैवरक्तंनिवेद्यंचचतुष्पथेस्यै॥ अंतर्गृहेसर्वसुगंधनीरैः संस्नाप्यधूपैरपिधूपयेत्तम्॥३८॥ रसोनगोशृंगविडालविड्भिर्मयूरपिच्छैरहिकंचुकेन॥ कार्पासबीजैर्यवसर्षपैश्चनिर्माल्यकेशैर्घृतशिक्थमिश्रैः॥३९॥ अंधपूतनिकाविष्टबा

लकंस्नाप्य धूपितम्॥ रक्षामन्त्रैश्च तद्रक्षां कारयेच्च यथाब्रुवे॥ २४०॥ करालाविकलामुंडा कषायांबरवासिनी। देवीबालमिमंप्रीतासारक्षत्वन्धपूतना॥१॥ इतिरक्षामंत्रः ॥वेपतेकाशतेनेत्ररोगातुरश्छर्द्यतीसारशीतत्वदुर्गंधिभिः॥ बालकः पूतनाशीतशब्दादिकायातयाजुष्टएवयदाजायतेवैतदा॥४१॥ बिंबीकपित्थकुशवन्हिमुखैश्च बिल्वपत्रैर्बलासकरसयासह नंदिवृक्षैः॥ बालस्यचात्रपरिषेचनमाशुकुर्यादेभिर्भिषक्सकलबालकतंत्रवेत्ता॥४२॥ छागंधेनुभवंमूत्रसमेतं देवदारुघनसर्वसुगंधम्॥ कुष्ठयुक्ततिलतैलविपक्कमत्रबालकतनौप्रतिमर्द्यम्॥४३॥ रोहिणीखदिरसर्जपलाशैर्वल्कलैश्च बकुलस्यपयोभिः॥ गव्यहव्यमथसंश्रृतमेवंबालकस्यच प्रदेहइहोक्तः॥४४॥ यदौषधंधार्यमिहैवतच्चनिरुक्तमादौखलुपूतनायाः॥ शीतादिकायाश्च निवारणोक्ताधूपःप्रयोज्योथयथाब्रवीमि॥२४५॥ गृध्रोलूकविशाहिकंचुकयुतानिंबच्छदाबस्तजाधूपेबालगणस्यमास्तिकयुताहव्यान्विताधारणे॥ गुंजाबिल्वमथोवलिःसमुचितोमुद्गेन भक्तस्यचस्नानंचापिजलाशयेसमुदितं धूपंततोदापयेत्॥४६॥ मुद्गौदलाशनादेवीकराशोणितपायिनी॥ जलाशयाजलरतापातुत्वांशीतपूतना॥१॥ इतिरक्षामंत्रः ॥ प्रसन्नास्यवर्णाः शिरासंवृतोयोभवेन्मूत्रगंधस्तुबव्हन्नभोक्ता॥ शिशुर्वैमुखाद्याचयामाणितास्व्याग्रहःपूतनायातयासंगृहीतः॥४७॥ प्र० ॥ कपित्थवाशीरुबुबिल्वपत्रैकुंबेरनिंबच्छदकाग्निमंथैः॥ क्वाथोविधेयःपरिषेचनार्थेशिशोर्गृहीतस्यग्रहेनतस्याः॥४८॥ भृंगराजा

श्वगंधाभ्यांपत्रजातरसेनच॥ वसातैलेश्टतंकुर्यादभ्यंगार्थंतथा शिशोः॥४९॥ मधूलिकापंचजटापयोभिर्गणेतुगोक्षीरिकया समेते॥ घृतंश्टतंयन्मधुकेनसार्द्धंबालस्यभोज्यंचग्रहापहारी॥२५०॥ वचाधृतंसर्जरसंसकुष्टंधूपेत्रबालस्यतथानियोज्यम् ॥ गोजिह्वाधारयेद्वासितथासर्पस्यकंचुकम्॥५१॥ वर्णकं चूर्णकंमालिकामज्जनंपारदंसच्छिलागोष्ठके॥ बलिंसंहरेद्बालकस्यग्रहान्मोचप्रार्थभिषक्कुभजेनोदिनम्॥५२॥ मंत्ररक्षाशिशोर्गोष्ठेपूजनंस्नपनंतथा॥ यथारक्षाविधातव्यामंत्रंतत्तुब्रवीम्यहम्॥५३॥ अलंकृतारूपवतीसुभगाकामरूपिणी॥ गोष्ठमध्येनयरतापातुत्वांमुखमंडिका॥१॥ छर्दिस्यंदनयुक्तकंठमुखयोःशोषश्वसंमूर्छनंयस्यस्याश्चविगंधतापिविदशोहृत्तैस्थोर्द्धंचयः ॥ पश्येद्यश्चशिशुःसवापिभिषजावैनैगमेयग्रहग्रस्तांश्छिन्नरुहाग्निमंथधनिकापूतीकसैर्व्यौघ्नुवम्॥५४॥ प्रियंग्वनंतासरलौर्मिसीनांकुटंनटेरादधितक्रशुक्तैः॥ तैलंपचेत्कांजिकयुक्तमेतद्बालग्रहावेशनिवारणंद्राक्॥२५५॥ दिङ्मूलजक्वाथपयोभिरत्र खार्जूरमाल्लिक्ययुतंचहव्यम्॥ सिद्धंचगव्यंशिशुनैगमेयग्रहापहंवैमधुकेनसार्द्धम्॥५६॥ वचापयस्याजटिलांचबालोगोलोमिकांचाथविधारयेत्सः॥ स्नानंप्रकुर्याद्वटवृक्षकस्यप्यधस्तलेधूपनमस्यपधत्॥५७॥ विशोलूकगृध्रप्रजातेनधूपस्तथामर्कटस्यापिवापूतनायाः॥ शिशोर्नैगमेयग्रहावेशशांत्यैप्रदेयोभिषग्भिस्तदापैत्तृगेहे॥५८॥ सतिलतंदुलमाल्यसमंतदाविविधभोजनवस्त्रबलिंबुधः॥ वटतरोश्चनिवेद्यतलेद्रुतंशिशुगणस्यचरक्षणमाश्रवे ५९

अंजनश्चलिताक्षिभूक्षीरहापूतिवांतिकृत्॥ कुर्यात्वसाहसंकुर्युः कामरूपीमहायशाः॥ बालपालयितावेदोनैगमश्चेहरक्षतु॥ १॥ ॥इतिरक्षानैगमेयः॥ ॥कृशःसास्रहग्यश्चसास्रप्रगंधा सदाक्षीरकाहारपूतिप्रछर्दिः॥ शिशुःसाहसीकामसंजातपीडो- स्यभिख्यार्थशांतोजनानांप्रियःस्यात्॥ २६०॥ सशब्दंनिशायांतु संवीक्ष्यतेनचैवास्तिसोयंक्षुधायांकचिच्च॥ शिशुःशष्कवक्त्रोर- तीशेगृहीतोभवेत्कृच्छ्रसाध्योबलिस्तत्रकार्यः॥ ६१॥ क्राथामहा मुंडतिकाभवोयःसोशीरकःकामग्रहापहारी॥ मधूकसप्तच्छदछे लुपत्रक्राथोपिबालस्नपनात्तथैव॥ ६२॥ सप्तच्छदामयनिशाशि- शिरैःशिशूनामालेपनंकामरतिग्रहेपि॥ सप्तच्छदपेष्यच मत्स्यपित्ता युक्तंसमूर्वंशिशुलेपनंस्यात्॥ ६३॥ सप्तच्छदत्वग्लसुनंसमूर्वासि द्धार्थनिंबच्छदमेषशृंगी॥ विडालविड्लोमवचाशिशूनांधूपोमधू- क्तोघृतमिश्रितोत्र॥ ६४॥ मृतस्यगोकुक्षिजगोमयेनगव्येनहव्ये नयुतस्यधूपात्॥ सर्वेग्रहायांतिशमंविशेषाज्ज्वरादिकायेचगदाः शिशूनाम्॥ २६५॥ बलीष्टशात्यैखिलबालकानांस्कंदोग्रहेशोऽखि लरोगमध्ये॥ यारेवतीसाविधिवत्प्रपूज्याबालस्यसर्वंहितमिच्छि तैव॥ ६६॥ दिशःसूर्योनारिक्षश्चस्वस्तिकुर्वंतुसर्वदा॥ तेजसाब्रा- ह्मणाश्चाथविष्णोरिंद्रस्यतेजसा॥ ६७॥ सिद्धानांतेजसाचैवरक्षि तोसिसुखीभव॥ मंत्रैरेतैःभिषक्पश्चाद्रक्षांकुर्वीतबालके॥ ६८॥ भवंतिनिर्ग्रहाबालाःसुखिनोरोगवर्जिताः॥ इत्यगस्त्यः ॥सामा न्यग्रहशांतयेनिगदितेयद्बालरोगापहं हृद्यंगव्यमलंपरंविरुशिवं यत्तत्रसंकीर्तितम्॥ श्रीमत्स्कंधगणेशरूपधरणीश्रीविष्णुकेशा

बिकासर्वेरोगहराभवंतुसततंबालप्रजानांचते॥ २६९॥ श्रीतात पादाज्ञेति॥ श्रीकाशिनाथेनगतश्चतस्यांसद्वालरोगस्तबकःस-मासिम्॥ २७०॥ ॥ ॥ अथवाजीकरणंव्याख्या स्यामः॥ ॥ शिशुशशिमालगजमुखशालं॥ गणपतिबालंन-मतसदालम्॥ १॥ ॥ अथवाजीकरणलक्षणम्॥ ॥ यद्द्-व्यंसकलंनरंप्रकुरुयाद्वाजीसमंमैथुनेतद्द्रव्यंभिषजांवरैर्निग-दितंवाजीकरंवीर्यदम्॥ क्लीबस्यात्सुरताक्षमःखलुतदातत्क्लैब्य नाशक्षमंतत्प्रोक्तंकविभिश्चसप्तभिरलंभेदैःस्फुटंकथ्यते॥ २॥ ह्द्द्याहितशोकभीतिक्रोधैरखिलैर्मानसदुःखदैश्चभावैः॥ मनसी हततोथरंतुकामोध्वजपतनात्प्रथमःसवीर्यखंडः॥ ३॥ अतिक टूनिपाटूनिरसोन्यलंभजातिचाम्लतराणिवहन्यथ॥ अपिचशा-कविरुद्धपयांसियः सखलुपित्तविदग्धनिमित्तजंभवतितस्यच-खाडथमसंशयम्॥ ४॥ इतिद्वितीयंतुतथातृतीयोव्यवायशी लोतितरांक्षयाच्च॥ क्लैब्यंचशुक्रस्यतथैवतस्यवाजीक्रियांनैव प्रकुर्वतस्तु॥ ५॥ महामेदरोगेणसंजायतेक्लैब्यमन्यद्यथाय स्यसः॥ समुक्तश्चतुर्थःस्तथापंचमःशुक्रनाडीपरिच्छेदनात्॥ ६॥ मदनोन्मथितस्यमानवस्यमनसःक्षोभनिरोधनाच्चकामा त्॥ अतिब्रह्मरसस्यवीर्यरोधादपिषष्ठःखलुखंडएवसः॥ ७ यत्क्लैब्यंसहजंनरस्यचतथासंकीर्तितंसप्तमम् अन्यन्मर्मशि रास्ततस्यभवंक्लैब्यंत्वसाध्यंद्वयम्॥ ८॥ ॥ अथक्लैब्यानां प्रतीकारः॥ ॥ कार्योहेतुविपर्ययःप्रथमतः क्लैब्यस्यसाध्य स्यच यस्मान्मुख्यचिकित्सितंनिगदितंत्यागोनिदानस्ययत्॥

९॥ तत्रवाजीकरणविधिः ॥ वाजीकरान्योगवरान्मनुष्यः सम्यग्विशुद्धोपिनिरामयोयः॥ आषोडशात्सप्ततिवर्षपूर्तेरवाग्विचार्यःक्रविचार्यकुर्यात्॥१०॥ क्षयवृद्ध्युपदंशाकादिरोगाःप्रभवंत्येवचकामिनीप्रसंगेः॥ अतएवविधानतत्प्रकामांविधिनापुष्यविशुद्धयेनिषेवेत्॥११॥रूपयौवनधनानिरूरवानिसंभवंति विविधाबहुबालाः॥ताहशाश्वरवलुतत्रचतेषांस सकीकरणमेवतुयेषाम्॥१२॥ विचित्रपानभोजनादिवस्त्रगीतवाद्यकैस्तथा मिनांशयामिनीस्ककामिनीवनानिलैः॥ मनोज्ञगंधमग्धनागवल्लिपत्रकैःमनोभवःप्रजायतेनिषेवितैरसंशयम्॥१३॥माक्षिकमाक्षिकशिलाजतुपारदानांचूर्णंसलोहकविडंगशितासितानाम् ॥भुक्त्वाचविंशतिदिनानिभजेत्प्रकामंयोऽशीतिकोपिवनितानिकरंयुवेव॥१४॥ अन्यः ॥गगनममरवल्लीसत्त्वलोहत्रुटीनां प्रभवतिससितंयो माक्षिकेनैवचूर्णम्॥ अनुपिबतिपयोवाकामिनीदर्पनाशंप्रथयतिबहुपुत्रैर्वंशमेकोपिखंडः॥१५॥ विरूढवत्साकगवापयोभिःसिद्धंचयत्पायसमेकमेव॥ गोधूमचूर्णंसितंसहव्यंसमाक्षिकंयत्पयसाकभृष्टम्॥१६॥ भुक्त्वाजराक्रांतपुनर्विशेषाद्दशांगनाभोगपरोयुवेव॥ नचित्रमत्रप्रथयत्यलसंइंशस्यवृद्धिंस्वकलैःकलाभिः॥१७॥ युग्मम् ॥अन्यः॥ ॥ वटकमूषकनक्रपुनर्भवांघ्रतमलंपरिसाधितमंडकैः॥तदवलिप्तपदोवनितांभजन्नधरणींस्पृशतीह्यपदावधि ॥स्त्रियमसौभजतीतिपदावधि॥१८॥ अन्यः ॥ईषदम्लदधिनेममादकंमेलखंडवस्चूर्णप्रस्थकम्॥क्षौद्रमप्पलसंमितंघृतंतद्द्विभागतुलि

तपटस्थितम्॥ १९॥ वेदमाषजगतामरिचेन तावतैव विधिनापि लवंगैः॥ कार्षिकैश्च त्रुटिभिः सकलं तद्गालितं च सकमृद्वरपात्रे ॥२०॥ चंद्रचंदनमृगोत्थितनाभिजातजातपरगंधसमेते॥ स्थापिता च खलु सैव रसालापानतोत्यतनुवृद्धिविधात्री॥२१॥ ॥ विशेषकम् ॥ गोक्षुरेक्षुरबलेभवलानां तालमूलशतमूलयुतानाम्॥ निस्तुषीकृतरूवानरबीजैरश्वगंधजजटासहितं सकलं तत्॥ २२॥ चूर्णितं च पयसा रूगवीनां सिद्धमष्टगुणितेन विपाच्य॥ सर्वचूर्णसमहव्यविपक्वं सर्वतो द्विगुणरवंडसमेतम्॥ २३॥ यावदग्निबलमत्ति नरो यो मोदकीकृतमलं प्रमदाभिः॥ रंस्यते च तनुते तनुजानां वृद्धिमृद्धिमथ दैत्यगुरोश्च॥२४॥ अन्यः ॥ कणालवणावत्सांडसाधितं च घृतं नरः॥ पिबन् वृषायते वीर्यसंपदा मुदितोरतौ॥२५॥ अन्यः ॥ दशपलप्रमितं खलु दक्षिणप्रभवपूगफलं परिचूर्णितम्॥ पदविशोधितमेव गवां पयस्यथ पचेदपि चाष्टगुणो भिषक्॥२६॥ घृतमिहांजलिसंमितमुत्तमम् समनुयोज्य तुलार्द्धसितायुतम्॥ समवतार्य घनं धरणीतले परिविमिश्य च वक्ष्यगणान्ध्रुवे॥२७॥ त्रुटिवलेभबलात्वपलावराम धुकधान्यकसेरुकपत्रकान्॥ मरिचनागरजीरकचंदनहयामिसीभकणाजलदाधरान्॥२८॥ वरटकांबुजबीजविदारिकामुशलिकेक्षुरगोक्षुरमेथिकाः॥ जरणाकेशरशाल्मलिकाजटामरिचमागधिकासशशिप्रभाः॥ २९॥ त्रिदशपुष्पतुगानलपत्रिकासफलिकोच्चटिकाहयगंधिकाः॥ जलगवीस्तनिकाशिवलिंगिका पलमिताः सकलांश्च पृथक्पृथक्॥ ३०॥ सहाराहरान रिवलान्स्कवैद्यःरवा

र्जूरश्रृंगाटकतुल्यभागान्॥ सूतेन वंगेन च लोहमभ्रकस्तूरिका-
चंद्रसमं समस्तम्॥ सवानरीबीजजचूर्णयुक्तान् कुर्याद्भिषक्तस्य
च मोदकांश्च॥ तानम्लकट्वादि विहाय भुक्त्वा नरः प्रकामाद्वनिता
निषेवेत्॥ ३२॥ पाकं श्रीरतिवल्लभाख्यकमिदं दुग्धानुपानं हुतम्
भुक्त्वा पि नरेण वृद्धशिशुभिः कांतांगसंगक्षमः॥ सौख्यं भोग
विलासमानसभुवं सदीप्यवामाशतं रंतुं चानुपदं पदं प्रकुरुते श्री
कामयानेनिशम्॥ ३३॥ माजूफलखसफलकरभकवणबी-
जानि शोषमुदधं त्वक्संयुतानि॥ चूर्णार्द्धभागविजयासहिता
नितस्मिन्नायोज्य सोयमुदितोप्यथ कामकेशः॥ ३४॥ अल
रक्तपित्ताधिकारोक्तश्चाद्यैर्निरुक्तस्तु कूष्माडकस्यावलेहः॥ प-
रःपुष्टिकारीत्ववाजीकरोपिस्मृतो वैद्यभूपैश्च पित्तातिवृद्ध्यै॥
३५॥ अन्यः ॥ पक्वाम्रजद्रवमलं स मृदः कटाहे द्रोणोन्मि
तं भिषगथादकसंमितां च॥ शुद्धां सितां प्रस्थघृतेन शुद्ध्या प्र-
स्थार्द्धया कुडवमारिचचूर्णयुक्ताम्॥ ३६॥ पलद्वयेनापि कणा
भवेन दुग्धेन धेनोरपि चालकेन॥ पचेत्सुदर्व्या खलु दारुमय्या प्रचा
लयेत्तावद्घनं विलोक्य॥ ३७॥ भूमावतार्याथ रजस्यमीषां कुस्तु
बुरीजीरकचित्रकानाम्॥ त्वक्सुस्तकग्रंथिकपत्रकानां लवंगजा
तीफलकेशराणाम्॥ ३८॥ एलाबृहज्जीरकसंयुतानां पृथक्
पृथक् चापि पलोन्मितानाम्॥ सिन्द्रेत्रशीते कुडवद्वयं च मधोः
प्रदद्याद्द्विपलं च तस्य॥ योभक्षयेद्भोजनतो नरो वा ग्ग्य थान लंवा
श्च समो रतेस्यात्॥ ३९॥ नित्यं निरामयकरोग्रहणीप्रहर्त्ता-
श्वासापहोरुचिकरः क्षयरोगहारी॥ रक्तादिपित्तशमनोम्लप

दादिपित्तहृतागदस्यवनितारमणेप्रशस्तः॥५०॥ अन्यः॥ पूर्णगोक्षुरसंभवंखलुतथाछागीपयःसाधितंभुक्तंखंडमधुप्लु तंप्रशमयेत्षांडत्वंनराणांहृतम्॥यद्यांतंबहुधाकुवैद्यकलितद्र व्यौषधीनांसदात्वानादात्वरतोनिरंतरमृषासंसेवनात्संभवम्॥ ५१॥ ॥अथतैलम्॥ ॥रक्तचंदनकुचंदनपतंगदेवदारुके कणागुरुत्रुटिद्वयाम्बुदत्रिगंधसिक्थकैः॥मुरानखप्रियंगुगुग्गु लून्पलंकखानत्तारुणोदकैश्चग्रंथिपर्णकैः॥५२॥भिषकूच शाणमात्रकैःपृथक्पृथक्प्रकल्कितैःशनैःपचेत्तिलोत्थतैलमेण नाभिकेशरैः॥समांसिकंससिंहिकंरूशैलजेनधातकीप्रसूनकेरु शीरकैःसरालकैःस्रजातिभिः॥५३॥सपद्मकंचचव्यमत्ररेणुका लवंगकैःसवालकंसदारुकंस्फसिद्धमेतदेवतैलमाशुदेहमर्द नात्॥अपुत्रकंसपुत्रकबलाधिकंतुनिर्बलंकरोतिचापिवह्नु भंस्खंडमाशुयोषिताम्॥५४॥ अन्यः ॥दिङ्मूलधात्री शिखरीविभीतशृंगीकणाधान्यकवीरणानाम्॥जंतुघ्नरात्रिद्व यवह्निचव्यद्दारुत्रिकंटामरदारुपुष्पैः॥५५॥कपित्थबिश्वा नृपवृक्षदंतीपुनर्नवाग्रंथिककट्फलानाम्॥द्राक्षाकुबेराक्षम रीचजीरैरोहीतकेनापिचलोहितेन॥५६॥पलद्वयानांचपलद्वये र्वापलद्वयेनापिपृथक्पृथक्च॥तासांभिषक्सुण्णतरैश्चसा कंक्षुण्णःसमस्तैश्चशिवादकंच॥५७॥पंचाढकेवारिणिसंपचेच्च स्विन्नाशिवामाक्षिकमध्यमग्नाम्॥दिनत्रयांतेविनिवार्यतस्मा त्पुनश्चयावत्खलुपंचरात्रम्॥५८॥तावद्विमग्नांचविधायभू यःसुमाक्षिकेन्योपितनोदिनानाम्॥निष्कास्यमग्नांद्राकंततोन्ये

समाक्षिकेऽस्मादपिहव्यपात्रे॥ ४९॥ समाक्षिकैःपूर्णतरेनि
धायपत्रत्वगेलागजकेशराणाम्॥ कणायुतानांप्रनिवाप्यचूर्णं
पलाष्टकंसिद्धहरीतकीषु ॥५०॥ हरीतकींश्रीभिषगीशविष्णु
र्धन्वंतरिर्लोकसुखार्थमाह॥ तांभक्षयेद्यस्तुनतस्यरोगभीति
र्भवेत्क्वापिनरस्यकिंचित्॥५१॥ श्वासंकासंक्षयसाप्रहरतिस
हसासेवितावन्हिमांद्यंमूर्छांहिक्केचतृष्णांमुखगदमरुचिंनेत्रक
र्णांतिमुग्राम्प्लीहानंवातरक्तंयकृदुदरमलंचातिपीडांशिरस्थां
॥ यक्ष्माणंबहुरूपंभ्रममथबहुधानेकरोगांस्तथान्यान्॥ ५२
हरीतकीमाक्षिकपाचितेयंहितापिराज्ञांविदुषांकवीनाम्॥ गां
धर्वविद्यांपठतांसुवित्तंदारानकामोज्जुषतांनराणाम्॥ ५३॥बी
जानिवैद्यः कपिकच्छुजानिप्रस्थैकगव्येपयसिप्रकामम्॥ संस्वे
द्यतावत्कुडवोन्मितानियावन्नुतद्वल्कलमार्दवत्वम्॥ ५४॥ वि
धायपिष्टीमथनिस्तुषाणांवद्धोगवीहव्यसुसिद्धभूता॥ लेप्यः
खखंडद्विगुणैश्चपाकैःपुनस्तुतामाक्षिकपूर्णपात्रे॥ ५५॥
निधायतासामपिपंचटंकमितामथैकांतुनरःप्रभाते॥ सायंस
मश्नातिपयोनुपानैःसोशीतिवर्षप्रमितोयुवेव॥ ५६॥ वाजीववा
माशतकंभजेद्वाखंडोपिपुत्रान्जनयेदनेकान्॥ नानेनतुल्यंपर
मत्रकिंचिद्वाजीकरंवैद्यवरैर्निरुक्तम्॥५७॥ ॥अथघृतम्
॥ ॥ दशगुणप्रमितेचविदारिकास्वरसकेघृतमेकगुणंपचेत्
॥शतगुणेथपयस्यपिवागवांप्रथमसाधितमेवविसाधयेत्॥
५८॥ पयसएवतुपादमितेनतत्परिपचेद्खंडरसेनच॥ अ
पिघृतादथपादमितेक्षजैर्मधुभिरत्रसमेखलुवशजैः॥ ५९॥

मागधजाश्वपदादिकगंधिकासमसक्तसरिसाध्यचमोदकान्॥ भिषगुद्वरमानमितानिमान्भजतितान्प्रमदाप्रभजेन्नरः॥पुनरथोपुनरेवकुलिंगवत्॥६०॥ अन्यः ॥भिषग्वरीगर्भगतंघृतंचदुग्धेगवीनांविपचेच्चतावत्॥दिक्संमितेयावदलंप्रपक्वंसशर्करंमाक्षिकपिप्पलीभ्याम्॥६१॥वृष्यंविशेषादनरंतरंचकुर्यात्प्रयुक्तंबहुकामिनीनाम्॥भोक्तारमाविःकृतपुत्रजातंवृद्धंप्रकुर्यात्तरुणीरिरंसुम्॥६२॥ अन्यत् ॥तुरगगंधोत्थजटापलानांशतंतदर्द्धंखलुगोक्षुराणाम्॥शतावरीनागबलामृतानामश्वत्थशुंगाम्बुजबीजमाषैः॥६३॥पुनर्नवाकाश्मरिकाफलानांसमंतथातद्द्विशकंपलानाम्॥वैद्यःपृथग्द्रोणचतुष्कवारिण्यापाच्यशेषेम्बुनिद्रोणमात्रे॥६४॥द्राक्षाकणापद्मककुष्ठनागपुष्पात्मगुप्ताफलपद्मकानाम्॥कुर्वंदनेनापिचजीवनीयगणेननीलोत्पलकेशराणाम्॥६५॥प्रदापयेत्कर्षसमानमीषांभागान्पृथक्कुरवकंडपलद्वयंच॥पौंड्रेक्षुनीरादकसंयुतंगोर्हव्यंतुप्रस्थप्रमितंपयोभिः॥६६॥गवांचतुर्भागमितैश्चसम्यक्संपाचयेत्कामनरेंद्रहव्यम्॥सरक्तपित्तक्षतवातरक्तहलीमकारोचकपांडुरोगान्॥६७॥स्वरक्षयंयत्तनुवर्णभेदंमूत्रस्यकृच्छ्रंखलुपार्श्वशूलम्॥उरोविदाहंविनिहंतिसद्यःसेव्योनृपाणांप्रमदाप्रियाणाम्॥६८॥वहतःपुरचारिणांचधनिनाराज्ञापरपुष्टिदमेधाशुक्रविवर्द्धनंबलकरंतेजस्करंत्र्यहणाम्॥सर्वेषांचरसायनंनियादितंश्रीकामदेवंघृतंनृणांदुर्बलताहरंयथैवजलमुग्धारातद्रुमाणांकुलम्॥६९॥ ॥ ॥

॥ अथविषतंत्रचिकित्सांव्याख्यास्यामः॥ ॥ शिशशशीक
मुमापतिशंकरंहृदिनिधायप्रणम्यगुरूनपि॥ अखिलभेदवि-
षस्यचिकित्सितंविलिखितंबहुतंत्रमलंब्रुवे॥ १॥ साध्यासा-
ध्यंलक्ष्यतेयत्प्रयोगान्मंत्रंयंत्रंतच्चिकित्सांयथावत्॥ दृष्ट्वास्मृ-
त्वाश्रीगुरोःपादपद्मंकुर्याद्वैद्योजंगमस्यान्हीरस्य॥ २॥ ॐ ह्रैं
ह्रैंपद्मेपद्मावतीस्वाहा॥ एकविंशतिवारान्वामनाडींजपेत्॥
नपश्यतियदादष्टः कृतेनयनसंचने॥ वराहमंत्रंनित्यस्यवारि
णानैवजीवति॥ ३॥ ॐ मं क्रः हंसः पुवसः पक्षिस्वाहा। उदक
मभिमंत्र्यचक्षुर्द्वयंसिंचेत्॥ ॐ ह्रीं वोमंत्रजमेनवारिणासिक्त
लोचनः॥ नोन्मीलयतिचक्षुश्चकालदष्टस्तदामतः॥ ४॥ करा
कर्षणमात्रेणशिरःकेशागलंतिचेत्॥ प्रसारितमुखोयस्तस
ग्रस्तोयमकिंकरैः॥ ५॥ सशोफमुदरंनेत्रे प्रफुल्लेदशनानखाः
॥ श्यामाः कंठगतानाड्योनस्फुरंतितदामृतः॥ ६॥ शिरोधुनो
तिनाक्षीतो मन्यास्थानेयदाहृदम्॥ कालालिंगितएवायंप्राणी
नप्राणितिध्रुवम्॥ ७॥ अद्यापिनशरेमेवविषंधावतिधातुषु॥ सद्योद
ष्टःसविज्ञेयोभ्रमस्तत्रग्रहंमनाक्॥ ८॥ हहाहिहीत्यादिमंत्रेण
मंत्रितंगलितंजलम्॥ सद्योननिवर्ततेयस्यतस्यजीवंकथंस्थिरम्
॥ ९॥ हहाहिहीहुहूहेहैहोहौहंहः चंडपिंगलिकामंत्रः समको
णांजितेदृशो॥ नगलितोयस्यसनजीवतिमानवः॥ १०॥ ॐ हर
चंडीपिंगलेकेयूरभैरवरूपिणीस्वाहा॥ चंडपिंगलमंत्रः॥ कर्णेप
ठितयादष्टोवाचोमुंचतिचेत्तया॥ स्वस्थानच्युतमांसोवाबाष्पा
कुलितलोचनः॥ ११॥ सुखशीतलनिश्वासं सातुनासिकभापि

नः॥ शूलेनार्तद्रवातीवहिध्मावाल्लालयान्वितः॥ १२॥ स्वेदक्लि
न्नागतिशब्दोभग्नग्रीवःसमाकुलः॥ कफावृतगलोघोषंनशृणोति
नपश्यति॥१३॥ नासिकामात्मबिंबंचदर्पणादौकथंचन॥ दंडाह-
तस्यनोरेखेत्यादिकालस्यचेष्टितम्॥१४॥ ॐनमोभगवतेरुद्राय
पवनवेगाधिपतयेमहामक्षिराजायपक्षावातेनहरविषंजजःस्वा
हा॥ पक्षिराजमंत्रःस्थानाच्चलतिनोयस्तुविषमंत्रहतंयदि॥ मि
थ्यादष्टस्तदाज्ञेयोमृतोवावार्तिकोत्तमैः॥१५॥ देहविन्यस्यकर्णा
ग्रहृश्यंतमक्षरंजपेत्॥ देवार्तकाहिदुष्टानांविषंनाशयतिक्षणा
त्॥१६॥ कंठेनाभौगुदेस्कंधेमस्तकेधरकर्णयोः॥ नेत्रयोर्भ्रूयुगं
कुक्षौग्रीवायांतालुकेहृदि॥१७॥ एषुस्थानेषुयेदष्टानतेजीवंति
जंतवः॥ उद्यानेजीर्णकूपेचशुष्कवृक्षेवटेथवा॥ १८॥ शृंगाटेचत्व
रेशृंगौरवर्जूरेतिबिभीतके॥ श्मशानेशून्यगेहेषुकुंडेदेवाकुले त-
था॥ स्थानेष्वेतेषुयेदष्टाज्ञेयास्तेविगतासवः॥ मंत्रतंत्रादिकंतेषां
नकुर्याद्वार्तिकोत्तमः॥ २०॥ तिर्यगूर्ध्वगतारेखात्र्यष्टसंख्यासमा
लिखेत्॥ कोष्ठानेकोनपंचाशत्समान्कुर्याद्विचक्षणः॥२१॥ स-
मनागान्ग्रहान्सलिखेत्तत्रयथाक्रमात्॥ येनागास्तेग्रहाः
प्रोक्तायेग्रहास्तेतुपन्नगाः॥२२॥ आदित्योनंतइत्युक्तःसोमो
वासुकिरुच्यते॥ मंगलस्तक्षकोत्तेयः कर्कोटोबुधसंज्ञकः॥ २३॥
बृहस्पतिःस्मृतःपद्मोमहापद्मःकविर्भवेत्॥ शंखपालःशनिः
ख्यातःसप्तनागाग्रहाःक्रमात्॥ २४॥ अष्टमःकुलिकोनामराहुः
क्रूरग्रहोमतः॥ सचकालःसमाख्यातःसर्वानाक्रम्यतिष्ठति॥२५
द्विधाकालोभवेदत्रकेवलोयोगजस्तथा॥ तक्षकंमंगलंचाद्योद्विती

यः सौरिशंखनः ॥ २६ ॥ अनंत कुलिकौ विप्रौ क्षत्रियौ शंखवा- सुकी ॥ महाब्जतक्षकौ वैश्यौ शूद्रौ कर्कोटपंकजौ ॥ २७ ॥ पीतौ- रक्तौ कवर्णाभौ कृष्णौ द्वौ द्वौ क्रमादिनः ॥ वन्हिवातशिखीजाड्य लासदाहार्तिकारिणौ ॥ २८ ॥ अनंताद्यथास्थानं शंखपालांत संस्थिताः ॥ भुंजते प्रहरार्द्धं ते दिनरात्रिगतिक्रमात् ॥ २९ ॥ सप्तच्छे- कांत मालिख्य कर्णकोष्ठेषु भानुतः ॥ गणयेच्छनिपर्यंतं कुलिकंत- त्रनिर्दिशेत् ॥ ३० ॥ आदित्ये सप्तमे राहुश्चंद्रः षष्ठोथ पंचमः ॥ कु- जे बुधे वर्धजीवे त्रि द्व्येकः शुक्रमंदयोः ॥ ३१ ॥ पिधाय वदनं नासा वायुसंधे कृते सति ॥ उत्तिष्ठति द्रुतं दष्टो विन्द्धो वा मर्मणि ध्रुवम् ॥ ३२ ॥ दग्ध्वा हुंकारबीजेन स्थावरं जंगमं विषम् ॥ स्वेकारं वायुबीजेन तद्भ- स्म दिक्षु विक्षिपेत् ॥ ३३ ॥ दष्टस्य वदने न्यस्तं मायाबीजं शशिप्रभ- म् ॥ निर्विशेषं विषं हंति चराचरमपि क्षणात् ॥ ३४ ॥ दिशाष्टालिखि- ते रन्ध्रे हरन्द्रासेन वा ततः ॥ लोपिते प्रथमं पाद विषं सर्पस्य नश्यति ॥ ३५ ॥ शशिस्थितं विषं हंति भानुस्थं सकलान् ग्रहान् ॥ पाशत्रयं च मध्यस्थ मायाबीजं शशिप्रभम् ॥ ३६ ॥ अनवमायेयं ग्रहरं कर्मजा- स्व्ये पाशत्रयम् ॥ वेदास्त्रे स्तंभकृत्पीतं श्वेतमिंदौ विषापहम् ॥ ३७ रक्तमाकृषिकृत्त्र्यंत्र्ये षडस्त्रे शितिनाशकृत् ॥ श्वेतहुंकारबीजेन- धवलांगस्य देहिनः ॥ ३८ ॥ विषं चेद्द्धते तर्हि विषाणं शशकेभवे- त् ॥ स्फीतवर्णहुंकारबीजापूरितविग्रहम् ॥ ३९ ॥ दष्टं ध्यायन् ध्रुवं मंत्री विषं संस्तंभयेत्चिरम् ॥ छुछुंदरीचूर्णमपूरपिष्टं तैल तिलानां च विषप्रयोगात् ॥ दष्टस्य नासाविवरे प्रलेपान् मंत्रो विषं स्तं- भयते चिचित्रम् ॥ ४० ॥ स्वेकारदीपितं वन्हिबीजं दष्टस्य हृत् स्मृतं ॥

॥ निरद्दष्टस्य वास्तोभं कुरुते तन्निमेषितम्॥ ४१॥ ॐ पक्षिस्वाहा दह२ पच२ स्तोभय २ विषंइतिवा॥ पथ्यायुतं रोध्रमरीचपत्रं हिंगुवचांशीतजलेन पिष्ट्वा॥ नश्यं ततः शीलजलेन दद्याज्जीवेन्नरो वा स्फुकिनागदष्टः॥ ४२॥ मंत्रः ॥ ॐ आदित्यचक्षुषारिपुः ठः ठः॥ अर्कमूलत्वचाचूर्णं पीतं शीतेन वारिणा॥ सर्प्पधत्तूरगोनासकरनीरविषापहम्॥ ४३॥ श्वेतबिंदूलमूलं यः पुष्यार्केवारिणा पिबेत्॥ तत्पार्श्वे न समायांति विषवृश्चिकपन्नगाः॥ ४४॥ नरक्षदंष्ट्रयारूपं वैनत्वेयस्य वार्तिकः॥ कृत्वा बिभर्ति यो बाहौ तं दशंति न भोगिनः॥ ४५॥ पुष्यार्के पीलमूलेन गरुडस्य फणीनरम्॥ नास्ति षण्मासपर्यंतमस्ति चेत्तन्न जीवति॥ ४६॥ नस्यपानांजनालेपान्नस्या नश्येदहेर्विषम्॥ घृष्टं वा श्याम लं नस्याच्छामेकालं विनिर्दिशेत्॥ ॥४७॥ वराहकर्णिकामूलं हस्ते बद्धं विषापहम्॥ इंद्रवृक्षजयचूर्णं पीतं घ्नातविषांतकृत्॥ ४८॥ लज्जामूलं करे बध्वा विलिप्य सकलं वपुः॥ रमते फणिभिः सार्द्धं वार्तिको गरुडो यथा॥ ४९॥ फलिनीघृष्टमूलेन कांजिकेन प्रलेपतः॥ गोनासस्य विषं तीव्रमुत्तरस्य चिलंबितम्॥ ५०॥ वंध्याकर्कोटकीमूलं छागमूत्रेण भावितम्॥ नस्यं कांजिकसंपिष्टं विषापहतत्वेतसाम्॥ ५१॥ मूलं त्वक्पत्रपुष्पाणि बीजं चेति शिरीषजम्॥ गोमूत्रेणातिसंपिष्टं भेषजं विषनाशनम् ॥५२॥ कटुसेलूफलं भेकदिसुरवाहिवसायुतम्॥ एतल्लिप्तकरस्पर्शाद्विषं सर्पस्य नश्यति॥ ५३॥ हिसुरवाहिपलास्थीनि रक्तचित्रकसर्पिषा॥ स्नुहीक्षीरं च तल्लिप्तं तूर्यनादो विषापहम्॥ ५४॥ नाडउमरिकाजातिशंखपुष्पी समन्विता॥ संपेष्य वारिणा पीता

निहंतित्रिविधंविषम्॥ ५५॥ तंदुलीयकमूलानि पिष्ट्वातंदुल-
वारिणा॥सर्पिर्धान्यकयुक्तानि पानाद्विषहराणिवा॥ ५६॥ ल
ज्जालुनीलमूलानिघृष्टतंदुलवारिणा॥विषंहरंतिपीतानिती
व्रमंडलिसंभवम्॥ ५७॥ ॐस्वःसर्पकुलायेतिस्वाहांतंमंत्रमुच्च
रन्॥सप्तजप्तांमृदंक्षिप्त्वासर्पानुच्चाटयेद्गृहात्॥ ५८॥ अंतरोंकार
षट्कोणेकुरुकुल्लाषडक्षरम्॥गृहादुच्चाटयेत्सर्पान् दोहिव्यालि
खितासति॥ ५९॥ ॐ कुरुकुल्लेस्वाहा॥ कर्णजपेनमेरुंडाविषंसं
हरतिक्षणात्॥रुद्रःश्वेतोथवान्यस्तोदंष्ट्राग्रेस्तद्धियोगलः॥ ६०॥
ॐजायसासनेभेरुंडेविज्ञिहभारिञ्चकरंडेतंतुमनुञ्चाधेसइफे
फरंतुथिरकनाथइसाचरेजंगमस्तंभनमोहनजाहिरेगदृजनः॥-
न्हींत्रिभुवनविद्येनमः॥सिद्धेञ्जिते लोकपूजितेञ्मम २ महामोह
हुं २ विञ्चकुलेकोलेभेरुंडेशिखिवाहिनीनीलकंठेरौद्रेवेतालिसो
ममानरेन्ह्रींञ्परामायाद्यंताभरुंडासर्वविषनाशिनीसर्गस्यांति
मंबीजंशषयस्वरमूर्द्धजः॥ इंदुबिंदुशिखायुक्तंरुद्रवाचकमक्षरम्
॥सविसर्गोतिमोहः॥सर्पदुंदुभिगोनासव्यंतराणांविषापहः॥भेरुं
डारुद्रमंत्रोवाकुरुकुल्लाथतोतला॥ ६२॥ दष्टांगसंधिषुन्यस्तो रुद्र
दयेन्वेन्दुसन्निभः॥विषंहरतिसर्पादेरुद्रोसेंद्रमपिक्षणात्॥ ६३॥
॥ अथवा ॥ ॐपक्षिस्वाहा॥ प्लावयतर्ज्जनीचालनाद्विषंनाश
येत्॥ सद्यःसर्पेणदष्टांगंक्षिपेत्कर्णमलेनतु॥ स्तंभितगरलंते
ननोर्ध्वंधावतिधातुषु॥ ६४॥ पूर्वंदष्टस्यपानाच्चहृदयावरणंघृतं॥
निर्गुंडीरसपीताश्वेतापीताफणिविषापहम्॥ ६५॥ दष्टमंगस-
माक्रम्यवर्तिकेसंस्थितेसति॥ धावत्यहेर्विषंनैवदंशोवाचूषितेभृशम्

॥६६॥ सर्पेसार्द्धनकर्तव्याक्रीडाचंद्रस्यस्थिते। तयोर्वाहे भवेत्तेषां मुखबंधोनसंशयः॥ ६७॥ जंगमंनिर्गमेहंति प्रवेशेस्थावरंविषम्॥ एतद्देहेगतंन त्वंस्फुरति प्राणयोगिनः॥ ६८॥ अश्वगंधापयोयुक्तां पीत्वावादे विषंजयेत्॥ नगरंवायुतंवत्सजन्मसंभूतवर्चसा॥ ६९॥ चंद्रमंडलमध्यस्थेफद्देलाद्यैर्विचिंतितम्॥ डसितंपतिध्रुवंविद्द्कालदष्टोपीश्वरभाषितम्॥ ७०॥ श्रीमत्करणयोगींद्रपादसंस्मरणादपि॥स्था कारणयोगीपादाज्ञां मेनाज्ञागंतुविषादिकंतंविषंने वधावति॥ कालेनप्रेरितेभीतोस्फतोक्रांताविषोत्कटाः॥ क्षुधमापीडितावैराद्दशंति प्राणिनोह्ययः॥ ७१॥ त्वगादिशुक्रपर्यंतंसप्तधातुगतंविषम्॥ चर्मतोह्निगुणंज्ञेयमसाध्यंरेतसिस्थितम्॥ ७२॥ त्वगसृग्मांसमेदोस्थिमज्जाशुक्राणिधातवः॥ सप्तगेहगताज्ञेया चार्त्तिकैर्विषवेदिभिः॥ ७३॥ चर्मशोणितमांसादिगतंकुर्योदहेर्विषम्॥ कंडूदाहभ्रमंमूर्छांवांताध्यमलापान्क्रमात्॥ ७४॥ निशायांफणिनादष्टः किंवामंडलराजिलैः॥ संदेहेमृत्तिकातस्मैदेयारुद्राभिमंत्रिता॥ ७५॥ कटुकासर्पदष्टस्यान्मृत्स्नाम्लाव्यंतरेणच॥ राजिलैःसहजाज्ञेयामंडलैर्मधुराभवेत्॥ ७६॥ स्थापयेत्स्थापितंद्रव्यंतीर्येदष्टंनयेद्दहात्॥ परकायप्रवेशोचाचेष्टकोजनसाधकः॥ ७७॥ मंत्रः ॥ ॐस्फूंरक्तकंबलमहादेवीदूतमृतकमुत्थापय २ प्रतिमांचालय २ पर्वतंकंपय २ लय २ लिलाविलासहुं॥ जत्तोमासव यंरक्तकेवलोनामरवेदकः॥ मृतकोत्थापनंकुर्यात्प्रतिमाचालनम्। बहुभेदाभवंत्येतेगोनासाव्यंतरास्तथा॥ राजिलानैवमंत्रेण साध्यास्तत्रेणमंत्रिणा॥ ७८॥ मंत्रैर्वन्हिनासेंद्रवारुणैर्मिश्रकैर्युताः॥

चने॥ दृष्टांगेलक्षणंज्ञात्वानैवतंसमुपाचरेत्॥ १११॥ त्रिफला चंदनंकुष्ठमार्द्रकंघृतसंयुतम्॥ पानलेपसमायोगोदष्टस्यविषनाशकः॥१२॥ पूतिगन्धिस्वरवंनिद्राश्वासकासौनिरंतरौ॥ लालास्रावश्चलज्जिव्हाविषश्लेष्मगतेभवेत्॥ १३॥ इंद्रवारुणिकं चित्रमार्द्रकंत्रिफलान्वितम्॥ कटुकीसहदेवीचराजकोशातकीपिबेत्॥१४॥ श्वासोमूर्छामुखंश्यामंगात्रसंकोचनंतथा॥ बुद्धेर्भ्रंशो भवेद्यस्यनस्यवायुगतंविषम्॥ ११५॥ पारावताक्षिसंयुक्तंहरितालंमनःशिलाम्॥ पानालेपकृतंदष्टःस्वस्थोभवतितत्क्षणात्॥ १६॥ गलांतश्छिंतितंयेषांकुंफट्मालानलप्रभा॥ विषस्तंभादिकासिद्धिस्तेषांनश्यतिकर्मसु॥१७॥ अत्यंतेलोहितामायापवनांदोलितामुखे॥ चिंतितावेशयेत्त्वास्यविषग्रस्तादशेषतः॥१८ मायाबीजस्यनामानिमालिनीशिवावल्लरी॥ वातावर्तिःकलावाणी वीणाशक्तिश्चकुंडली॥ १९॥ कुलीनाधन्विनोमान्यामतिसत्वतपोन्विता॥रमणीस्थविराबालाविप्राभ्यस्ताश्चमंत्रिणा॥१२०॥ प्रणवादिश्चिधानीलकंठेनमन्त्रवित्॥ भ्रमर्ष्यावायुतंहंतिविषं स्थावरजंगमम्॥ २१॥ ॐ प्रोंत्रींठः नीलकंठायनमः॥ ॐ भ्रमरविषनिपातनिस्वाहा॥ पकारेरेफमारूढंवह्निोंकारसमन्वितम्॥ प्रथमाहितीयंबीजंतरकारस्थितंश्रीयुतम्॥ सठंकारंविसर्गांतं तृतीयंबीजमादिशेत्॥ २२॥ प्रणवादिनमोंतोयंनीलकंठमनुर्भवेत्॥ खंडेंदुबिंदुसंयुक्तंस्वरषष्ठेस्थितोहली॥२३॥ सर्पव्यंतरगोनासविषंहंतिनिश्चितम्॥ गोजिव्हाफलिनीशाकवारुणीवार्तिकर्णिका॥ एकैकापानमंत्रेणासर्पादिगरलंहरेत्॥ २४॥ भोगह-

स्त्नंप्रदर्श्योदीरसतथामंत्रितेंबुधः ।।खेळयेत्फणिनोदुष्टान्स्वरक्षामं
त्रयोगतः।।१२५।। ॐनमोवास्कंकिराजायएह्येहिसनशीर्षमहाप
योत्तमोत्तमविषंसंहर२भक्षय२भोगहस्ताय भगवान्वास्कीराज्ञ
पयतिस्वाहा ।। भोगहस्ताभवेशयेनेतिविषंनाशयति ।। ॐनमोग
डायॐनमोनंतायमहानागहृदयायसर्वनागवशंकरायस्वाहा ।।
नेनाभिमंत्रितोदकस्नानपानादुष्टः स्वस्थोभवति ।। ॐह्रींक्लींग्लैं
हूं श्रूंठठसर्पमुखबंधः हूंहूंठ२गतिबंधः ।।ॐह्रांक्षंठ२सर्पदृष्टिं
धः।।ॐनमोनंतहृदयायधुन२हुंफट्स्वाहा ।। आत्ममुखस्य
र्शात्पूर्वस्यदष्टावेशः ।। ॐक्षीं पायस्वाहा ।।यत्किंचिदभिमंत्र्यगृहे
क्षिपेत्सर्पानश्यंति ।।ॐनमोगरुडायस्कवर्णमहामेखलायइ
नागस्यमुखंबंधय२चक्षुर्बंधय२स्वाहा ।। नागमुखबंधः ।।
ह्रीं२गरुडाज्ञाठठेति ।। तन्मुद्रयाकुलारेखांभुजंगोमरणावस्थो
लं घनेर्नाकदाचिदपि।। ॐनमःस्कपर्णायकनकमंडितशरीराय
पद्मपत्राधराय शत्रुसैन्यविद्रावणाय अप्रतिहतबलपराक्रमाय
अनेककर्मकारायदेवपूजितायमहाकालध्वजायस्कपुण्याय
रिचिरि वलि२स्वाहा ।।गारुडीकरणम् ।। ॐक्रौंप्रोंत्रींवः नील
ग्रायस्वाहा।। ॐक्षिपस्वाहा ।। ॐपक्षिस्वाहा।। ॐपाक्षिस्वाहा२
ॐपाक्षिंस्वाहा।। ॐपाक्षिस्वाहा।। सर्वजंगमेविषांतकः पंचगरुड
त्रकाः ।।त्रीॐअक्षूंकुरुन्ह्रींनमोभगवतेवज्रगरुडायस्वाहा।।
सप्तजप्तेन तोयेन बोधयेत्कालदष्टकं ।।समुत्थितस्यतस्याथाशि
वंधोविधीयते ।। २६।। विशेषः कथ्यतेदृष्टक्रियाकालगुणोत्तरे।
यथादेवकृतैः पूर्वंमथ्यमानेमहोदधौ ।। २७।। मंदाराघातनि

नागावस्तन्मूलतःकिल॥ नासामतीवभिःश्वासा दुत्पन्नागोन
साभुवि॥ २८॥ नास्तुद्दष्टाक्ष्करादैत्याःशंकरशरणागताः॥ ऊचु
स्तेरक्षरक्षेतिच्यक्षत्रिदशवंदित॥ २९॥ उपायंकृतवांस्तेषुमंत्र
तंत्रादिकंशिवः॥ उक्तानिनामधेयानितेषांतेनैवशंभुना॥ ३०॥कां
डारुणःसुवर्णाभः कर्दमाख्याग्निमालिकः॥ वज्रमालींदुमाली
चवेणीकंठस्तथापरः॥ ३१॥ गोधास्योघोटिकास्योव्यसकश्चाना
सुरवोतथा॥ मार्जारास्योथवत्सास्योमेघास्यःकुक्कुटस्तथा॥
३२॥ संदशोवज्रतुंडश्चदंतुरोमिश्रितस्तथा॥एकोनविंशतिरख्या
तागोनसानांतथाक्रमम्॥ ३३॥सुश्वेतैर्मंडलैर्युक्तोबहिःपीतैः
प्रवेष्टितः॥ कांडारुणः सविज्ञेयोन्हस्वस्थूलोमहाविषः॥ ३४॥
ज्वरस्तीव्रःशिरःपीडादंशाच्छ्रवतिशोणितम्॥ कांडारुणेनद
ष्टस्यचिन्हमेतत्प्रकीर्तितम्॥ १३५॥ वेतसंचिरबिल्वंचवचोन्यं
गजपिप्पलीम्॥ मदनस्यफलंबीजंपालाशंमधुनासह॥ ३६॥पा
नेलेपेकृतेभक्ष्येततःसंजायतेसुखम्॥ मंत्रोयंपक्षिराजस्यवि
न्यस्तोहंतितद्विषम्॥ ३७॥नमोभगवतेतत्वगरुडायहरहरवज्र
मुष्टेजयमानस्वाहा॥ सर्वगोनसविषापमार्जनमंत्रः॥ सुरक्तमं
डलंपीतेर्वेष्टितेपरितोबहिः॥ सौवर्णिकः सविज्ञेयो दीर्घपुच्छो
महाविषः॥ ३८॥ नासास्यरोमकूपेभ्योदंशाच्छ्रवतिशोणितम्
॥ सौवर्णदष्टचिन्हानिपिप्पलीतगरंमधु॥ ३९॥ उशीरंचंदनंबि
ल्वांसिंदुवारंचसर्पिषा॥ हयमारयुतंलेपात्पानात्सुखमवाप्नुया
त्॥ १४०॥ ॐनमोभगवतेआदित्यायसांसूंसः॥ ॐनमोभो
गिनीनागेंद्रवेतालिहरहरविषंवज्रयोगेनबलंस्वाहा॥ अंतःश्वे

तैर्बिंदुः कृष्णैर्मंडलैः कर्दमोभवेत्॥ अतिदीर्घो महावेगो गोनसोविषदर्पितः॥४१॥ वृषशूलज्वर छर्दिव्रणशोफादिलक्षणैः॥ देवदारुनिशा द्वंद्वरोहिणीमदयंतिका॥४२॥ अर्जुनमदनकुष्ठकेशरनागजंकणा॥ मरीचमधुसर्पिश्च पानमालेपनंहितम्॥४३॥ ॐनमोभगवतेरुद्रायहन२ हर२ फट् भूम्यागच्छमहाविषस्वाहा॥ अतसीपुष्पसंकाशैर्मंडलैरग्निमालिकः॥ दाहोज्वरःशिरःपीडाछर्दिशोषादिलक्षणम्॥४४॥ नगरंदंतिनीपाठापिप्पलीनागकेशरम्॥ अंकोलकटभीसर्पिः सोमराजीपुनर्नवा॥१४५॥ मधुचंदनमालेपः पानंस्याद्गरलापहम्॥ मंत्रयच्छंभुदेवेन कीर्तितंतद्विषापहम्॥ ॐनमोभगवतेआदित्याय करवीरोदसोमाय हां२ आं२ विषमुंचहुः२ स्करश्मितापयतिस्वाहा॥ वज्रवैडूर्यसंकाशोरिंदुमालीतिमंडलैः॥ अतिवेगश्च दीर्घश्च गोन सोविषदर्पितः॥४६॥ दंशोतीव्राव्यथाछर्दिरक्तवाहादिलक्षणम्॥ शोणितंस्रावयेद्दंशाच्छिरा...क्षादिभिःपुरा॥४७॥ भक्षाल्यसर्पिषादंशंबध्नीयाच्छागलंपलं॥ मंत्रेण मंत्रयेत्सश्चाद्विषनाशायवार्तिकः॥४८॥ नमोभगवतेतत्वगरुडायहन२ वज्रमुष्टिप्रहरणायनमः॥ शक्रवासधूमःतपःस्वाहा॥ अर्धचंद्रप्रतीकाशादंष्ट्रायस्यविनिर्गता॥ अतिस्थूलशिरोदीर्घो वज्रमालीतिकीर्तितः॥४९॥ सर्वांगंजायतेशोफस्तेनदष्टस्यदेहिनः॥ त्रिदिनंजीवितंतस्यततःप्राणांविमुंचति॥१५०॥ कपिलैःश्यामलैःश्वेतैर्मंडलैर्ह्रस्वकंठयुक्॥ वेणीकंठोमहाकायोगोनासोविषदर्पितः॥५१॥ श्लेष्मनिद्राहिमास्फोटादंशाच्छ्रवतिशोणितम्॥ ससराग्रासरोमृत्युर्यदिमंत्री नलभ्यते॥५२

शोषयित्वाव्रणंपूर्वंगृध्रपत्रेणदंशिनः॥ श्रोटयेन्मंत्रराजेननीलकं ठमनुस्मरन्॥ ५३॥ ॐनमोभगवतेरुद्रायकपालहस्तायनिर्विषं कुरुकुरुस्वाहा॥ स्थूलोदीर्घोतिपिंगाक्षोविकटाकृतिमस्तकः॥ गोधावक्त्रःसविज्ञेयःशिखिचंद्रकमंडलः॥ ५४॥ तेनदष्टोजगत्सीनं जंतुःपश्यतिक्रुध्यति॥ ईदृशंलक्षणंदृष्ट्वाक्रियांतत्रनकारयेत्॥ १५५॥ मंडलैःश्यामलैर्नीलैर्लोहितैर्यस्तुमंडितः॥ धर्मिणीगर्भ संभूतोघोरश्चक्रोतिदारुणः॥ ५६॥ तेनदष्टाम्भ्रियन्तेशा णिनोध्रुवम्॥ पृष्ठेमंडलकैःश्वित्रैःसर्वतःपरिमंडितः॥ शक्रास्यः सविज्ञेयोविषंभरसमुद्भवः॥ ५७॥ कृष्णानासास्वरोद्वेदोनिद्रामोह ज्वरादयः॥ भवंतितेनदष्टस्यपटोलगुग्गुलुंमधु॥ शुंठीभारंगिस र्पिषिकदंबकपिकच्छुकम्॥ निंबबीजानिपानेनलेपनेनसुखीभ वेत्॥ ५८॥ मंत्राभिमंत्रितःकिंवामामवातमवाप्नुयात्॥ ॐनमो नीलकंठायचिरिरपक्षिणीमुंचस्वाहा॥ १६०॥ पाटलैर्मंडलैर्युक्तः कर्णशृंगसमन्वितः॥ अजामुखःसविज्ञेयःश्वित्रकागर्भसंभवः ॥ कासःशोषोभ्रमःकंपोज्वरःशोफोव्रणेभवेत्॥ उत्पलंभंगरंकु ष्ठंदंतिनीपिप्पलीमधु॥ ६१॥ कटभीनिंबमज्जाचप्रलदंडीति लेपतः॥ पानतःसुखमाप्नोतिप्राणीमंत्रबलेनच॥ ६२॥ ॐन मोभगवतेरुद्रायएह्येहिभगवतिकपालमालाधारिमहाकपाले हन्२ स्वाहा॥ दुंदुभीगर्भसंभूतोमार्जनेस्मृतिदारुणम्॥ ग्रीवा भंगःप्रमेहश्चछर्दिर्लालेतिलक्षणम्॥ ६३॥ पिप्पलीमरिचंशुंठि वचाचित्रकसर्पिषाम्॥ मंजिष्ठातिविषाक्षौद्रत्रिफलालेपतःसुखी ॥ ६४॥ मानवोजायतेवश्यंकिंवामंत्रेणमंत्रितः॥ मंत्रंशंबरा-

जस्य प्रोक्तः श्रीकृत्तिवाससा॥ १६५॥ ॐनमोभगवते शंबरराजा यरवादयविषंजीवय महाशंबरहूंहूंस्वाहा॥ शरदीगर्भसंभूतोव-त्सास्यश्चित्रमंडलः॥ अनिन्द्रस्त्वानिवेगश्चगोनसोविषदर्पितः॥ ६६॥ असाध्यः सतुविज्ञेयोनमंत्रोनचभेषजम्॥ भेपास्यःकुकु रोनामसंन्दंशोवज्रतुंडकः॥ ६७॥ असाध्यामंत्रतंत्राभ्यां दंतुरा दुंदुभीभवः॥ क्रोधनोनानिदीर्घश्चस्वर्णमंडलमंडितः॥ ६८॥ दष्टां गेवलयः पीतोश्वेताथत्वेनदह्निनः॥ त्रिफलामृत्तिकालेपात्सप्तरात्रे णशाम्यति॥ ६९॥ ॐहूंहूंफटस्वाहा॥ सर्वगोन सविषापमार्ज-नमंत्रः॥ सोमराजीभवंबीजं देवदालीभवंतथा॥ मधुसर्पिःसमायु क्तंसर्वसामान्यभेषजम्॥ १७०॥ सर्प्पाभ्यंतरलालाभ्यो भवंतिवि षवृश्चिकाः॥ मोहकंपज्वरंशोफं सादमलंतथा॥ ७१॥ स्तब्धलिं गमधोवातमूत्रंकुर्वंतिदेहिनाम्॥ हरंतिजीवितंकेचित्विषमास्ते महाविषाः॥ ७२॥ शिरसःपादपर्यंतश्रीकारंन्यासपांडुरम्॥ श्वच पार्श्वगतमथन्दष्टं मंत्रीस्वस्थं करोतितम्॥ ७३॥ दशाष्ठसंख्यया रेफांह्निश्चित्वातद्विलेपनात्॥ थूथूफूत्कारयोगेनवृश्चिकानांविषंह रेत्॥ ७४॥ आदित्यमंत्रतोहंतिनिःशेषालिविषंद्रुतम्॥ शिव-तुंडीशपादानास्मरणाद्वार्तिकोत्तमः॥ १७५॥ आदित्यरथवेगेन विष्णुबाहुबलेनच॥ गरुडस्यपक्षपातेन भूम्यांगच्छमहाविष॥ यः ॐश्रीपदियोगिपादाज्ञा श्रीशिवोत्तमपादाज्ञा निर्गुंडीपत्रनि र्यासनस्यंमोहेप्रयोजयेत्॥ मर्दनंचज्वरेकंपे कर्तव्यंसर्पिषाभृशम् ॥७६॥ गोमूत्रघृष्टधत्तूरपुष्पलेपेनशाम्यति॥ शारोर्कक्षीरसंयु-क्तंतुरंगादिषुपत्रतः॥ स्वेदःशोफस्यलालायाः स्त्रावेलिंगस्यचोष्म

ते ॥ ७७ ॥ ससैंधवाज्यनस्यंवासर्वेषांशांतिकारणम् ॥ चंदनस्य रसः पेयः कर्पूरेणसमन्वितः ॥ ७८ ॥ सर्वेषुवातदोषेषुविषेसर्पस्य प्रशस्यते ॥ विडंगमुस्तापिचुमंदबीजकटुत्रयंदारुनिशासमानम् ॥ रूपेष्यगोमूत्रयुतःसमस्तद्रुतंविषंहंत्यविलोजितास्यः ॥ ७९ ॥ धृतार्कदुग्धलेपेन मधूकस्वेदतोथवा ॥ सैंधवोष्णाज्यलेपेनवृश्चिकस्यविषंहरेत् ॥ १८० ॥ मुखेनदशनैःक्षुण्णाकार्पासस्यजटाधृता ॥ कर्णफूत्कारतोहंतिविषंवृश्चिकसंभवम् ॥ ८१ ॥ शिलाकुंकुमकुष्टेन नक्तमालशिरीषयोः ॥ बीजेननिर्मितोगोक्रमयेद्दलिनांविषम् ॥ ८२ ॥ अधोगतंविषंहंतिनीतमूर्ध्वंप्रदापयेत् ॥ तुलसीमूलकंपुष्येगृहीतमलिनःसदा ॥ ८३ ॥ रोचनादाडिमीमूलछत्रकंगजलद्दगाम् ॥ गुटिकावृश्चिकोद्भूतंविषसंक्रमणंद्रुतम् ॥ ८४ ॥ गजंलद्दिभवंछत्रं श्लेष्मांतकफलैःकृता ॥ गुटिकाविषसंक्रामविषस्याकुरुतेलिनः ॥ १८५ ॥ गजलद्दिशिफाघ्नार्कदुसेलुफलोद्भवा ॥ गुटिकोगलिदंडस्य शमयेदलिनांविषम् ॥ ८६ ॥ शिलातालकुस्कंभानि कुंकुमश्रावकं मलम् ॥ पद्म्याभीरुपतंगस्यकर्कटस्यपलंरवेः ॥ क्षीरकैःकृतो गोलोवृश्चिकालीढपाणिनः ॥ गृहीतोयेननत्रापंक्रमयेदलिनांविषम् ॥ १८८ ॥ उत्तराग्रहतोदाडिमीमकुलोपिशीतलजलयुतगुटिकावृश्चिकविषसंक्रामंयथेच्छयाकुरुते ॥ शिरसःपुच्छपर्यंतंदीर्घरेखांकितवपुः तृणवृक्षलतागुल्मवनमध्यविराजितम् ॥ तृषा स्विज्वरोमूर्छाचदकःपीडाऽनिशंभ्रमिः ॥ दष्टेतेनाहितंचिन्हंविज्ञेयं वार्तिकैःसदा ॥ १९१ ॥ नानारेखासमायुक्तारेखाहीनाश्चापिद्रुतम् ॥ हरंतिदेहिनांजीवंराजिलाविषमाइमे ॥ १९२ ॥ स्वर्णवर्णशरीरा-

भस्त्रसंस्पर्शात्त्वणादिकम्॥ द्विधाभवंतितद्दृष्टाः कथंजीवंतिजंतवः॥९३॥गोजिह्वाफलिनीशक्रवारुणीहरतेविषम्॥राजिलात्रांधुवंपीताहूंकारोवशवान्वक॥९४॥गोधिकालीढमन्नंयत्तास्मिन्नंगेविनिक्षिपेत्॥९५॥दीपतैलंततस्तीव्रंविषंनश्यतिदेहिनः॥खर्जूरमश्वदंष्ट्रांवाधूपयेत्पुरधूमतः॥पश्चाद्यद्वाविषंहंतिपिंडीसाख्यार्कपत्रजः॥९६॥शिलातालककुष्ठानि भावयेत्क्षारसारसैः यांतितत्पानतः शीघ्रंविषंमूषकसंभवम्॥९७॥अपामार्गस्यमूलानिमधुनासहलेपतः॥नश्यंत्याखुविषंकिंवा बकुलस्यपलादनात्॥९८॥गुडतैलसमायुक्तंरविदुग्धंशुनोविषम्॥हंतिपानात्कषायोवासद्योंकुलस्यपानतः॥९९॥आखुनाभक्षितस्याश्मनामोन्मार्यसमुद्धरेत्॥मार्गालिंगीक्षिपेद्दूरंततस्तस्यसुखंभवेत्॥२००॥सघृतंमेघनादस्यमूलंवातुलसीभवम्॥तंदुलोदकसंयुक्तंपीतंकीटविषापहम्॥२०१॥अंकुष्ठपत्रधूपेनयद्वाकेशसमन्विते॥सक्तुभिःत्रिकटुतैलाक्तैर्यातिमत्स्यविषंक्षयम्॥२॥शिरीषफलसंयुक्तंवर्ज्योक्षीरंचभेषजे॥श्वेतमुंडीजटामांस्येसघृतासकटुत्रया॥३॥कटुत्रयशिग्रुकरंजबीजद्वयंनिशायांकपिकच्छुबीजम्॥निहंतिपानेनचमानवानांविषंसमस्तंग्रहगोधिकायाः॥४॥मेघनादान्वितंहंतिकालांडविविधंविषम्॥शिखिपित्तयुताक्वाथः काकपीलुर्विषापहः॥२०५॥प्रस्तरंहंसपादीचगौरिकारजनीद्वयम्॥नखदंतविषंघ्नंतिनिःशेषंलेपयोगतः॥६॥श्यामासुरभिजिह्वाद्यानिःशेषप्राणिसंभवम्॥नखदंतविषंहंतिमधुनासहलेपतः॥७॥नतायत्स्वेदतोभृंग्यावरघाश्वनिघर्षणात्॥आर्जकेनोद्धृतेकं

ठेविषशाम्यंतिदेहिनः॥८॥गोधेरस्यविषंयांतिकंथारीमूलनस्य
तः॥शृंगीमत्स्यविषेस्वेदोघृतंचिक्कसपिंडिका॥९॥केशरंतगरं
शुंठीमरिचंघ्नंविलेपनः॥माक्षिकंविषयद्वाच्चघृतसैंधवलेपनम्॥
२१०॥वृकव्याघ्रशृगालर्क्षनरस्तद्विपिवाजिनाम्॥रुधिरंस्रावयेद्दं
शेदेहेलोहशलाकया२११॥व्याघ्रादिकविषोन्मादंहंतिश्वेतपुन-
र्नवा॥धत्तूरार्कपयोयुक्तापीतामलविरेचकृत्॥१२॥विषघ्नैरौ-
षधैर्मंत्रैःपश्चात्स्नानंसमाचरेत्॥निर्वृत्तिर्लभतेक्षिप्रंहिंस्रप्राणि
विषातुरः॥१३॥धत्तूरस्यरसोदुग्धंफलिनीगुडसर्पिषा॥कुक्कुरस्य
विषंघ्नंतिपानान्मत्तस्यदुःसहम्॥१४॥उपानत्ताडितेदंशेपश्चात्के
शसमन्विते॥निर्बंधयेद्भस्मक्षिप्तंसारमेयविषंव्रजेत्॥२१५॥क
नकस्यफलैर्लेपःसबीजैस्तंदुलांभसा॥श्वनकस्यविषंहंतिगोजि
ह्वामधुनाथवा॥१६॥वटनिंबशमीकल्ककषायोहंतिलेपनः॥
निःशेषनखिजातीनांनखदंतविषंद्रुतम्॥१७॥एकाचाहंतिगोजि
ह्वानिःशेषप्राणिसंभवम्॥विषंमधुसमायुक्ताधिक्षतंदृश्यारिणा
॥१८॥दुग्धनस्योथपानंवाघृतस्यमधुनासह॥प्रस्तर्वी विषंह
नानाजीवसमुद्भवम्॥१९॥सगैरिकनिशाद्वंद्वलेपोदंतनखोद्भवं
॥विषंहरतितापिस्त्वंनिबिडंभास्करोयथा॥२२०॥विसर्पंहंतिम-
र्कोघाम्रधूपान्शिखिचूलिका॥वंध्याकर्कोटिकाकंदलेपःसकवि
षाण्यपि॥२१॥शर्करान्वितगोदुग्धकूष्मांडरसपानतः॥गुडपीत-
मदोयांतिकोद्रवस्वर्णयोरपि॥२२॥चुलुकैर्जलपानेनजिह्वाकर्षण
तोथवा॥पूगीफलमदोयातिखदिकाभक्षणेनवा॥२३॥गूवकस्य
विषंहंतिपूगतांबूलचूर्णजं॥भक्षितंलवणंतैलकेशघ्राणमचोक

दम्॥ २२४ ॥ शिरीषोमेघनादश्चनवनीतसमन्वितः॥ भल्लातकभ
वशोफं हंतिलेपेनदेहिनः॥ २५॥ घृतोद्वर्तनतोयानिकंडूतिः कपि
कच्छुजा॥ यातिलूतासमं शीघ्रमिंगुदित्वग्विलेपतः॥ अगस्तिपत्र
निर्यासलेपोलूताविषापहः॥ २६॥ मूलबीजानिवापिष्टाकांजिके
नप्रलेपतः॥ हालिनीदेवदालीच दुग्धिकास्फेटनाशिनी॥ २७॥ क-
टुतैलान्विताले पासर्पकंचुकसर्पिभिः॥ रयः शाम्यतिगंडस्यप्रको-
पात्स्फुटतिद्रुतम्॥ २८॥ नीलीपटोलमूलानिजलपिष्टानिलेपतः
॥ हरंतिघृतसक्तानिज्वालागर्दभवेदनाम्॥ शीतलीर्वीरयस्येगो
रुजिव्हामूलकोद्धृता॥ २९॥ उद्दिष्टोवालपुष्पार्केपीतस्तंदुलवारि
णा॥ उपसर्गेप्रवृत्तेवानिशाचत्रिफलान्विता २३०॥ नेसंकरोति
सरोयपिष्टापीताचवारिणा॥ अगस्तिपत्रनिर्यासलेपोलूता-
विषापहः॥ ३१॥ गोजिव्हामूलिकासर्पिर्लेपोवातंविनाशयेत्॥
सीतेतिदोषसंतापेजातेमधुविमिश्रितम्॥ ३२॥ निर्वाणंकुरुते-
क्षिप्रं[illegible]पर्युषितंजलम्॥ आदायशेलुपर्णानिशीतलीसंयुता-
याकृते [illegible]३॥ छिन्नरातुरना[illegible]यातिशीलखि[illegible]म्॥ वि
षस्याथविषवाच्यस्थावरस्यसमासतः॥ ३४॥ विषमव्याधिना-
शायरक्षामंडलपूर्वकम्॥ ॐकारोदरमध्यस्थसाध्यनामलिखे-
द्बुधे॥ २३५॥ तद्बाह्येष्टदलंपद्मंनहकारोदरास्थितम्॥ चंद्रमंड
लमध्यस्थतत्सर्वंतद्बहिःपुनः॥ ३६॥ पार्थिवंपुरमित्येषाजीव-
रक्षाशिवोदिता॥ भूर्जेरोचनयालिख्यजीवरक्षामिमांबुधः॥
३७॥ बद्धाशिरसिवान्तस्यतस्मैदेयततोविषम्॥ आस्करस्यततः
कुर्यात्परीक्षांशंभुनोदिताम्॥ ३८॥ विषग्रंथिंकरेदत्वाप्राङ्मुखस्य

श्रियो नश्यति यस्य चौजः प्रभानाशमायाति तच्चेतसो धर्मयत्नः॥ श्रीयमस्यातिथिः सोऽचिरात्तन्निधिं तस्य गंतासि वैः सेव्यमानः सदा ॥ ३० ॥ यस्याधरोष्ठः पतितो नरस्य क्षिप्तोत्तरोष्ठो भवतस्तथाद्यौ ॥ जंबूफलाभो न तु जीविताशा तस्य प्रकामं मुनयो वदंति ॥ ३१ ॥ आरक्तदंतोप्यथ नीलदंतः पतंति दंता निरुजोऽपि यस्य ॥ भवंति यस्यापि च खंजनाभा यमातिथिः स्यादचिरान्मनुष्यः ॥ ३२ ॥ कृष्णा तु लिप्तापि च यस्य जिह्वा सूना स्वरास्या तु स्फुटिता प्रकामम् ॥ सोप्याशु गंतु यमराजधानीं संप्रस्थितो वैद्यनृपा वदंति ॥ ३३ ॥ कुटिलाः स्फुटिताच नासिका प्यतिशुष्का च नरस्य सा तदा ॥ श्वसनावसरे च रौति या नियतं यः संशति न गतायुषम् ॥ ३४ ॥ संक्षिप्ते भवतस्तथैव विषमे स्तब्धे च रूक्षे तदा स्रस्ते यस्य विलोचने द्रुतमसौ ज्ञेयो गतायुर्बुधैः ॥ केशाः संप्रपतंति यस्य शिरसः पक्ष्माणि यस्य स्वयं सोप्येव यमराजदूतं ॥ ३५ ॥ यो नाहरत्याशु गंतस्य

[illegible] ॥ १ [illegible] विमोहितात्मा

सद्योजहात्येक [illegible] तनुं मनुष्यः ॥ ३६ ॥ उत्थाप्यमानो बहुशः प्रकामं संमोहमाप्नु [illegible] याति बलाधिकोपि ॥ वा दुर्बलश्चापि तथाविधो हो संगच्छतः श्री [illegible] यमराजगेहम् ॥ ३७ ॥ यश्चोत्तरोष्ठं निजमारुलिह्या रसायं पिशा [illegible] चैः सह भाषते यः ॥ विक्षेपणाङ्गुल्लपदो नरः स यमातिथिः स्याद्वि [illegible] बजो निरुक्तम् ॥ ३८ ॥ सरोमकूपगो मुखेश्वरक्तमाशु यस्य वै प्रवर्तते जहात्यसून् स द्य एव मानवः ॥ न था तथाविधं नरं गतायुषं विलोक्य यः परित्यजेद्जस्रमेव तन्

घशोनिरंतरम् ॥ ३९ ॥ कर्णौपिधायापिनरोविशेषाद्घ्राणध्व-
निंनैवशृणोतिसद्यः ॥ गंतुंसलोकांतरमात्मभुक्त्यैप्रस्थानि
कंधर्मंहरिमजल्पेत् ॥ ४० ॥ मरणाभिमुखंनरंनीरीक्ष्यत्वद्यपः
सर्पेतिच्चतानिभेषजानि ॥ प्रतिहंतुमतोभिषग्भिराराद्वदिनो
नोक्तचिकित्सितंप्रकार्यम् ॥ ४१ ॥ ॥ ननुसायुषःस्वयंरो
गशांतिर्भविष्यतीतिचिकित्सावैयर्थ्यमाशंक्याह ॥ ॥
आयुष्मानपिनोविनाचिकित्सांजीवेत्क्वापियथागदंकरी ॥
पंकेमग्नतरोप्यनल्पभाकायुर्नोत्थातुंक्षमतेविनाप्रयत्नात् ॥ ४२
॥ ॥ अथदीर्घायुषोलक्षणानि ॥ ॥ सौम्यादृष्टिःश्रु
तिवदनगेयस्यशब्दप्रभेदघ्राणामोदंरसनरसनंस्वच्छतमौ
सहस्तौ ॥ पादौदाहोज्ज्ठरगअलंमंदमस्वेदतापःश्वासोना-
सासमविवरगःकंठगोनोकफस्यात् ॥ ४३ ॥ निद्रासौख्यंप्रभ
वतिननोपाटवंचेंद्रियाणांशक्त्याशक्त्यास्कमतिकुमतीपूर्व
धस्यप्रकामम् ॥ स्यातांसर्वाण्यपिसुकृतिनोलक्षणान्येव-
सोयंजीवेदायुःप्रमुदितमुदितंतस्यसाध्यत्वमुच्चैः ॥ ४४ ॥ ॥
युग्मम् ॥ अनिश्चितायोरपिसच्चिकित्साशास्त्राद्विधेयाव-
रवैद्यभूपैः ॥ यतःक्वचित्क्वापिचदैवयोगात्कंठास्तगोजीवति
कोप्यसाध्यः ॥ ४५ ॥ अर्थंविनाद्रव्यमुपैतिनैवद्रव्यंविनाभे
षजसत्क्रयानम् ॥ तस्माच्चिकित्सागमुशांतिवैद्याधनधनेनाप्त
समस्तकामाः ॥ ४६ ॥ स्निग्धोजुगुप्सुर्बलवान्विनीतःसम
स्तकालेगदिनःसपर्याम् ॥ श्रीवैद्यवाक्याद्विदधीतशांतः
सोप्यगमुक्तोपिचसेवकोस्याः ॥ ४७ ॥ ॥ अथभेषजल-

क्षणम्॥ ॥ वैद्यो हरेद्व्याधिचयं चयेन तद्द्रव्यमुक्तं वरमौषधाख्यम्॥ तद्यादृशं तद्वदनाशयोग्यं ब्रुवे तथा तद्ग्रहणप्रकारम्॥ ४९॥ प्रशस्तदेशसंभवं प्रशस्तहस्तकोद्धृतं यद्द्रव्यकम् हृद्गुणस्ववर्णगंधसद्रसम्॥ प्रभानकेच सन्ति यो सकवारे समुद्धरेद् दुदीचि दिक्प्ररोहितं यथोक्तयोगमृद्धके॥ ४९॥ विंध्यादिशिलाबहुवन्हिकाशा सौम्यस्तु बाराचल एव तस्मात्॥ तत्तद्भवास्ता रवलु तद्गुणाः स्युर्नाना वनेषूपवनेषु जाताः॥ ५०॥ औषध्य एवं सुमनाः शुचिश्च सर्वेश्वतोऽऽदित्यमुखो मनस्वी॥ समानयेदुत्तरतः प्ररूढां मात्मस्थितेर्नौषधमार्गजाताम्॥ ५१॥ श्मशानवल्मीकतरूपछायाजातास्तु षाराहतवन्हिदग्धाः॥ आनूपजाताः किलजंतुजुष्टा त्याज्यास्ततः स्युर्भिषजा प्रयोगे॥ ५२॥ सरसमौषधिमेव शरद्गतौ सकलकार्यकरं च मधौ तथा॥ वमनरेचनयोश्च समाहरेदतिसकृन्द्रुजटाभववल्कलम्॥ ५३॥ स्थूलमूलभववल्कलमेक सूक्ष्ममूलमखिलं परिग्राह्यम्॥ वल्कलं च वटकादिगणस्य बीजकादिगणजोपिच सारः॥ ५४॥ पत्राणि नालीसमहास्य तद्वत्फलानि ग्राह्याणि फलत्रिकादेः॥ मूलं कचित्सत्रमलत्वक्पुष्पं कचित्सार तरः समस्तम्॥ ५५॥ मूलं त्रिवृकजं च सूरणभवः कंदो थनिंबच्छदं वासाश्च फलानि किंच त्रिफला जातानि पुष्पाण्यथो॥ धातक्यादिभवानि च तथा क्षारः कचित्खादिरः बालं बिल्वफलं च पक्कमुदितं चारावधोस्य फलम्॥ ५६॥ अंगेनुक्ते मूलमेव त्वसंस्याद्भागे ऽनुक्ते चाथ पात्रेप्यनुक्ते॥ पात्रं तत्र प्रायशो मर्दवं यत्काले

ऽनुक्तो बोध्यमेवं प्रयातम् ॥ ५७ ॥ विडंगकृष्णागुडधान्यहृद्य-
ताम्बूलकांजीकमधून्विहाय ॥ अन्यानियोज्यानिनवानिवैद्यैर्द्रव्या
णिशुष्काणिसमद्र्यानि ॥ ५८ ॥ पीयूषवासाकुटजाश्वगंधाकूष्मा
ण्डकाद्याः शतमूलिकापि ॥ शतप्रसूनासहचारकौंचप्रसारिणीचा
त्रसदाद्रकाःस्युः ॥ ५९ ॥ नत्वापयेलकेतकीमवाक्षिकांकुरंन्नटैः
पलाद्रकेषुभूर्जदापुरः सपूतिगंधिका ॥ गजादिकाबलासदानवा-
द्रकाः प्रकीर्तितानतास्कापिभागतो ऽधिकामताभिषग्वरैः ॥ ६० ॥
घृततैलकषायकानिपक्त्वाशिशिरीकृत्यपुनः प्रतापितानि ॥ प्रभवं-
तिविषोपमानिसर्वाण्यपिसूपादिविशिष्टभोजनानि ॥ ६१ ॥ ॥
अथस्वभावतोहितानि ॥ ॥ शालीनारक्तशालिःप्रबलगुणतन-
राषष्ठिकाशूकधान्येष्वेवंगोधूमउक्तोजवअथगदितोमुद्गकःशिंबि
धान्ये ॥ आदक्यावामसूरोरसरसमधुरःसैंधवंवैपटूनाम् ॥ ६२ ॥
द्राक्षाधात्रीपरूषेक्षरकमथफलंचाथराजादनस्यखर्जूरंमातुलुंगं
वरमिहगदितंसत्फलानांविशेषात् ॥ अन्यान्युक्तानिसर्वाण्यपिचय
बहुधाक्वथान्येचयोगे पक्वापक्वानिकामंविहितविधिसमान्यार्द्रशु
ष्काणितानि ॥ ६३ ॥ शाकेषुवास्तूकमुपोदिकाचजीवंतिकोवापिफ
लेषुचोक्तम् ॥ पटोलकंसूरणमेवकंदेमांसेकुरंगोहरिणस्तथैणः ॥
६४ ॥ छागस्तथापाक्षिषुतित्तिरश्चवार्तीककोलावअथोतिमीनाम्
॥ श्रेष्ठोमतोरोहितएवचान्यद्विरुद्धमप्यन्नततोभिधास्ये ॥ ६५ ॥ श्री
षेणमांसान्मुशंतिवैद्याःसदोषरंवैलवणेषुनेष्टम् ॥ फलेषुनेष्टंल-
कुचंकदापिशाकेषुनेष्टंखलुसार्षपंच ॥ ६६ ॥ वसानसेव्यामहिषीभ-
वाचपलंगवांस्याज्यमुशंतिमेष्याः ॥ पयोनकौसंभजबीजतैलंनफा

णितंचेक्षुरसप्रजानं॥ ६७॥ ॥अथसयोगविरुद्धानि॥ ॥आनूप
मत्स्यादिपलैःपयांसिकापोतकंसर्षपतैलभृष्टं॥मत्स्यानितेक्षोविविधैर्विका
रैःक्षौद्रेणचैतानिविरुद्धतानि॥ ६८॥पलैःपयोभिश्चनजातुसक्तून्उष्णेर्द
धिक्वापिनभोंबुनोष्णैः॥ क्षौद्रेनसेवंन्कृशरांपराभैःरंभाफलंबिल्वफलं
नदध्याः॥ ६९॥ मोचाफलंचनक्रेणनैवसेव्यंकदाचन॥ अहिफेनंनतैलेनचा
म्लवर्गेणसेवयन्॥ ७०॥कांस्योषितंद्रव्यमलंदशाहात्समंघृतमाक्षिकमेव
हेयं॥ बहूनिमांसानिवसाघनानिजलानिचैकत्रविदूषितानि॥ ७१॥ अ
थभेजग्रहणसंकेतः ॥जातावनुक्तेत्रचसैंधवंस्याद्रक्तंतथाचंदनमुक्तमाद्यैः
॥चूर्णावलेह्रादिषुतैलकेषुश्वेततथाचंदनमुक्तमेव॥ ७२॥जवानिकांतःप
रिमार्जनार्थं:जर्पोदकाचापिकुलिंजनंवा॥यत्रोग्रगंधाकथितार्थकुष्टय
त्रोदितंपुष्करमूलमेवम्॥ ७३॥गव्यंपयोगव्यसकृद्रसंचमूत्रंगवामत्रमु
शंतिवैद्याः॥ अथौषधीनांबहुधाप्यलाभेतासांगुणाद्याःकचताःप्रयोज्याः
॥७४॥नयत्रचित्रंरचकुतत्रदंतीक्षारस्तथावाशिखिनस्तुतत्र॥दुरालभाय
त्रनधन्वयासःकुष्टंप्रयोज्यंनगरंनयत्र॥ ७५॥ नयत्रमूर्वाकिलजिंगिनीत्वक्
नहिंस्रिकापत्रनुमानकंदः॥नलक्ष्मणायत्रतुनीलकंठशिखामूलंचैवबकुलो
त्पलम्॥ ७६॥तत्रप्रयोज्यंकुमुदंविशेषादिंदीवरंयत्रनतत्रकंजम्॥कल्हा
रकंचाथनयत्रजातीपुष्पाणिपुष्पाणिदिवौकसानाम्॥ ७७॥यदार्कपत्राणिप
यांसिलरयनोत्वाभमायांतिनदास्यनीरम्॥नपौष्करंयत्रचतत्रकुष्टंस्योणेय
कंलांगलिकानयत्र॥७८॥चविकेभकणेनयचतत्रमगधामूलमुशंतितत्रवै
द्याः॥वकुलानभवेच्चयत्रकामदद्रुरिपुबीजानिचतद्गुणान्यवैते॥ ७९॥नदा
कणर्निर्यदितत्रराात्रिरसांजनंनैवतदैवदार्वी॥सौराष्ट्र्यभावेस्फटिकाप्रदेया
तालीसकंनोचसुनाळिकाच॥ ८०॥तालीसपत्राणिनभार्ङ्गिकाचेलकंयादिका॥

बा मूलमथ प्रयोज्यम्॥ तत्रापि कर्चूरमुशंति वैद्यानयत्र भार्ङ्गीपरिलभ्यतेथ ॥८१॥ नलभ्यते विडलवणं चयत्र प्रक्षेपणं पांशुपटोस्तु तत्र॥ यत्रोक्तमाध्वीमधुकं न तत्र पुष्पाणि योज्यानि मदाभवानि॥८२॥ यत्राम्लवेतसमलभ्यमथो त्रचुक्रं द्राक्षा न चेत्काश्मरिकाफलं च॥ यत्राभयं न लभते चमधूकपुष्पं देयं लवंगमथ यत्र नखं च तत्र॥८३॥ कंकोलमेणस्य मदं लयत्र कंकोलकं चापि नयत्र जात्याः॥ पुष्पाणि देयान्यपि यत्र नैव कर्पूरकं तत्र स्कगंधमुस्तम्॥८४॥ कर्पूराभावतः प्रायो ग्रंथिपर्णं प्रशस्यते॥ काश्मीराभावतः पुष्पं नवकौसुंभमुत्तमं ॥८५॥ श्रीखंडकं यत्र न तत्र चंद्रं देयं न नीयत्र कुचंदनं च॥ कुचंदनं नो यदि चेदुशीरं मुस्ता प्रदेया निविषा न चेद्धि॥८६॥ शिवा न चेद्यत्र शिवैव चान्या नकेशरं नागपदादिकं वा॥ सदा प्रयोज्यं भिषजा विशेषात्सद्योद्भवं केशरमेव तत्र॥८७॥ मेदाभावे वरीसेप्याविदारी जीवकं न चेत्॥ काकोल्यभावतो योज्या चाश्वगंधा सदा बुधैः॥८८॥ ऋद्धिं वृद्धिं न यत्रैव वाराहीकंदमत्र च॥ भल्लातेन समं ज्ञेयं चित्रकं तदभावतः॥८९॥ कुचंदनं प्रयोज्यं स्याद्रसहत्त्वे सदा बुधैः॥ भल्लातकस्य स्वर्णो नो स्वर्णमाक्षिकमिष्यते॥९०॥ रजताभावमापन्ने युज्यते श्वेतमाक्षिकं ॥ स्वर्णं माक्षिकमलभ्यं चेत् प्रक्षिपेत्स्वर्णगैरिकम्॥९१॥ न रौप्यं सुवर्णं भवेत्तत्र लोहं मृतं कांतलोहं न यत्रापि तत्र॥ मृतं तीक्ष्णलोहं नमुक्ताफलं चा भवेच्छुक्तिरेवात्र तस्य ध्रुवं च॥९२॥ न माक्षिकं चेत्क्षुद्र एव योज्यो मत्स्यंडिनो सित शर्करात्र॥ सिता न चेच्च असितं सुखंड क्षीरं न चेन्मुद्गरसः प्रयोज्यः॥९३॥ प्रतिनिधिभिषजां निधिवन्मता सकलभेषजलाभसमागमात्॥ प्रबलरोगनिबर्हणयोगविद्दुर्लभद्रव्यगणान्न लभेत्सदा॥९४॥ श्रीमद्गर्गमहर्षिवंशजलधिप्रोद्भूतविद्याकलापूर्णश्रीभवशंकरश्रुतिश्रोतोपनामाऽभवत्॥ श्रीमच्छेषमुखप्रगीतविलसच्छास्त्रार्थशास्त्रार्थविद्वृंदमुखे

रंध्रसंघैः प्रसार्य द्राक्षाभ घ्नजातिपतिते तैलबिंदौ विशेषात्॥ ना-
नाकारैर्वैविधाविकृतैस्तु रूपनिरुक्तं प्रेनावेशे सकलविबुधैस्तत्र
भूतक्रियास्यात्॥९॥ तिलतैलनिभं बहुवातगदे घृतफेणसमं क-
फजातगदे॥ बहुपित्तगदे रुणपीततरं त्यज मूत्रसमं खलु यन्न
णिनत्॥१०॥ ॥अथ परिभाषा॥ ॥सिद्धार्थकाष्टप्रमि-
तो जवःस्याज्जवैश्चतुर्भिः किलगुंजिकैका॥ गुंजाष्टको माष इति प्र-
सिद्धो माषैश्चतुर्भिः खलु टंक एकः॥११॥ टंकद्वयं कोल उदाहृतो-
सौ कोलद्वयं कर्ष इति द्वयं च॥ तस्यैव शक्तिश्च पलं द्विशक्तिः पल-
द्वयाभ्यां प्रसृतिः प्रकामम्॥१२॥ तस्या द्वयैकं कुडवं तु तस्य द्वयं प्र-
सिद्धं खलु मानिकाया॥ तस्या द्वयं प्रस्थ अलं तुलस्य चतुष्टयं चाढ-
क एव तस्य॥ द्रोणो द्वयं तद्द्वयमेव सूर्पं सूर्पद्वयं हस्त इति प्रसिद्धः॥ तद्दे-
दमानापि च खारिकोति तुलापलानां शतकं प्रमाणं॥१३॥ तां विंश-
तिर्भार इति प्रसिद्धो वैद्यैः पुराणैर्गदितः प्रसिद्धः॥ मानं विना नैव य-
तो विधीनां विधिज्ञता स्यादिति वैनिरुक्तम्॥१४॥ ॥अथ स-
न्निपातलक्षणचिकित्सा॥ ॥श्वासः प्रलापो भ्रमकाशमोहहृद्द-
ह्लासमूर्छाव्यथपार्श्वपीडा॥ जृंभाकषायत्वमलं गरस्य विस्फो-
टको विस्फुटकः सवातात्॥१५॥ स सन्निपातः खलु तच्चिकित्सां
कर्त्तुं समर्थोपि च मृत्युजेता॥ पूर्वं जयेदामकफौ च तत्र ततो विजे-
यावपि वातपित्तौ॥१६॥ वाताधिको यस्त्रिभवज्वरः स संमाह-
तां मुंचति हंति वाथ॥ मलप्रपाकात्क्रमतस्तथैव मलस्य पाकं च
तु वेमधावत्॥१७॥ निद्राविनाशो रुचिगौरवाभ्यां स्तंभोत्र दर्शे-
हस्तिर्बलस्य॥ हानिश्च विष्टंभ अलं तु धातुप्रपाक चिन्हानि वदंति

वैद्याः॥१९॥ ॥अथ मलपाकः॥ ॥दोषप्रकृत्योरपि चेत्कृते न ज्वरस्य देहस्य च लाघवेन॥ सर्वेन्द्रियाणामपि वैमलत्वे मलस्य पाकं प्रवदन्ति वैद्याः॥१९॥ त्रिदोषवान्लंघनमाचरेच्च शृतं पयः शीतमलं पिबेद्वा॥ यद्द्वेषजं तत्समये भजेच्च तृषातुरोऽपक्वजलं न सेवेत्॥ २०॥ प्रतीकारः ॥सश्वासकासत्रिभवज्वरे च सपौष्करं पिप्पलिकासमेतम्॥ दिङ्मूलजक्वाथमुशन्ति वैद्याः पेयं तु वातोल्बणसन्निपाते॥२१॥ इति द्वादशाङ्गः ॥प्रकाम्यते यः प्रलपत्य च श्र्यं जानाति किंचिन्न च सन्निपाते॥ तं जीर्णहव्यैः प्रथमं विशेषादभ्यञ्जयेद्देद्यनृपा वदन्ति॥२२॥ बलागुडूचीरसनादिसिद्धैस्तैलैस्तथा तं परिषेचयेद्वा॥ यथानलं वैद्यवरो विशेषात्संलर्पयेत्तच्च यथा ब्रवीमि॥ २३॥ अथो वर्तकोवर्तकोचर्तकालावकोवार्तिकानित्तिरो वा शशः॥ कुलिङ्गोऽथवा वैद्यभूपप्रदिष्टात्वमीषां च यल्लभ्यते॥२४॥ ततस्तद्रसैस्तर्पयेच्चान्नमासोद्भवैः सद्रसैरोदनैः॥ न चेद्दृष्टमिष्टं भिषक्नूपमान्यः कथं जायते वा न वा॥२५॥ बृहत्पंचमूलीकषायैर्भृशोष्णास्त्वोष्णं यथादोषमेवं पिबेत्॥ समीरोत्तरं सन्निपातज्वरे भिषग्भूपशास्त्रादिनित्यशः॥२६॥ अन्यः ॥ रास्नामहौषधिघनाशनपत्रधान्यदेवद्रुपौष्करकगोक्षुरभार्ङ्गिकानाम्॥ क्वाथं पिबेद्रखिलजेषु समीरजेषु प्रायो ज्वरेषु सकलेष्वतिदारुणेषु॥२७॥ रसः ॥ शुद्धसूतगंधकं लाभ्र भस्म सर्व पिष्ट्वा चाद्यजंबीरमध्ये॥ दोलायंत्रे पाचयेत्ताद्दिनैकं पक्वा पिष्ट्वा चापि जंबीरमध्यात्॥२८॥ नीत्वा भाव्यं वक्ष्यमाणद्रवैस्तत्पिष्ट्वा पिष्ट्वा खल्वमध्ये यथा च॥ शिग्रुद्रवैश्चाटरूषाद्रनिंबजातैर्द्रवैः सर्पनेत्रारसैश्च॥२९॥

मा ह्लीद्रावैर्मीननेत्रारसेश्च द्रावैस्तद्वद्धंसपाद्यारसेश्च ॥ हस्तीशुण्डारुद्रूपादीस्वर्णदावैस्तद्वद्धातशस्त्रैः क्रमेण ॥ ३० ॥ द्रावैस्तद्वद्वायसीसंभवैश्च नित्यं नित्यं नैकमेकां दिनं तत् ॥ सर्वं पिस्वा लोहपात्रे विमुद्य पक्वा यन्त्रे वालुकायां दिनैकम् ॥ ३१ ॥ विशालिकाचित्रकदीप्यजीरकटुत्रयाणां सविषैरजोभिः ॥ समैर्विमिश्रं खलु सन्निपातस्किन्नयं मुद्गजयूषभोक्ते ॥ ३२ ॥ ॥ इति मंथानभैरवो रसः ॥ ॥
दद्याच्च मंथानकभैरवाख्यं रसं त्रिदोषज्वरनाशनाय ॥ शीलांगमेनं प्रवदन्ति केचित् कुम्भीकपाकं च तथैव केपि ॥ ३३ ॥ ॥ अथ पित्तोल्बणः ॥ ॥ अतीसारमूर्छाभ्रमास्यप्रपाकैर्युतो रक्तवर्णोश्ववाश्विंदवोत्र ॥ ततोचातिदाहोऽऽशफकारीतिनाम्ना स पित्तोल्बणः स्तब्धिकः घोर्णुनापि ॥ ३४ ॥ सदिग्धैर्धातुमलप्रपाकाद्विमुञ्चतीत्थं त्वथवा निहन्ति ॥ यदत्र कार्यं च भिषग्वरिष्ठैर्यथा चिकित्सां च तथा ब्रवीमि ॥ ३५ ॥ परूषकाणि त्रिफला च नाकदुमः सतिक्तं शिशिरं तथैव ॥ सपद्मकं कट्फलकं च पृथ्वा दला समैरेभिरपः शृतं च ॥ ३६ ॥ स्फशीतलं पेयमलं वदन्ति पित्तोत्तरे तत्त्रिभवज्वरे थ ॥ किरातकादिर्गणपंचमूलीशृतं मधूकं कणया कफोत्थे ॥ ३७ ॥ किरातमुस्तामरिचामृताभिर्गणः किराताद्रिरसोऽभ्रसद्वः ॥ ३८ ॥
॥ योगद्वयम् ॥ चालुर्भद्रकपंचमूलेन ॥ अन्यः ॥ मृणालपाठाघनरामसेनमरीचिकोदीच्यगुडूचिकाभिः ॥ समांशरोषस्त्वथ सन्निपाते पित्तोत्तरे पेयमलं कृतं च ॥ ३९ ॥ अन्यः ॥ मुस्तापटोदेवदारुकटुकानीलीत्रिवृच्छ्रेफलैः शुंठीमागधिकात्रिवर्ममधुकैः कंपिल्लपाठान्वितैः ॥ सोशीरः स्फकिरातकश्च सबलो यासा

ल्लितः पित्तजे क्वाथोऽष्टादशकाङ्गकाख्यस्त्रिभवेपेयः सभूनिंबकः॥
४०॥ मन्याहनुस्तंभशिरोपघातेशिरोगदेमेघरवादिरेषः॥ अष्टा
दशाङ्गोमुनिभिः प्रणीतः पित्तोत्तरेवेगहितः स्त्रिजाते॥ ४१॥ ॥
अथरसः॥ ॥ गंधकेशगलगेशमरीचैः स्वर्णजंद्रवयुतैर्दिन
मेकम्॥ मर्दितोद्रिकरसैः शिववक्त्रोरक्तिकैकमशितस्त्रिभवघ्नः॥
४२॥ ॥ इतिपंचवक्त्रोरसः॥ ॥ अथकफोल्बणम्॥ ॥
कफोल्बणेस्याज्जडताविशेषाद्रागादृद्रागान्निविशेषनिद्रा॥ स्तब्धं
चनेत्रहृलयमुखस्यमाधूर्यमुक्तः खलुसप्रलापः॥ ४३॥ प्रकंपनः
कैसपिवाप्रलापीवैषेरथोन्यैर्गदितोत्रकेश्च॥ तस्यप्रतीकारः॥
बृहत्यौशटीपौष्करशृंगिकाचयवासेंद्रभार्ङ्गीपटोलानितिक्ता॥
बृहत्यादिकोयंगणः सन्निपातेबलासोत्तरेश्वासकासादियुक्ते॥
४४॥ ॥ इतिबृहत्यादिः॥ ॥ तगरपर्पटरेवतभारतीजलदगो
स्तनिकादशमूलकैः॥ त्रिशिररोहिणिकादरपुष्पिकानलदसति
कगंधिकयाशृतम्॥ ४५॥ प्रलपनप्रशमायनिषेवितास्प्रतिदिनं
प्रतिहन्त्युरमुत्वरा॥ त्रिभवरोगमलंतुकफोल्बणंतगरकादिकषा
यमिदंजलम्॥ ४६॥ ॥ इतितगरादिः॥ ॥ त्रिकटुकाचविड
हरीतकीनासपटुकधूलानघर्षणेनसंघः॥ मुखरदरदकच्छदादि
तालुरसरसनोविरसादिरोगहर्तौ॥ ४७॥ ॥ अथरसः॥ ॥
शिवाशिवोषणलोहनभोदरान्हिङ्गुनपोपलभस्मविधानक्रमान्
॥ शशिशशींदुकृशानुमुखलीशाकेसपिमितानथषोडशभूमितान्॥
४८॥ परिविमर्दयतथांबुघटीरसैर्भवतिरावणवासपुरीश्वरः॥ ह
रतिसूतिगदांस्त्रिभवज्वरंविजयतेद्रिकनीरयुतः सदा॥ ४९॥ ॥

मश्वोध तथाल्कमोपि वा वक्रमन्या हृदये शिरेच॥१३०॥ रुजोतिमात्रंच प्रमीलहिक्कश्वासः सकासश्चविसंज्ञनाथ॥ जाड्यंतथाचाविचार्यतात्र हेयाविशेषात्परिसाधयंतु॥३१॥ नासिन्निवृत्तेपिचकर्णमूलसदारुणैकापिडिकाचजंतोः॥ संजायतेजीवतितेनकच्छ्रादुक्तःसवैदारिकसन्निपातः॥३२॥ त्रिरात्रितोसापि मृषानिरीक्ष्यसावदंतिचैनंकिलकंठकुब्जम्॥ संशोषिणीकेचनवैद्यभूपागायंतितस्याथयथाचिकित्सा॥३३॥ प्रतीकारः॥ त्रिफलाघनराजीकलिंगैः कटुकासिंहमुखीकटुभिकैश्च॥ कथितंजलमारुककंठकुब्जं हरिविक्रांतमिभमाशु हन्यात्॥३४॥ अन्यः॥ किराततिक्तांबुदकट्फलानांशिवाकणापुष्करभंगुराणाम्॥ कलिंदुदेवद्रुमाचित्रकानांकुलीरधात्रीवृषकोटजानाम्॥ शृंगीकणात्र्यूषणसंयुतानांगणःस्त्वयंकांतति कंठकुब्जम्॥१३५॥ पीतःप्रभातेक्वथितश्चसाय कंठीरवः कुंजरमाशुचद्रुत॥ एवंनशांतिर्यदितस्यपार्श्वीद्वयंदहेल्लोहशलाकयाच॥ अंगुष्ठमूलेपिनचेद्दहेद्वानयातःशांतिर्मणिबंधकेच॥ देहल्दिस्तयदिनैवशांतिमायातितेन्मूर्ध्नि दहेत्प्रकामम्॥३६॥ ॥अथगंडः॥ ॥चोलेकसतेनसमानगंधगंधेनतुल्यंचमनाग्निदग्धं॥ त्रिकर्षमात्रदामितंचतेनतुल्यंतथातिंत्रिडिकाफलंच॥३७॥ श्लक्ष्णंचखल्वेपरिमर्द्यतावद्यावच्चकर्मैःसर्वमिदंततस्तु॥ षडंगुलवर्तुलमेवनिम्नंनावप्रमाणंचविधायगर्तम्॥३८॥ गर्तेहिवल्लीदलयुक्तगर्भनिधायपिष्टीमपिचोपरिष्टात्॥ आपूर्यगर्तंचतथाहिवल्लीदलैस्ततस्तत्सदलेनसम्यक्॥३९॥ अभ्रस्यसंमुद्यगुरुस्तयुक्त्यातस्योपरिष्टात्सुदृमेकमेव॥

इयंचमन्योपलवन्हिनैव तत्स्यांगशीतं सम पर्णमेतत्॥ १४०॥ पुन श्चवल्वमृतमर्द्दतालंफलंतथानिर्गुंडिकाभवंच॥ संमिश्र्य सर्वेच विमर्दयेत्क्रिप्रमाणमार्द्रस्यरसैः सतीक्ष्णैः॥ ४१॥ सचित्रकैः सैंधव संयुतैश्च दद्यात्त्रिदोषंविषमज्वरेपि॥ वातेग्निमांद्येग्रहणीगदेच ब- धातिसारेदधिभक्तमत्र॥ ४२॥ भोक्तुंप्रदद्यादथवांतिदाहेजलशी रस्यास्यविनिक्षिपेच्च॥ रसश्चचिंतामणिनामकोयंप्राणप्रदोमृत्यु निवर्हणात्सः॥ ४३॥ ॥इतिचिंतामणिरसः॥ ॥ अथमृत- संजीवनः॥ ॥ रसैकभागाद्विगुणांहिगंधतालंविषंहिंगुललोह चन्द्रान्॥ कंकुष्टमभ्रंशिलयाकटूनांत्रयंचकुंभीगजशुंडिसंज्ञम्॥ ४४॥ विषंचताम्रंसहतंडुलीयकेनाथवैहाटकमाक्षिकेन॥ भृं गाह्वमेकैकमितान्समस्तानार्द्रस्यनीरैस्त्रिदिनंविमर्द्य॥ १४५॥ ततस्तुजंबीरफलत्रयाणांनिर्गुंडिकायाश्चरसंप्रगृह्य॥ पृथक्पृ- थक्चापिपलत्रयंचगांगेरिकायाश्चरसंप्रलेकम्॥ ४६॥ काचस्य कूप्यांविनिधायसस्यगन्यत्समस्तंचनिधायतस्याम्॥ संस्वेद्यकु प्यामथकूपिकायांमृत्कर्पुरैःसाधुविलेप्यमुद्राम्॥ ४७॥ विधा यचंत्रेप्यथवालुकाख्ये ... ततश्चशीतलाख्यं॥ आर्द्रस्य- नीरैःपरिमर्दनीयात्गुंजायुगायात्रिभवज्वरघ्नः॥ ४८॥ मृतसंजीव- नोनामरसःसर्वांस्त्रिदोषजम्॥ ज्वरंनाशयतिप्रायोमृतसञ्जीवय- त्यरुजा॥ १५०॥ ॥अथोग्रथाविस्फोटकादयस्त्रयोदशोकोल्बणा दितयाभवंतिभवंतितथैवशीतांगाद्यः॥ कुंभीपाकादयस्तेषांभि न्नलिंगात्वादपिचिकित्सैक्यात्पर्यायत्वेनोक्तभिन्नलिंगानियथावा- तुषारशिशिरस्तनुश्वसनकासहिक्कान्वितः प्रमोहदवथुक्लमस्वरवि

कारकपैर्युतः॥ प्रलापकफनित्यगोर्द्रैभिषड्गपीडान्वितस्त्रीदो
षजनितोज्वरोभवतिसीतगोत्राभिधः॥५१॥१॥ तन्द्रातिसारः श्व
सनंचकासोरुक्कंठशोफः कफकंठकंडू॥ तृषाक्रमोमाद्यमथो
श्रुतोंचश्यामारसज्ञादवथुःस्तंद्रे॥ ५२॥ समस्तदोषकोपतः
प्रलापतापकंपनं॥व्यथाविसंज्ञतातिदाहपातनंसहोत्थितिः॥भ
वेच्चयत्रताभिषन्नृपप्रकीर्तितस्त्वलंप्रलापकःस्वनामतस्तुसन्निपा
तदारुणः॥ ५३॥ निष्ठीवनंतुरुधिरस्यचरक्ततुल्यंस्कंधचयत्रतनुश
चतथैवकृष्णाम्॥चेन्मंडलंनयनयोरपिलोहितत्वंतृष्णारुचीभ्रम
वमीश्वसनंविसंज्ञा॥ ५४॥ आध्मानमंगबहुपीडनमेवहिक्काती
सारमत्रभिषजःप्रवदंतिनित्यम्॥जायतएवखलुयत्रचरकादि
ष्ठीवीन्त्रिदोषजनितोज्वरएषनाम्ना॥ १५५॥ युग्मम्॥४॥ ॥
श्वासःकासोनयनविगतावक्रतामोहतंद्रे यत्रैतेस्युर्भ्रममदयुता
व्याधयश्चश्रुतेर्वाहानिःप्रायोभवतिनिखिलैर्दोषसंघैर्ज्वरेहि
सोयंवैद्यैःकठिनउदितोभुग्ननेत्रस्त्रिदोषः॥५६॥ ५॥ दोषास्त्री
णबलिनश्चपिवामोहमूकत्वदाहाश्वासोमंदोभवतिचसदावन्हि
रप्रकामम॥ चैतन्यंवाव्यथनयनयोरिक्षणा॥ दिचेष्टासाभिन्या-
सात्रिभवगादतायत्रहानिर्बलस्य॥ ५७॥६॥ श्रुतेःक्षितिर्बलाक्षि
तिश्वसनकाशसंततस्यो भृशंकठिनकंठकेभवतियत्रजिव्हावृता॥
भवतियदिमूकतात्तनुविमूढतावाभवेत्पुरातनचिकित्सकास्त्रिभव
जिव्हकन्वक्षते॥ ५८॥७॥ व्यथाशोथयुक्ताभवेत्संधिषुप्रकाममु
खेवावलाशोद्भमश्च॥ तथाकाशरुक्यत्रनिद्राविनाशस्त्रिदोषन्वतस
न्धिगप्राहुरार्याः॥ ५९॥८॥ इदंलक्षणंयत्रमूर्धप्रकाशंभवेद्धनका

१सर्वांगपीडा ॥ मोहः सदाहश्चहिक्काप्रलापस्तनौतमवैकल्यकं वितंकः ॥ ५९ ॥ ९ ॥ अतिदवथुसमेतायत्रतृष्णाप्रलापभ्रममद हनुमन्याकंठपीडाश्रमास्य ॥ अरुचिबहुलमोहैः सन्निपातज्वरेस्यु रुजमिदमपिवैद्याद्दाहमाहूरुजाद्यम् ॥ १६० ॥ १० ॥ मृगयतिप्रलपत्यपिनृत्यतिप्रहसतिप्रतिमुह्यतिपश्यति ॥ विकृतिमाशुचदाहरुजान्वितोनिगदितः किलचित्तकविभ्रमी ॥ ६१ ॥ ११ ॥ समस्तदोषज्वरशेषजन्मायः कर्णमूलेश्वयथुव्ययोग्रा ॥ बाधिर्यकंठग्रहमोहरस्रावैः श्वासप्रलापातपजाःस्युनिस्थे ॥ ६२ ॥ १२ ॥ कंठेयदाशूकशताव रुद्धोवदेत्कथंचिच्छ्रसनेनयुक्तः ॥ नित्यप्रलापोदवथुप्रयुक्तस्तृ- ष्णार्दितोवेपथुमोहयुक्तः ॥ ६३ ॥ स्तंभोहनोर्नेत्रशिरोर्तिरुग्रायस्यारुचिः सर्वतनौचपीडा ॥ सकंठकुब्जोत्रिभवज्वरीनेहैधैश्चिकित्स्योविबुधैर्विचार्य ॥ ६४ ॥ साध्यस्तेषुचसंधिगोथगदितः कृ- च्छ्रस्ततस्तंद्रिकस्तद्वच्चित्तकविभ्रमोथाविबुधैरुक्तस्तथाकर्णि- कः ॥ नहाज्जिह्वककंठकुब्जकयुगंकृच्छ्रंमतंपंचकंरुग्दाहस्त्वति कृच्छ्रसाध्यउदितश्चान्येत्वसाध्याश्चषट् ॥ १६५ ॥ रक्तष्ठीवीभुग्न नेत्रश्चशीतगात्र[illegible] ॥ [illegible] पद्मासिद्धः प्रायसौध्याःसान्निपातज्वरेषु ॥ ६६ ॥ ॥ अथकुंभीपाकादिलक्षणानि ॥ ॥ घुणइवप्रचरन्विलुठन्महीं ततावनिविलोहितलोचनवान्ज्वरी ॥ यदिलुठन्नभितोनिजमस्तकंस घटपाकगदीरुधिरस्रवात् ॥ ६७ ॥ १उत्क्षिप्ययस्त्वगमलत्यवस्ता न्निक्षिपतिपथानिश्वसितिप्रकामम् ॥ तंप्रोर्णुनापुष्पविचित्रकष्टमनु :पुराणाः ॥ ६८ ॥ २ ॥ स्वेदोंगमर्दभ्रमकंपदाहवमी

यथाकण्ठगतागुरुत्वम्॥ गात्रेप्रलापेष्वतिवर्धमानेप्रलापनामैव
तुसन्निपातः॥६९॥३॥ अन्तर्दाहः शीततावेद्बहिश्च कासश्वासः
सविशेषत्रयस्य॥ अंगदग्धवन्हिनेवप्रकामसोयचान्तर्दाहयुक्त
स्त्रिदोषः॥७०॥४॥ दिवानिशंयस्यभवेन्ननिद्रामूढोयथापश्यति
चानपश्च॥ उद्दंडपाणिर्भ्रमतिप्रकामंयत्रैवसोपरवलुदंडपाणिः
॥७१॥५॥ तनुर्ग्रंथिभिःपूर्यतेसर्वतःसमीरेणवास्योदरंश्वास
रुक्॥ तमाहुर्विसंज्ञानरंचान्तकंत्रिदोषार्तिभाजंत्वसाध्यंबुधाः॥
७२॥६॥ रुक्सर्वगात्रेपरिधावतीवगणःकुरंगाहिपतंगमीनाम्
॥तस्यैणिकादाहगदंवदंतिसवेपथोर्दाहयुतस्ययस्य॥७३॥७
॥यस्यांगनेत्राणिमलानिपीनान्यतश्चदाहोबहिरेवशैत्यम्॥त
स्यत्रिदोषंप्रवदंतिवैद्याहारिद्रकंदोषविचारदक्षाः॥७४॥८॥
स्कंधेरुजावान्नजगंधदेहोवरुद्धकंठोभवतिप्रकामम्॥यस्तामचू
डेवस्तवाजघोषीत्रिदोषवान्वैद्यवरैर्निरुक्तः॥७५॥९॥ शब्दादि
कान्योविषयान्नवेत्तिचालीन्द्रियग्रामहसत्यवश्यम्॥ प्रलापपारु
ष्ययुतश्चभूतहासस्त्रिदोषीगदितस्त्रिदोषः॥७६॥१०॥ यत्रेणय
[illegible] पीतंप्रचमज्ज
[illegible]
नोयोयत्र॥ [illegible] वपीडातियुतस्त्रिदोषी॥७७॥११॥ वमातिकूज
त्यवार्तिसरन्यसौक्षिपतिगात्रगणंचयतस्ततः॥ प्रलपतीहचभु
ग्नविलोचनस्त्रिभवदुष्टगदेनतिपीडितः॥७८॥१२॥ संन्यासः
परिगदितोगदश्चवर्धेहि॥ विद्वज्जनवरवैद्यैस्त्रिभवमवेहि॥७९
॥१३॥ वपुषिलोचनयोरपिमेचकोभवतिचाप्यवलोमलसारतः
॥अपिचशोषिणिशीतलकोद्भवंत्रितयदोषजमङ्गी [illegible] ज्वरी॥

१८०॥१४॥ नारायणश्चेषुभिषक्प्रदिष्टो नीरत्नशा भेषजमन्त्रगांगम्॥ नैरुज्यहेतोरिह मृत्युजेता ध्येयश्च गौरीपतिरिंदुमौलिः॥ ८१॥१५॥ ॥ अथसन्निपातेसाधारणीक्रिया॥ ॥लंघनष्ठीवननस्यकर्म धुवस्तदलह्रोजनानिप्रकुर्याद्भजः॥ पथ्यमत्रत्रिदोषोचितं बैक्रमाद्दण्यते काशिनाथेन शास्त्रस्फुटम्॥८२॥ ॥तत्रादौलंघनम्॥ ॥त्रिरात्रंतथापंचरात्रंभिषक्ततोचाष्टकंचिल्लंघयेद्दिग्निशम्॥ तथारोग्यसंदर्शनाल्लंघयेत्त्रि अरोगानुरमानवंशास्त्रदृक्॥८३॥ सहिष्णुतायाःखलुलंघनेस्यात्सादोषशक्तिःप्रथमंततश्च॥ दोषक्षयेलंघनंनैवकोपितदृल्नसोढुंप्रभवेत्समर्थः॥८४॥ बलासपित्तेद्रवभूतधातुमहत्तहेमेत्रचलंघनघन्॥ अभक्ष्यादूर्ध्वमथोहिवायुस्तल्लक्षणंबासहतेकश्चिच्च॥१८५॥ ग्लान्यंगगौरवयुताप्यथबाल्यश्रद्धातहृत्ततोस्यविकृतिःप्रभवेच्च हीने॥ सम्यक्कलंघितनरस्य भवेत्प्रकांक्षाक्लाघवंग्लानिप्रसन्नताश्च॥८६॥ स्वच्छत्वमस्यापितथानितांतमुपद्रवाणांसहसानिवृत्तिः॥ मोहोधिकेवातिनरस्यनित्यशोथेल्पमस्मिन्बहुवातपीडा॥८७॥ ~~[illegible]~~ कम्॥ अनुवेलामहास्यलंघनस्यनचहानिःप्रांतजायतेकश्चिच्च॥ ॥८८॥ अतिक्षुधापीडितमानवायलाजाभवंमंडमिहाल्पमल्पम्॥ पुनःपुनर्देयमलंतुनेन हानिर्भवेन्नैवचलंघनस्य॥ ८९॥ कफाधिकायापिदिनांतकालेनिशावसानेचलवंगजातम्॥ अष्टावशेषंकथितंप्रदद्यान्नतेनहानिःखलुलंघनस्य॥१९०॥ तनुः ४। ष्टपयोग्योद्रेकजेसन्निपाते ध्रुवम्॥ भिषक्पा

द्राक्षाफलंमाक्षिकम्॥पिष्टश्वासहरञ्चकाशशमनंमूर्छारुचिध्वंसनम्॥लीढंवैद्यनिदेशतःप्रतिदिनंहंतित्रिदोषज्वरंजिह्वाकंठहृदांविशोधनकरंवक्त्राङ्गशोषापहम्॥१२॥ ॥इत्यवलेहः॥ ॥

अथांजनम्॥ ॥शिरीषबीजोषणमागधीनाससैंधवगोजलपिष्टमेतत्॥ शिवावचाभ्यांसरसोनकंतुसंज्ञाप्रबोधांजनमाहुरार्याः॥१३॥ अन्यत् ॥अयोरजःश्वेततरंचलोध्रंगोमूत्रपिष्टंमरिचांजनाभ्याम्॥तंद्राविनाशायचनेत्रयुग्मपद्मप्रदेयंभिषजोवदंति॥१४ मधुसिंधुशिलोषणैश्चपिष्टंगदितंमोहविनाशनायवैद्यैः॥ कलितंत्वथनेत्रयोर्युगेवाबहुतंद्रागदवारणंविशेषात्॥१५॥ अन्यत् ॥ धृतार्द्रनीरत्रिकटुप्रयुक्तंससाक्षिकंसैंधवमञ्जनंद्राक्॥श्लेष्मानिलोद्रेकगदेचसंज्ञानाशप्रणाशायनिषेवणीयम्॥१६॥ ॥ अन्यत् ॥सितकुष्कुटिकाण्डजालनीरंनसनेत्रांजितमेवचास्यपीतम्॥अपिनाशिकयातथानिपीतंत्रिभवंतीव्रतरंज्वरंनिहन्यात्॥१७॥ ॥इतिनस्यपानांजनानि॥ ॥इत्थंत्रयोयोगाः॥ ॥

अथरजोमर्दनविधिः॥ ॥स्वेदोपदाधिकसरःसकलांगकूडरोमांचगर्तेविरज्वलनिशाराषेः॥ अन्यत् रजसःसमजीर्णचूर्णःसर्वांगयोःपुनिपातिनमाहुरार्याः॥१८॥ जीर्णसकद्रोलवणस्यजीर्णषाढ्कतठ्यपिष्टचूर्णम्॥स्वेदापहतत्तनुयष्टिहस्तविमर्दनाद्धात्रिभवज्वरघ्नम्॥१९॥ अन्यत् ॥त्रिकटुकट्फललोध्रशिवावचासमाकिरातकपुष्करकारवीः॥सकटुकाःपिरजःपरिमर्दितंविजयनेखिलधर्मजलंयवात्॥२०॥ अन्यत् ॥ जगलकणादीप्यदिवीकदारुतिक्ताकुर्टं॥ ॥ [illegible]

नागतास्वेदरुजोतिवातस्तंभादिदोषानपिहंतिसद्यः॥ २१॥ ॥

अन्यत् ॥उग्रादीप्याशुंठीचूर्णैस्वेदजातेदेहमर्दम्॥ २२॥ ॥

अथविरेचनम्॥ ॥ सतिल्वदंतीत्रिवृताकषायःश्चुत्यगुली- मूलसनीलचूर्णः॥ घृतेनयुक्तस्त्रिभवज्वरेषु पेयोविरेकायवदं- तिवैद्याः॥ २३॥ अन्यत् ॥त्रिवृद्विशालात्रिफलाकषायःस- तिक्तारग्वधजावशूकः॥ पेयस्त्रिदोषज्वरनाशनाय रेच्यप्रयोगे- गदितोविशेषात्॥ २४॥ अन्यत् ॥ तिक्तात्रिवृद्दंतनिका नृपाणांत्रायंतिकायुक्तहरीतकीनाम्॥ ससैंधवक्षारयुतःकषा योभेदीज्वरघ्नोयदितोनिपीतः॥ २२५॥ अन्यत् ॥ त्रिवृत्रि फलाकणामधूनांसमखंडोपिप्रियंगुयुक्तपिष्टः॥ अथलोहितपि त्तसन्निपातज्वरनाशायचमोदकःप्रभुक्तः॥ २६॥ अन्यच्च ॥ सन्नाहदंतीत्रिवृतानृपाणांसमाक्षिकःखंडयुतःकषायः॥ पी तोविरेकात्सकलज्वराणांनाशंप्रकुर्याद्भिषजोवदंति॥ २७॥ ॥

अथपथ्यम्॥ ॥लंघितायखलुलाजजसक्तून्सैंधवेनकव लग्रहपथ्यम्॥ देयमेवपरिजीर्यंतयास्मिन्रोगिणेगतगदस्य चलक्ष्यम्॥ २८॥ [illegible] धिकसन्निपातम्॥ पथ्यात्रिदोषप्रशमायवैद्यरुक्तांहिपित्तोत्थवि कारहारि॥ २९॥ श्रीतातपादाब्जसमाज्ञयायाकृताचिकित्सा क्रमकल्पवल्ली॥ श्रीकाशिनाथेनगतश्चतस्यांत्रिदोषहारीस्तब कःसमाप्तिम्॥ २३०॥ ॥ इतिश्रीगुरुचरणाब्जचंचरीकचतु र्वेदीकाशिनाथकृतचिकित्साक्रमकल्पवल्यांत्रिदोषहारीसन्निपा

:॥ ३॥ ॥ श्रीर्जयति॥ ॥ ॥